THE

# KASHI-SANSKRIT-SERIES

## NO. 92.

( Purāṇa Itihāsa Section, No. 3 )

# त्रिपुरारहस्यम्

## ( माहात्म्यखण्डम् )



PRINTED, PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
Benares City.

1932

THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO. 92

( Purāṇa Itihāsa Section No I. )

THE

# TRIPURÂRAHASYA

## [ MÂHÂTMYA KHAṆḌA ]

*Edited by*

SÂNKHYA YOGA S'ÂSTRÂ CHÂRYA

*Pandit S'ri Mukunda Lâla Sâstri*

With

Introduction and Contents of each Chapter

By

SÂHITYÂCHÂRYA

*Pandit S'ri Nârâyan Sâstri Khiste,*

Asst. Librarian, Govt. Sanskrit College,

Sarasvati Bhavana Library, Benares.

PRINTED-PUBLISHED & SOLD BY

JAI KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambha Sanskrit Series Office,*

*Benares City.*

1932.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़्पुस्तकमालायाः

६२

पुराणेतिहासविभागे (१) प्रथमपुष्पम् ।

# त्रिपुरारहस्यम्

## ( माहात्म्यखण्डम् )

सांख्ययोगशास्त्राचार्य पण्डित श्रीमुकुन्दलाल शास्त्रिणा संशोधितम्

साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां

भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९८८

॥ श्रीः ॥

## त्रिपुरारहस्यमाहात्म्यखण्डस्य

# उपोद्घातः ।

अथेदानीमुपक्रम्यते त्रिपुरारहस्यमाहात्म्यखण्डं मुद्रयित्वा प्रकाशयितुम्। इदं च त्रिपुरारहस्यं "हारितायनसंहिता" इति नाम्नाऽपि स्मर्यते। प्रथमाध्याये ग्रन्थोपक्रमप्रसङ्गे मलयाद्रौ तपोवने निवसन्तं परशुरामं प्रति सुमेधाख्यस्य तच्छिष्यस्य शाश्वतिकं श्रेयः समुद्दिश्य प्रश्नः, तदुत्तरप्रदानप्रसङ्गे भार्गवेण स्वगुरोर्दत्तात्रेयस्य वचः स्मृत्वा स्वस्य गुरुदत्तात्रेयेण सह प्रश्नोत्तरात्मकं त्रिपुरामाहात्म्यं वर्णितमिति स्थितम्। भार्गवशिष्यः सुमेधा एव हारितायन इत्यपरनामा। तथाच हारितायननिबद्धत्वात् हारितायनसंहितेति नामान्तरमपि युज्यत एव। द्वितीयाध्यायोपवर्णितकथानुसारेण तु त्रिपुरारहस्यस्य प्राथमिको वक्ता सर्वेषां गुरुर्देवाधिदेवो महादेव एव, तेन विष्णवे, विष्णुना च ब्रह्मणे कथितम्, मर्त्यलोके महाविष्णुरूपिणा दत्तगुरुणा स्वशिष्याय परशुरामाय कथितम्, तेन च स्वशिष्याय सुमेधसे हारितायनाय कथितम्, स च गुर्वादेशात् ग्रन्थरूपेण तन्निबद्धं हालास्यनगरं गत्वा तत्र मीनाक्ष्यम्बामुपसेवमानः स्थितः। वृत्तान्तमिमं ब्रह्मणः सकाशात् श्रुत्वा हारितायनं द्रष्टुं नारदस्तत्राजगाम। गुरूक्तं सर्वमहं मन्दबुद्धित्वाद्विस्मृतवानस्मीति सुमेधसा सनिर्वेदं नारदायोक्तम्। कृपालुना नारदेन सद्यो ब्रह्माणमाहूय सुमेधसः पूर्वभवीयो वृत्तान्तः पृष्टः, ब्रह्मणा च "पुरा सरस्वतीतीरे सुमन्तुतनयोऽलर्कनामा द्विजो न्यवसत्। स च पञ्चवर्षदेशीयः कदाचित् दुर्गोपासकेन स्वजनकेन "अयि" इति सम्बोधितां स्वमातरं निशम्य स्वयमपि बालभावादस्फुटाक्षरं 'ऐ ऐ' इति बिन्दुरहितमेव बीजमभ्यस्यन् रोगाभिभूतः सन् पञ्चत्वं जगाम। परमकारुणिका श्रीमातुर्ललितायाः कुमारी बालाम्बा तस्य तथाविधेनाज्ञानपूर्वकेनापि जपेन तदुपरि सद्यः प्रसन्नाऽभूत्। अज्ञानपूर्वकं बिन्दुरहितवाग्भवजपमाहिम्ना श्रीबालाम्बानुग्रहप्राप्तावपि जपस्याज्ञानपूर्वकतात्मकवैगुण्यवशादस्य धारणाशक्तिर्नास्ति। इतः परमसौ मम प्रसादात् सर्वं स्मरिष्यति, त्रिपुरारहस्यग्रन्थकर्ताऽसौ भविष्यति। षट्त्रिंशद्दिवसैः प्रत्यहमध्यायचतुष्कक्रमेण माहात्म्यज्ञानच-

र्यांखण्डैर्ग्रन्थः समापनीयः" इत्युक्तम्। इत्थमिदं ग्रन्थनिर्माणेतिवृत्तम्। "ॐ नम इत्यारभ्य त्रिपुरैव ह्रीं" इत्यन्तेन शिवशक्तिप्रणवयोर्मध्ये तदात्मकोयं ग्रन्थो निबद्धोऽस्ति। अस्य माहात्म्यखण्डस्याशीतिसंख्या अध्यायाः। सम्पूर्णग्रन्थस्य सप्ताशीत्युत्तरषट्शताधिकषट्सहस्रं श्लोकसंख्याऽस्ति। माहात्म्य, ज्ञान, चर्याख्य खण्डत्रयात्मनोऽस्य ग्रन्थस्यादिमं माहात्म्यखण्डमिदं पाठकानां पुरः समुपहियते। ज्ञानखण्डं च सटीकं "प्रिन्सेस ऑफ़ वेल्स सरस्वतीभवनसीरीज्" नामकपुस्तकमालायां श्रीमत्पूज्यपादकाशिकराजकीयपाठशालाप्रधानाध्यक्षश्रीगोपीनाथकविराजमहोदयैश्चतुर्भिर्भागैः संस्कृत्य प्रकाशितम्। तदुपोद्घाते च प्रत्यभिज्ञादर्शनमर्मज्ञैः शास्त्ररहस्यकोविदैर्गुरुदेवतानुग्रहावाप्तदुरधिगमशाम्भवागमरहस्यैस्तैरेव सम्पादकमहाभागैः श्रीविद्याविषये जिज्ञास्यं सर्वमेव प्रायो निरूपयिष्यत इति मयाऽस्मिन्नुपोद्घाते तदुपन्यासो न क्रियते। जिज्ञासुभिस्तत्तत एवावगन्तव्यम्। त्रिपुरारहस्यान्तर्गतं चर्याखण्डं तु नामत एवोपलभ्यते न स्वरूपतः। आदितश्चत्वारिंशदध्यायपर्यन्तं चर्याखण्डपुस्तकं कस्यापि परम्परया श्रीविद्योपासकस्य साधकस्य गृहे वर्तते इति श्रुतमस्ति, परन्तु दुर्भाग्याद्यावधि तावानप्यंशो न मे दृष्टिपथं गत इति तद्विषये किमपि कथनमयुक्तमेव। माहात्म्यखण्डप्रतिपादितकथासन्दर्भस्तु विस्तृतायामनुक्रमणिकायां निर्दिष्ट इति तद्विषयेऽपि किमपि कथनमनावश्यकमेव।

त्रिपुराया माहात्म्यं चैतदपेक्षया सङ्क्षिप्तक्रमेण ब्रह्माण्डपुराणोत्तरखण्डे ललितोपाख्याने निरूपितमस्ति। लक्ष्मीतन्त्रेऽपि साङ्क्षिप्तमाविधया त्रिपुरामाहात्म्यं निरूपितमस्ति। तत्र मुख्यकथा तु सर्वत्रैव समाना, अङ्गोपाङ्गप्रत्यङ्गविद्यानिरूपणे त्वस्ति कश्चिद्भेदः यः खलु तत्तत्सम्प्रदायभेदमूलक इति गुरुपरम्परावाप्तसम्प्रदायरहस्यैरेव सुगम इति तदुपन्यासोऽत्रानवसरप्राप्तः। श्रीविद्योपासनाप्रकारस्तु बहुषु ग्रन्थेषु बहुधोपलभ्यते, तत्राऽपि सम्प्रदायभेद एव बीजम्। इन्द्रचन्द्रमनुकुबेराद्युपासितायाः श्रीविद्याया बहुप्रकारत्वेऽपि कामराजोपासिताया एव तस्याः साम्प्रदायिकेषु सर्वत्र सुलभत्वात् कामराजोपासिता कादिविद्यैव सर्वप्रधानतया जागर्ति। श्रीलोपामुद्रोपासिता लोपामुद्राविद्याऽपराख्या हादिविद्याऽपि सत्सम्प्रदायेष्वप्यस्त्वेऽपि

जागर्ति । त्रिपुरोपनिषदि सविशेषमस्या निरूपणात् अस्या विद्याया वैदिकत्वं सुस्पष्टमेव । त्रिपुरोपनिषच्च तद्व्याख्यातॄणां श्रीभास्कररायसूरिचरणानां तद्व्याख्योपोद्धातश्लोकानुसारेण शांखायनारण्यकान्तर्गतेति त्र्यन्तर्गतत्वमस्या विद्याया वाढं साधयति । श्रीविद्योपास्तिप्रकारप्रतिपादकं श्रीपरशुरामकल्पसूत्रं च त्रिपुरोपनिषद एव समुपबृंहणमस्तीति प्रामाणिकाः सम्प्रदायविदः कथयन्ति । अतएव श्रीविद्योपास्तेर्वेदैकमूलकत्वादेव वेदमार्गप्रवर्त्तकानामखिलनास्तिकपाखण्डिखण्डनवद्धपरिकराणां श्रीशङ्करभगवत्पादानां सौन्दर्यलहरीस्तोत्रव्याजेन श्रीविद्यास्तवनं, त्रिशतीस्तोत्रे भाष्यकरणं, प्रपञ्चसाराख्यतन्त्रनिर्माणं च सङ्गच्छते । सूत्ररूपेण त्रिपुरोपनिषच्छ्रुतौ निर्दिष्ट एव श्रीविद्याविषयो दक्षिणामूर्त्तिसंहिता, ज्ञानार्णव, तन्त्रराजप्रभृतिग्रन्थेषु वाढं प्रपाञ्चितः । श्रीशङ्कराचार्यपीठाधिष्ठितैः श्रीमद्विद्यारण्यस्वामिचरणैः स्वकीये 'विद्यार्णव' नाम्नि ग्रन्थे, अन्यैश्च प्राचीनैः श्रीनागभट्टादिभिः स्वस्वग्रन्थेषु, श्रीभास्कररायसूरिचरणैश्च सौभाग्यभास्कर, सेतुबन्ध, वरिवस्यारहस्यादिषु स्वग्रन्थेषु च श्रीविद्याराधनविषये सप्रमाणं बहूपादिष्टमस्ति । प्राचीनेषु श्रीमद्गौडपादाचार्याणां श्रीविद्यारत्नसूत्राणि, अगस्त्यस्य महर्षेः शक्तिसूत्राणि, दुर्वाससः क्रोधभट्टारकस्य त्रिपुरामहिमादिस्तोत्राणि च विद्याया अस्या वैदिकत्वं वैदिकोपास्यत्वं च साधयन्तीति स्पष्टमेव ।

यच्च केचन बुद्धिमत्तमाः सर्वेषामेवैषां ग्रन्थानामन्यकृतत्वं, शङ्कराचार्यादिनाम्नां साभिसन्धि निक्षिप्तत्वं च व्याचक्षते, ते तथाकथने प्रबलं प्रमाणं दातुं कदाचित्प्रभवेयुः । मया तु बहुविधग्रन्थानुशीलनेन यत्तत्त्वं सङ्गृहीतं, तदेवात्र प्रत्नशोधनरासिकानां पाठकानां पुरः समुपह्रियते, नाऽत्र मम लेशतोऽप्याग्रहः । सुधियः पाठका निष्पक्षया धिया वस्तुतत्त्वं स्वयं विचारयन्तु ।

---

( १ ) श्रीशांखायनकल्पसूत्रविधिभिः कर्माणि ये कुर्वते
येषां शाकल एव मन्त्रनिचयः कौषीतकं ब्राह्मणम् ।
तैरारण्यकमध्यमन्त्रविततिर्या पठ्यते बह्वृचै
ऋग्भिः षोडशभिर्महोपनिषदं व्याचक्ष्महे तां वयम् । (त्रिपुरोपनिषद्भाष्ये)

त्रिपुरारहस्यस्य प्राचीनग्रन्थान्तरेषु प्रमाणतयोल्लेखमन्विष्यन् क्वापि नामग्राहं नोपलब्धवानस्मि। केवलं श्रीशङ्करभगवत्पादीये भाष्ये विशेषानुग्रहश्चेतिसूत्रव्याख्यावसरे जपोपवासादिभिरपि विद्याया विशेषानुग्रहमुदाहरद्भिः भगवत्पादैः "अपि च स्मर्यते" इति पूर्वसूत्रे "संवर्त्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इतिहासे" इत्युक्तत्वात् संवर्त्तस्य महर्षेः कथैतिह्यत्वेन सूचितास्ति, सा च कथा त्रिपुरारहस्य एव तथास्वरूपेण प्रकटितेति ग्रन्थनामानुपादाय कथामात्रोपन्यासात्त्रिपुरारहस्यं भगवत्पादैरपि प्रमाणतयाऽङ्गीकृतमिति प्रतिभाति।

अस्य ग्रन्थस्य रचनाशैल्यपि पुराणान्तरवन्न शिथिलबन्धा, अपि तु प्रगाढबन्धा दीर्घसमासाढ्या काव्यमयी च। प्रायः सर्वेऽपि श्रीविद्योपास्तिग्रन्थाः स्तोत्राणि च तथाभूतयैव शैल्या निबद्धानीति तद्विषये पाठका एव समुचितं विचारयन्तु। प्रायोऽत्र लुङ्लङ्लकारप्रयोगे सर्वत्राऽडागमाभावो ग्रन्थस्यास्यार्षत्वमेव साधयति। इत्थमिदं सङ्क्षेपतो ग्रन्थान्तर्गततत्त्वविषये किमपि यथामति समुपन्यस्तमास्ते। बहिरङ्गविचारे ग्रन्थोऽयं महता प्रयत्नेन मया सरस्वतीभवने सन् १९१८ वर्षे संगृहीतः। ततः प्रभृत्येवैतत्प्रकाशनेच्छा मनसि प्रादुर्बभूव। श्रीमतां पूज्यपादकाशिकराजकीयपाठशालाप्रधानाध्यक्षश्रीगोपीनाथकविराजमहोदयानामाज्ञया चौखम्बासीरीज् नामकग्रन्थमालायां प्रकाशयितुमारब्धः। संशोधनकार्यं चास्मन्मित्रवर सांख्ययोगशास्त्राचार्यादिविरुदाङ्कित श्रीमुकुन्दलाल शास्त्रिभिः सपरिश्रमं कृतमिति तेभ्यो धन्यवादानप्रदाय न स्थातुं सुशकम्। येषां प्रेरणया, निदेशेन, निरन्तरानुग्रहेण समुचितोपदेशदानेन च मया कार्यजातं सम्पाद्यते, तान् माननीयान् पूज्यपादान् श्रीकविराजमहोदयान् कैः शब्दैरभिनन्दानीति न जानामि। सबन्धुवर्गो जयकृष्णदास श्रेष्ठिमहोदयश्च एतद्ग्रन्थप्रकाशनात्मनाऽमुना पुण्यकर्मणा सुचिरं सुखं जीयादित्याशिषो गृणन् दृष्टिप्रदानाय विदुषोऽभ्यर्थयंश्च विरमामि विस्तरादिति शम्।

सरस्वतीभवन काशी
मकरसंक्रमणम्
संवत् १९८८

विद्वज्जनवशंवदः
नारायणशास्त्री खिस्ते।

# त्रिपुरारहस्ये ( माहात्म्यखण्ड )
# अध्यायक्रमेण विषयसूची ।

## प्रथमेऽध्याये--पृ० १-१०

मङ्गलाचरणम् । दक्षिणस्यां दिशि मलयाद्रेर्वर्णनम् । तत्र तपोवने जामदग्न्यरामस्याश्रमः । तत्र सुखासीनं रामं प्रति कदाचित्सुमेधाख्यस्य तच्छिष्यस्य शाश्वतिकं श्रेयः समुद्दिश्य प्रश्नः । तस्य तं तथाविधं प्रश्नं निशम्य भार्गवस्य दत्तात्रेयोक्तिस्मरणम् । अथ रामेण सुमेधसे हारितायनाय बालादीक्षादानम् । लब्धदीक्षस्य तस्य श्रीशैलं गत्वा भ्रामरीदेवीनिकटे कुटीं कृत्वा फलाहारस्य निवासः । ततः स्वप्ने श्रीबालाम्बाया दर्शनम्, तत्कृता श्रीबालाम्बास्तुतिः, बालाया वरदानम्, गुर्वन्तिकगमनाज्ञा च, ततः प्रातः प्रबुद्धस्य हारितायनस्य स्वप्ने संशयालुता, आकाशवाण्या स्वप्नस्य सत्यत्वकथनम्, ततो गुर्वन्तिकागमनम्, प्रसन्नेन गुरुणा सरहस्यश्रीविद्यादीक्षादानम्, श्रीमाहात्म्यस्य ग्रन्थरूपेण निबन्धनाय गुर्वाज्ञा, ततो हारितायनस्य हालास्यनगरे मीनाक्ष्यम्बानिकटे गमनम्, तत्र नियमैरम्बामुपसेवमानस्य तस्य समाहितचित्तस्य कदाचिदन्तश्चित्ते नारददर्शनम्, समाहितेन मया हृदयमध्ये भवान् कथं दृष्ट इति नारदं प्रतिप्रश्नः, प्रहस्य नारदस्य वक्तुमुपक्रमः ।

## द्वितीयेऽध्याये—पृ० ११-१८

'वत्स हारितायन ! नैवमन्येन पृष्टम्, योऽहं त्वया दृष्टः, स महाकाशेन संवृत इति ससचेतस्तिकशरीरान्तर्दर्शनं न सम्भवति । यदि बहिर्दृष्टस्तर्हि जडमिन्द्रियं स्वस्मिन्नेव संस्थितं सत् कथं बहिर्गन्तुं शक्नोति । इत्थमपि इन्द्रियेण दर्शनाभ्युपगमेऽपि तत्र किं जातम् ? अहं ब्रह्मणः सभायास्त्वां द्रष्टुमागतोऽस्मि । तत्र ब्रह्मसभायां ब्रह्माणं प्रति सकलश्रुतिस्मृतीनां सारमुद्दिश्य मार्कण्डेयप्रश्नः । तत्प्रश्नश्रवणेन पराम्बास्मरणात्प्रहृष्टेन ब्रह्मणा त्रिपुरैव सर्वोत्तरा सर्वकारणमिति तद्रहस्यं श्रृणिवति कथनम् । तद्रहस्यं शिवेन विष्णवे, विष्णुना च मह्यं कथितम् । मर्त्यलोके महाविष्णुरूपिणा दत्तगुरुणा भार्गवाय, तेन च सुमेधसे कथितम् । स च ग्रन्थरूपेण तन्निबन्धुमिच्छन् हालास्यं गतः । इति ब्रह्मोक्तं श्रुत्वा त्वां द्रष्टुमागतोऽस्मि । अथ यत् त्वया ज्ञातं तन्मे वद' इति नारदप्रश्नः । 'महर्षे ! नाऽहं किञ्चिज्जानामि गुर्वाज्ञया ग्रन्थरूपेण त्रिपुरारहस्यं निबन्धनीयम्, मन्दबुद्धित्वात् गुरोः श्रुतमपि मया विस्मृतम्, त्वमेव मयि दयां कुरु' इति प्रणतस्य सुमेधस उक्तिः ।

अथ नारदेन चिरं ध्यात्वा ब्रह्मण आवाहनम्, तत्क्षणमेव तेजोराशेर्ब्रह्मणः प्रादुर्भावः, सुमेधोनारदाभ्यां प्रणिपत्य तत्पूजनम्, नारदं प्रत्यावाहनकारणमुद्दिश्य ब्रह्मणः प्रश्नः । 'भवदाज्ञया सुमेधसं द्रष्टुमागतोऽस्मि, केन पुण्यप्रभावेण त्रिपुरारहस्याचार्यत्वं सुमेधसा लब्धम्' इति नारदोक्तिः । 'पुरा सुमन्तुतनयोऽलर्कनामा द्विजः सरस्वतीतीरे

न्यवसत् । तस्य भर्तृपरायणा भार्या बभूव । अयं च पञ्चवर्षस्तस्य बालः, दुर्गोपासकेन पित्रा 'अयि' इति सम्बोधितां मातरं निशम्य बाल्यवशात् 'ऐ' 'ऐ' इत्यस्फुटाक्षरं समभ्यस्य रोगाभिभूतः सन् 'ऐ' 'ऐ' इति मातरमेव ध्यायन् पञ्चत्वमगमत् । इत्थमबिन्दुकस्य वाग्भवस्य जपात् श्रीबाला प्रसन्ना बभूव । अज्ञानपूर्वकजपवशाद्धारणाभावेन विस्मरणं जातम् । मद्वचःप्रभावादस्य सर्वं स्फुरिष्यति, उक्तानुक्तार्थमेष वक्ष्यति । त्रिपुरारहस्यग्रन्थकर्ताऽसौ भविष्यति, त्रिपुरारहस्यपाठं विना सर्वं निष्फलं भवेत् । सुमेधो मुने ! षट्त्रिंशद्दिवसैरेव त्वया प्रत्यहमध्यायचतुष्कक्रमेण माहात्म्यचर्याज्ञानखण्डैर्ग्रन्थः कर्तव्यः । वत्स ! नारद ! अयं वक्ता त्वं श्रोता भविष्यसि ।' इत्युक्त्वा ब्रह्मणोऽन्तर्द्धानम् नारदस्याऽपि गमनम् ।

अथ सुमेधसो वेगवत्यां स्नात्वा सुन्दरेशमीनाक्षीगुरुगणपाद्यर्चनम् , ग्रन्थोपक्रमं स्मृत्वा 'ॐ नमः' इत्याद्यारभ्य 'त्रिपुरैव ह्रीम्' इत्यन्तेन शिवशक्तिप्रणवयोर्मध्ये तन्मयस्य ग्रन्थस्य निर्माणम् ।

## तृतीयेऽध्याये--पृ० १९-२६

मङ्गलाचरणम् । त्रिपुरारहस्यमाहात्म्यकीर्त्तनम् । अकस्माद्वीणां वादयतो नारदस्यागमनम् । सुमेधसा तत्सत्कारकरणम् । ब्रह्माज्ञया नारदोपदेशेन च षट्त्रिंशद्दिवसाभ्यन्तरे त्रिपुरारहस्यनिर्माणोत्तरमग्रे किंकर्तव्यमिति नारदं प्रति सुमेधसः प्रश्नः । 'त्रिपुरारहस्यं त्वत्तः शुश्रूषुरहं समागतोऽस्मि, तन्मे श्रावय' इति नारदस्योत्तरम् । आत्मनो विनयं प्रदर्शयता हारितायनेन सुमेधसा आत्मनारदसंवादात्मना त्रिपुरारहस्यकथनोपक्रमः ।

"ब्रह्मपुत्रो भृगुमुनिरासीत् , तत्पुत्रश्च्यवनः । तस्य भार्या सुकन्या नाम । च्यवनस्य पुत्रो ऋचीको बभूव । पुत्रमिच्छता गाधिना तस्मै स्वकन्या दत्ता । तया स्वसेवया तोषितो मुनिस्तस्यै वरमदात् । सा च क्षत्रियोत्तमं भ्रातरं, ब्राह्मणश्रेष्ठं पुत्रं वव्रे । ऋचीकश्च तपःप्रभावात् ब्रह्मवीर्यं क्षत्रवीर्यं च निष्कृष्य पायसद्वयं चकार । एकं पत्न्यै, अपरं तस्या मात्रे च ददौ । अथ गाधिमहिषी कन्यायाश्चरुमधिकं मत्वा तमेव स्वयं बुभुजे । कन्यकया तद्दृष्ट्वा निवेदितो मुनिस्तामाह--'अनेन चरुव्यत्ययेन तव तनयः कालान्तकसमो भवेत् , भ्राता च साक्षाद् ब्रह्ममयः शान्तो भवेत्' इति । श्रुत्वेदं भीता सा भर्तारं पादोपग्रहपूर्वकमयाचत । 'भगवन् ! ब्राह्मणस्य भवतो भार्याया ममेदृशः कालान्तकोपमः पुत्रो मा भवतु' इति । तां ऋषिराह—'चरोरमोघत्वादिदं तु भविष्यत्येव, तथाऽपि मद्वचःप्रभावात्तव पुत्रः शान्तो भवेत् किन्तु तत्पुत्रः कालान्तकोपमः सर्वक्षत्रान्तकरो महाविष्णोरंशो भविष्यति' इति । अथ कालेन सा जमदग्निं पुत्रं सुषुवे । जमदग्नेश्च रेणुकायां महाबलः क्षत्रान्तकरः पुत्रोऽभूत् । स पितृवधमन्युना परितप्तः शङ्करं परितोष्य तस्मादमोघं परशुं चापं च लब्ध्वा त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रियां कृत्वा तां कश्यपाय प्रदाय ऋषीणां प्रार्थनया क्षत्रवधाद्विरतो भूत्वा परमोग्रं तपश्चचार । सर्वे पुण्या लोकास्तेन तपसा जिताः ।

अथ राघवो रामो रावणस्य वधायावतारं गृहीतवान् । तेन सीताशुल्कं शैवं

धनुर्भङ्गम् । तन्निशम्य क्षत्रियोत्थानमसहमानो भार्गवः परशुं स्कन्धे निधाय रामस्य वधाय निर्गतः । मध्येमार्गं राघवमासाद्य तं गुरुधनुर्भङ्गकरणविषये निर्भर्त्स्य 'गुरोरपमानमसहमानस्य मे परशुस्त्वां हनिष्यति' इत्युवाच । राघवो रामश्च प्रणतः कृताञ्जलिश्च भूत्वा स्वापराधक्षमामयाचत । प्रार्थ्यमानोऽपि भार्गवः क्षमामकृत्वा भूयोऽप्यधिक्षेपपरो यदाऽभूत्तदा राघवोऽपि क्रुद्धः सन्नुवाच—'हे भार्गव ! त्वं ब्राह्मण इति त्वद्विषये मम शान्तिरेव समुचिता । राघवाणां शस्त्रधारा ब्राह्मणेषु कुण्ठितैवास्ति । भवता मम कण्ठः सुखं परशुना छिद्यताम्' इति । तच्छ्रुत्वा भार्गवः पुनरपि ज्वलन्निव तमाह—'क्षत्रियाधम ! मां ब्राह्मणमेव जानासि, न क्षत्रियान्तकरमिति ।' एवमुक्त्वा स्वकीयं वैष्णवं चापं रामस्य करे दत्त्वा तं द्वन्द्वयुद्धायाऽऽमन्त्रयामास । राघवोऽपि लीलयैव तद्धनुरारोप्याकर्णपूरितं तीक्ष्णं बाणं सन्धाय भार्गवमुवाच—'अमोघोऽयं मे बाणः क्व निपात्यतामिति वद' इति । भार्गवस्तु तं तथाऽद्भुतपौरुषं दृष्ट्वा विमदः सन् दण्डवत्प्रणम्य बहुशः स्तुत्वा जगाद—'हे राम ! मया बहवः पुण्यालोकास्तपसा जिताः, ते सर्वे शरस्य लक्ष्यीभवन्तु, रक्ष माम्' इति । रामोऽपि 'तथा' इत्युक्त्वा शरं निपात्य दुरुक्तविषये भार्गवस्य क्षमां प्रार्थ्य तं विससर्ज । भार्गवोऽपि लज्जितः सन् तं प्रदक्षिणीकृत्य यथागतं जगाम ।

## चतुर्थेऽध्याये--पृ० २७-३२

अथ मार्गे गच्छतो भार्गवस्य चेतसि भूयान् खेदः समजनिष्ट । सोऽचिन्तयत्—'मया काश्यपाय क्षोणीं प्रदाय प्रतिश्रुतम्—यत इतः परं नाऽहं शस्त्रहस्तः सन् क्षत्रियेषु क्रुध्यामि । क्रोध एव सर्वानर्थमूलम् । मया क्रोधवशेन बहवोऽनर्थाः समाचरिताः, बहवः क्षत्रियबाला निरपराधा एव हताः ।'

एवं चिन्तयता तेन मार्गे कश्चित् तेजोराशिरपि मलिनाङ्ग उन्मुक्तकेश उन्मत्तचरित एकः पुरुषो दृष्टः । तं तादृशं त्यक्तलिङ्गाश्रमादिकं दिगम्बरं पुरुषं दृष्ट्वा कोऽप्ययं निगूहिताकृतिर्महापुरुषो भवेदिति सञ्चिन्त्य तं परीक्षितुमिच्छन् भार्गवो हसन् सन् तमुवाच—'हे पुरुषसत्तम ! महापुरुषवद् भासमानः कस्त्वमसि ?' इति । सोऽपि तद्वाक्यं श्रुत्वैव पलायनपरः पाषाणखण्डान् क्षिपन् उच्चैर्हसन्नुन्मत्तचरितं विदधे । भार्गवस्तं त्वरया करे गृहीत्वा पुनस्तत्परीक्षार्थं तं बहुधाऽधिक्षिप्तवान् । स तु भूयोऽधिक्षिप्तोऽपि परिभूतोऽपि स्थितेर्न चचाल । ईषदप्यस्य मुखवैवर्ण्यं न जज्ञे । तदा महापुरुष एवायमिति निश्चित्य भार्गवस्तत्पादयोर्निपत्य तं प्रार्थयामास । सोऽपि प्रसन्नः सन् बभाषे—'हे भार्गव ! त्वया कस्त्वमिति पृष्टोऽहम्, तत्र 'त्वं' पदार्थेऽवगते प्रश्नो वृथैव। यदि त्वमिति नावगतम्, तदाऽपि वृथैव । चिदात्मा त्वज्ञेयत्वात्त्वया न ज्ञातः । तव प्रश्नस्तु संज्ञायां व्यवस्थितः, सा च न स्वतः सिद्धा, किन्तु कल्पितैव' इति । इत्याकर्ण्य भार्गवो लज्जितो विस्मितश्च सन् नत्वा तमाह—'हे महापुरुष ! त्वदुक्तं न मया सम्यग् ज्ञातम् , तत् शिष्यभूतं मां बोधय' इति ।

अथ सोऽपि प्रसन्नः सन् वक्तुमारभत—'हे भार्गव ! मामाङ्गिरसं संवर्तं नाम जानीहि । पुरा गुरुणा भ्रात्रा मम विद्वेषोऽभूत्ततो निर्विण्णस्य ममेयं स्थितिरजायत ।

ऽथ गुरुणा दत्तात्रेयेण प्रबोधितोऽहं सर्वव्यापिनमात्मानं मत्वाऽभयं मार्गमाश्रित्य सूत्रपाञ्चालिकेव सञ्चरामि' इति । इदं श्रुत्वा रामः पुनस्तमाह—'हे मुने ! संसारपाडितं मामनुगृह्य शुभं मार्गं प्रदर्शय' इति । श्रुत्वेदं दयार्द्रहृदयः स मुनिः पुनः प्राह—'हे वत्स ! सर्वार्थसंग्रहं परं मद्वचः शृणु । यस्मिन् मार्गे त्वमसि, स महानर्थकरोऽतिभीमोऽस्ति । अहं तु नाथसम्प्राप्तमार्गमाश्रित्य दुर्मार्गस्थान् हसन् सञ्चरामि। संसारिणस्तु संसारे छिद्यमाना अपि तत्रैव सुखं मन्यन्ते । अतः संसारमार्गे वैराग्यबुद्धिं कृत्वा गुरूपदेशात् स्वात्मशक्तिं त्रिपुरां समाराध्य तत्कृपया सर्वसाम्याश्रयात्मकं स्वात्मभावमुपलभ्य आभासमात्रसारमितरद्वगम्य भयसंशयरहितो जगद्गुरुसमापत्तिं प्राप्याऽहमिव यथेच्छं चर । सर्वभावस्थमात्मानं सर्वभावं च स्वात्मस्थं बुद्ध्वा पिण्डाहम्भावमुन्मूल्य वेत्तृभावमारुह्य यश्चरेत्, तस्य संसारे भयं न स्यात् । प्रथमतः संसारे दोषं विभावयेत, तेन तत्र वैराग्यं जायेत् । तदेव सन्मार्गलक्षणम् । इत्थं सदाऽभ्यस्यतोऽचिरेणैव सन्मार्गप्राप्तिर्भवति' इति ।

इत्थं तस्य वचो दुर्विभाव्यं मत्वा रामः पुनराह—'हे महापुरुष ! त्वया यदुक्तं, तदतीव दुर्विज्ञेयम्, अतो मे कृपया विस्तरेण सम्यक् प्रबोधय' इति । संवर्तस्तच्छ्रुत्वा क्षणं ध्यानमास्थितो भावि सर्वं ज्ञात्वा तं पुनरुवाच—'हे राम ! मयोक्तोऽयं मार्गो मलिनधियां पुंसां न गोचरीभवेत् । त्रिपुराम्बाकृपां विनैतज्ज्ञानं दुर्लभमेव । सा कृपाऽपि गुरुकृपां विना दुर्लभा । गुरुकृपाऽपि सत्सङ्गैकसाध्या । तस्मात्त्वं श्रीदत्तात्रेयं गुरुं याहि । तमाराध्य प्रसाद्य सर्वमीप्सितमचिरादवाप्स्यसि । स च गुरुरिदानीं गन्धमादनगिरावास्ते । अहं व्रजामि, ते शुभमस्तु ।' इत्युक्त्वा व्योममार्गेण संवर्तो जगाम । भार्गवोऽपि दत्तात्रेयं द्रष्टुं मनश्चक्रे ।

## पञ्चमेऽध्याये--पृ० ३३-३९

अथ जामदग्न्यो राम उत्तराशाभिमुखः सन् त्वरया दत्तात्रेयाश्रमं गन्तुमुपचक्रमे । मार्गे गच्छन् स लोकव्यवहारमुद्दिश्य चिन्तयामास—'अहो ! अद्यावधि संसारप्रवाहपतितेन मया मुख्यं चिन्त्यं न चिन्तितम् । सर्वेऽपि देहसुखमेव लब्धुं प्रयतन्ते । स च देहो मलमूत्रादिसङ्कुलः सर्वथा गर्हणीय एव । पुत्रमित्रकलत्रादयोऽपि तत्सम्बन्धेनैव सम्बन्धिनो भवन्ति । तत्रैव देहे आत्मबुद्धिं कुर्वन्तो भ्राम्यन्ति सर्वे । परेषां जरामरणादि पश्यन्तोऽपि न चेतयन्ते । मानवापेक्षयाऽसङ्ग्रहपराः शान्तात्मानस्तिर्यञ्च एव वरमिति मन्ये । सर्वेषां दुःखानां मुख्यं मूलं काम एव प्रतिभाति । स च धनैकसाध्यः । अतो धनार्जनार्थं नानाविधानि पापानि कुर्वन्तोऽपि जना न लज्जन्ते। सर्वशोकनिवारणक्षममभयं पदं सर्वैर्द्रष्टव्यम् । अतोऽहं श्रीगुरुं दत्तात्रेयं शरणं प्रयास्ये ।'

इत्थं चिन्तयता तेन पुरोभागेऽभ्रंलिहशिखरालङ्कृतोऽप्सरोगणगायनध्वनिपूरितदिगन्तरो विद्याधरमिथुनक्रीडासौभाग्यसुभगो नैकविधमहीरुहविराजमानविविधविहगवृन्दनन्दितो गन्धमादनो नाम गिरिः समासादि । अथ पुरस्तं देवालयं संवर्तवर्णितमहायोगिदत्तात्रेयानन्दभूमिं गन्धमादनं गिरिवरं पश्यता रामेण दत्तात्रेयस्य पर्णशालाऽपि दृग्गोचरीभूता । तां दृष्ट्वा मुनिदर्शनसमुत्कण्ठितो रामः शालाद्वार-

मुपागम्य तत्र कञ्चन ध्यानमग्नं ब्राह्मणं ददर्श। तद्ध्यानभङ्गभीत्या क्षणं दूरतस्तस्थौ। अथोन्मीलिताक्षं तमुपसृत्य वन्दित्वा पप्रच्छ—'भो मुने! प्रशान्तोऽयमाश्रमः कस्य मुनेरस्ति? किञ्च गुरोर्दत्तात्रेयस्याश्रमः कुत्राऽस्ति? तन्मे कृपया ब्रूहि' इति। तच्छ्रुत्वा स ब्राह्मणः सस्मितमाह—'अयमेव दत्तगुरोराश्रमोऽस्ति' त्वं कस्मादागतस्तद् ब्रूहि' इति। तदाकर्ण्य रामः प्राह—'अहं भार्गवो रामोऽस्मि, संवर्तेन मुनिना नोदितोऽहं संसारतापतप्तः शान्तिमन्विष्यन् श्रीगुरोश्चरणावाश्रयितुं समागतोऽस्मि, श्रीगुरुः कथं लभ्यस्तन्मे वद' इति। अथ स ब्राह्मणो रामोक्तं श्रुत्वा प्रहस्य प्राह—'राम! श्रीगुरुकृपयाऽहं सर्वं त्वदागमननिदानं जानामि। अभ्यन्तरं गच्छ, तत्र श्रीगुरुरास्ते' इति।

अथ रामस्तथोक्तः सन् शालान्तः प्रविश्य तत्र महायोगिभिः परिवृतं अवधूतकुलेश्वरं योगिराजं श्रीदत्तगुरुं दृष्ट्वा दण्डवत्प्रणिपत्य तदग्रे कृताञ्जलिः तच्चेष्टितस्थित्यादि विलोकयन् नाऽतिदूरे तस्थौ।

षष्ठेऽध्याये--पृ० ४०-४६

अथ रामस्तत्राश्रमे तेजोराशिं प्रांशुमत्यन्तसुन्दरशरीरं कामिनीमनोमोहनाकारं तारुण्यपूर्णमपि यतिलिङ्गधारिणं कयाऽपि लक्ष्मीसमानया तरुण्या समालिङ्गितं पुरोविन्यस्तमदिराकुम्भं श्रीदत्तगुरुं विलोक्य शङ्कितचेताश्चिन्तयामास—'अहो! महात्मनां चित्रा गतिः, एनं परिवार्य स्थिताः सर्वे एव सात्त्विका ऋषयः, अयं चेदृशः, तस्मान्नैतद्यथादृशम्, किञ्चिदन्यदेवाऽस्ति, भवतु किमपि, मम त्वेष गुरुरेव। सदसद्भेदो हि मनःकल्पित एव' इति विचिन्त्य सुचित्तः सन् तत्स्थौ। तं तथास्थितं दृष्ट्वा श्रीदत्तगुरुरुवाच—'हे भार्गव! ते स्वागतम्, अपि कुशल्यसि? स्वाध्यायं तपश्च ते निर्विघ्नं प्रचलति? नूनं त्वया तपसा पुण्यलोका जिताः, भार्गववंशस्य भूषणमसि। इन्द्रियजय एव पुरुषार्थः, ये च न तथाविधा जितेन्द्रियास्ते जीवन्मृता एव। अहं पुरा वैराग्यान्न्यस्तसर्वक्रियोऽभवम्। आत्मशत्रुषु रसनोपस्थयुगलं बलवत्तरम्, तेन बहवः पातिताः, येन तज्जितं तेन सर्वं जितम्। बुद्धिभ्रंशकरी सज्जनगर्हिता इयं सुरा तादृश्येवेयं वारयोषाऽपि मया सेव्यते इति मत्सङ्गतिं त्यक्त्वा सन्तोऽस्मादाश्रमाद्गताः। एवंविधस्य मम स्थाने त्वं कथमागतोऽसि? निःशङ्कं वद, येन मे मनः शुद्ध्येत' इति।

इत्थं पृष्टो जामदग्न्यः संवर्तचरितं स्मरन् स्वरूपगुप्त्यै ईदृशं वचो गुरुणोक्तमिति निश्चित्य विनयेन प्राह—'भगवन्! शरणागते मयि शङ्का न कार्या। संसारदावानलदह्यमानोऽहं संवर्तमहायोगिकृपया सद्गुरुं भवन्तमाप्नवम्। मया भवान् सुविदितः। सन्नसन्वा भवतः पन्था एव ममाप्यस्तु। गुरुः साक्षाच्छिव एव सर्वेषामात्मदः, अनात्मदैरन्यैर्गुरुभिर्मम प्रयोजनं नास्ति। हे दीनवत्सल! चरणाश्रिते मयि कृपाऽवश्यं कार्या' इति। गुरुस्तद्वचनं श्रुत्वा प्रसन्नः सन् प्राह—'साधु वत्स! जामदग्न्य साधु आत्मपदवीपरिमार्गणं ते श्लाघ्यतमम्। इह जगति सर्वे विषयप्रवणा एव, न कोऽप्यात्मचिन्तकोऽस्ति। भवतु, वद किं ते कार्यम्?' तच्छ्रुत्वा रामः प्राह—'हे गुरो! त्वयि लब्धे किमन्यदाशास्यम्। इह जगति सर्वे एव मानवा आदिशान्ता त्रिविधतापैर्दह्यमाना एव लक्ष्यन्ते। अहं तु भवत्कृपया दह्यमाने वने गङ्गामध्यस्थगज इव सर्वशीतलो

भवितुमिच्छामि । भवता तथा बोधनीयः, यथा मेऽन्तः शीतलता स्यात् ।' तच्छ्रुत्वा दत्तगुरुः प्राह—'वत्स ! भार्गव ? कल्याणी ते मनीषा, श्रेयसो मूलमेव त्वयाऽभिलषितम् । नूनं त्वयि भगवत्याः पूर्णकृपाऽऽस्ते, तां विना नेदृशी बुद्धिरुदेति । हे राम ! सावधानः सन् शृणु—

साक्षात्परशिव एव सर्वेषां प्राणिनामात्मा । स्वमायावशादात्मानमविदन् सर्वशक्तीनां संकोचे स्वयमपि संकुचितः संवृत्तः । भासमानादन्यदिह किञ्चिन्नास्ति । यज्ज्ञानं तदेव भासनम् । भानात्मैव परशिवः । स एव स्वशक्त्या स्वयमेकोऽप्यनेकधा भासते । नित्यस्वप्रभः स एव सर्वेषामात्मा । भातोऽपि मोहेनाभात इति मन्यते । तस्मात्तत्प्रत्यभिज्ञान्मोहनाशे सति अन्तर्बहिश्च सर्वशीतलभावमभ्येति नान्यथा । तज्ज्ञानं लोके दुर्लभमेव । पराशक्तिकृपां विना तज्ज्ञानं न भवति । अतः सर्वादौ सा त्रिपुराम्बिकैव सेव्या । भक्त्या विना सेवनेन कोटिजन्मभिरपि सा दुर्लभैव । तस्या भक्तिश्च तन्महिमाकर्णनेन विना न भवति । अतः श्रद्धया त्रिपुरायाः परा कथा श्रोतव्या कीर्तितव्या च । इत्थमनुदिनं श्रवणेन सैव स्वभक्तिं प्रयच्छति । यया परासेवां प्राप्य निर्भयं पदं प्राप्नोति । तत्पदप्राप्तावुपायान्तरं नास्ति । अतस्त्रिपुरामहिमश्रुतौ परा श्रद्धा कर्तव्यैव, सैवाभीष्टसाधने कल्पलतिकायते ।

## सप्तमेऽध्याये--पृ० ४७-५३

अथ श्रीभगवतो गुरोर्दत्तात्रेयस्य वचनं निशम्य प्रहृष्टमनाः भार्गवो मधुरं पुनरुवाच—'भो गुरो ! भवतोक्ता सा त्रिपुरा कीदृशी ? कथंभूता ? किंस्वभावा ? किमाश्रिता, इत्येतत्सर्वं शुश्रूषवे मे व्यासतो ब्रूहि' इति । गुरुरपि त्रिपुरामाहात्म्यमग्नमनाः हर्षपुलकितगात्रोऽम्बिकां ध्यात्वा प्रणम्य च सविधे स्थितं विनीतं शिष्यं भार्गवं प्राह—

"हे राम ! लोकेश्वरैर्ब्रह्मादिभिरपि केयं कुत्रस्थितेति अविज्ञाता वेदशास्त्रतन्त्रातीता मेयवस्तुविश्रान्तप्रत्यक्षादिप्रमाणैरगम्या समस्तमातृवर्गस्वरूपा तर्केण युक्त्या वा ज्ञातुमशक्या 'अस्मि' इत्यनुभवमात्रवेद्या प्रमाणानां प्रमात्री चिच्छक्तिर्लीलागृहीतदेहा महिमाम्बुधिः सा भगवती न केनाऽपि वर्णयितुं शक्यते, पार्थिवाः परमाणवः सुखं संख्यातुं शक्येरन् न पुनश्चिन्नतनोरस्या महिमानः । तथापि त्रिपुराचरितसारलवं वक्ष्यामि त्वमवहितः सन् शृणु—

पुरा क्षीरनीरधौ शेषतल्पे शयानं श्रीलक्ष्म्या संवाह्यमानचरणकमलमादिनारायणमुपगम्य विविधैः स्तवैरुपस्थायासनमलंकुर्वति ब्रह्मदेवे परस्परं विवदन्तो रोषारुणलोचनाः इन्द्रप्रमुखा देवा हरेः सम्मुखमाजग्मुः । अथ भगवन्तं कमलापतिं विधिञ्च प्रणम्य श्रीविष्णोराज्ञया यथाऽऽगतमुपविष्टेषु देवेषु पार्षदमुख्येन सुनन्देन प्रचोदितः पाकशासनः कलहस्य कारणं वक्तुमारभत—'भगवन् ! कमलाकान्त ! यस्मिन्नर्थे वयं विवदामः, तमर्थं निशामय । 'अहमिन्द्रो देवानामधिपतिर्यज्ञानामधिपो भुवनेश्वरश्चास्मि, सर्वे पर्जन्यादयो मम वशंवदाः' इति सुधर्माणं प्रसङ्गान्मयोदिते वह्निराह—'हे इन्द्र ! मूर्खत्वेन वृथाभिमानो न कर्तव्यस्त्वया, अहमेव सकललोकश्रेष्ठः, मां समाराधय' इति । तच्छ्रुत्वा

सोमः कथयामास—'हे देवाः ! अज्ञा माभवत, ममैवानुग्रहेण लोका जीवन्ति, यद्यहमनुकूलो न स्यां तर्हि शस्यसम्पत्तिर्न स्यात्, शस्यं विना क्षणेन लोको नश्येत, शक्रादयो देवा मच्छरीराऽमृतेनैव जीवन्ति, यूयं मोघमभिमानं त्यजत, नाशं मा गच्छत' इति । सोमवचनं श्रुत्वा क्रुद्धोऽनिलः प्राह—'हे सोम ! वृथाऽऽत्मश्लाघां करोषि, सर्वविनाशसमर्थोऽहं यदीच्छामि सोमाग्निशक्रसहितं सदेवासुरमानुपमिदं जगत् क्षणेन नामशेषं नयामि । क्रोधाज्ज्वलति मयि सोमशक्रब्रह्मविष्णुरुद्रादयोऽपि न स्थास्यन्ति, इतरेषान्तु का कथा ? अयं मे मित्रं वह्निरपि मत्साहाय्यमन्तरा ज्वलितुं न शक्नोति, अतोऽहमेव सर्वेषु युष्मासु बलिष्ठः । हे सोम ! मदनुग्रहादेव तव स्पन्दनम् ।' इति कलहायमानेषु स्वर्गवासिषु अस्मासु केचिदग्निपक्षे केचित्सोमपक्षे केचित्पवनपक्षे केचिच्च मत्पक्षे स्थिताः सन्ति देवाः । हे भगवन् ! देवार्तिनाशन । एवं विवादग्रस्तानां गुरोराज्ञया शान्तिप्राप्त्यर्थं भवतश्चरणान्तिकमागतानामस्माकं संशयं छिन्धि ।'

इति श्रुतेन्द्रादिदेववचसा स्वस्वपक्षदृढाशयानां मद्वाक्येऽविश्वस्तानामेतेषां कलिशान्तिर्मया कर्तुं न शक्येति निश्चिन्वता विष्णुना ध्यातः सदाशिवस्तत्राविरासीत् । रजताद्रिप्रतीकाशं गौर्या देव्या सुसेवितं वृषभारूढमुपस्थितं तं निरीक्ष्य कृतोत्थाना देवाः प्रणिपत्य पूजयामासुः । अथ देवैः कृतपूजो महादेवो वृषादवरुह्य ससंभ्रमं विष्णुं समालिङ्ग्य देवैः सह स्वासने समुपविष्टः विष्णोश्चेष्टितं ज्ञात्वा दृष्ट्वा च कलहजन्यमन्युग्रस्तान्देवाञ्जगत्कल्याणाय त्रिपुरां भगवतीं प्रार्थयामास । शङ्करस्य तादृशं व्यवसायं दृष्ट्वा विधिहरी अपि शुद्धेन मनसा तस्या अम्बिकायाः स्मरणं चक्रतुः । अथ शिवविरञ्चिजनार्दनैः कारणपुरुषैः संस्मृता भगवती महता भयङ्करेण शब्देन सह तत्र प्रादुरासीत् । कोटिसूर्यसमप्रभां तामम्बिकां पुरतो निरीक्ष्य शरणं गताः कारणेश्वरा ब्रह्मविष्णुमहेश्वरा मुहुर्मुहुर्दण्डवत्प्रणिपत्य स्तुवन्ति स्म ।

### अष्टमेऽध्याये--पृ० ५४–६२

अथ तस्या अम्बिकायाः स्तवं कर्तुमुद्युक्तो ब्रह्मा "जय जय मातः" इत्यादिना संस्तुत्य परितोषं चकार । विष्णुरपि "देवेशि" इत्यादिना स्तुवन् तां तोषयामास, । अथ भक्तिप्रवणचेताः शिवः कृताञ्जलिः सन् "नमामि परमेश्वरि" इत्यादिश्लोकैरस्तौषीज्जगदम्बिकाम् । एवमात्मनः कृतस्तवान् भुवि भक्त्या दण्डवत्प्रणिपतितान् ब्रह्मविष्णुमहेश्वरान् अवलोक्य प्रहृष्टा त्रिपुरा भगवती देवानां तं मोहमपाकर्तुं देहं दधार ।

अथ नानाभरणभूषिताङ्गी विधिहरीश्वरान् 'भो वत्साः ! सुराणामज्ञाननाशाय प्रादुर्भूताया वः कल्याणकारिण्या मे वचनं शृणुध्वम्' इति मधुरमुक्तवती सा लोकोत्तरसुन्दरी त्रिपुरसुन्दरी पूर्वं भयङ्करशब्दश्रवणेन सम्मूर्च्छितान्मृतप्रायान्देवानमृतमयदृष्ट्या समाश्वस्तान् चकार । अथ निद्रामुक्तैरिवोत्थितैरन्योन्यसङ्गतैः शक्रादिदेवैस्तद्वृत्तज्ञानाय नियोजितोऽग्निस्तां समाजगाम । अथ 'हे कुमारि ! का त्वं ? किन्ते सामर्थ्यम् ? का ते वसतिः ? इत्येतत्सर्वं ज्ञातुमिच्छामि' इत्यादिकं सगर्वमुक्तवति तथा भगवत्या स्वशक्त्या विनिर्जिते निस्तेजस्के तस्मिन्वह्नौ लज्जया तिरोभूयेन्द्रं समागते सति

शक्रेणाज्ञप्तस्तद्वृत्तान्तं ज्ञातुं त्रिपुरान्तिकं प्राप्तः सोमोऽपि तथा निजप्रभावेणाग्निरग्नि- र्जितः सन् पुनरिन्द्रं समाजगाम । ततस्तद्वृत्तबोधाय तत्समीपे प्रेषितं पवनमपि तथैव परावर्त्तितं विलोक्य शङ्कितः पुरन्दरः किमेतदिति बहुधा चिन्तयन्नपि स्वरूप- तस्तामम्बिकां नावबुद्ध्यत ।

## नवमेऽध्याये—पृ० ६३-७१

अनन्तरमिन्द्रः आयुधवाहनादिसहितस्तां जेतुं पुनस्तत्रैवाऽऽजगाम । तामतिसु- न्दरीं दृष्ट्वा तत्तेजसा मुषितेक्षणः सन् दूरत एव पप्रच्छ यत् 'अलौकिकसौन्दर्यशालिनी- का त्वमसि ?' इति । तच्छ्रुत्वा पराम्बा प्राह यत् 'त्वं स्वपरिचयं देहि, त्वां यथावद् ज्ञात्वाऽहमपि स्वपरिचयं दास्यामि' इति । तदेन्द्रः साटोपं स्वबलपराक्रमाऽऽयुधवर्णनस- हितं स्वपरिचयं ददौ । तच्छ्रुत्वा तद्बलं जिज्ञासमाना भगवती पुरतः स्थिते तृणे स्वबलं प्रदर्शयितुं तमादिश्याऽकथयत् यत् 'इदं न करिष्यसि चेत्त्वां ह्रीभरादवनतमुखं विधास्यामि' इति । तच्छ्रुत्वा समुत्पन्नक्रोधः इन्द्रः तदुपरि वज्रं प्रहर्तुमियेष । तत्क्षणे दिशः सहसा सज्वालाः अभूवन् । तदा चाम्बा ईषत्स्मितं चकार । तेन स्मितेने- न्द्रस्य सायुधः करः सर्वाङ्गञ्च काष्ठवत् स्तम्भितमभूत् । तद् दृष्ट्वा सर्वे देवाः सभयाः आक्रोशं चक्रुः ।

अथेन्द्रः तथाविवशमात्मानं दृष्ट्वा आपद्रक्षणाऽर्हं स्वगुरुमाङ्गिरसं सस्मार । तदैव बृहस्पतिरभ्यगात् । तं दृष्ट्वा देवाः धैर्यं लेभिरे । अत्रान्तरे स मुनिस्तत्र भग- वतीं दृष्ट्वा साधु सप्रणामं "जय जय शङ्करि" इत्यादिभिः श्लोकैरस्तौषीत् । अथ जीवकृतया स्तुत्या प्रसन्ना देवी कृपादृष्ट्येन्द्रं पुरेव प्रकृतिस्थं चकार । तदानीमिन्द्रः स्वगुरोस्सकाशात् भगवतीं याथार्थ्येन विदित्वा "नमस्ते त्रिपुरे" इत्यादिभिः श्लोकै- रस्तौषीत् । अन्येऽपि देवास्तदा शक्रवद् विविधैः सूक्तैस्तामस्तुवन् । तदा प्रसन्ना देवी प्राह—'भो देवाः ! यूयं यथावत् मद्भक्तियुताः स्वस्वकार्याणि पालयध्वम्' इति । तच्छ्रुत्वा देवा ऊचिरे यत् 'अस्माकं त्वद्भक्तिः स्थिरा भूयात्' इति । सा तु 'तथाऽस्तु' इत्युक्त्वाऽन्तर्दधे, तदा शक्राद्याः देवाः प्रणताः भगवत्याः वास्तवं रूपं ज्ञातुं ब्रह्मवि- ष्णुमहेशान् पप्रच्छुः । तदा मुरारिः तस्याः परमशक्तित्वं सर्वश्रेष्ठत्वं सर्वव्यापकत्वं चि- च्छक्तित्वमन्यांश्च गूढभेदानुक्त्वा तस्याः महाशक्तेः सर्वदा ध्यानपूर्वकं स्वस्वलोकपा- लनं देवानादिश्य तूष्णीमतिष्ठत् । तदा देवास्तान्प्रणम्य स्वस्थानं जग्मुः । हरिधातृभ्यां संपूजितः शिवोऽन्तर्दधे । अथ नारायणं स्तुत्वा ब्रह्माऽपि स्वाऽऽलयं जगाम । भार्गव ? एवं सा परमा शक्तिः देवानां मोहनाशमकरोत् । एतदाख्यानं शृण्वतां पठताञ्च मह- त्पुण्यकरं वर्तते" इति ।

## दशमेऽध्याये—पृ० ७२-८७

जामदग्न्यः इति कुमार्याख्यानं श्रुत्वा जगाद—"गुरो ! एतदाख्यानं श्रुत्वा तृप्तो- ऽप्यहमतृप्त इव पुनरन्यमाख्यानं श्रोतुमिच्छामि, तन्मे वद" इति । तच्छ्रुत्वा पुनर्दत्तात्रेयः प्राह—"हे राम ! शृणु । अस्यास्त्रिपुरानाम्न्या देव्या भेदान् वर्णयितुं शेषोऽपि न सम- र्थस्तथाऽपि प्रधानभेदा एते—कुमारी, त्रिरूपा, गौरी, रमा, भारती, काली, चण्डिका,

दुर्गा, भगवती, कात्यायनी, ललिता इति । एतासां लीलाः क्रमेण कथयिष्ये । तत्र त्रिपुराख्यायाः कुमार्या आख्यानं श्रृणु ।

सृष्ट्यादौ सा त्रिपुरा एकैवासीत् । यदा सा स्रष्टुं प्रवृत्ता तदा तत इच्छारूपः शिवः, ज्ञानरूपो विष्णुः, क्रियारूपो ब्रह्मा च समुत्पन्नस्तपस्तप्तुं प्रवृत्ताः । तस्मिन्काले पृथ्व्यादिकं किञ्चिदपि नासीत् । केवलमाकाशमयमासीत् । तपसि प्रवृत्तेषु तेषु बहुकाले गते सति आकाशमय्या तया स्रष्टुमाज्ञप्तो विधिः शून्यमये तत्र किञ्चिदङ्गचालनेन स्पर्शं, तस्मात् वायुं, ततस्तेजः, तेजसोऽग्निम्, अग्नेर्जलं, ततो गन्धं, ततः पृथ्वीं तत्र भुवनानि चोत्पाद्य तत्र सृष्टिं चकार" इति ।

एवं शङ्कास्पदानि वाक्यानि श्रुत्वा शङ्कानिरसनार्थं भार्गवेण पृष्टो दत्तात्रेयः प्राह— "वत्स ! त्वदीयशङ्कानिवृत्तिमवसरे प्राप्ते करिष्यामि । यतः अनवसरे कथितेन वक्ता मुग्धो भवति, शिष्यश्च कटकारवत्प्रणश्यति" इति ।

ततः पुनः रामेण पृष्टम्—"कोऽसौ कटकारः ? कीदृशः ? कथं स नष्टः ? तदितिवृत्तं सर्वं वद" इति । ततो दत्तात्रेयः कथयाञ्चकार—"कस्मिंश्चित्काले कटकर्मणि निपुणः कटकारः कुवलनामा स्वकृतकटानि राज्ञे समार्पयत् । तेन तुष्टो राजा तस्मै बहु धनं ददौ । अथ सः पुराणेषु श्रुतम् अध्यात्ममनवगम्य तदर्थं विप्रसमीपे गत्वा अध्यात्मविषयकं प्रवचनं चकार । ततो विप्रेण 'सर्वं समं ज्ञात्वा सन्तुष्टो निर्भयो विचरेत्' इत्याद्यध्यात्ममुक्तम् । ततः स आत्मानं सर्वसमं मत्वा विप्रदेवतासेवादिकं त्यक्त्वा विचचार । तेन च स पापी अधमां गतिं प्राप । अतः अनवसरे न वक्तव्यम् ।

ब्रह्मा तस्यां पृथिव्यां मनुष्ययक्षगन्धर्वादि सर्वं क्षणादेव सृष्ट्वा पुनस्तपसि मग्नः । ततः किञ्चित्कालानन्तरं ब्रह्मणा प्रार्थिता सा देवी विष्णुं जगत्पालने न्ययोजयत् ।

एवं विष्णुना पाल्यमानं जगत् प्रत्यहं सृज्यमानमचिरादेव भूचरादिभिर्व्याप्तं बीजपुष्टया दाडिममिव विदीर्यमाणं दृष्ट्वा ब्रह्मणा पुनः प्रार्थितया देव्या संहारे नियुक्तो रुद्रः ॐ कारशब्देनैव सर्वं भस्मीकृतवान् । बहुकालेन सृष्टं जगत् क्षणादेव विनष्टं दृष्ट्वा विस्मितो विधिः पुनस्तपस्तप्त्वा सृष्टिं विधाय क्रमेण तत्संहारार्थं रुद्रांशभूतं मृत्युं तदनभिलषितेऽपि तस्मिन् संहारे तदीयरोदनेन निष्पन्नानां रोगाणां साहाय्यं दत्त्वा न्ययोजयत् । ततः सर्वं सुस्थमवेक्ष्य सा देवी द्वादशभुजा दशवक्त्रा त्रिमूर्त्यात्मिका प्रादुर्भूता । तां दृष्ट्वा विधिप्रमुखैर्देवैर्भक्त्या 'नमामस्त्वां देवीम्' इत्यादि संस्तुत्य स्ववृत्तं तदग्रे निवेदितम् । तदाकर्ण्य सा देवी विष्ण्वादीनां श्रमपरिहाराय स्वाङ्गात् वाणीं रमां रुद्राणीं च सृष्ट्वा ब्रह्मविष्णुमहेशेभ्यो दत्त्वा अन्तर्बभूव । ततस्ते गतश्रमाः किंचित्कालानन्तरं विश्वकर्मणा निर्मितायां स्वर्णभूम्यां हीरकास्तरणादिभिश्च युक्तायां बृहच्छालायां देवर्षिसिद्धादीनावाह्य शुभे मुहूर्ते वेदविधिना स्वां स्वां शक्तिं प्रगृह्य विवाहं चक्रुः । तत्र ब्रह्मणा सह वाण्याः, विष्णुना रमायाः, रुद्रेण रुद्राण्याश्च विवाहः संजातः । एवं ते देवाः त्रिपुरादेव्याः कलाः प्राप्य स्वं स्वं स्थानं गत्वा देव्यर्चने संलग्नाः परां निर्वृतिमाजग्मुः ।

हे भार्गव ! एतत्ते कथितं त्रिरूपाख्यानं श्रोतॄणामभीष्टफलदं सत् अन्ते जन्मसृ-

त्युर्वर्जितं परं स्थानं ददाति । एतदभक्तेभ्यः कदाऽपि न देयम्, त्वया च सदा धार्यम् । हे राम ! इतोऽनन्तरं किमिच्छसीति कथय" इति ।

## एकादशेऽध्याये—पृ० ८८-९२

एवं मनोहरं त्रिरूपाऽऽख्यानं श्रुत्वाऽप्यतृप्तो रामो गौर्यादीनामाख्यानं श्रावयितुं दत्तात्रेयं पुनः प्रार्थयाञ्चकार । तच्छ्रुत्वा दत्तात्रेयः कथयामास—"हे राम ! एवं विष्ण्वादयस्ते देवाः स्वां स्वां शक्तिं प्राप्य निर्वृता बभूवुः । तस्मिन् काले सर्वे प्राणिनो मितसुखाः क्लेशादिरहिताः सर्वान् समान् पश्यन्त उत्कर्षापकर्षरहिता यज्ञादिकं न किमपि कुर्वन्ति । यज्ञदानादिकस्यानुष्ठानाच्चिन्तिता इन्द्राद्या देवाः आङ्गिरसाख्यस्वगुरुसन्निधौ गत्वा स्वसंकटं कथयामासुः । ततो गुरुणाऽऽज्ञप्तास्ते देवाः पितामहस्य ब्रह्मणः समीपं जग्मुः । तत्र ते देवाः शतयोजनविस्तीर्णायां त्रिंशद्योजनमायतायां रत्नस्तम्भस्वर्णभूमिचन्द्रकान्तादिभिः प्रदीप्तायां मुक्तादिजालैश्चित्रितायां तोरणादिमण्डितायां सभायां मध्ये ऋषिमुन्यादिभिः, सुन्दरीभिः कामिनीभिश्च परिवेष्टिते सिंहासने अधिरूढं ब्रह्मव्याख्यानतत्परं ब्रह्माणं ददृशुः ।

हे राम ! एवमेव सत्यलोकान्तरेऽपि ब्रह्मा अन्येन रूपेण संस्थितो विद्यते । किंतु तत्र मुक्तकामक्रोधानामेव प्रवेशो भवति ।

ततस्ते देवा ब्रह्माणं प्रणम्य मर्त्यजनाचरितं सर्वं न्यवेदयन् । तच्छ्रुत्वा ब्रह्मणा उक्तम्—'मर्त्यजनानां स्वार्थाभावोऽत्र कारणम्, अतो यूयं लक्ष्मीं प्रसादयत' इति । ततस्ते लक्ष्मीं प्रसादयितुं जग्मुः ।"

## द्वादशेऽध्याये—पृ० ९३-९९

"शक्रादयस्ते सुरा हिमालये गङ्गातीरे गत्वा अष्टाविंशतिनामात्मकेन स्तोत्रेण लक्ष्मीं तुष्टुवुः । शरणागतानां देवानां संकटनिवारणार्थं तडित्पुञ्जसमप्रभा महालक्ष्मीः प्रादुर्बभूव । दण्डवत्प्रणतान् गद्गदया वाचा मुहुर्मुहुः स्तुवतो देवान् अवेक्ष्य लक्ष्मीरुवाच—'भो देवाः ! प्रसन्नाऽस्म्यहम् , किमभीष्टं भवतां ब्रुवन्तु' इति । एवं श्रुत्वा तैर्देवैरुक्तम्—'यागादिभिः मर्त्यैर्वयं सेव्या भूयास्म, शक्रो लोकत्रयाधिपतिश्च भवतु' इति । तदाकर्ण्य प्राह लक्ष्मीः—'भो देवाः ! इतः परं ये मर्त्या युष्मान् यक्ष्यन्ति, ते सम्पन्ना भविष्यन्ति, नान्ये । भवदुक्तनामभिः· शुक्रदिने मत्पूजकानामतुलसंपत्तिर्भवेत्' इत्युक्त्वा साऽन्तर्दधे । ततस्ते स्वभवनं ययुः ।

अथ कतिचिद्दिनेषु अतीतेष्वपि स्वाभीष्टमसिद्धं पश्यन्तस्ते चिन्तिता देवा आङ्गिरसानुज्ञया पुनर्हिमाद्रौ गत्वा स्वर्धुनीतोये आप्लुता दशोत्तरद्विशतमासमुग्रं तप आचर्य लक्ष्मीं संतोष्य प्रादुर्भूतां दत्ताश्वासनां तां प्रणम्य शरणागतेत्यादिभिः स्तुत्वा स्ववृत्तान्तं निवेदयामासुः । तन्निशम्य लक्ष्मीराह-'हे देवाः ! भवद्वृत्तं ज्ञातं मया, परं किं कुर्याम् ? कालस्वभावान्मर्त्याः सर्वे निष्कामा एव सन्ति । अस्तु तर्हीतः परं निश्चिन्ता भवन्तु, भवदीप्सितसिद्धिर्यथा भवेत्तथा करिष्ये' इत्युक्त्वा स्वमनसा दिव्यतेजस्कं कुमारमुत्पाद्य तेभ्यो ददौ । उवाच च—'भो देवाः ! कामाख्योऽयं कुमारो भवत्कार्यसाधको भविष्यति' इति । कामश्च देवाभीष्टसिद्धये आज्ञप्तः ।

एवं प्राप्तेप्सितप्रायास्ते सुराः कामसहिताः स्वर्गे आगत्य विश्रान्ताः । स्वकार्यसाधनाय प्राप्तं बालं तं विलोक्य 'अयमस्मत्कार्यसाधने समर्थोऽस्ति न वा' इति साशङ्कः शक्रस्तं कामं कुमारं संस्तुत्य प्रोवाच-'वत्स ! त्वया सुष्टोऽपि बालस्त्वं कथमस्मत्कार्यं साधयिष्यसि ?' इन्द्रवचसा स्वावहेलनं मत्वा क्रुद्धः स प्राह—'हे शक्र ! शृणु ! किं बाल्येन ? वीर्यमेव सर्वस्मिन् समर्थम् , तत्कथय, किं त्वदभीष्टं कुर्याम् ?' इति । एवं क्रुद्धं तं प्रशाम्य इन्द्रो जगाद—'हे काम ! त्वं साक्षाल्लक्ष्म्यंशभूतः, न किमपि तवासाध्यम् । अतो येन मर्त्या अस्मत्पाल्या भविष्यन्ति, यागादिभिश्चास्मान् भजन्ति तथा विधेहि ।' एवमिन्द्रवचः श्रुत्वा सः सस्मितो बलदर्पितोऽभूत् ।"

त्रयोदशेऽध्याये—पृ०१००-१०६

"अथ कामः इन्द्रं 'हे इन्द्र ! एकोऽप्यहं सर्वान् मर्त्यान् त्वद्वशीभूतान् करोमि' इत्युक्त्वा धनुःशरौ प्रगृह्य अतिसुन्दरीं तनुं निर्माय देवेषु पश्यत्सु क्षित्याम् अवतीर्य कोपयुक्तो मर्त्यान् सुरसेवनार्थमाज्ञापितवान् । तच्छ्रुत्वा अस्य च नयनाकर्षिणीं बालतनुं दृष्ट्वा सकौतुकास्ते मानवाः अवहेलात्मकं प्रहस्य परस्परमस्य सौन्दर्यं प्रशंसन्त उपेक्षां चक्रुः । एवं स्वानादरमवलोक्यातिक्रुद्धः स कामः पुनः प्राह—'भो मर्त्याः ! अहमिन्दिरात्मजो देवकार्यार्थमागतोऽस्मि । तत्सर्वे यूयं सुरवश्या भवत , अन्यथाऽहं स्वशासनात् युष्मान् वश्यान् विधास्ये' इति । ततस्ते प्रोचुः—'हे कुमार ! शृणु ! यथा स्वर्गे सुरास्तिष्ठन्ति तथा भुवि वयम् । तत्किमर्थमस्माभिस्ते पूज्याः ? किंच ब्रह्मावर्तप्रदेशे वीरव्रताख्योऽस्मत्स्वामी तिष्ठति, तत्सेवका वयं नैव भवदुक्तं विधातुं शक्नुमः' इति ।

ततः क्रोधरक्तेक्षणः स कामः स्वसामर्थ्येन समागतान् तान् सायुधान् कोटिशो मर्त्यान् बद्ध्वा कुपितैस्तैर्मुक्तान् कोटिशः शरान् निवारयन् शक्रादिभिः 'साधु' 'साधु' इति प्रशंसितः तमो दिनमणिरिव स्वशरवृष्ट्या सर्वान् तान् जघान । तदवेक्ष्य तत्रत्यैश्चारगणैर्ब्रह्मावर्ते गत्वा वीरव्रतो राजा कामचेष्टितं सर्वं विज्ञापितः । कामकृतप्रध्वंसमाकर्ण्य युद्धार्थमुद्युक्तं राजानं वर्धनाख्यः प्रधानो मन्त्री अविचार्यकृतस्यायुक्तत्वं प्राख्यं निवर्तयामास । ततो मन्त्रिभिः सहितो राजा विचारसभायां सामदानादीनां तत्र तत्रोपयोगित्वं विचार्य वर्धनं स्वसम्मतिप्रकाशनार्थमाज्ञापितवान् । राजाज्ञया वर्धनः प्राह—'हे राजन् ! सामाद्य उपाया यद्यपि वर्तन्ते, तथाऽपि यतः एकाकिना बालेन अस्माकं कोटिशो राष्ट्रपतयः क्षणात् हताः तस्मात् इयं दैवी आपत्तिः, अतः स्वकुलगुरुं शङ्करं त्वमनुतिष्ठ, तेनैव सर्वं सेत्स्यति' इति । एवं साधु वाक्यं श्रुत्वा राजा आचार्यैरनुज्ञातः शिवं सन्तोषयितुं निश्चिचाय ।"

चतुर्दशेऽध्याये—पृ०-१०७-११३

"अथ स राजा राज्यं मन्त्रिषु विन्यस्य घोरेऽरण्ये सततमष्टदिवसमुग्रं तप आचर्य शङ्करं प्रसादयाञ्चकार । तत्र तस्य भक्तिं दृष्ट्वा उमासहितः शंकर आविरभूत् । पुरोवर्तिनं महादेवमवलोक्य आनन्दाश्रुपरिप्लुतो राजा साष्टाङ्गं प्रणम्य "शङ्कर भक्तहितङ्कर" इत्यादिना संस्तुत्य पुनर्दण्डवत्प्रणनाम । ततः शंकरः प्राह—'वत्स ! उत्तिष्ठ !

किं त्वदभिलषितं तद् ब्रूहि । मद्भक्तस्य न किमप्यप्राप्यम्' इति । राजा उवाच-हे देव ! त्वद्भक्तेरन्यन्न किञ्चिदिच्छामि, स्वान्तिकं मां नय' इति । शिवः प्राह—'अस्तु, योग्यकाले मत्सामीप्यं प्राप्स्यसि । कामविजयार्थमनुष्ठिततपास्त्वं सांप्रतं रणे कामं विजित्य धर्मतो राज्यं कुरु ।' एवम् अन्ते स्वसामीप्यप्राप्तेर्वचनं दत्त्वा शंकरोऽन्तर्बभूव ।

एतस्मिन्नन्तरे कामः सर्वान् विजित्य ब्रह्मावर्तं प्राप्य स्वोद्देश्यं कथयामास । तच्छ्रुत्वा सर्वे नागरिकाः भीत्या पलायनग्रस्ता नगराद् बहिर्गन्तुं प्रचक्रमिरे । तस्मिन्काले महाक्रन्दः हाहाकारः संजातः । अथैतद्बुद्ध्वा सुधृत्याख्यः सेनानीः सैन्यं नगराद् बहिः संप्रेष्य वर्द्धनमन्त्रिणे व्यवस्थां निवेद्य, तत्काले समागतान् स्वस्वसेनायुक्तान् शत्रुञ्जय-शत्रुह-भीम-समरतापनाख्यान् चतुरो राजपुत्रान् प्रणम्य तान् पश्चात्कृत्य गजारूढो युद्धभूमिं गतः । राजपुत्रा नगररक्षणार्थं वर्द्धनं नियोज्य तत्कालप्राप्तं विद्यापतिनामानं गुरुमभिवाद्य आशीरादि प्रगृह्य तदनुज्ञया महादानानि विधाय, तद्गमनान्ते भेर्यादियुक्ताः सेनासागरसहिता नगराद्बहिर्जग्मुः ।"

## पञ्चदशेऽध्याये—पृ० ११४-१२२

"अथ कौशल्येन यथावत् सेनां विभज्य व्यूहं विधाय राजपुत्रैर्युते सुधृतौ कामं विजेतुमभिसरति नारदः इन्द्रसमीपे प्राप्तः । आयान्तं नारदं दृष्ट्वा इन्द्र ऐरावतादुत्तीर्य आनन्दमग्नः प्रण्यपतत् । नारदः प्राह—'हे इन्द्र ! यद्यपि लक्ष्म्याः प्रभावादेकस्यापि कामस्य न किमपि दुष्करम् , तथाऽपि इमां सागरमिव अपारां राजसेनां दृष्ट्वा मनः वैपरीत्यं शङ्कते । अतस्त्वया तत्साहाय्यार्थमवश्यं गन्तव्यम् ।' इत्यादिष्टः शक्रः देवगणैर्युतः कामान्तिके प्राप्तः । आगतं सगणमिन्द्रं दृष्ट्वा हर्षितः कामः साभिमानैर्वचनैरिन्द्रशङ्कां निवारयन् युद्धाय सन्नद्धः स्थितः ।

अथागते राजसैन्ये कामं पश्चात्कृत्य सदेवगण इन्द्रो युद्धार्थं पुरस्ससार । द्वयोः सैन्ययोराभिमुख्ये जाते तदा भेर्यादिघोषैः महान् शब्द उत्पन्नः । ततो देवासुराणां महद् युद्धं समभूत् । तत्र रथिनो रथिभिः गजिनो गजिभिरित्येवं स्वसमानैस्ते धर्मेण युयुधुः । परस्परमाह्वयन्तो धिक्कारादिशब्दमाक्षिपन्तस्ते क्रोधान्धाः स्वपरादिज्ञानरहिताः केवलं सम्प्रहारमेव जानन्तः स्वान् स्वानेव जघ्नुः ।

एवं लोमहर्षणे घोरे युद्धे प्रचलति क्रुद्ध ऐरावतारूढः शक्रसुतो जयन्तो वसुगणैर्युक्तः सुधृतेरभिमुखमागतः । अतिदारुणे तयोर्युद्धे सुधृतिसैन्यैः देवसैन्यं पराभूतं दृष्ट्वा सावित्रादिभिर्वसुगणैः मर्त्यसैन्यं विध्वस्तम् । तदा संहारे त्रस्ता मर्त्या इतस्ततो धावन्तः शोणितनदीषु निमज्जन्तः सर्वे हाहाकारं चक्रुः । एवं स्वसेनापराभवमवलोक्य सुधृतिपुत्रो रणधीराख्यो वसूनां पुरत आगत्य पलायमानान् स्वसैनिकान् निवर्त्य शरवर्षणैः एककः अष्टौ तान् रणकौशल्येन हताश्वसारथिध्वजान् मूर्छितांश्च चकार । तत्र सावित्रः क्षणादुत्थाय स्वकौशलेन रणधीरं हतसारथिं छिन्नधन्वानं चाकरोत् । एवं तौ नष्टशस्त्रौ हस्ताभ्यां मुष्ट्यादिभिर्युयुधाते । अथ रणधीरेण मुष्टिनाऽभिहतः सावित्रो रक्तं वमन् निःसंज्ञः पतितः । तद्दृष्ट्वा इन्द्रसुतेन जयन्तेन पार्श्वतः शक्त्या हतो रण

धीरो मूर्छितः पपात । ततो जयन्तः सावित्रमिन्द्रपार्श्वे समानयत् ।"

षोडशेऽध्याये—पृ० १२३-१२७

"अथ रणधीरो मूर्च्छामुक्तः पृष्ठतोघातिनं जयन्तं प्रमत्तस्यं तदस्त्राणि निवारयन् स्वशरैः तस्य रथादिकं प्रध्वस्य तद्वधार्थमुद्यतः अग्निना परिघप्रहारेण प्रतिबद्धोऽपि स्वपादेन जयन्तं मुष्टिनाऽग्निं चाहत्य निःसंज्ञौ तौ पातयामास । ततः पुत्रस्येदृशीमवस्थां विलोक्य इन्द्रेण आगत्य अशनिना आहतो रणधीरो मूर्छितो निपपात ।

अथैतदवलोक्य भीमो राजपुत्रः स्वरथे रणधीरं प्रगृह्य गदया शक्रं ताडयित्वा निश्चेष्टं तं दृष्ट्वा पलायमानमैरावतं च गदाघातेन भूमावापात्य तदीय शस्त्रेण वज्रेणैव शक्रं हन्मि इति व्यचिन्तयत् । एवं विचार्य वज्रं प्रगृह्य हन्तुमुद्यतस्य तस्य हस्तात् वज्रमन्तर्बभूव । ततः शक्ररक्षणार्थमागतो वायुः समरुद्गणो भीमेन सह युयुधे । भीमो मरुतस्तान् शरैर्हत्वा गदया वायुं ताडयामास, तेन सोऽपि विसंज्ञः पपात ।

एवं पराभवमाकर्ण्य इन्द्रवरुणयमकुबेरादयः सर्वे देवा युगपद्योद्धुमाययुः । भीमं रक्षितुम् अन्ये राजपुत्राः छधृतिश्च ससैन्या आजग्मुः । छधृतिरिन्द्रेण, शत्रुञ्जयः कुबेरेण, शत्रुहा वरुणेन, भीमश्चित्ररथेन, समरतापनो यमेन, शत्रुञ्जयपुत्रो वीरविक्रमो वायुना, शत्रुघ्नसुतो वीरसेनोऽग्निना, भीमात्मजो वीरभानुर्जयन्तेन, समरतापनतनयो वीराग्रगो वह्निना च परस्परं युयुधुः ।"

सप्तदशेऽध्याये—पृ० १२८-१३७

"तस्मिन् संग्रामे चित्रसेनः शरैर्भीमस्य ध्वजसारथ्यश्वादीन् निहत्य क्रुद्धस्य तस्य पराक्रममसहमानः अन्तर्धाय मायया भीमसैन्ये अश्मसर्पाङ्गारास्त्रादीन् ववर्ष ।तद्दृष्ट्वा भीमोऽपि स्वास्त्रेण मायां प्रणाश्य गदया चित्रसेनमभिहत्य पातयामास । स मृतवत्पतितः । एवं वीराग्रगः शराघातैर्मूर्छितान्वह्निगणान् कृत्वा सावित्रखड्गप्रहारेण मूर्छितोऽपि क्षणादुत्थाय सावित्रं गदयाऽऽहत्य वान्तशोणितं तं पातयति स्म । अग्निना युध्यमानो वीरसेनः तच्छक्त्यादीन् निवार्य मुष्टिप्रहारेण अभिहतमग्निं नगरे समानीय बबन्ध । वायुप्रहताङ्कुशेन भग्नवक्षा वीरविक्रमः तमेवाङ्कुशमुत्पाट्य वायुमूर्ध्नि प्राहरत् । भग्नमूर्धा वायुर्निःसंज्ञः पतितः । वीरविक्रमोऽपि हृत्पीडामसहमानो मूर्छितः पपात । कुबेरेण युध्यमानः शत्रुञ्जयः शरैर्युद्ध्वा हताश्वसारथिः गदया तदीयवाहनं नरं प्रहृत्य कुबेरं ताडयामास । ततो गदायुद्धं तद्विधिप्रोक्तगतिभिः कौशलयेन युध्यतोस्तयोः शत्रुञ्जयः पृष्ठतः प्रहरन्तं कुबेरं भर्त्सयित्वा मुष्ट्या हृदि आजघान । तेन स मूर्छितो निपपात । अथ कुबेरो मूर्च्छितः शत्रुञ्जयपाशैर्बद्धः पुलस्त्यमुनिना संप्रार्थ्य मोचितः । एवं वीरभानुना युध्यमानो जयन्तः खड्गभग्नशिरा मूर्च्छितोऽपतत् । वरुणं च शत्रुहा शरैर्नियुध्य हतसारथ्यश्वः शरप्रहारेण पातयामास । अथ वरुणः क्षणादुत्थाय निजपाशेन तं प्रबद्ध्य नीयमानो मार्गे समरतापनखड्गाघातेन मूर्च्छितः पतितः । तं वरुणं बद्ध्वा गन्तुमुद्यतं समरतापनं रोगादिभिः सहागतो यमः प्रतिरुरोध । तयोर्युद्धे समरतापनो बाणप्रहारैर्यममापात्य वरुणगणान् यमदूतान् रोगांश्च स्वपराक्रमेण निःशेषान्कृत्वा यमवाहनेन महिषेण युध्यमानः तदीयशृङ्गाघातेन मूर्च्छितो महिषेण स्व-

श्रृङ्गे प्रस्थापितोऽपि क्षणाज्जातचैतन्यः तलप्रहारेण विदीर्णपृष्ठं तं महिषं पातयाञ्चकार । तदैव मुक्तकश्मलः प्रेतराजः कालदण्डेन समरतापनं हन्तुमुद्यतः सुधृतिना अवरुद्धो भल्लाघातेन च्युतदण्डो भग्नशिराः अपतत । तद्दृष्ट्वा ऐरावतारूढः शक्रो योद्धुं पुरस्ससार ।”

## अष्टादशेऽध्याये—पृ० १३८-१४२

“अथ तस्मिन् समरे सुधृतिः इन्द्रकृतशरवृष्टिं बाणैर्निवर्त्य इन्द्रमुकुटं चिच्छेद । एवं पुनः पुनर्धार्यमाणं मुकुटशतं प्रच्छिद्य तद्वज्रप्रहारेण हतगजः सुधृतिः स्यन्दनमारुह्य शरप्रहारेण तं मूर्च्छयित्वा पुनर्मुक्तकश्मलेन तेन प्रेषितशक्त्या छिन्नरथः क्रुद्धः ऐरावतमिन्द्रं च गदया पातयामास । मूर्च्छितं शक्रं बद्ध्वा नेतुमुद्यतः स सुधृतिः राजपुत्रादिभिः सहितोऽपारया सुरसेनया महद्युद्धं युयोध । रोमहर्षणे तस्मिन् संग्रामे युद्धान्धानां तेषां शोणितौघैर्महानदी प्रादुरभूत् ।

एवं सुधृतिप्रमुखैर्जर्जरे देवसैन्ये हाहाकारः संजातः । ततः सुधृत्यादय आगतान् यमकुबेरवरुणादीन् सर्वान् देवान् मिलित्वा युध्यमानान् विनिर्जित्य बद्ध्वा शक्रसहितान् तान् नेतुं प्रवृत्ताः ।”

## एकोनविंशेऽध्याये—पृ०१४३-१४७

“इन्द्रादीन् बद्धानवलोक्य कामेनावरुद्धास्ते सुधृत्यादयो बद्धान् देवान् परित्यज्य सर्वे कामेन युध्यमाना हतरथसारथ्यश्वाः हतबला असह्यं कामं जेतुं शंकरात्प्राप्तवरं वीरव्रतं राजानमपेक्षमाणाः कामप्रहृतशरैर्भिन्नाः मूर्च्छिता अपतन् ।

ततो रणधीरः शोकाकुलान् राजपौत्रान् सान्त्वयन् राजानमानेतुं वीरसेनं प्रेष्य अन्यैः राजपौत्रादिभिर्युतः पलायमानान् सैनिकान् धैर्यवचनैर्निवर्तयन् युयुधे । असह्यं कामपराक्रमं दृष्ट्वा रणधीरो राजपुत्रादीन् देवसैन्यैर्योद्धुं नियोज्य स्वयं कामेन सह युध्यमानः स्वपराक्रमेण काममुष्टावाहत्य तद्धनुः पातयामास । अथ तत्कौशलमवलोक्य कामेन हताश्वरथसारथी रणधीरो महतीं गदां काममूर्ध्नि आहत्य मूर्च्छितं तमापात्य स्वयं भिन्नाङ्गो मूर्च्छितो निपपात ।”

## विंशतितमेऽध्याये—पृ०१४८-१५४

“अथ राजानमानेतुं विनिर्गतो वीरसेनः शंकरात्प्राप्तवरं राजानं मार्गे वीक्ष्य सर्वं वृत्तान्तं निवेदयामास । तदाकर्ण्य राजा तं सान्त्वयन् धनुरादिभिः सन्नद्धो युद्धभूमिं समाजगाम ।

अथ कामो लब्धसंज्ञः पुरतो राजानमवेक्ष्य शरान् अवर्षत् । ततो मुक्तकश्मलान् कृतप्रणामान् सुधृतिप्रमुखान् सैनिकान् शक्रादिषु नियोज्य सः कामेन सहायुध्यत । एवं तयोस्तुमुले युद्धे दिनत्रयमतिक्रान्तम् ।

चतुर्थेऽह्नि राजा आत्मानं श्रान्तं ज्ञात्वा शंकरं स्मृत्वा तत्प्रेषितं त्रिशूलात्मकं शरं धनुषि संधाय कामोपरि चिक्षेप । तेन बाणेन कामो दहन्निव गतप्राणः पृथिव्यां निपपात । ततो लक्ष्म्या प्रेषितैर्दूतैरागत्य निश्चेष्टः स नीतः ।

एवं महारिपुं तं काममाहत्य हर्षितो जयघोषाक्रान्तो राजा सुधृत्यादियुतो ब-

द्धान् इन्द्रादीन् प्रगृह्य बन्दिभिः स्तूयमानो नगरं समागत्य तोरणादिभिस्तदलंकृत्य शिवपूजासामग्रीं जयाभिषेकसामग्रीं च विधिवत्प्रकल्प्य गुरुं विद्यापतिं रथे आरोह्य स्यन्दनाद्यास्थितैः पुत्रपौत्रैः वर्धनछधृत्यादिभिश्च सहितो ऐरावतवंश्यं गजं समारुह्य बद्धेन्द्रादिभिश्च युक्तो नगराद्बहिर्ययौ। ततः सर्वे स्वस्ववाहनादुत्तीर्य विद्यापतिमभिवन्द्य तदीयाशीरादिभिरलंकृतास्ते गुर्वाज्ञया समुपतस्थिरे।

बद्धान् शक्रादीनवेक्ष्य अयुक्तं तन्मत्वा गुरुः तन्मोचनार्थं राजानमादिदेश। ततो राजाज्ञया छधृतिना मुक्तबन्धास्ते देवा राजसम्मुखमागत्य राज्ञा कोशवाहनादिभिः सम्पूजिताः क्षमध्वमिति प्रार्थिताश्च। ततो राज्ञो गुरुभक्तिमाख्याय अन्तर्भूतेषु देवेषु गुरुणाऽऽदिष्टो राजा शुभे मुहूर्ते स्वनगरं ययौ।"

## एकविंशेऽध्याये—पृ० १५५–१६२

"दूतैरानीतो गतप्राणः स कामः शोकाकुलया लक्ष्म्या धैर्यमवलम्ब्य त्रिपुराप्रसादेन अमृतमादाय पुनरुज्जीवितः देवकार्यार्थं लक्ष्म्या मानसोत्पन्नमपि स्वं मर्त्यैः पराभूतं ज्ञात्वा लज्जितः शोकसन्तप्तो मातरं तत्कारणं पप्रच्छ। लक्ष्मीः प्राह—'वत्स! जहि शोकम्, न हि मानुषैः स्वपराक्रमेण त्वं पराजितः, किंतु शंकरप्रसादात्त्वं पराजितः। अतस्त्वमपि शंकरं प्रसादय।' तच्छ्रुत्वा स ऊचे—'मातः! शत्रुपक्षाश्रितस्याराधनं मे मृतितुल्यम्। अतोऽन्यं देवं वद, यत्प्रसादेनाहं महादेवम् इन्द्रादींश्च जेष्यामि, किं मर्त्यान्' इति। लक्ष्मीरुवाच—'न हि महादेवात्परः कोऽपि वर्तते। स एव सर्वेषां चालकः। स्रष्टा विधिः पालको विष्णुश्च तदधीनः' इति। कामेनोक्तम्—'मातः! शंकरस्यैवं सामर्थ्यं केनापि दत्तम्? नैसर्गिकं वा तस्य तत्?' इति।

एवं वचनमाकर्ण्य ध्यानमग्नया लक्ष्म्या प्रार्थितया त्रिपुरादेव्या प्रेषिता गौरी तत्र प्रादुर्भूता। तामवेक्ष्य अर्चनस्तुत्यादिना संतोष्य तया पृष्टा लक्ष्मी सर्वं कामपराजयेतिवृत्तं निवेदयामास। कामोऽपि तां प्रणम्य सर्वविजयवाञ्छां न्यवेदयत्। तच्छ्रुत्वा गौर्याऽपि शंकरं सर्वाधिकमुक्त्वा तदाराधनार्थमादिष्टः कामो रुष्टः शिवं विजेतुं प्रकटीकृताभिप्रायः हितोक्त्यनादरात् क्रुद्धया गौर्या 'शिवाद्दग्धो भविष्यसि' इति शप्तः। प्रियपुत्रस्यैवं शापमसहमाना लक्ष्मीः तस्या भर्तृनिन्दाश्रुतिवशाज्जस्मीभूतत्वं शशाप। तदाकर्ण्य अतिक्रुद्धा गौरी लक्ष्मीं च 'त्वं पतिविरहाद्दुःखं सपत्नीभिः क्लेशं च प्राप्स्यसि' इति शशाप। एवं 'कुपितयोस्तयोर्महयुद्धे समुपक्रान्ते तत्साहाय्यार्थमायातौ हरिहरौ अस्त्रनिवारणे प्रवृत्तौ तदस्त्रतः प्रादुर्भूतेनाग्निना दग्धौ मूर्च्छितौ निपततुः।

एतदन्तरे सरस्वत्यायुतो ब्रह्मा देवसिद्धगन्धर्वादिभिः समेतस्तद्दीक्षितुमाजगाम।

एवं प्रचलिते तयोर्दारुणे संग्रामे लक्ष्मीप्रहृतशरेण गौरी मूर्च्छिता अपतत्। तद्धृदयाद्विनिर्गतरुधिराग्निना दग्धं सर्वं ब्रह्माण्डं निःशेषोन्मूखं समभूत्। तदवेक्ष्य ब्रह्मा बद्धाञ्जलिः प्रणतः 'जय लक्ष्मि महादेवि' इत्यादिना लक्ष्मीं स्तुत्वा देवादिसहितो दण्डवत्प्रण्यपतत्। एवं स्तुता प्रसन्ना सा देवी ब्रह्मादीनभयं दत्वा जगद्दाहकं तमग्निं भक्षयित्वा दृष्टयमृतेन दग्धान् जीवयामास। तदन्तरे हरिहरयोर्गौर्याश्च चैतन्ये प्राप्ते तयोर्देव्योः शमनार्थं ब्रह्मविष्णुमहेशैः प्रेषिता सरस्वती तयोः समाधानं कृत्वा

प्राह—'हे लक्ष्मि ! हे गौरि ! नोचितमेतद् । जगन्नाशकोऽयं क्रोधो हीयताम् । पुनरुज्जीवनेन वः शापमुक्तिर्भविष्यति । तत्प्रसीदतम्' इति । एवं भाषितं श्रुत्वा ते देव्यौ शान्तिमाजग्मतुः ।"

दत्तात्रेयः प्राह-"हे राम ! एतन्मदुक्तमाऽऽख्यानश्रवणेन लक्ष्मीर्वाञ्छितमर्थं ददाति" इति ।

## द्वाविंशेऽध्याये—पृ०१६३-१६९

रामेणैवमत्यद्भुतं रमाख्यानं श्रुत्वा पुनस्तृषितमानसेन तयो रमागौर्योः शापवृत्तान्तमाख्यातुं प्रार्थितो दत्तात्रेयः आह-"पुरा भूम्या वृन्दायाश्च भक्त्या वशीभूतो विष्णुस्ताभ्यां लक्ष्म्याः परोक्षं रमते । एवं प्रचलति साशङ्कया लक्ष्म्या स गोपितः ।

अथ कदाचित्कालेऽतीते श्रीः वाण्याः स्थानं गता सती पुनरागता भूवृन्दाभ्यां रममाणं विष्णुं दृष्ट्वा रुष्टा सा वैकुण्ठान्निर्जगाम । ततोऽनुगच्छता विष्णुना हिमालये प्राप्ता सा क्रोधेन द्रवत्वं प्राप । सैव पद्माख्या नदी नारदशापाच्छुष्काऽपि तन्मार्गगतभगीरथरथानुगामिन्या गङ्गया सङ्गतो पुनर्द्रवत्वं प्राप्य कालान्तरे ततो विभक्ता समुद्रं सम्मिमेल । तत्र विभागे स्नानेन स्वर्गप्राप्तिर्भवति" इति ।

ततो रामेण "पद्मायाः शापविमोचने, गङ्गया विभागश्च कथमभवत्" इति पृष्टो दत्तात्रेयो ब्रवीति—"हे राम ! कदाचिद् ब्रह्मलोके गान्धर्वविचारे प्रचलिते तत्र नारद आगत्य स्ववीणया रागं मूर्च्छयति स्म । तेन सर्वे सभासदो नादब्रह्ममग्नाः परमसुखं प्राप्ताः साधु साध्विति प्रशशंसुः । तद्दृष्ट्वा देव्या वाण्या स्वीयायां कच्छप्यां मूर्च्छितं रागं नारदोऽपि न विवेद । अथ विसृष्टायां सभायां ततो निर्गतो नारदः परमविस्मययुक्तो पद्मातीरे आगत्य वाणीमूर्च्छितां गतिं मूर्च्छयामास । तदा अपगतेः श्रवणाद्धसन्तीं पद्मानदीं क्रुद्धो नारदस्तच्छुष्कत्वं शशाप । ततो दुःखितां प्रार्थयन्तीं तां 'गङ्गासमागमात्स्वच्छापनिवृत्तिर्भविष्यति' इत्युक्तवान् ।

तच्छ्रुत्वा गङ्गावतरणविषये तया पृष्टो नारद आह—'परस्याः शक्तेर्हृदात्मिकया नभोरूपया भुवनसमूहात्मकासंख्याण्डसंयुक्तया तप आचरद्भिर्ब्रह्मादिभिः स्तुतया महाशक्त्या नभोवाक्येन 'वरं वृणीध्वम्' इत्युक्ते ब्रह्मादिभिस्तस्या व्यक्तरूपेण स्थितिः प्रार्थिता । तच्छ्रुत्वा तया उक्तम्—'बाष्कल्याख्यदानवं जेतुं प्रवृत्तस्य विष्णोः पादोत्क्षेपेण भिन्नादूर्ध्वाण्डात्तोयरूपेणाहं निर्गत्य सद्गतिं दास्यामि । तां मां सिद्धाः गङ्गां कथयिष्यन्ति' इति ।

हे पद्मे ! तयैव त्वं शापान्मुक्ता भविष्यसि' इति ।

पुनः पद्मया तत्कथायां पृष्टायां नारद आह—'इतस्त्रयोविंशे कल्पे त्रेतायां बाष्कल्याख्यो दानवो ब्रह्मतो लब्धवरो लोकत्रयं विजेष्यति । ततः शक्रादिभिः स्तुतो विष्णुः विप्रवेषी बटुरूपेण तत्र गत्वा बाष्कलिनार्चितः पादत्रयपरिमितं स्थानं याचिष्यते । ततो गुरुणा प्रतिषिद्धेनापि तेन प्रतिगृह्यतामित्युक्ते प्रवृद्धो विष्णुः एकेन पादेन भुवं व्याप्य द्वितीयेनाकाशमाक्रमिष्यति । तदोर्ध्वं पादोत्क्षेपेण भिन्नादण्डात् गङ्गा प्रभविष्यति । ततः स्थलाभावात्तृतीयपादं दैत्यमस्तके न्यस्य तस्मै मोक्षं प्रदास्यति ।

ततो ब्रह्मा तद्गङ्गाजलं कमण्डलौ स्थापयिष्यति। अथ महता कालेन इन्द्रस्तपस्तप्त्वा तां स्वर्गं नेष्यति।

कालान्तरे सगरपुत्रान् पितुरश्वमेधीयाश्वं मृगयमाणान् कपिलतेजसा भस्मीभूतान् उद्धरिष्णुस्तत्पौत्रो भगीरथ उग्रं तपस्तप्त्वा गङ्गां स्वर्गतो भुवमानीय रथमारुह्य त्वन्मार्गेण यास्यति। तमनुव्रजन्त्या गङ्गया तव शापमुक्तिर्भविष्यति' इति।

हे राम ! एवं लक्ष्मीः सपत्नीजं, कालान्तरे रामावतारे सीतारूपेण पतिवियोगजं च दुःखमन्वभूत्। गौरी च दक्षयज्ञे शिवनिन्दां श्रुत्वा क्रोधेन भस्मीभूता।" इति श्रुत्वा स रामः इमां कथां विस्तरेण पप्रच्छ।

## त्रयोविंशेऽध्याये--पृ० १७०-१७३

रामेण गौरीशापकथां विस्तरेणाख्यातुं प्रार्थितो दत्तात्रेय उवाच-"पुरा भस्मासुरो दानवः उग्रं तप आचर्य शङ्करात् 'यस्य शिरसि हस्तं न्यसेः स मरिष्यति' इति वरं लब्ध्वा शिवमस्तके एव करं स्थापयितुमुद्यतः पलायमाने शिवेऽन्तर्हिते विष्णुना युक्त्या हतः। तदन्तरे शिववियुक्ता गौरी आत्मानमलोपयत्।

अथ कालेऽतीते दक्षकृततपसा सन्तुष्टा नभोरूपा गौरी तेन वृतवरानुसारेण तद्गृहे समुत्पन्ना। स दक्षस्तां कन्यां शङ्कराय दत्त्वा तच्छ्वशुरत्वं प्राप्य आत्मानं ब्रह्मविष्णुशिवसदृशं मेने। अथैकदा सभायां गतो ब्रह्मविष्णुशिवैरदत्तमुत्थानं दृष्ट्वा दर्पितस्तदाप्रभृति सर्वदा शङ्करं निन्दति। कदाचित् तेन दक्षेण महतियागे आरब्धे शिवगौर्यौ नामन्त्रिते। यागं श्रुत्वा गौरी अनिमन्त्रिताऽपि शिवाज्ञां प्रगृह्य पितृगृहे आगता अनिमन्त्रणकारणं पृच्छती दक्षेण शिवः सा च भर्त्सिता। तच्छ्रुत्वा तया विनिवारितेनापि तेन धिगादिशब्दैः कृतां निन्दामसहमाना क्रोधेन अग्निधारणमास्थित्य क्षणाद्भस्मीभूता" इति।

पुना रामेण गङ्गास्वरूपमाख्यातुं पृष्टो दत्तात्रेयो गङ्गायास्त्रिपुरात्मत्वं प्रत्यपादयत्।

## चतुर्विंशेऽध्याये—पृ० १७४-१७९

ततो रामेण कथामृतास्वादार्थं तर्पितेन "भो गुरो ! मर्त्येषु यागः कथं संप्रवृत्तः ? कामेन च शंकरः कथं विजितः ? कामश्च कथं दग्धः ?" इति पृष्टो दत्तात्रेयः प्राह—"वीरव्रतान्मुक्तो देवैः सहितः शक्रस्तेन सह कृतसख्यो वीरव्रतस्य यावज्जीवनं कालमत्यक्रमीत्। तदनन्तरं ब्रह्मान्तिके गत्वा बद्धाञ्जलिः स्ववृत्तान्तं निवेदयामास। ब्रह्मणा प्रोक्तम्—'हे शक्र ! यद्यपि मर्त्याः साम्प्रतं निष्कामत्वान्न यजन्ति, तथापि एक उपायो विद्यते, ते वृष्ट्याधिपत्यं दास्यामि, इतः परं त्वं यत्र यागादि स्यात् तत्रैव वर्षन् तेषां स्वामित्वं प्राप्नुहि' इति। तदा प्रभृति सर्वे मर्त्या यजन्ति।

लक्ष्मीगौर्योः शान्तयोः पुनः सर्वविजयित्वमभिलषता कामेन प्रार्थिता लक्ष्मी त्रिपुरादेव्या रहस्यं नामाष्टशतमुपदिदेश। तल्लब्ध्वा मात्राज्ञया तत्प्रोक्तविधिना मन्दराचलगुहायां गत्वा कामस्तन्नामाष्टशतं जजाप। अथ कतिचिद्दिनानन्तरं प्रसन्ना त्रिपुरा देवी स्वप्ने आगत्य तस्मिन्नामस्तोत्रे गुप्तां पञ्चदशात्मिकां विद्यामुपदिश्यान्तर्दधे। प्रबुद्धः कामः स्वप्नवृत्तेन संशयितचित्तः स्मृतया लक्ष्म्या प्रादुर्भूय तस्य संदेहं निवार्य

उपदिष्टविद्यासिद्धये प्रवर्तितः । दिव्ये वर्षत्रयेऽतीते प्रसन्ना त्रिपुरा प्रादुर्भूय ध्यातरूपं स्वात्मानं दर्शयामास ।"

पञ्चविंशेऽध्याये--पृ० १८०-१८३

"तां तेजोमयीं पाशाङ्कुशाद्यायुधहस्तां लक्ष्म्या वाण्या च वीज्यमानां 'वत्स ! उत्तिष्ठ ! किं ते वाञ्छितम् ? ब्रूहि' इत्यमृतवाणीं च वर्षन्तीं त्रिपुरां दृष्ट्वा आनन्दमग्नो दण्डवत्प्रणम्योत्थाय गद्गदया वाचा "कलये करुणापाङ्गीम्" इत्यादिनवश्लोकैः स्तुत्वा पुनः प्रणनाम । ततस्तया 'वरं ब्रूहि' इत्युक्तोऽपि कामो दर्शनादेवात्मानं कृतकृत्यं मन्यमानो न किमपि ययाचे ।

अथ सा प्राह—'वत्स ! यद्यपि साम्प्रतं ते किंचिदवशिष्टं नास्ति तथापि येनाभिप्रायेण त्वयाऽहमनुष्ठिता, तदन्यथा न भवेत्, अतो मत्प्रसादेन इतः परं नास्ति ते किंचिदजेयम्' इत्युक्त्वा स्वीयधनुःशरेभ्यः उत्पादितान् चापबाणान् सर्वविजयित्वं च दत्त्वा उवाच—'वत्स ! मयोपदिष्टा विद्या त्वन्नाम्नाऽऽख्यातिमेष्यति । एवमष्टोत्तरशतस्तोत्रं, त्वदुक्तं नवश्लोकात्मकस्तोत्रं, सा विद्या च सौभाग्यप्रदत्वात् 'सौभाग्याष्टोत्तरशतस्तोत्रं,' 'सौभाग्यनवरत्नस्तोत्रं', 'सौभाग्यविद्या' इत्याख्यां लप्स्यन्ते । एवमुक्त्वा नवरत्नस्तोत्रादीनां सर्वसिद्धिकरत्वं प्रतिपाद्य अन्तर्बभूव ।"

षड्विंशेऽध्याये--पृ० १८४-१९०

अथ रामेण सौभाग्याष्टोत्तरशतस्तोत्रमाख्यातुं प्रार्थितो दत्तात्रेयः ऋष्यादिपूर्वकं त्रिपुरादेव्याः सौभाग्याष्टोत्तरशतनामस्तोत्रमाख्याय प्रतिनामभिः पाठहवनभोजनार्चनकर्तॄणां फलान्युक्त्वा आह—"लब्धवरः कामः सर्वान् वशीकृत्य शंकरं विजेतुं गतः क्षणाद्भस्मीभूतः । तत्कथां शृणु !

पतिनिन्दाश्रवणतो भस्मीभूय नभोरूपेण संस्थितायां गौर्यां चिरकालानन्तरं कदाचित् ब्रह्मपुत्रो नारदो हिमालयं गतस्तेन पाद्यासनभोजनादिभिः कृतसत्कारो वामदेवोपदेशात्त्रिपुराभक्तियुतं हिमवन्तं प्रशस्य तेन स्वीयानपत्यत्वदुःखनाशार्थं पृष्टोपायः उवाच—'हे हिमाचल ! शृणु ! ते एका कन्या भविष्यति, सा च पराशक्त्यनुग्रहेणैव सुखं प्राप्स्यति ।' ततः पराशक्त्या रूपमाख्यातुं पृष्टो नारदः 'तस्याः शक्त्याः सूक्ष्मरूपस्य योगिमात्रगम्यत्वेन स्वेष्टसिद्ध्यर्थं गौर्याख्यं स्थूलरूपं त्वं भज' इत्युक्त्वा गौर्या रूपादिकमाख्याय प्राह—'हे हिमवन् ! पुरा भस्मीभूतां तां शिवसंतोषार्थं समाराध्य कन्यात्वेन याचित्वा प्राप्य च तां शंकराय दत्त्वा सौख्यं प्राप्नुहि' इति ।"

सप्तविंशेऽध्याये--पृ० १९१-२००

"नारदः प्राह—'पुरा कल्पे तारकाख्योऽसुरो महादेवं तपसा संतोष्य ततः सृष्टिस्थितिविनाशादेः सामर्थ्यं वृत्वा अनेकानि अण्डानि, तत्र वेदादीन् ब्रह्मादिदेवांश्च सृष्ट्वा तैः सेव्यमानो मदोद्धतो दास्यमस्वीकुर्वत आदित्यादिदेवगणान् स्वाण्डे निचिक्षेप । विध्यादयश्च युद्धे क्षीणबला अन्तर्दधुः । ततः अन्यान् विध्यादीन् सृष्ट्वा तत्तत्स्थाने नियुक्तवान् ।

अथैकदा स इन्द्राण्या रूपमवलोक्य मोहितस्तामानेतुं दूतान् प्रेपयामास । दूत-

मुखात्तारकाज्ञां श्रुत्वा चिन्तिता शची लक्ष्म्याः स्वतोऽत्यधिकरूपवत्त्वमात्मनस्तत्परिचारिकात्वं च प्रतिपादयति स्म । ततः स दूतो लक्ष्मीसन्निधौ प्रेषितस्तया अवहेलया परावर्तितस्तद् वृत्तं कथयामास । तच्छ्रुत्वा ससैन्यः स आगत्य कोटिशः शक्तिभिर्युतया लक्ष्म्या युयुधे । लक्ष्म्या नाशितं स्वसैन्यं पुनः पुनः सृष्ट्वा युध्यमाने तस्मिन् असुरे पञ्चवर्षाण्यतीतानि । ततो लक्ष्म्या प्रार्थितो विष्णुरागत्य युध्यमानस्तं द्विधाभूतस्वरूपमेकस्मिन् मृते अन्येन रूपेण आत्मानं परस्परं सृजन्तं दृष्ट्वा हतोत्साहो लक्ष्म्या सहितोऽन्तर्दधे । तच्छ्रुत्वा खिन्ना इन्द्राणी गुरुमाङ्गिरसमावाह्य साश्रुमुखी स्वदुःखं निवेदयामास । ततो गुरुणा गौर्याराधनार्थमादिष्टा सा शची प्रतीक्षमाणं तारकासुरमेकमासपर्यन्तं युक्त्या निवर्त्य वायुमात्राहारा गुरुप्रोक्तविधानेन गौरीं समाराधयत् ।

एवमेकोनत्रिंशद्दिनेष्वतीतेषु गौर्याः अप्रसादमवलोक्य दैत्यभयाद्दुःखिता प्राणत्यागं निश्चित्य दैत्यप्रेषितं दूतं स्वीकृतिं दत्त्वा परावर्त्य अग्नौ देहविसर्जनार्थं संनद्धा । ततो भयङ्करं शब्दं कृत्वा हृष्टा गौरी सिंहारूढा गगनादवतीर्णा ।

शब्दं श्रुत्वा आगतस्तारकासुरो गौरीं दृष्ट्वा क्रुद्धः स्वसृष्टसैन्ययुतो युयुधे । गौर्याः श्वासोच्छ्वासादुत्पन्नाः कोटिशः शक्तीः बलवत्तरा दृष्ट्वा शङ्करादीन् देवांश्च सृष्टवान् । ततो गौर्या स्मृता मुख्याः शङ्करविष्णुब्रह्मादयश्च तत्राविर्भूता युयुधुः । गौर्याः सामर्थ्यमसहमानः सोऽसुरः स्वसृष्टाण्डे विलीनः । अथ गौर्याः क्रोधादुत्पन्ना महाकाली तान्यण्डानि प्रध्वंस्य दैत्यसृष्टान् भक्षयन्ती दैत्यं तं तारकं शूलेन शिरः प्रच्छिद्य अवधीत् । ततो ब्रह्मादयो देवा हृष्टचेतसस्तां स्तुवन्तो यथास्थानं जग्मुः । शची च ततो लब्धवरा तस्यामन्तर्हितायां स्वं स्थानं ययौ ।'

एवं गौरीमाहात्म्यं हिमवन्तमाख्याय नारदः प्रययौ" ।

## अष्टाविंशेऽध्याये—पृ० २०१-२०८

रामेण गौर्या अष्टोत्तरशतनामस्तोत्रं श्रावयितुं निवेदितो दत्तात्रेयः ऋषिन्यासादिपूर्वकं गौरीनामाष्टशतकं तन्माहात्म्यं चोक्त्वा प्राह—"हे राम ! नारदोक्तिश्रवणानन्तरं हिमाचलः सभार्यो नदीतटे गत्वा पर्णाशनो द्वादशवर्षाणि तपस्तप्त्वा गौरीं समतोषयत् । प्रादुर्भूतां गौरीं स्वीयानपत्यत्वदुःखं निवेद्य तया 'ते एका कन्या भविष्यति' इत्युक्तो हिमवान् आह—'यदि मम भाग्ये कन्यैव विद्यते तर्हि त्वमेव मे तनया भव' इति । तच्छ्रुत्वा गौरी आत्मनस्तनुधारणासम्भवमुक्त्वा तिरोबभूव ।

ततः खिन्नो हिमाद्रिः पुनः शतवर्षाणि जलाहारः शतवर्षाणि वाताहारश्च उग्रं तप आचर्य वटशाखायां रज्जुशतेनात्मानमधोमुखं पादयोः प्रबध्य पत्न्या प्रज्वालितेनाधःस्थितेनानलेन प्रतपन् प्रतिवर्षमेकां रज्जुं प्रच्छिनत्ति । एवमत्युग्रं तपश्चरतस्तस्य एकोनशताब्देष्वतीतेषु तच्छिरोनिःसृतेन तपोऽनलीयधूमेन सर्वः स्वर्लोको व्याप्तः । तदा व्याकुलाः शक्रादयः सुरास्तत्कारणं दृष्ट्वा ब्रह्मान्तिके गताः स्वदुःखं प्रार्थयामासुः । विधिश्च तेभ्योऽभयं दत्त्वा तैः सह क्षीरसागरे विष्णुसन्निधावागत्य स्ववृत्तं निवेदयामास । ततो विष्णुप्रमुखास्ते देवा हिमवतस्तपःस्थले प्राप्ताः । हिमालयस्य भार्यया तत्र अग्न्युद्दीपनादिपरिचर्यायां स्थितया तपःकारणं निशम्य विष्णुः गौरीं दण्डवत्प्रणम्य

अस्तौषीत् । प्रसन्ना गौरी तत्राविर्भूय विष्णुना स्मारितत्रिपुरादेशा शरीरधारणाभावे सृष्टिसंहाराद्यसम्भवेन त्रिपुराज्ञोल्लङ्घनं विचिन्त्य हिमवत उद्देशं स्वीचकार ।

ततो विष्णुप्रभृतिषु गतेषु सा नभोरूपा हिमालयं प्रबोध्य वरयाचनार्थमादिशत् । तदमृतवचनं श्रुत्वाऽतिहृष्टो हिमराजस्तां स्वकन्यात्वेन वव्रे ।"

## एकोनत्रिंशेऽध्याये—पृ० २०६-२१६

"गौरी गिरिराजस्य प्रार्थनां स्वीकृत्य कन्यारूपे प्रीतिवर्धनार्थं मुख्यरूपविस्मृतिर्भविष्यतीति शप्त्वा च स्वं स्थानं जगाम । अथ कतिचिद्दिनेष्वतीतेषु हिमवतो भार्या मेनका गौर्यात्मकं गर्भं धृत्वा तदंशेन तेजोविकसितदेहा परमसौन्दर्यमवाप्ता नगेन्द्रं समतोषयत् । तदा तस्मिन् प्रदेशे जलवायुवृक्षादि सर्वं यथायोग्यमासीत् ।

एवमतीते गर्भकाले शुभमुहूर्ते मेना गौरीं सुषुवे । स्वीयरूपस्थितां त्रिनेत्रां खड्गादियुतचतुर्हस्तां दिव्यशरीरां तां दृष्ट्वा हृष्टमानसो हिमवान् दण्डवत्प्रणम्य "नमो देवि" इत्यादि संस्तुत्य स्वस्य अहोभाग्यं प्रकटयन् प्रीत्याधिक्यवर्धनं तस्या बालरूपत्वं प्रार्थयामास । ततो धृतदिव्यबालरूपां तां वीक्ष्य शापानुसारेण विस्मृतजातवृत्तः कन्याप्रसवं मेने । नगराजगृहे कन्याजन्म श्रुत्वा तत्रागता जनाः स्त्रियश्च मुदितचित्तास्तां कोटिसूर्यप्रभां हेमकान्तिं कन्यां पश्यन्तः परमं हर्षमवापुः । हिमराजस्तदा दानादि दत्त्वा विप्रैर्युतो जातकर्म संपाद्य शैलनगरे महोत्सवं चक्रे । काले प्राप्ते ब्राह्मणादिभिः समेतो गौरीति नामकरणं च कृतवान् ।

एवं कन्यालीलावलोकनेन प्रहृष्टमनाः कालेऽतीते प्राप्ततारुण्यां तामवलोक्य तदनुरूपपत्यन्वेषणार्थं चिन्तितो गर्गाचार्यमाहूय स्वं मनोरथं प्रकटयामास । गर्गाचार्यः क्षणं ध्यात्वाऽन्तर्दृष्ट्या परमां गौरीं तां ज्ञात्वा तस्याः परमगौरीत्वं शिवपत्नीत्वं च कथयामास । तच्छ्रुत्वा स्मृतपूर्ववृत्तो हिमाद्रिस्तां शिवाय दातुं मनो निदधे ।

अथ कदाचित्तत्र गौर्या दर्शनार्थं समुत्सुक आगतो नारदस्तामारूढयौवनामवलोक्य तत्पतिविषये कृतजिज्ञासः शंकराय दातुमुद्यतं तं हिमालयं ज्ञात्वा सर्वमङ्गलरूपाया रत्नभूतायास्तस्याः पाणिग्रहणे शिवस्य श्मशानवासित्वादिदोषं प्रकटयन् तदनर्हत्वं विष्णोश्च प्रशंसनेन तदर्हत्वं प्रतिपादितवान् । एवं भाषिते गौर्याः शापप्रभावात्पुनर्विस्मृतपूर्ववृत्तो हिमगिरिर्नारदवचनं तथ्यं मत्वा शिवं तिरस्कृत्य विष्णवे तस्या दानं निश्चित्य तत्कार्यं शीघ्रं विधातुं नारदं संप्रार्थितवान् । नारदश्च तत्स्वीकृत्य दिवं ययौ।"

## त्रिंशेऽध्याये—पृ० २१७-२२२

"हिमवन्निश्चयं ज्ञाता गौरी दुःखितान्तःकरणा चतुःसखीभिर्युता निर्जने घोरे अरण्ये प्रययौ । तत्र गङ्गातटं प्राप्य मुहूर्तं विश्रान्ता स्नानादि कृत्वा रात्रौ तृणमयीं त्रिपुरां निर्माय नानोपचारैस्तां समाराध्य प्रभाते स्वनिर्मितेन "शिवे देवि संवित्" इत्यादिद्वादशश्लोकात्मकेन स्तोत्रेण त्रिपुरां प्रस्तुत्य ध्येयमात्ररूपिणी ध्यानैकपराऽभवत् । ततः प्रसन्ना त्रिपुरा रमावाणीभ्यां सेव्यमाना तत्राविर्भूय ध्येयमात्रस्वरूपां बहिःकोलाहलैरप्रबुद्धां गौरीं दृष्ट्वा चित्ताकर्षिणिकया शक्त्या तच्चित्तं समाचकर्ष । प्रबुद्धा गौरी त्रिपुरां स्ववृत्तं निवेद्य ततः शिवपरिणयाज्ञां प्राप । गौरीकृतस्तवस्य ज्ञा-

नकलिकास्तोत्रमित्याख्यां, तत्पाठस्य च स्वप्रसन्नताकारकत्वमुक्त्वा त्रिपुराऽन्तर्दधे । ततो गौरी पुनः पूजां विधाय प्रतिमां व्यसृजत् ।

ततः सहचर्या पित्रोर्वियोगदुःखकारकस्य वनागमनस्य कारणे पृष्टे 'विष्णवे आत्मदानस्य पितुर्निश्चयस्तत्कारणम्' इत्युक्त्वा दुःखिता सुष्वाप ।"

## एकत्रिंशेऽध्याये—पृ० २२३-२२९

"गौर्या गृहत्यागानन्तरं तामपश्यन्हिमालयश्चिन्तितो धात्रीं तदन्वेषणे प्रेषयामास । सा च सखीगृहवाटिकादौ वीक्ष्य परावृत्ताऽनुपलब्धां तां कथयाञ्चकार । कन्यावियोगेन शोकाकुलो हिमालयो हाहाकारं कुर्वाणः सानुचरो गृहाणि वनानि च अन्वेषयन् अदृष्ट्वा तां दुःखदग्धो 'हा ! कन्ये ! कुत्र गता ? केनापि हृता भक्षिता वा ? तद्विनाऽहं प्राणान्न धारयामि' इत्यादि विलपन् ऋषिवाक्यं मिथ्याजातं चिन्तयन् मूर्छितो निपपात ।

अथ तादृशं तं दृष्ट्वा अमात्यादय उपचारैस्तमुत्थाप्य धैर्यवचनैः समाधाय पुनरन्वेषणार्थं बोधयामासुः । ततः प्राप्तधैर्यो हिमालयो दूतमुखात् ऐशान्यां घोरेऽरण्ये कुमारीपदचिह्नलब्धिं श्रुत्वा हृष्टो दूताय हारं दत्त्वा तदुक्तमार्गेण घोरतमेऽरण्ये यातोऽदृष्ट्वा तां श्वापदादिभक्षितैः साशङ्को विलपन् पुनर्निःसंज्ञः पपात । क्षणात्कृतोपचारैरुत्थित आगताचारान्नदीतटे तदुपलब्धिं श्रुत्वा प्राप्तजीवन इव उत्थाय तत्र नदीतटे गतस्तां गौरीं दृष्ट्वाऽऽनन्दाश्रुयुतः स्वाङ्के समारोह्य तत्कारणमपृच्छत । सा प्राह—'मया मनसा शङ्करो वृतः । विष्णुं भ्रातरं मन्वानाऽहं कदाऽपि तं न वृणे । भवतो विपरीतनिश्चयं दृष्ट्वा प्राणत्यागार्थमहमत्रागताऽस्मि' इति । तच्छ्रुत्वा हिमालयो नारदोक्तान् शङ्करस्य श्मशानवासित्वादिदोषान् प्रकटयन् कृतप्रयत्नोऽपि तां पतित्वेन शङ्करे कृतनिश्चयामवलोक्य वात्सल्यात्तत्स्वीकृतवान् । ततो गृहे आगतेन हिमाद्रिणा स्मृतो नारदस्तत्रागत्य पूर्ववृत्तानुसारेण गौर्याः पाणिग्रहणे विष्णोः स्वीकृतिमुक्तवान् । तच्छ्रुत्वा बद्धाञ्जलिर्हिमालयः क्षमां संप्रार्थ्य गौर्यास्तद्विपरीतनिश्चयम् अरण्यगमनं च न्यवेदयत् । तदाकर्ण्य क्रुद्धेन नारदेन आवाहिता विष्णुपार्षदा विजयादयो हिमालयादीन् बद्ध्वा गौरीं नेतुं प्रवृत्ताः । एवं संप्रवृत्ते जना हाहाकारं चक्रुः ।

अथ भीता मेना सानुजा स्वसंरक्षणार्थं पुरोहितान्तिके जगाम । पुरोहितश्च तां गौरीं च समादधे ।"

## द्वात्रिंशेऽध्याये—पृ० २३०-२३७

"अथ पुरोहितः 'हे गौरि ! अस्माकं मोहार्थं प्राकृतभावमापद्य किं रोदिषि' इत्युक्त्वा मेनां च तस्याः परमगौरीत्वं बोधयित्वा पूर्ववृत्तं तपश्चर्यादिकं स्मृतया तया प्रणम्य स्तुतां गौरीं स्वयं च तुष्टाव । तेन प्रसन्ना सा गौरी स्वीयं परमं रूपं सिंहारूढं त्रिनेत्रमायुधादिभिरलङ्कृतं प्राप्य गृहान्निर्गता । ततो नारदेन स्तुता सा विष्णुपार्षदान् आयातान् दृष्ट्वा क्रोधारुणीभूता ज्वालामुखीं त्रिशीर्षां कालरात्रिमुत्पाद्य तान् नाशयामास ।

अथ श्रुततद्वृत्तो विष्णुः क्रुद्धो गरुडारूढस्तत्रागत्य चक्रं प्रचिक्षेप । कालरात्र्या च

शूलेन तचक्रं, फूत्कृत्या गरुडं च प्रदह्य प्रज्वलिते मुखे विष्णुश्च प्रक्षिप्तः। तद्दृष्ट्वा सर्वे सुरादयो हाहाकारं प्रचक्रुः। अथ गौर्या प्रशामितया कालराज्या विष्णुः मुखादुद्गीर्णो मूर्च्छितः पतितः। विष्णुना सहोद्गीर्णा ज्वाला वर्धमाना दृष्ट्वा भीतैर्विध्यादिभिः प्रार्थिता गौरी ता ज्वालाः प्रशाम्य क्रोधोद्भवां ज्वालामुखीं प्रलये जगत्संहारार्थं तत्र पर्वते प्रस्थापयामास। अमृतदृष्ट्या विष्ण्वादीन् पुनरुज्जीव्य तैः स्तुता सा पितरं प्रमोच्य पुनः कौमार्यं समाश्रयत्।

एतत्सर्वं दृष्ट्वाऽपि पुनर्मोहितो हिमवान् बद्धाञ्जलिर्विष्णुं क्षमापयाञ्चक्रे। ततो विधिना शिवाय कन्यादानार्थं हिमवान् समादिष्टः। शिवश्च तेन विधिना प्रार्थितः स्मृतपूर्ववृत्तो गौर्याः प्रणयनं स्वीकृतवान्।

अथ तयोस्तदैव विवाहं निश्चित्य ब्रह्मणा समादिष्टो हिमराट् सामग्र्यभावात्खिन्नो विधिं प्रार्थितवान्। विध्याज्ञया त्वष्ट्रा निर्मितां सर्वां विवाहसामग्रीं विवाहशालादिं दृष्ट्वा च हिमवान् भूधरादीन् इन्द्रादींश्चावाह्य कन्यां मङ्गलस्नानादि कारयित्वा शालायां समानयत्।

अथ शंकरः स्वगणैस्तत्र समुपस्थितोऽपि स्वेन रूपेण गणानां कोलाहलादिभिश्च हिमवन्तं प्राप्तखेदं दृष्ट्वा ब्रह्मणा प्रार्थितः कोटिमन्मथलावण्ययुतो रत्नाद्याभूषणैरलंकृतः परमसुन्दरो भूत्वा स्वगणांश्च परमसुन्दरान् प्राकरोत्। तदवलोक्य हिमालयो बद्धाञ्जलिः शंकरं प्रणम्य क्षमाप्य च विवाहार्थं समुत्सुको विधिं समप्रार्थयत्। ब्रह्मणा प्रार्थितेन शंकरेण गौर्याः पाणौ प्रगृहीते हिमवता च जले उत्सृष्टे मङ्गलध्वनिभिः स प्रदेशो व्याप्तः।

एवं विधानेन विवाहं कृत्वा विप्रादीन् दानादिभिः परितोष्य तद्दत्ताशीर्भिर्युक्तो हिमाद्रिर्महादेवाय चासंख्यातं धनादि प्रददौ। ततस्तुष्टो विष्ण्वादिभिः स्तुतः शंकरो निजं स्थानं गन्तुमुद्यतोऽभूत्।"

### त्रयस्त्रिंशेऽध्याये—पृ० २३८-२४५

"हिमवताऽभ्यनुज्ञातः शङ्करो गौर्या युतस्ततो निर्जगाम। अनुयातं वात्सल्यप्रपूरितं पितरं हिमवन्तं स्वीयं परमं रूपं प्रदर्श्य प्रबोध्य गौरी न्यवर्तयत्। एवं विष्ण्वादिषु स्वं स्वं स्थानं गतेषु शंकरो गंगातटं प्राप्य दिव्यवर्षसहस्रं तपश्चर्यामकरोत्। स्वतपोभङ्गार्थं प्राप्तं कामं च प्रादहत्" इति।

एवं श्रुत्वा रामेण कामदाहकथां, दग्धस्य विष्णुचक्रस्य पुनरुत्पत्तिकथां च वक्तुं निवेदितो दत्तात्रेयः कथयति—"हे राम! ज्वालामुख्या सुदर्शने दग्धे सति कालान्तरे मुराख्योऽसुरो महापराक्रमो विष्णुं युद्धार्थमाह्वयत्। तेन सह युध्यमानो विष्णुः सुदर्शनाभावात्तं जेतुम् अशक्नुवन्नन्तर्दधे।

विष्णुं पराभूतं मत्वा दैत्ये परावृत्ते स विष्णुः ज्वालामुखीपर्वतमाश्रितः संयतेन्द्रिय ऊर्ध्वबाहुः वर्षसहस्रकमुग्रं तपस्तपन् ज्वालामुखीं संतोष्य प्रसन्नां तत्राविर्भूतां त्रिलोकीं सर्वतो ज्वालाः प्रक्षिपन्तीं दृष्ट्वा प्रणतः स्तुत्वा मुरासुरेणाचरितं वृत्तं निवेद्य चक्रं ययाचे। ज्वालामुखी च तं विष्णुं समाश्वासनवचोभिः परितोष्य निजायुधात्सुदर्शनं

पूर्वभूतादधिकशक्तियुतं निस्सार्य दत्त्वा तस्य सर्वविजयित्वमुक्त्वा अन्तर्दधे । सुदर्शनं लब्ध्वा हृष्टचित्तो विष्णुः सुरासुरमाहूय ससैन्यं क्षणादेव भस्मीचकार ।"

एवं दग्धसुदर्शनस्य पुनरवाप्तिकथामुक्त्वा दत्तात्रेयः कामस्य भस्मीभूतत्वमाख्यातुं प्राह—"शंकरे तपस्तपति कदाचित् तारक-शूरपद्माख्यावसुरौ तपःप्रभावात् अष्टादशाण्डानि सृष्ट्वा इन्द्रं जिग्यतुः । तत इन्द्रेण प्रार्थितो ब्रह्मा तयोर्दैत्ययोः शिवसुतात्पराभवमुक्तवान् । ततः शिवं प्रसादयितुं तपःस्थाने आगतः सर्वं श्वासादिरहितं चित्रवदचेष्टं वीक्ष्य तत्र संस्थातुमशक्नुवन् चिन्तितो बृहस्पतिमाहूय प्रणतो दीनः स्वदुःखं न्यवेदयत् । तदाकर्ण्य गुरुणा विमृश्य गौर्याराधनार्थमाज्ञप्तः शक्रो वर्षपर्यन्तं तपश्चचार । ततस्तुष्टां तत्राविर्भूतां गौरीं नत्वा स्वेप्सितं सर्वं निवेद्य साष्टाङ्गं दण्डवत्प्रण्यपतत् ।"

## चतुस्त्रिंशेऽध्याये—पृ० २४५-२५०

"इन्द्रवचनं श्रुत्वा गौर्या ऋषिशापवशात्स्वस्यानपत्यत्वं शङ्करस्य अन्यत्र सन्तानानुत्पादकत्वं चोक्त्वा पुत्रोत्पत्तेः सर्वथा दुष्करत्वमुक्तम् ।

तदाकर्ण्येन्द्रेण शापवृत्तमाख्यातुं प्रार्थिता पार्वती उवाच—'कदाचित्पितृगृहेऽहं स्थिता शरच्छोभावलोकनार्थं वनचारिभी रक्षिता वनान्तरं गता तत्रैकं मृगमिथुनं दृष्ट्वा तेन क्रीडोत्सुका वनचारिभिस्तत्स्वसमीपे समानयम् । तत्र ऋषिमां निःसन्तानत्वमशपत् हे शक्र! इदानीं महादेवस्य शापवृत्तान्तं शृणु!

त्रेतायुगारम्भे विप्राः तपःप्रभावात्सुरादीन् वशीकृत्य स्वाज्ञाउ सर्वान् प्रचालयन्ति स्म । तदा शक्रो नष्टप्रभावो ब्रह्मणा सह विष्णुसमीपे गत्वा न्यवेदयत् । चिन्तितो विष्णुः विप्रविरोधे असामर्थ्यं प्रकटयन् तैः सहितः शंकरान्तिकं गत्वा प्रणनाम । शिवश्च तदागमनकारणं ज्ञात्वा मुख्यैर्विष्ण्वादिभिर्विचार्य विष्णुना प्रेरितो मनोहरवपुस्तत्र विप्राणामाश्रमेषु गत्वा विप्रेषु पुष्पाद्यानयनार्थं बहिर्गतेषु तद्दारान् स्वसौन्दर्येण मोहितवान् । ततस्ताः कामान्धाः शिवेन सह वनान्तरं गत्वा यथेष्टमुपभोगादि कृत्वा गर्भिण्यो बभूवुः । ततो गृहं यातास्ताः पुष्पाद्याहृत्यागतैर्विप्रैर्विकृताङ्गा दृष्ट्वा तपोबलेन शिवाचरितं तज्ज्ञात्वाऽतिक्रुद्धास्ते पलायमानं भयग्रस्तं शङ्करमशपन्—'इतः परमन्यत्स्त्रीषु तेषण्ढत्वं भविष्यति, अस्मद्दारदूषकं तल्लिङ्गं च छिन्नं पततु' इति ।'

एवमुक्त्वा गौरी शक्रेण लिङ्गच्छेदविषये पृष्टा प्राह—

"गगनगामिनः शिवस्य लिङ्गं छिन्नं दृष्ट्वा तत्पातेन भूमिभङ्गमाशङ्क्य ब्रह्मा तद्धारणार्थं विष्णुं प्रार्थयामास । ततो विष्णुर्योनिरूपो ब्रह्मा च पीठरूपो भूत्वा पतल्लिङ्गं धारयाञ्चक्रतुः । तदाघातेन विदीर्णां योनिं पृथ्वीं चाधोगच्छन्तीं दृष्ट्वा शेषरूपो विष्णुर्भुवं धारयामास । ता ,वस्थामवलोक्यातिक्रुद्धस्य शिवस्य क्रोधाग्निःसृतेनाग्निना ब्रह्माण्डं दह्यमानं दृष्ट्वा स सुरादयो हाहेत्याक्रोशन्तस्तं स्तोतुमुपचक्रमिरे । ततो ब्रह्मा लिङ्गरूपो भूत्वा तच्छरीरोपस्थप्रदेशे सङ्गतः ।

सङ्गतं लिङ्गं वीक्ष्य, पतितलिङ्गस्य विष्णुकृतेन पूजनेन च शान्तः शंभुस्तत्कालप्रभृति लिङ्गे एव स्वार्चनं समकल्पयत् । ततो विधिहरिहरात्मकं पीठयोनिलिङ्गत्रयं शिवा-

दयः सर्वे पूजयामासुः ।

हे इन्द्र ! एतन्मया शिवशापकारणमाख्यातम् ।"

### पञ्चत्रिंशेऽध्याये—पृ० २५१-२५५

"शक्रेण भूलोके लिङ्गार्चनं पृष्टा पार्वती प्राह—'लिङ्गपूजने जनानामश्रद्धां दृष्ट्वा लोके लिङ्गार्चनप्रचलनार्थं महेशो दशसहस्रवर्षं तपसा त्रिपुरां समाराधयत् । ततस्तत्राविर्भूता त्रिपुरा लोकगर्ह्यमपि लिङ्गार्चनं स्वसामर्थ्येन लोके प्रकल्प्य शिवस्य लिङ्गात्मत्वं लिङ्गापूजकस्य सर्वदेवविमुखत्वं चोक्त्वा लिङ्गार्चामाहात्म्यं तद्रहस्यं च कथयामास । ततो ब्रह्मादिदेवान् लिङ्गार्चने प्रवर्त्य सा त्रिपुराऽन्तर्दधे । ततःप्रभृति लोके लिङ्गार्चनं प्रचलितम् ।

हे इन्द्र ! एतस्मात्कारणान्मे सुतावाप्तिर्न सम्भवति, तथाप्युपायस्य कर्तव्यत्वात्त्वं शिवतपोभङ्गाय कामं प्रेषय । स कदाचित्तव कार्यं साधयिष्यति ।' इत्युक्त्वा गिरिजा अन्तरभूत् ।

अथेन्द्रेणाहूतः कामो रत्या समेतस्तत्रागतः शक्रेण पूजितः संतुष्टस्तत्कार्यसाधनार्थं दत्तवचनः स्वशत्रोः शिवस्य तपोभङ्गार्थं स्वमाहूतं ज्ञात्वा पुरा गिरिजादत्तशापेन शिवादात्मनाशं स्मृत्वा खिन्नचेता अपि दत्तवचनभङ्गभिया तत्स्वीकृत्य निर्जगाम ।

अथ तदाकर्ण्य रतिः शोकव्याकुला तत्कार्यात्तं नानाप्रकारैः परावर्तयन्ती मदनेन धैर्यवचनैः सान्त्विताऽपि शोकसंतप्ता मूर्छिता निपपात । तद्दृष्ट्वा दुःखितो मदनो मातरं लक्ष्मीं स्मृत्वा, आहूय आगतां तां स्वीयं वृत्तं निवेद्य तद्दत्ताशीर्भिर्युक्तो रतिं समर्प्य त्रिपुरां ध्यायन् प्रययौ ।

लक्ष्मी च अमृतदृष्ट्या रतिं प्रबोध्य पुनः 'हा नाथ'इत्यादि प्रलपन्तीं तां समाश्वास्य स्वभवनं समानयत् ।"

### षट्त्रिंशेऽध्याये—पृ० २५६-२५८

"कामो मार्गे गङ्गातटं वीक्ष्य तत्र स्नात्वा शुचिर्भूतः संहृतेन्द्रियस्त्रिपुरां ध्यायन् प्रसन्नया त्रिपुरया तत्राविर्भूय मूर्ध्नि धृतवरदहस्तेनात्मानं कृतार्थं मन्यमानस्तां प्रणम्य गद्गदवाचा अस्तौषीत् । एतद्वृत्तमाकर्ण्य तत्राविर्भूतया लक्ष्म्या गिरिजादत्तशापनिवृत्त्यर्थं प्रार्थिता त्रिपुरा उवाच—'हे कमले ! अयं कामो गौरीशापानुसारेणैतच्छरीरदाहानन्तरं देहान्तरं प्राप्य त्वां सुखयिष्यति' इति । एवमुक्त्वा कामं स्वनेत्रे समाकृष्य पतिततद्देहादुत्पन्नाननेकान् तत्सदृशान् कामान् लोककामनापूर्त्यर्थं नियोज्य स्वमायया तद्देहमुत्थाप्य मायानिर्मितचापशरादि दत्त्वा प्रतिकामं तं शिवे न्ययोजयत् । स्वनयने कामस्याकर्षणेन सा च 'कामाक्षी' इति प्रख्याता ।

अथ स प्रतिकामः शङ्करान्तिके आगतो गगनस्थितशक्रादिषु पश्यत्सु पुष्पबाणं शङ्करे निचिक्षेप । तेन जातचित्तविक्षेपः शूलपाणिः क्रोधान्निर्गतेन नेत्राग्निना तं प्रादहत । ततो नयननिस्सृतज्वालया दह्यमानं जगदवलोक्य ब्रह्मादिदेवैः स्तूयमानः शिवः शान्तः ।

हे राम ! एवं विस्तृतमिदमाख्यानं ते कथितम् ।"

### सप्तत्रिंशेऽध्याये—पृ० २५९-२६९

अमृततुल्यमाख्यानं श्रुत्वाऽप्यतृप्तेन रामेण शिवसुतोत्पत्त्याख्यानार्थं त्रिपुरनेत्र-विलीनस्य कामस्य पुनरुत्पत्त्याख्यानार्थं च पृष्टो दत्तात्रेयो वक्ति—"कामे दग्धे सति ईप्सितस्यासिद्धिं दृष्ट्वा शक्रेणाभ्यर्थितो ब्रह्मा शङ्करं स्तुत्वा प्रसन्ने तस्मिन् तारककृत-प्रध्वंसमुक्त्वा तन्नाशाय सुतोत्पादनार्थं प्रार्थितवान् । तदाकर्ण्य दयार्द्रत्रिलोचनः पुत्रो-त्पादं स्वीकृतवान् । ततो गिरिजया सह नित्यं रममाणेऽपि वीर्यस्याप्रस्खलनान्न पुत्रो-त्पत्तिरभूत् । एवं वर्षसहस्रमतीतम् ।

अथ धाता देवान् 'तेजोमयस्य शुक्रस्य धारणे कस्यापि सामर्थ्याभावात्तदेव तदप्र-स्खलने कारणम्' इत्युक्त्वा तैः सहितः शिवसमीपे आगत्य वीर्यमुक्तौ ब्रह्माण्डदाहमा-शङ्क्य मैथुने रतं तं संप्रार्थ्य विरमयाञ्चक्रे । अतिमैथुनात्संक्षुब्धं तच्छुक्रं भुवि पतितम् । शुक्रतेजसा दह्यमाना धरणी विधिं संप्रार्थ्य तदाज्ञया वह्नौ तत्समुत्ससर्ज । अग्निश्च तद्धारयितुमशक्नुवन्ब्रह्मणा आज्ञप्तो गङ्गायां तद्वीर्यं विससर्ज । गङ्गां च तेजसा दह्यमानां तद्धारयितुमशक्तां लज्जाऽवनतमुखीं दृष्ट्वा तया प्रार्थितो विधाता कैलासपर्वताधोभा-गस्थे शरवने तद्विस्रष्टुमाज्ञापितवान् ।

एवं श्रुत्वा सर्वसहया आत्मनाऽप्यधार्यमाणस्य तस्य धारणे कथं वनस्य साम-र्थ्यमिति भागीरथ्या पृष्टो विरिञ्चिः प्राह—'पुरा अस्मात्सुरान्निजरक्षणार्थं शिवे अन्त-र्हिते सति शोकव्याकुलाया गौर्याः सहस्रधा विशीर्णं शरीरं पतितम् । तदेवेदं शरवनं गौर्यंशभूतं शुक्रधारणे समर्थमस्ति' इति । ततो गतसंदेहा गङ्गा तच्छुक्रं तस्मिन्वने व्यसृजत् ।

अथाहरहो वर्धमानं तत् कुमाररूपतां प्राप्य आविर्बभूव । कोटिकामलावण्ययुतं परमतेजोमयं कुमारं वीक्ष्य हर्षनिर्भरा वन्हिगङ्गापार्वतीशंकराः स्वात्मजं तं मेनिरे । अथ धाता तस्य अग्निभूः, गाङ्गेयः, पार्वतीसुतः, स्कन्दश्चेति चत्वारि नामानि कृत्वा तद्धा-त्रीत्वे षट्कृत्तिका न्ययोजयत् । ततः षट् ताः स्तन्यदानार्थं परस्परं स्पर्धमाना दृष्ट्वा कुमारः षण्मुखोऽभूत् । ततः सर्वे देवाः स्वीयायुधात्तुल्यमायुधं निस्सार्य तस्मै प्रद-दुः । एवं समुद्रादयश्च भूषणान्यददुः ।

ततः शक्रातिरिक्तैः सर्वैः पूजितः स स्कन्दः शक्रमपूजकमवलोक्य प्रज्वलितमन्युस्तं युद्धार्थमाह्वयत् । इन्द्रश्चानादरमसहमानः स्वीयसैन्यसहितः स्कन्देन युयुधे । अथ तयोर्युद्धे स्कन्दपराक्रममसहमानः शक्रः क्रौञ्चपर्वतं समाश्रितोऽपि स्कन्दकृतक्रौञ्चप्र-ध्वंसं दृष्ट्वा ब्रह्माणं शरणं गतस्तत्प्रार्थनया स्कन्देन मुक्तः ।

अथेन्द्रेण वृतः सेनाधिपत्यमङ्गीकृत्य तारकासुरं शूरपद्मं च समरे निहत्य तत्सृष्टा-ण्डेषु इन्द्रादीन्प्रस्थापयामास ।"

सर्वाजेययोरपितयोर्दैत्ययोः स्कन्दकृतं नाशं श्रुत्वा विस्तृतं तं वर्णयितुं पृष्टो दत्ता-त्रेय आह—"ब्रह्मतनयः सनत्कुमाराख्यो ऋषिः ऋषभे पर्वते कृतवासस्तत्रोपस्थितं पितरं ब्रह्माणं पृष्टवान्—'हे पितः ! मया स्वप्ने देवासुराणां महद्युद्धं, तत्र मत्कृतदान-वनाशश्च दृष्टः । एतस्य किं कारणम् ?' इति । ब्रह्मणा प्रोक्तम्—'हे पुत्र ! पुरा ज-

न्मनि विप्रस्त्वं देवासुराणां युद्धवृत्तं श्रुत्वा तत्र स्वयमसुरान् विजेतुं कृतसङ्कल्पोऽन्याराधनां कुर्वाणो देहं विससर्जिथ। तत उपासनाप्रभावादिदानीं मत्पुत्रत्वं त्वया लब्धम्। तत्पूर्वजन्मवासनया त्वया ईदृशं दृष्टम्। त्वं स्वेच्छयाऽन्यं जन्म लब्ध्वा तत्साधयिष्यसि' इति।

ततो ब्रह्मणि गते कालान्तरे गिरिजया युतः शंकरः पर्यटन् तत्राजगाम। विषयपराङ्मुखमानन्दमग्नं तं दृष्ट्वा पार्वत्या पृष्टः शंकरस्तत्परिचयमुक्त्वा तया चोदितस्तदन्तिके प्राप्तः। चिरकालमुपस्थितयोरात्मनोः सत्कारमकुर्वाणं तं परीक्षितुं कुपितः शम्भुरनौचित्यं प्रतिपादयन् तमाचिक्षेप। श्रुत्वाऽपि शान्तः स परकीयशापैर्वरैर्वा स्वस्याविशेषमुक्त्वा शिवं प्राह—'भवान् स्वेच्छया शापान् वरान् वा मयि मुञ्चतु'इति। अविचालिनस्तस्यैवं वचनं श्रुत्वा संतुष्टो हरो वरदानार्थमुद्यतोऽपि तेन सनत्कुमारेण 'भवानेव ईप्सितं मत्तो वृणोतु' इत्युक्तस्तस्य आत्मपुत्रत्वमवृणोत्। सनत्कुमारेण प्रोक्तम्—'हे शम्भो! त्वयैवाहं पुत्रत्वेन वृतो न पार्वत्या, अतोऽस्याः पुत्रत्वं निःसृतं मया' इति। तदाकर्ण्य गिरिजया प्रार्थितः स प्राह—'देवि! अयोनिप्रभवार्थं कृतव्रतोऽहं तेऽपि प्रसिद्ध्या पुत्रो भविष्यामि' इति। अदेहजस्य पुत्रस्यासुत्पादकत्वेन तदर्थं पुनः प्रार्थितः स देहसम्बन्धप्राप्त्यर्थं भवान्याः पूर्वदेहात् शरवनरूपात् स्वोत्पत्तिमङ्गीकृतवान्। एवं श्रुत्वा भवानीशंकरयोर्गतयोः कालान्तरे सनत्कुमारः कुमाररूपेणोत्पन्नस्तारकादीन् समजयत्।"

## अष्टत्रिंशेऽध्याये—पृ० २७०-२७६

"अथ दत्तात्रेयो भार्गवा आख्यानं वर्णयन्नाह—"कदाचित् ब्रह्मा सभायां देवर्ष्यादिभिः कृतां सावित्रीस्तुतिमसहमानस्तां प्राहसत्। तेन स्वानादरं मत्वा स्वस्य सर्वकार्योत्पादकशक्तिभूतत्वेन स्वादृते ब्रह्मणोऽकिंचित्करत्वादि प्रतिपादयन्ती सा वाणी ब्रह्माणं समाक्षिपत्। तदा क्रुद्धो ब्रह्मा—'भर्तुरवमानकारिणी त्वं न पत्नीत्वे योग्याऽसीति इतः परं यागेषु मत्साहित्यं न प्राप्स्यसि' इति तां शशाप। साऽपि तच्छ्रुत्वाऽतिकुपिता ब्रह्माणं प्रत्यशपत्—'यद्यहं पत्नीत्वेऽनर्हास्मि, तर्हि अभीरजन्मा ते पत्नी भविष्यति' इति। एवं तयोः क्रोधेन कम्पमानं जगदवलोक्य तदाऽऽगताभ्यां हरिहराभ्यां तदनौचित्यं प्रदर्श्य सावित्र्या एव देहान्तरेणाभीरजात्वं तत्पत्नीत्वं च भविष्यति' इति प्रतिपादितम्। हरिहरोदितैः शान्तप्रायावपि वाणीब्रह्माणौ पुनः कोपशेषेण मिथः शेपतुः। ब्रह्मणा सावित्र्या अभीरजदशायां स्मृत्यभावः शप्तः, वाण्या च निन्द्ययोषिति ब्रह्मणः कामुकत्वं शप्तम्। अथ हरिहरौ स्तुत्या तौ क्षामयामासतुः।

अथैकदा महता कालेन यष्टुमुद्यतो विधिः कुण्डादि निर्माय वसिष्ठमुख्यान् ऋषीन् इन्द्रादिदेवान् गन्धर्वादींश्चाहूय यक्ष्यमाणः सावित्रीं समाह्वयत्। सा च स्मृतशापवृत्ता तत्र नाजगाम। अथ विधिर्मुहूर्तातिक्रमशङ्कया क्रुद्धस्तादृशीं कांचिदन्यां स्त्रियमानेतुं विष्णुमादिष्टवान्। ततो विष्णुर्भूतलात् वाणीसदृशीमेकां गोपकन्यां समानीय ददौ। ब्रह्मा च तां परिणीय यागं समापयत्।

ततो वाणी तत्रागता स्वतोऽधिकसौन्दर्यां तां दृष्ट्वा लज्जितानना मन्युना प्रज्व-

लन्ती पर्वते संजगाम। तत्क्रोधोद्भूतवह्निर्यज्ञशालां देवऋष्यादींश्च दग्धुं समारभत। ततः पलायमानाः सुरादयो वह्निना पृथिव्याकाशादि सर्वं व्याप्तं दृष्ट्वा हाहाकारं प्रचक्रुः। दह्यमानं जगद्दृष्ट्वा भीतैर्विष्ण्वादिभिः वाण्याः शमनार्थं प्रेषिताः शक्रादयस्तया स्वीयक्रोधात् कोटिशः शक्तीर्निर्माय बद्ध्वा कन्दरे निक्षिप्ताः। ततो विष्णुना चोदिताभ्यां लक्ष्मीपार्वतीभ्यां शान्तिवचनैः प्रार्थितामपि अशान्तामवलोक्य ब्रह्मविष्णुमहेशास्तामस्तुवन्। ब्रह्मप्रत्यक्षात् पुनः प्रज्वलितकोपाग्निना दह्यमानान्विष्ण्वादीन् त्रातुं पार्वत्या प्रार्थिता त्रिपुरा तत्राविर्भूय मधुरवाक्यैः तं क्रोधाग्निं शमयामास। ततः सावित्र्या क्षमां प्रार्थिता त्रिपुरा विष्ण्वादीन् उत्थाप्य शक्रादींश्च मुमोच। ते च वाणीं संस्तुत्य पुनर्यागार्थं, तत्र तस्या विधिसमागमं च समप्रार्थयन्। तच्छ्रुत्वा सावित्री प्रणता त्रिपुरां प्राह—'मातः! इतः परमहं ब्रह्मसमागमं नेच्छामि। अत्रैव त्वदाराधनमग्ना स्थास्यामि। एतन्मे निवेदनं स्वीकुरु' इति।"

## एकोनचत्वारिंशोऽध्याये—पृ० २७७–२८२

"अथ विधिः प्रणतस्त्रिपुरां सावित्र्या असत्त्वे यागस्यासम्भवाज्जनानां व्याधिग्रस्तत्वापत्तिमुक्त्वा—'सावित्र्या प्रदत्तशापानुसारेणास्या गोपकन्यायाः पत्नीत्वे कथं यागः संपद्यताम्? ऋष्यादिभिर्निन्दितश्चाहं भवामि, तदत्र कथमेतत्सुकरं स्यात्?' इति प्रार्थितवान्। त्रिपुरा प्राह—'हे देवाः! शृण्वन्तु, अस्या गोपकन्याया उत्पत्तिं वक्ष्यामि।

पुरा हर्यक्षाख्यो विप्रः सुपार्श्वे पर्वते तपसा सावित्रीमाराध्य प्रसन्नया सावित्र्या ईप्सितयाचनार्थं चोदित आह—'हे देवि! अहं पुरा कांचिद्गोपवधूं दृष्ट्वा मोहितस्तदनिच्छायामपि बलात्तां स्वाश्रमे आनीयोपभुक्तवान्। तदन्तरे तत्रागतो नारदः क्रोशन्तीमपि तामम‍ुञ्चन्तं मामवलोक्य कुपितो गोपवध्वासक्तत्वात् गोपत्वप्राप्तिं शशाप। ततोऽहं भयग्रस्तस्तच्छापान्मुक्त्यर्थं प्रार्थितेन नारदेन त्वदाराधने आदिष्टः। अतस्तच्छापादहं मुक्तिं ययाचे' इति। तच्छ्रुत्वा सावित्र्या उक्तम्—'नारदशापप्रभावात् गोपकुलोत्पन्नोऽपि त्वं मदंशभूतायाः कन्यायाः विष्णुवंशभूतपुत्रस्य च प्राप्त्या परं पदं प्राप्स्यसि।' इत्युक्त्वाऽन्तर्दधे।

सैवेयं सावित्र्यंशभूता वेदयोनिर्गायत्र्याख्या अनिन्द्या प्रादुर्भूताऽस्ति। हे सावित्रि! ब्रह्मदत्तशापप्रभावात्त्वया नैतत्स्मृतम्।' इति श्रुत्वा स्मृतपूर्ववृत्ता सावित्री समतुष्यत। ततस्त्रिपुरया उक्तम्—'इमां वर्णमयीं गायत्रीं प्राप्य पुनर्जाता इव ब्रह्मक्षत्रियविशः द्विजसंज्ञां प्राप्स्यन्ति। हे विधे! त्वद्वक्त्राद्विनिःसृताया वेदमय्या अस्याः कामुकत्वं च ते भविष्यति।' इत्युक्त्वा गायत्र्याः स्वात्मजात्वं च प्रतिपाद्य तस्यां गायत्र्यां सा त्रिपुरा प्रविवेश। ततस्त्रिपुरात्मिका गायत्री चतुर्भुजं त्रिनयनं रूपं प्राप्य सर्वैः कृतप्रणतिः विष्ण्वादीन् दिव्यदृष्ट्या आत्मनस्त्रिपुरात्वं प्रादर्शयत्। तां परापश्यन्तीमध्यमावैखर्यात्मिकां व्याकरणाद्यङ्गोपाङ्गयुतामाकाशरूपिणीं परां दृष्ट्वा सर्वे सुराः प्रणम्य तुष्टुवुः।

अत्रान्तरे तत्रागतो गोपपतिः सानुचरो विधिना प्रेरितस्तां स्वात्मजां दृष्ट्वा परां ज्ञात्वा प्रणतस्तां पुनः स्वगृहागमनार्थं प्रार्थयामास। तच्छ्रुत्वा तया उक्तम्—'हे गोपभूप! परात्मिकाऽहं वाणीरूपेण त्वद्गृहे प्रादुर्भूता। इतोऽनन्तरं सृष्ट्यन्तरे नन्दा-

च्यस्य तव गृहे गौरीरूपेण प्रादुर्भविष्यामि । अयं च विष्णुर्मेऽनुजो भूत्वा त्वद्गृहे उत्पत्स्यति । तदाऽहं गोपिकाभिः पूजिता विन्ध्यनिवासिनी जनानुद्धरिष्यामि ।' एवं वरं प्राप्य गोपे गते सति सा त्रिपुराऽन्तर्दधे । ततः प्रभृति सावित्री पर्वतं समाश्रयत् । विधिश्च गायत्र्या युतो यागं प्रावर्तयत् ।

हे राम! पापहरं सावित्र्याख्यानमेतत्ते कथितम् ।"

चत्वारिंशेऽध्याये—पृ० २८३-२९१

गायत्र्या अवतारादिविषये पृष्टो दत्तात्रेयो देवैरुक्तं "जय जय देवि" इत्याद्येकादशश्लोकात्मकं स्तोत्रमाख्याय आह—"हे भार्गव! देवकृतस्तुत्या प्रसन्ना त्रिपुरा एतस्स्तोत्रस्य मातृकास्तुतिरित्याख्यां प्रतिपाद्य तत्पाठफलं चोक्त्वा ब्रह्मादीन् सावित्र्यादिशक्तीनामादरार्थमादिश्य अन्तर्बभूव । हे भार्गव! इदानीं गायत्र्याः गोपगृहे प्रादुर्भावं शृणु ।

अष्टाविंशतितमे युगे दैत्या मर्त्यस्वरूपा भविष्यन्ति । तदा कालनेमिरसुरो मथुरानगर्यां चन्द्रवंशीय उग्रसेनसुतः कंसाख्यो भविष्यति । तथा हिरण्यकशिपुश्चेदिवंशे शिशुपालाख्यः, हिरण्याक्षो दन्तवक्राख्यो, नरकः, जरासंध इत्याद्या दैत्या भविष्यन्ति ।

अथ तन्मुकुटमणेः कंसात् त्रस्ता तद्भारमसहिष्णुः पृथिवी विधिमुखांस्त्रिदशान् पुरस्कृत्य विष्णोरन्तिकं गमिष्यति । ततः शिवे च प्रादुर्भूते तैर्ध्याता त्रिपुरा तत्राविर्भूय दैत्यसंहारार्थं तान्देवान् मानुषरूपेण भूमाववतरणार्थमादिश्य एवं वक्ष्यति—'हे देवाः! अहं नन्दाख्यगोपस्य गृहे संभविष्यामि । एष हरिश्च वसुदेवात्मजो भूत्वा मां कंससमीपे प्रेषयिष्यति । ततोऽहं शापं दत्त्वा नाशयिष्यामि' इति ।

हे राम! एतदादेशानुसारेण विष्णुर्देवक्यां संभूय स्वात्मानं नन्दगृहे नेतुं पितरं वसुदेवमाज्ञापयिष्यति । वसुदेवश्च अम्बिकाप्रभावात्पथि अप्रतिरुद्धो नन्दगृहे गतस्तत्र नन्दपत्न्यां यशोदायां जातां कोटिसूर्यद्युतिं त्रिनेत्रां शूलाद्यायुधयुताष्टहस्तां कालरात्रिं दृष्ट्वा विस्मितो बालं विष्णुं तत्र प्रस्थाप्य तां प्रणतस्तत्र प्रादुर्भूतैर्ब्रह्मादिभिः स्तुतया तया आज्ञापितो बालरूपिणीं तां स्वसदने नेष्यति । अथ तत्रागतेन कंसेन स्वमृत्युरूपां तां हन्तुमुद्यतेन उत्थापिता अम्बिका गगनमुद्गम्य अचिरात्तन्नाशं शप्त्वा अन्तर्भविष्यति । कृष्णाख्यो विष्णुश्च तमचिरान्नाशयिष्यति ।

तदा गोपकन्याः कृष्णं नारायणं मत्वा तत्समागमार्थं कात्यायनाख्यं मुनिं सेवया परितोष्य स्वीयाभिलाषं जानता तेन मुनिना आराधितया अम्बिकया तदभिलापपूर्त्यर्थं कात्यायनीव्रतानुष्ठानार्थमादिष्टास्तद्व्रतमाचर्य कृष्णसमागमं प्राप्स्यन्ति ।"

अथ रामेण तद्व्रतविधिविषये पृष्टो दत्तात्रेयो यथायथं व्रतविधिमुक्त्वा तदनुष्ठानफलमकथयत् ।

एकचत्वारिंशेऽध्याये—पृ० २९३-२९६

रामेण कात्यायन्या आख्यानं वर्णयितुं प्रार्थितो दत्तात्रेयः प्राह—"हे राम! कंसनाशानन्तरं कृष्णो यादवैः सहितो मध्यसागरे द्वारकापुर्यां गमिष्यति । तस्मिन्काले शुम्भनिशुम्भाख्यौ दानवौ गोकुलमेत्य नन्दं गोपकन्यादींश्च बद्ध्वा नेतुं प्रवर्तिष्येते ।

तया यशोदादिभिः कात्यायनमुपेत्य प्रार्थिता कात्यायनी तत्राविर्भूय ताभ्यां सह योत्स्यति । एवमष्टदिनेष्वतीतेषु देव्या संत्रस्तौ तौ दैत्यौ स्वसैन्यं तत्र नियोज्य पलायिष्यतः । तत्र निशुम्भो विन्ध्यकन्दरे देवखाते प्रवेक्ष्यति । शुम्भश्च गङ्गायां प्रवेक्ष्यति । तद्दृष्ट्वा कात्यायनी त्रिधा भूत्वा रूपत्रयेण तावसुरौ तत्सैन्यं च हनिष्यति । तदा देवैः कलियुगीयानां जनानां मातृगमनाद्यनाचारमुक्त्वा तान् उद्धर्तुं प्रार्थिता सा त्रिधारूपेण तत्र तत्र संस्थास्यति ।"

## द्विचत्वारिंशेऽध्याये—पृ० २९७-३०३

शुम्भनिशुम्भवृत्तं श्रावयितुं प्रार्थितो दत्तात्रेय उवाच—"हे राम ! इमां सुमेधसा विप्रेण सुरथाय राज्ञे प्रोक्तां सर्वसिद्धिकरीं कथां वक्ष्यामि । आदिदैत्ययोर्मधुकैटभाख्ययोः कुले समुत्पन्नौ शुम्भनिशुम्भौ अत्युग्रं तप आचर्य ब्रह्मतः पुरुषाजेयत्वं प्राप्य त्रीन् लोकान् विजित्य इन्द्रादीनां पदान्याहृत्य तदाधिपत्यं प्रापतुः । ततः स्थानपरिभ्रष्टाः शक्रादयो भयग्रस्ता मानवादिवेषयुताः गुप्तरूपा दिनान्यतिचक्रमुः । तदा दैत्या एव हविर्भुजः स्वर्गनरकशासका वेदशास्त्रप्रवर्तका आसन् ।

एवं वर्षायुतशते समतिक्रान्ते क्लिष्टाः सुरा ब्रह्मलोकं गत्वा चतुर्मुखं विधिं प्रणताः स्वदुःखं निवेदयामासुः । तच्छ्रुत्वा विधिः क्षणं विचिन्त्य तयोर्दैत्ययोः पुरुषाजेयत्वं प्रतिपाद्य तयोः संहारार्थं शिवविष्णुसंयुतो देवैः सहितो जाह्नवीतीरं गत्वा त्रिपुरां "नमो देव्यै" इत्याद्यस्तौषीत् । ततः प्रसन्नया त्रिपुरया प्रेरिता गौरी स्नानार्थं तत्रागता देवोक्तेतिवृत्तं ज्ञात्वा क्रोधेन कालीरूपमधारयत् । तदा तस्याः शरीरान्निष्कृता कोटिमन्मथलावण्ययुता शक्तिः उवाच—'देवैः स्तुताऽहं शुम्भं निशुम्भं च हनिष्यामि' इति । अथ विष्ण्वादिभिर्जयघोषे कृते ब्रह्मणा तस्याः क्रोधजन्यत्वात् चण्डिकेति नामकरणं कृतम् ।

एतदन्तरे शुम्भमन्त्रिणौ चण्डमुण्डौ जयनादं श्रुत्वा तत्रागतावतिसुन्दरीं तां दृष्ट्वा कामविद्धौ स्वपरिचयं दत्त्वा तां ग्रहीतुं प्रवृत्तौ । तदवलोक्य काली बलात्तयोः शिरसी धृत्वा परस्परमस्तके आजघान । तदाघातेन मूर्च्छितौ तौ पेततुः । किंचित्कालानन्तरं मुक्तकश्मलौ क्षोभरादवनतौ तौ शुम्भान्तिकं गत्वा अतिसुन्दर्या रत्नभूतायास्तस्या अनाहरणे जीवितवैयर्थ्यमुक्त्वा स्ववृत्तं निवेदयामासतुः । तदाकर्ण्य शुम्भः सुग्रीवाख्यं दूतं चण्डिकामानेतुं प्रेषयामास । स च दूतस्तत्रागतः शुम्भोक्तं सर्वं कथयामास । देवी प्राह—'हे दूत ! अहं चण्डिकाख्या असुरान् हन्तुं प्रवृत्ताऽस्मि । अतः शुम्भो मां जित्वा नयतु' इति । दूतमुखात्तद्वृत्तं श्रुत्वा क्रुद्धः शुम्भः ससैन्यं धूम्रलोचनं प्रेषयामास ।"

## त्रिचत्वारिंशेऽध्याये—पृ० ३०४-३११

"शुम्भाज्ञया धूम्रलोचनः ससैन्यस्तत्रागत्य स्वमनोगतमकथयत् । तदा चण्डिका तं युद्धार्थं समाहूय शरान् ववर्ष । चण्डिकां निर्वाहनामवलोक्य देवैः प्रार्थितो विष्णुः सिंहो भूत्वा तस्मिन्सैन्ये आपत्य तत्त्रासयामास । एवं तयोर्युद्धे समुपक्रान्ते देवी हुङ्कारेणैव तमसुरं भस्मीचकार । सिंहश्च सेनासागरं क्षणान्नाशयामास । श्रुत्वैतत

शुम्भः परमकुपितस्तां शत्रुभूतां मत्वा चण्डमुण्डौ तस्याः स्वतोऽजेयत्वं प्रतिपाद्य सन्ध्यर्थं प्रार्थयमानावपि भर्त्सयित्वा तस्या नाशार्थं प्रेषयामास । आगतौ चण्डमुण्डौ दृष्ट्वा काली परमकुपिता दैत्यसैन्यं भक्षयित्वा खड्गेन तौ च जघान ।

ततः शुम्भो निशुम्भसहितः सैन्यसागरयुतो युद्धार्थं समाजगाम । तदा देवी ब्राह्मयादिशक्तीः सृष्ट्वा तेन सह युयोध । शक्तिभिः स्वसैन्यं हतबलमवलोक्य रक्तबीजोऽसुरो युद्धार्थं पुरस्ससार । तस्मिन् युध्यति तद्देहान्निःसृतैर्भुवि पतितै रक्तबिन्दुभिस्तत्संख्याकास्तद्दैत्यतुल्यपराक्रमा दैत्याः प्राभवन् । तेषां रक्तबिन्दुभिरितरे चासुरा अभवन् । एवमसुरैः सर्वं भूतलं व्याप्तं दृष्ट्वा चण्डिकया आदिष्टा काली वक्त्रं विस्तृतं कृत्वा दैत्यदेहान्निःसृतं शोणितं भक्षयामास । ततः क्षीणरक्तास्तेऽसुरा हताः । अथ निशुम्भस्तत्रागत्य देव्याः शरान् स्वशरैर्निवार्य शक्तिं प्रचिक्षेप । देवी च बाणैः शक्तिं प्रच्छिद्य तदस्त्राणि प्राच्छिनत् । ततो निशुम्भं खड्गहस्तमायातं दृष्ट्वा देवी बलात्तमाक्रम्य स्वखड्गेन दैत्यमस्तकं चिच्छेद । ततः सिंहः शक्तयश्च तत्सैन्यं संजघ्नुः ।

भ्रातरं हतं दृष्ट्वा खिन्नः शुम्भः क्रोधयुक्तस्तत्रागत्य खड्गेन सिंहमाहत्य शक्तिभिर्युयुधे । अथ कालीमतिक्रमन्तं तं दृष्ट्वा अम्बिका दैत्योक्त्या शक्तीस्ततो निवर्त्य एकला सिंहमारुह्य युयुधे । दैत्यमुक्तान् बाणान् क्षणात् निरस्य स्वशरैस्तं त्रासयामास । अस्त्रैस्तामजेयां दृष्ट्वा शुम्भस्तां गृहीत्वा गगनमुत्पत्य जगाम । तदवलोक्य चण्डिका खड्गेन तं मूर्ध्नि आहत्य निराहारा गगने एव चिरं युद्ध्वा पादयोस्तं प्रगृह्य भ्रामयित्वा क्षितौ चिक्षेप । भूमौवापतितो वान्तशोणितः स मूर्च्छितोऽप्यचिरादुत्तिष्ठन् देव्याः शूलाघातेन गतप्राणो निपपात । ततो देवास्तां "जयति सुरवरेण्या" इत्यादिश्लोकैः स्तुत्वा दण्डवत् प्रणयपसन् । अथ साऽम्बिका विष्ण्वादिभ्यो वरं दत्त्वा अन्तर्बभूव ।

हे राम ! एवं सा त्रिपुरा असुरादिभिर्लोकान् परित्रातुमवततार । विष्ण्वादयश्च अस्या एव प्रभावाज्जगत्पालने शक्ता बभूवुः । अतस्तामनाराधयन्तो जना आत्मविनाशं प्राप्स्यन्ति ।"

### चतुश्चत्वारिंशेऽध्याये—पृ० ३१२-३१९

श्रीत्रिपुरांशात्मिकयोः कात्यायनीचण्डिकयोः परमाख्यानं श्रुत्वा आनन्दमग्नो रामो निश्चेतनः स्थितोऽपि क्षणाज्जातचैतन्यः प्रार्थयामास—"भो गुरो ! संसारार्णवदुःखमग्नोऽप्यहं भवच्चरणपोतप्रभावात्सुखेन सन्तरिष्ये । त्वदुक्तकथासुधास्वादनैकपरस्यापि मे लेशतोऽपि तृप्तिर्न जायते । अतोऽन्यां च कथां श्रावय ।" एवं श्रुत्वा हृष्टो दत्तात्रेयस्त्रिपुराख्यानवर्णनतत्परः प्राह—"हे राम ! इदानीं त्रिपुराक्रोधसंभूतायाः कालिकाया आख्याणं शृणु ।

पुरा दितिपुत्राः सहस्रसंख्याकाः कालखञ्जाख्या असुरास्त्रयोदशार्बुदाब्दान्यत्युग्रं तप आचर्य सर्वान् लोकान् प्रचालयन्ति स्म । तदा त्रस्तैः शक्रादिभिः प्रार्थितो विधिस्तेभ्यो वरदानार्थं प्रययौ । तेऽपि ब्रह्मतः पुरुषैरजेयत्वं प्रकृतचरित्राभिः स्त्रीभिश्चा-

जेयत्वं प्रापुः । गते च ब्रह्मणि ते दैत्या बलेन शक्रादीन् विजित्य तदाधिपत्यं हविर्भागादींश्च स्वयं बुभुजिरे । अथ देवैः प्रार्थितो विधाता अप्राकृतचरित्रां स्त्रियं संपादयितुं त्रिपुराराधने प्रवृत्तः । सुरविचेष्टितस्य ज्ञातारस्ते दैत्याश्च देवान् हन्तुमाजग्मुः । तदा भयग्रस्तान् 'त्राहि' 'त्राहि' इत्याक्रोशतो देवान् परित्रातुं महच्छब्देन दैत्यान् मूर्च्छितान्कृत्वा त्रिपुरा आविर्बभूव । कोटिकन्दर्पसौन्दर्यो त्रिनयनां पाशाद्यायुधधरां त्रिपुरां दृष्ट्वा देवा दण्डवत्प्रण्यपतन् ।

मुक्तकश्मलान् सुरवधोद्यतान् कांश्चिद्दैत्यान् संहर्तुं क्रुद्धा त्रिपुरा हुङ्कारेण कालीं चतुर्भुजां दिगम्बरां लम्बजिह्वां भयङ्करीं समुत्पाद्य तान् हन्तुमाज्ञापयामास । सा च कांश्चिदसुरान्हत्वा तन्मुण्डमालां तत्करकाञ्चीं च दधाना मदिरां पिबन्ती कामासक्ता मथुनार्थं पतिं ययाचे । तदा त्रिपुराज्ञया शंकरस्तदनुरूपं दिगम्बरं महाकालं रूपं प्राप्य सुरां पीत्वा मत्तस्तया सह मैथुनं समारेभे। महाकालमधः कृत्वा विपरीतरत्यासक्तां तामवलोक्य दैत्यनाशार्थं देवैः प्रार्थिता सा काली खड्गेन दैत्यान् हत्वा भक्षयामास ।

एवं सर्वानसुरान् भक्षयित्वा उन्मत्ता सा ताण्डवं समारेभे । ताण्डवे प्रचलिते ब्रह्माण्डं कम्पमानं नाशाभिमुखं दृष्ट्वा देवैः "काली करालवदना" इत्यादिभिः स्तुतामपि मदप्रभावादप्रबुद्धां तां कालीं शामयितुं विष्णुना प्रार्थितो महाकालस्तत्पादमूले शयानस्तां प्रत्यवबोधयन् शामयामास । ततः प्रसन्ना काली विष्ण्वादीनां प्रार्थनया तत्रैव स्थित्वा स्वप्रतिमास्थापकपूजकानां सर्वसिद्धिं कथयामास । हे राम ! इदं कालिकाऽऽख्यानं ते उक्तम् ।"

### पञ्चचत्वारिंशेऽध्याये—पृ० ३२०-३२७

"हे राम ! सांप्रतं दुर्गाऽऽख्यानं ते वक्ष्यामि । या दुर्गतेस्त्राति इत्यतो दुर्गेति प्रकीर्तिताऽस्ति । पुरा शक्रः श्रीमदोन्मत्तोऽप्सरोभिः समेतो विन्ध्यशिखरं गतस्तत्र कश्यपपुत्रस्य मुनेत्रस्य सुनेर्भार्यां गौतमकन्यां सुमित्राख्यां कुरूपां पश्यन् हेलया प्राह—'हे सुभगे ! महिषीवदूदृश्यमाना का त्वमसि ? कतरं च महिषं जनयिष्यसि' इति । तन्निशम्य क्रुद्धा सा प्राह—'हे शक्र ! दुर्मते ! त्वत्पत्नी शची महिषी भूत्वा त्वद्रिपुं महिषं जनयिष्यति' इति । ततो भीतः शक्रस्त्राहि त्राहीति वदन् आश्रमे सुनेत्रं मुनिं दृष्ट्वा तं प्रार्थयामास । जातवृत्तमाकर्ण्य सुनेत्रेणोक्तम्—हे इन्द्र ! त्वं पतिव्रताया जगत्सृष्टिसंहारकरं सामर्थ्यं न जानासि ? शृणु । पुरा दाक्षायणी तपःप्रभावात्प्रलयं चकार ।

एवं मुद्गलाख्यद्विजस्य भार्यां सुन्दरीं नद्यां विगाहन्तीं दृष्ट्वा वायुः कामपीडितो वस्त्रोत्क्षेपार्थं तज्जघनं प्रविवेश । वायोर्दौरात्म्यं ज्ञात्वा सा तं जघने न्यरोधयत् । वायुरोधेन व्याकुलाः शक्रादयो वायुमपश्यन्तो विधिमुपगम्य प्रणताः स्वदुःखं निवेदयामासुः । ततो विधिः क्षणं ध्यातस्तत्कारणं ज्ञात्वा सर्वं वृत्तान्तमुक्त्वा मुद्गलं प्रसादयितुं समादिदेश । तत इन्द्रो देवगणैर्युतो मुद्गलमुपेत्य स्वदुःखं न्यवेदयत् । मुद्गलः प्राह—'हे शक्र ! सापराधस्य वायोर्विसर्जनार्थमहं तां वक्तुमसमर्थः । अतस्त्वं कुबेरवरुणाग्निभिर्युतो ब्रह्मचर्यमासाद्य विद्यार्थिभावेन तां सेवाभिस्तोषय' इति ।

ततः प्रभृतीन्द्रो यथोक्तस्तस्या गाः सेवते । कुबेरश्च फलाद्याहरणतत्परो बभूव । वरुणो जलाहरणादि करोति स्म । अग्निश्च अग्निहोत्रसामग्रीं समपादयत् । एवं तैः सेव्यमाना

प्रसन्ना सा ताननुग्रहीतुं पतिमचोदत । मुद्गलेन च सर्वं तदितिवृत्तमुक्त्वा क्रोधस्यानौचित्यं प्रतिपादितम् । अथेन्द्रादिभिः प्रणतैः प्रार्थिता सा वायुं मुमोच ।

अतो हे शक्र ! त्वं च छमिन्नामेव प्रसादय' इति । ततः शक्रेण प्रार्थिता छमिन्ना आह—'हे इन्द्राणि ! महिषं प्रसूय त्वं शापमुक्ताभविष्यसि । इन्द्रश्च देव्या महिषे हते स्वपदं प्राप्स्यति' इति । अथेन्द्राणी क्षणान्महिषी भूत्वा घोरेऽरण्ये गता तत्र कैटभासुरस्य स्खलितं वीर्यं तृणैः सह भक्षयित्वा गर्भिणी समभवत् । काले महिषं प्रसूय च पूर्वरूपं प्राप्ता ।

महिषश्च प्रचण्डः कालेन पर्वतप्रमाणोऽसुरैः स्वीयराज्ये प्रस्थापितः शक्रादीन् जित्वा त्रैलोक्याधिपतिर्बभूव । ततः शक्रादिभिः प्रार्थितो ब्रह्मा शिवविष्णू आहूय महिषवधोपायं व्यचिन्तयत् । त्रिपुराराधनं निश्चित्य च ते देवास्तां प्रतुष्टुवुः । एतदन्तरे महिषस्य चमूपतिर्बिडालाक्षो देवान् हन्तुं समाजगाम । ततो विष्ण्वादीनां वक्रात् क्रोधेन निर्गतं तेज एकीभूय नारीरूपं समपद्यत । अथ सा नारी कान्त्या लोकत्रयं व्याप्नुवन्ती आत्मनो दुर्गाख्यामुक्त्वा देवैः कल्पितान्यायुधानि स्वीकृत्य सिंहारूढा महिषं हन्तुं प्रतस्थे ।"

### षट्चत्वारिंशेऽध्याये—पृ० ३२८–३३६

"बिडालाक्षो महिषचमूपतिस्तां कोटिसूर्यसमप्रभां सहस्रभुजां त्रिलोचनां दुर्गामवलोक्य शङ्खनादं सिंहगर्जनं च श्रुत्वा भीतः पलायितः । बिडालाक्षमुखात् देव्या वैभवं श्रुत्वा क्रुद्धो महिषः उदग्रादिपञ्चसैनिकैः, उग्रवीर्याद्यष्टपुत्रैः, भेरुण्डादिनवमन्त्रिभिश्च कोटिकोटिदैत्यसेनासमेतैर्युतो योद्धुमाययौ । अथ देवसेनाभिः समारब्धे घोरे युद्धे दुर्गाऽधिष्ठितः सिंहः उड्डीय दैत्यसैन्ये पपात । नखलाङ्गूलादिभिर्दैत्यान् संहरन् सिंहो हन्तुमागतान् उदग्रादीन् पञ्च सैनिकान् नखादिभिर्हत्वा भेरुण्डप्रमुखान्नव मन्त्रिणश्च तलप्रहारादिना नाशयामास । तत आगतानुग्रवीर्यादीनष्टौ महिषसुतान् शस्त्रास्त्राणि प्रक्षिपतो वीक्ष्य सिंहः उग्रवीर्यं तलप्रहारेण निपात्य अन्यांश्च प्राहरत् । तावन्मुक्तकश्मलेनोग्रवीर्येण प्रक्षिप्ता गदा सिंहमूर्धनि आहत्यापि कन्दुकवदुद्गता वेगेन सारणं समचूर्णयत् । उग्रवीर्यश्च सिंहनखैर्विदारिताङ्गो गतासुः पपात ।

तत इतरान् महिषसुतान् युध्यतो वीक्ष्य दुर्गा सिंहं ततो निवर्त्य शूलेन तान्नाशयामास । सैनिकादीन् पुत्रांश्च हतान्दृष्ट्वा क्रुद्धो महिषो योद्धुमाजगाम । ततो महिषेण युध्यमाना दुर्गा तदङ्गाघातेन आयुधानि चूर्णीभूतानि वीक्ष्य शाक्तैः पाशैस्तं बबन्ध । ततः स सिंहरूपं प्राप्तोऽपि देव्या शक्त्या हतः पुरुषो भूत्वा युध्यमानः शराघातेन मूर्च्छामवाप । क्षणान्मुक्तकश्मलो मायया शिलाः वर्षन् देव्याः पाशेन बद्धोऽपि शैलो भूत्वा युध्यमानो देव्याः कुलिशास्त्रेणाहतो गजरूपमास्थितश्छिन्नकरः पुनर्माहिषं रूपमवाप । अथ क्रुद्धा दुर्गा तस्य शिरः प्रच्छिद्य माहिषदेहान्निर्गच्छन्तं पुरुषरूपमास्थितं तमसुरं पाशेन बद्ध्वा शिरश्छित्वा पातयामास ।

अथ महिषे मृते देवैर्विष्ण्यादिभिर्जयघोषं कृत्वा पुष्पाणि विकिरद्भिः "नमो नमस्ते" इत्यादिभिः स्तुता दुर्गा जगद्रक्षणकारणं द्वात्रिंशन्नाममालात्मकं रहस्यमाख्याय तत्पा-

ठफलानि हवनफलं चोक्त्वा आत्ममूर्तिमाख्याय तत्पूजाफलं चाख्याय अन्तर्बभूव। हे राम! आपद्धरणमेतद्दुर्गाऽऽख्यानं ते कथितम्।"

## सप्तचत्वारिंशेऽध्याये—पृ० ३३७-३४१

"भो गुरो! भवन्मुखाम्भोजनिर्गतं दुर्गामाहात्म्यं श्रुत्वा कृतकृत्योऽप्यहं क्षीद्रखात्कामुकस्येवातृप्तः पुनरन्यच्च श्रोतुमिच्छामि। हे भगवन्! पुरा कामदेहे शिवनेत्रनिःसृताग्निना दग्धे त्रिपुरादेव्या नेत्रे लीनः कामः कथं पुनः प्रादुर्भूतः? तत्कथय" इति रामेण प्रार्थितो दत्तात्रेयो हर्षसागरे मग्नः उवाच—"हे राम! त्वया त्रिपुराख्यानं स्मारितोऽहं धन्योऽस्मि। सर्वाऽऽख्यानशिरोभूतस्य त्रिपुराख्यानस्य वर्णने न कोऽपि जगत्यां समर्थस्तथापि तस्या वेदशास्त्राद्यगोचरस्य मुख्यस्वरूपस्य कथानकं संक्षेपेण मया वर्णितमस्ति। लोकानुग्रहार्थं सा स्थूलेन हयरूपेण सृष्ट्यादिकार्यं संपादयति। इदानीं त्रिपुरायाः परात्परस्य ललिताख्यरूपस्य कामोत्पादकस्य माहात्म्यं कथयिष्ये।

पुरा भण्डाख्येनासुरेण तपोबलादनेकान्यण्डानि तत्र विष्ण्वादींश्चान्यान् सृष्ट्वा तत्तत्स्थाने नियोज्य कृतपदभ्रंशाः मुख्यास्त्रिदशास्त्रिपुरामाराधयामासुः। प्रसन्ना च सा ललिताख्येन रूपेण भण्डासुरं संजघान। अथ विष्ण्वादिप्रमुखैः शोकविह्वलाया रत्या अवस्थां प्रदर्शयद्भिः कामसंजीवनार्थं प्रार्थिता सा ललिता स्वभक्तस्य कामस्य सर्वथा अपराभवं प्रतिपादयन्ती 'गौरीशापात्तद्देह एव दग्धः' इत्युक्त्वा अपाङ्गामृतेन कामेशमभिषिच्य तद्धृदयात्काममुत्पादयामास।

स च कामः स्वदेहदाहं पुनरुत्पादं च लक्ष्मीतः श्रुत्वा दुःखितान्तकरणः शिवं जिगीषुर्वृथा तनुधारणामनिच्छन् आत्मनो विदेहतां प्रार्थयामास। तच्छ्रुत्वा ललिता तमाश्वास्य प्राह—हे काम! खेदं जहि! अतःपरं त्वं स्वदेहसंभूतैरसंख्यातैः कामैः सेव्यमानः शंकरं जहि। त्वयाऽऽहतः शंकरः पार्वतीं विष्णोर्मोहिनीतनुं च गमिष्यति। त्वदीया तनुश्च रत्या एव दृष्टिगोचरा भविष्यति, नान्येषाम्' इति। तत एवंलब्धवरेण कामेन आहतः शिवो गौर्यां गुहमुत्पाद्य तेन तारकादीनसुरान् घातयामास। कालान्तरे च शंकरो मोहिनीं समगच्छत्।"

## अष्टचत्वारिंशेऽध्याये—पृ० ३४२-३४७

रामेण पृष्टो दत्तात्रेयः कथयामास—"हे राम! पुरा देवासुरयुद्धे क्षीराब्धिनिःसृतममृतकुम्भं दैत्यैः प्रहृतं विष्णुर्मोहिनीरूपं प्रगृह्य दैत्यान् वशीकृत्य आजहार।

कालान्तरे मोहिनीरूपमवलोकयितुं प्रकटीकृताभिप्रायः शंकरो विष्णुना मोहिनीरूपस्य सद्योमोहकरत्वप्रतिपादयता ततो निवृत्तोऽपि आत्मनः सर्वथाऽमोहितत्वं प्रतिपादयन् विष्णुमधिचिक्षेप। अथ विष्णुः शंकरस्य साक्षात्कामतोऽप्यमोहितस्य नियतेन्द्रियत्वं चिन्तयन् तन्मोहार्थं षष्टिसहस्राब्दानि त्रिपुरां समाराध्य शंकरं मोहयितुं ततो लब्धवरो मोहकरं त्रिपुरांशं लब्ध्वा कैलासमागत्य मोहिनीरूपमातस्थौ। सर्वतोऽधिकलावण्यां पूर्णचन्द्राननां हेमवर्णां मन्दहासप्रफुल्लितनयनां समधुरं गायन्तीं कन्दुकक्रीडातत्परां मोहिनीं पश्यन् कामसायकेन विद्धहृदयः शंकरो बलात्तत्करं प्रगृह्य त-

दङ्गस्पर्शात् क्षुब्धेन्द्रियो वीर्यं मुमोच। ततः स्वीयरूपं प्राप्तं विष्णुमवलोक्य स लज्जितो बभूव।

हे भार्गव! एवं त्रिपुराप्रसादेन कामो विद्याप्रवर्तको भक्तशेखरश्चाभवत्। विद्या-चाराधिताया अस्यास्त्रिपुराया उपासका अन्ये च मन्वादयो द्वादश विद्याप्रवर्तकाः प्रातःस्मरणीयास्तत्प्रसादेन जगत्स्रष्टृत्वादि प्रापुः। अन्ये च बीजाद्युपासका मित्रीशा-दयः आद्याचार्या अभूवन्। एवं सा त्रिपुरा विविधानि रूपाण्यासाद्य जगद्रक्षितुं तत्त-त्स्थाने विराजते। आसां दर्शनादिभिर्भक्तः सर्वापराधान्मुच्यते।"

## एकोनपञ्चाशत्तमेऽध्याये—पृ० ३४८–३५१

अथ रामेण ललिताया भण्डजयं विस्तरेणाख्यातुं निवेदितो दत्तात्रेयो जगाद— "राम! जगद्धातुः शंकरस्य चिच्छक्तेस्त्रिपुराया मुख्यांशभूता ललितैवास्ति। पुरा लोकदुःखनिवारणेच्छुः कुम्भजमुनिः काञ्चीपुरे विष्णुं तपसा संतोष्य ललिताऽऽख्यानं श्रावयितुं प्रार्थितवान्। तदा विष्णुनाऽऽदिष्टस्तदंशभूतो हयग्रीवः प्राह—'हे कुम्भो-द्भव! ललिताख्यानामृतं पिपासुस्त्वं धन्योऽसि। एतदाख्यानं येन न श्रुतं तस्य जी-वितं वृथैवास्ति।

हे कुम्भज! पुरा भण्डाख्योऽसुरः शंकरमाराध्य सर्वतोऽभयं वृत्वा जगत्त्रयं जित्वा हविर्भागादीन् स्वयं बुभोज। तदा भीता इन्द्राणी गौरीं समाश्रयत। अथ भण्डो भुवि विशुक्रं दैत्यं पाताले च विषङ्गासुरं प्रतिष्ठाप्य शक्रादीन् भारवाहने न्ययोजयत। कालान्तरे ते देवा दैत्यगुरुणा औशनसेन मोचिताः। देवैर्विध्वस्तं शोणितपुरं मयासु-रात् पुनः स्वर्गतोऽप्यधिकरम्यं निर्माय तस्य शून्यकं नाम विधाय तत्र दिक्पत्यनुरू-पान् दैत्यान् स्वतःसृष्टान् तत्कर्मणि नियोज्य स दैत्यो राज्यमशासत, स्वर्गं च नाशयामास। एवमन्यान्यपि पञ्चाधिकशतानि ब्रह्माण्डान्याक्रम्य अधिचकार' इति।"

## पञ्चाशत्तमेऽध्याये—पृ० ३५२–३६०

"भण्डासुराज्जातमिन्द्रादिजयं विस्तरेण वक्तुं पृष्टो हयग्रीवो निजगाद—'शिव-क्रोधात्कामे दग्धे तद्देहभस्म शिवसुतो गणेशो बालभावेन पुञ्जीकृत्य नराकृतिं चकार। तद्दृष्ट्वा पार्वत्या गणेशक्रीडनार्थं तज्जीवयितुं प्रार्थितः शिवोऽमृतदृष्ट्या जीवयामास। तत्प्रकृतिभूतभस्मनः शिवक्रोधसम्भवात्तत्तामसोऽसुरः प्राभवत्।

अथ कदाचित् स दैत्यो महदैश्वर्यसंपन्नान् शक्रादीन्पश्यन् गणेशात् तत्संभूति-कारणं शिवाराधनं श्रुत्वा स्पर्धया गङ्गातटे दशवर्षसहस्राणि तपश्चचार। ततः प्रसन्नं शिवमागतं दृष्ट्वा स्वस्य सर्वविजयित्वं सृष्ट्यादिसामर्थ्यममरत्वं चायाचत। तन्निश-म्य तस्य एवंविधवरानर्हत्वमुक्त्वा शिवोऽन्तर्दधे। खिन्नः स पुनर्धूमाहारो दशायुता-ब्दान्युग्रं तप आचर्य शिवं संतोष्य ततोऽमरत्व त्रिदेववशित्वातिरिक्तं सर्वमवृणुत। अमरत्वाभावे सर्वं निष्फलं मत्वा स पुनरूर्ध्वपादोऽधः प्रज्वलितानलस्तप आरेभे। एवमत्युग्रं तपश्चरतो विंशतिवर्षेष्वतीतेषु तस्य रोमकूपेभ्यो निःसृतेन धूमेन त्रैलोक्यं व्याप्तम्, दिशश्च प्रजज्वलुः। एवं घोरेऽनर्थे समारब्धे त्रस्तैर्देवैः प्रार्थितो विधिः शिवं तद्वरदानार्थं न्यवेदयत। अथागतं शिवं दृष्ट्वा दण्डवत्प्रणतः स दैत्यः स्वाभिलषित-

मयाचत। शंकरश्च तस्मै देवासुरादिभिर्योनिजातैः पक्ष्यादिभिः कीटादिभिस्तथा प्रसिद्धशस्त्रादिभिश्चामरत्वं दत्त्वाऽन्तरभवत्।

अथात्मानं कृतार्थं मत्वा स गौरीं तद्वृत्तमुक्त्वा तया सुरविरोधान्निवारितस्तदाज्ञया पातालमधिकृतोऽपि तन्नत्यैर्दैत्यैः प्रेरितस्त्रिलोकीं जेतुमुत्तरकुरुष्वागत्य युद्धं समारेभे। तदवलोक्य ब्रह्मणा तस्मै भूराज्यं दत्त्वा देवैरविरोधार्थं मन्त्रितोऽपि इन्द्राणीं नन्दनादींश्च कररूपेण याचमानः स क्रुद्धेन विधिना 'भण्डस्त्वमसि' इति भर्त्सितः। ततः स युद्ध्यमानस्त्रिलोकीं विजित्य देवान् भारवाहने नियोज्य पञ्चशतानि ब्रह्माण्डानि स्वायत्तीचकार। तच्छ्रुत्वा तारकाख्योऽसुरः प्रीतस्तस्मै अष्टादशाण्डाधिपत्यं चतस्रः स्वानुजाश्च प्रददौ।

अथ स 'उग्रकर्मादीन् अष्टौ दैत्यान् दिक्पतित्वे नियोज्य मत्तः स्वयं सृष्ट्यादिकर्ता विध्यादीन् जे' प्रययौ। तज्ज्ञात्वा ब्रह्मणा विष्णुना च संमानितः स कैलासं गत्वा समागतं गणेशं प्रभत्स्र्य गौर्याश्रितां शचीमयाचत। तच्छ्रुत्वा क्रुद्धो गणेशस्तन्मन्त्रिणं हत्वा प्रमथावृतो दैत्यगणैरयुध्यत। एतदन्तरे गौरी च कोटिशः शक्तिभिर्युता आगत्य दैत्यान्जघान। अथ भण्डो दैत्यह्रासं दृष्ट्वा समागतो गणेशगदाप्रहाराद्रिथाश्वसूतो मूर्च्छितोऽपि क्षणादुत्थाय गणेशमङ्कुशेनाहत्य पातयामास। ततः पार्वती हुङ्कारेण तं बद्ध्वा हन्तुमुद्यताऽपि विधिना शङ्करदत्तवरं स्मारिता तं मुमोच। ततस्तया भर्त्सितः, 'अतः परमिदं स्थानमागमिष्यसि चेन्नाशमेष्यसि' इति शप्तश्च स भण्डो विषण्णः शून्यकपुरं प्रययौ।'

## एकपञ्चाशत्तमेऽध्याये—पृ० ३६१–३६८

'भण्डनिरस्ता देवा भृत्या इव तत्सेवां कुर्वन्त इतस्ततस्तदलक्ष्यस्थाने भ्रमन्तो दुःखिता कालमतीयुः। एवं विंशतिलक्षाब्देष्वतीतेषु कदाचिदिन्द्र आङ्गिरसं गुरुं दृष्ट्वा प्रणतो जगाद—'भो गुरो! भण्डत्रस्ते मयि दयां कुरु। पुरा विधिचोदितेन मया कालं प्रतीक्षमाणेन असंख्यानि युगतुल्यानि वत्सराणि यापितानि। मम स्वर्गादीनां चेदृशीं दीनावस्थां विलोकय। ननं भाग्यमेव मे विपरीतमस्ति।' इत्युक्त्वा दुःखसन्तप्तो मूर्च्छामवाप। अथाङ्गिरसो दुःखितं तं धैर्यवचनैः समाश्वास्य त्रिपुराराधनार्थमादिश्य वायुमाहूय सर्वान् सुरान् हिमालये नेतुमाज्ञापयामास। ततस्तेन वायुना हिमगिरावानीता आङ्गिरसप्रमुखाः विष्ण्वादयश्च सुरास्त्रिपुरामुद्दिश्य संयता ध्यानपरा शतवत्सराण्यतीत्य तन्त्रानुसारेण महायागं चारेभिरे।

ततोऽन्त्यदिने यागं समाप्य स्तुवत्सु तेषु ज्वालामध्यात् महाशब्दं कृत्वा अत्यधिकप्रकाशमुद्भाव्य त्रिपुराम्बा प्रादुर्बभूव। तदा आङ्गिरसादृते सर्वे सुरा महाशब्देन प्रकाशेन च बधिरान्धा मूर्च्छिता अपतन्। अथ तां पूर्णचन्द्राननां सृण्यादिधृतचतुर्हस्तां भक्तरक्षणोद्यतां दृष्ट्वा मुक्तकश्मला विष्ण्वादयो दण्डवत्प्रण्यपतन्। तत आङ्गिरसो हर्षनिर्भरो गद्गदया वाचा "तव विभवविलासम्" इत्यादिभिः स्तुत्वा प्रणनाम। विष्ण्वादयश्च "जय जय जननि" इत्यादिभिरस्तुवन्। ततः प्रसन्ना त्रिपुरा विष्ण्वादीन् आङ्गिरसं चाभीष्टं वक्तुं समादिदेश।'

## द्विपञ्चाशत्तमेऽध्याये—पृ० ३६९-३७४

'विध्यादिभिश्चिन्ताकुलैर्भण्डासुरनाशार्थं प्रार्थिता त्रिपुरा स्वस्य अयोनिसंभूतस्त्रीत्वादप्रसिद्धास्त्रेण तन्नाशसामर्थ्यमुक्त्वा तान् समाश्वास्य मूर्च्छितान् शक्रादीन् पावयितुमिच्छता आङ्गिरसेन तत्स्वरूपं प्रदर्शयितुं निवेदिता सा शक्रादीनां तत्स्वरूपदर्शनानर्हत्वात्तदर्थं स्वाराधनावश्यकत्वं प्रतिपाद्य दृष्ट्यमृतेन सुरान् प्रबोध्य अन्तर्दधे। उत्थितास्ते देवा गुरुणा चोदितास्त्रिपुरामाराधयन्तो मासोनं वर्षं व्यतिचक्रमुः।

एतदन्तरे दैत्यगुरुः शुक्रः सुरवृत्तं भण्डासुराय निवेद्य त्रिपुरातः स्वसंरक्षणार्थं सुरेभ्यः स्वर्गराज्यं दत्त्वा त्रिपुरां प्रसादयितुं समादिदेश। ततो भण्डो विचारसभां निर्माय तत्रैकेन मन्त्रिणा मन्त्रिकर्तव्यमुपदर्श्य महिषशुम्भादिदैत्यदृष्टान्तोक्तिपुरस्सरं गुरुप्रोक्तं विधातुं निवेदितोऽपि तस्मिन्ननभिमतोऽन्येन दैत्येन गुरोराक्षेपपूर्वकं युद्धार्थमुत्साहितः प्रहृष्टः सुरैर्योद्धुं निर्जगाम। कोटिशः सैनिकैर्युतं तमागतं दृष्ट्वा भीतैर्देवैः स्वाङ्गानि कुण्डे प्रक्षिपद्भिः प्रार्थिता त्रिपुरा ज्वालामालिनीं शक्तिमाज्ञाप्य ज्वालया दैत्यानवरोधयत्। भण्डश्च ज्वालाव्याप्त्या देवान् भस्मीभूतान्मत्वा परावृत्तः।

ततोऽवशिष्टाङ्गानि पूर्णाहुत्यां होतुमुद्यतान् देवान् त्रातुं ज्वालामध्यात्तडित्पुञ्जसमप्रभा त्रिपुरा आविर्बभूव। विध्यादयश्च जयघोषं कृत्वा यथाविधि तां पूजनादिभिस्तोषयामासुः।'

## त्रिपञ्चाशत्तमेऽध्याये—पृ० ३७५-३८०

'विध्यादिभिः शक्रादीनां दर्शनसौलभ्याय प्रार्थिता त्रिपुरा मेरुशृङ्गे विश्वकर्मनिर्मितनगरे निजार्धांशभूतं कामेश्वरं पतिं विधाय अवसत्।'

हे राम! अथागस्तिना तन्नगरविषये त्रिपुराराधनविधिविषये च पृष्टो हयग्रीवः कथयामास—'हे कुम्भज! दुर्लभां शिवादिभक्तिद्वारिकां त्रिपुराभक्तिमाश्रितस्त्वं सर्वथा धन्योऽसि। तव तद्भक्तिप्रापकं कारणं वक्ष्यामि, शृणु। पुरा त्वद्भार्या लोपामुद्रा पितृगेहे पराभक्तियुतं पितरं राजानमनुकृत्य त्रिपुरां समाराधयत्। प्रसन्ना त्रिपुरा तस्यै त्रैपुरीं विद्यां प्रददौ। तत्सङ्गात्तेऽपि त्रिपुराभक्तिरुद्भूताऽस्ति' इत्युक्त्वा त्रिपुराराधनस्य श्रीसूक्तविधानं तत्फलानि चाख्याय श्रीपुरमाख्यातुं प्राह—

'विध्यादिभिस्तत्र स्थातुं प्रार्थिता त्रिपुरा सुरानुग्रहार्थं तदङ्गीचकार। ततो विधिर्विश्वकर्माणं तत्पुरं निर्मातुमाज्ञाप्य तेन नगराकारादिविषये पृष्टश्चतुःशतयोजनविस्तीर्णं मेरुशृङ्गं तत्स्थित्यर्हमुक्त्वा तत्प्रकारान् वक्तुमारेभे।'

## चतुःपञ्चाशत्तमेऽध्याये—पृ० ३८१-३८६

'अथ धाता चतुर्लक्षयोजनविस्तीर्णं सप्तसहस्रयोजनपरिमितचतुर्द्वारयुतप्राकारयुक्तं कल्पवृक्षोपवनशतादिभिः प्रफुल्लितमष्टसु गृहेषु पृथक् पृथक् संस्थिताभिर्महाकालमूर्तिभिरुज्जीवितं यथावत्तद्देशमास्थितैर्वसन्तादिभिः सेव्यमष्टदिक्षु मातङ्ग्याद्यष्टमन्त्रिणीभिः कोटिकोटिभैरवयूथपैरष्टभैरवैश्च सुरक्षितं सिद्धचारणादिभिः समावृतं वज्राख्यया नद्या सुशोभितं सपार्षदप्रमथाभ्यां विष्णुशङ्कराभ्यां कृतवासं तारया देव्या त्रातजनं रतिमदनाभ्यां प्राप्तसौन्दर्यं तत्रस्थे महापद्मवने सूर्यसोमात्मकपात्रसहिते सहस्र-

याजनविस्तृतविद्गिनःशासकुण्डसमेते चिन्तामणिगृहे सहस्रयोजनायतनवावरणदेवी-परिवृतनायकास्थितश्रीचक्रे पञ्चब्रह्मात्मकमञ्चके कामेश्वराङ्काधिष्ठितया ज्योतिर्मय्या श्रीत्रिपुरया विराजितं श्रीनगरं प्रावर्णयत्।'

पञ्चपञ्चाशत्तमेऽध्याये—पृ० ३८७-३९३

'अथेमानि संदेहास्पदानि वाक्यानि श्रुत्वा त्वष्टा तत्पुरनिर्माणादिविषये पृष्टो ब्रह्माऽब्रवीत्—'पुरा चिद्रूपिण्या निर्मिता वयं सृष्ट्यादिकार्ये नियुक्ता अपि ततो वि-रतास्त्रिपुरां प्रसाद्य तत्स्वरूपप्राप्तिमेवाभिलपन्तस्तया स्वनियतेः सर्वथा दुर्वारत्वमुक्त्वा तस्माद्वरान्निवृत्ताः। ततोऽस्माभिः सेवितुं दृश्यमूर्त्या स्थातुं प्रार्थिता सा मणिद्वीपे-ऽग्निकुण्डात्स्वस्थूलमूर्त्युत्पत्तिमङ्गीकृत्यान्तर्जगाम।

अथास्माभिस्तत्र मणिद्वीपे गत्वा शिवनेत्राग्निनिःसृते विष्णुचितौधस्के पावके मनोबुद्ध्यादिरूपहव्यैर्हूयमानैर्ध्याता त्रिपुरा पाकात्समुद्भूय ततः शंकरेण निर्मिते शेष-शक्त्यात्मके चिन्तामणिमये द्विसहस्रयोजनविस्तृते चतुर्द्वारे परितो महापद्मवनसंवेष्टि-ते मन्दिरे रत्नसिंहासनेऽध्यतिष्ठत्। ततोऽस्माभिर्देव्यनुरूपपुरुषावश्यकत्वमुक्त्वा तं निर्मातुं निवेदितः शिवो देवीसदृशपुरुषनिर्माणे आत्मनोऽसामर्थ्यं प्रकटयामास।

विदित्वाऽस्मदभिलापं सा महाशब्देनातितेजसा च सर्वान् बधिरान्धान् कृत्वा क्ष-णात्स्वानुरूपपत्यङ्काधिष्ठिताऽस्मानमदर्शयत्। ततः शङ्करस्तयोः कामेश्वरादिनामा-नि कृतवान्।

अथास्माभिः प्रार्थितया तया निर्मिता महात्रिपुरसुन्दरी शक्तीः स्रष्टुमाज्ञापिता। सा च स्वांशात् षोडशशक्तीर्नवशक्तीश्च निर्माय ताभिश्च नैकविधाः शक्तीर्व्यसृजत्। एवं सा त्रिपुराम्बा शक्तिभिः सेविताऽभवत्।"

षट्पञ्चाशत्तमेऽध्याये—पृ० ३९४-३९९

'त्वष्ट्रा त्रिपुराशक्तीनां नामादिविषये आख्यातुं पृष्टो विधिः महात्रिपुरासृष्टा-भिर्नवशक्तीभिः सृष्टानां शक्तीनां स्थित्यर्थं त्रिपुरया निर्मितानि श्रीचक्रस्थानान्याख्या-य तासां नामान्युक्त्वा मुद्रात्मिकानां शक्तीनां मुद्राश्च प्रवर्ण्य तत्स्वरूपाख्यानपुरः-सरं तदधिष्ठितानि तत्तत्स्थानानि च निरूपयामास।'

सप्तपञ्चाशत्तमेऽध्याये—पृ० ४००-४०५

'विधिराह—हे त्वष्टः! चिन्मात्रस्वरूपा त्रिपुराम्बा एकाऽपि जगत्क्रियानिर्वाहार्थं ब्रह्मादिरूपेणानेकरूपा भवति।

अथ सृष्टाः शक्तीः स्थानानां नीचोच्चभावात् परस्परं स्पर्धमाना दृष्ट्वा त्रिपुरा स्वेष्ट-स्थानप्राप्त्यर्थं तपः कर्तुं ता आदिशत्। तपोमग्नासु तासु चिरकालेऽतीते त्रिपुरा आत्मा-नमेकाकिनीमवलोक्य दश शक्तीरुत्पादयाञ्चकार। ताश्च तपोमग्ना दृष्ट्वा पुनः शक्तीरसृ-जत्। एवं पुनः पुनः सृष्टा अपि शक्तीस्तपोरता अवलोक्य संतुष्टा त्रिपुरा स-र्वाभ्यो यथावत् पदानि तत्तदाधिपत्यं च प्रददौ।

अथ सर्वं श्रीचक्रं शोपिद्धयासं विषमं दृष्ट्वा विघ्नादिभिः प्रार्थितः कामेश्वरो मित्रीशादीन् चतुरो गुरून् सृष्ट्वा तेभ्यश्चान्यान्गुरुगणान् सर्जयामास। ततस्ते गुरवोऽस्यु-

ग्रं तप आचर्य तत्तत्स्थानानि प्रापुः इति ।'

अष्टपञ्चाशत्तमेऽध्याये—पृ० ४०६-४१०

'विधिमुखाम्भोजनिर्गलितं श्रीत्रिपुरामाहात्म्यामृतं पिबन्नप्यतृप्तस्त्वष्टा कामेश-सृष्टानां गुरूणां नामाद्याख्यातुं धातारं संप्रार्थ्य पप्रच्छ—'हे भगवन् ! भवद्भिर्वह्नि कुण्डे योषिद्रूपं किमर्थं ध्यातम् ?' इति । तदाकर्ण्य विधाता गुरूणां नामादिं तद्भेदांश्च प्रवर्ण्य आह—' हे विश्वकर्मन् ! लोके स्त्रीरूपस्य आनन्ददायकत्वदर्शनात् वस्तुतः सर्वसञ्चालिकायास्त्रिपुरेच्छाया एव तथात्वात् अस्माभिर्योषिदाकृतिर्ध्याता ।

तदेवंभूते श्रीचक्रे महापद्मवनवेष्टिते चिन्तामणिगृहेऽधिष्ठिता श्रीत्रिपुराम्बा तत्र-स्थैर्ब्रह्मादिभिः सेविता विराजते । हे त्वष्टः ! सांप्रतमस्माकं तद्दर्शनसौकर्यार्थं त्वं मेरु शृङ्गे श्रीचक्रवत् श्रीपुरं विधेहि' इति ।'

एकोनषष्टितमेऽध्याये—पृ० ४११-४१९

"अथागस्तिना भण्डदैत्यविचेष्टितं ज्ञातुं पृष्टो हयग्रीव उवाच—'ज्वालाऽऽवृतान् देवान् हतान्मत्वा परावृत्तो भण्डासुरः कदाचिदागतं नारदं प्रपूज्य स्वचेष्टितमुक्त्वा दावानलव्यासेः कारणं पृष्टवान् । तदाकर्ण्य नारदः प्रहस्य देवानां वस्तुस्थितिं ललितोत्पत्तिं च कथयामास । तन्निशम्य भण्डो बलदर्पितः स्वसामर्थ्यं वर्णयन् स्वकृतविष्णवादिपराजयमुक्त्वा ललितां समाक्षिपत् । तदन्तरे भण्डपत्नीभिः पतिसंरक्षणार्थं प्रार्थितो नारदः कैटभशुम्भासुराद्युदाहृतिपुरस्सरं श्रीत्रिपुरायाः सामर्थ्यमुक्त्वा तदाराधनार्थं तं दैत्यमुपदिदेश । अथ भण्डो नारदमेकान्ते सौधशेखरे समानीय प्रहसन् प्राह—'भो नारद ! भवच्छिष्योऽहं तथ्यां त्वदुक्तिं जानामि । तथाप्येवमाचरतो मे पूर्ववृत्तं शृणु ।

पुरा रमादेव्या दूतोऽहं माणिक्यशेखराख्यः कदाचित जाह्नव्यां निमज्जन्तीं पयोवेगात् उह्यमानां कांचित किन्नरीं दृष्ट्वा करुणाविष्टस्तामुदधृतवान् । अथ तारुण्यपूर्णां तामवलोक्य तदङ्गसंस्पर्शान्मोहितस्तत्सङ्गं याचितवान् । तच्छ्रुत्वा विस्मितया तया आपद्रक्षकत्वान्मे पितृत्वं प्रतिपाद्य बहुविधैर्वचनैर्बोधितोऽप्यहं कामान्धो बलात्तदुत्तरीयमाचकर्ष । ततो रक्ष रक्षेति क्रोशन्तीं तामवलोक्य क्रुद्धा रमा मामसुरत्वं शशाप ।

ततः प्रतिबुद्धेन शोकाकुलेन मया चिरं समाराध्य शापमुक्त्यर्थं प्रार्थिता सा मह्यं दैत्यदशायामनेकाण्डाधिपत्यं यथेप्सितान् भोगांश्च दत्त्वा अन्ते त्रिपुरातो मरणं ततः सायुज्यप्राप्तिं च प्रददौ । अथ मया त्रिपुराविषये पृष्टा सा त्रिपुरायाश्चिदात्मत्वं सर्वतोऽधिकत्वं वागाद्यगोचरत्वं चोक्त्वा विष्ण्वादीनां तदंशभूतत्वं प्रतिपाद्य आत्मनः काल्यादीनां च तत्तत्कार्यसिद्ध्यर्थं तज्जन्यत्वमुक्त्वा तदंशभूतया ललितया मे वधं प्राकल्पयत् । मत्प्रार्थनया कामदेहान्मदुत्पत्तिं च कल्पयामास ।

भो मुने ! तदनुसारेणाहं सर्वाधिपत्यं भोगांश्च चिरमुपभुज्य इतोऽनन्तरं सपरिवारस्त्रिपुरां ध्यायन् ततो वधं प्रतीक्षामि' इति । श्रुत्वैतन्नारदः प्रहृष्टो भण्डदारान् समाश्वास्य प्रययौ ।"

षष्टितमेऽध्याये—पृ० ४२०-४२८

अथ नारदेन बाह्यान्तरज्ञानकारणं वक्तुं पृष्टो हारितायनोऽपरे खण्डे तदुपपादनार्थ-

मुक्त्वा आह—'ततो रामाय दत्तात्रेयः कथयामास "हे भार्गव ! हयग्रीवो भण्ड-देव्योर्युद्धमाख्यातुमुवाच—'हे कुम्भज ! अग्निकुण्डसमुद्भूतां ललितामवलोक्य विष्ण्वादिभिर्ध्यातः कामेश्वरस्तस्या देहादाविरभूत्। अथ तयोर्विवाहं प्रकल्प्य भण्डनाशार्थं देवैः प्रार्थिता सा ललिता स्वपरिवारांश्चासृजत्।

एतदन्तरे आगतो नारदो युद्धार्थं भण्डासुरस्य निर्गममुक्त्वा रहस्यमाख्यातुं ललितां सम्प्रार्थयन् तदर्थं तया नियुक्तां मन्त्रिणीं पप्रच्छ—'देवि ! मया परीक्षितो भण्डस्त्रिपुराराधनपरो दृष्टः। तद्भक्तमूर्धन्यः स देव्या हतः परमं पदं लप्स्यतीति च श्रुतम्। तत्कथमेतद् भूयात्? वयं च कथं न तत्पदं प्राप्नुमः?' इति। तदाकर्ण्य मन्त्रिण्या त्रिपुरापादसंश्रितस्य सर्वथा तत्पदप्राप्तिमुक्त्वा नारदस्य नित्यमुक्तत्वं प्रतिपादितम्। नारदश्च हृष्टः प्रययौ।

अथ विष्ण्वादिभिः प्रार्थिता ललिता नवपर्वात्मकं रथमारूढा पार्श्वे साक्षाद्धनुर्वेदेन सेविता कोटिकोटिशक्तिमण्डलावृताभिर्मन्त्रिण्यादिमहाशक्तिभिः परिवेष्टिता बहुविधैरसंख्यातैर्वाद्यैर्जयघोषैश्च पूरितदिङ्मण्डला भण्डनाशार्थं निर्जगाम। तन्निशम्य वधाकाङ्क्षी भण्डः प्रहृष्ट आत्मकृते बान्धवादीनां नाशं विचिन्त्य करुणाऽऽविष्टोऽपि सर्वेषां नाशस्य सर्वथा दुर्वारत्वात् युद्धमार्गमेव श्रेयस्करं मत्वा मनसि त्रिपुरां संप्रार्थ्य युद्धचिन्तामग्नान् ससैनिकान् बान्धवान् स्वपराक्रमं वर्णयन् हर्षयामास।'

## एकषष्टितमेऽध्याये—पृ० ४२६-४३६

'अथ भण्डः क्रुद्धो रथमारुह्य विषङ्गविशुक्राभ्यां भ्रातृभ्यां सहितः शताक्षौहिणीयुतैर्युद्धसन्नद्धैरग्रकर्मप्रमुखैर्भटैर्बान्धवैश्च परिवृतोऽपारसेनासागरसमेतो युद्धार्थं पुरद्वाराद् बहिर्भूय विजयाख्येन मन्त्रिणा प्रार्थितोऽमित्रघ्नाख्यं दूतं विद्युन्मालिनं चारं च देवीसैन्ये प्रेषयामास।

अथामित्रघ्नो दूतो देव्याः सैन्ये यावत्प्रविशति तावत्सैन्यरक्षिकया कयाचित् शक्त्या धृतः प्रभर्त्स्य ताडितो मूर्च्छामवाप। ततस्ताभिः शक्तिभिर्ललितासमीपे नीतः स भण्डोक्तमाह—'हे देवि ! मद्बलमज्ञात्वा ते युद्धार्थमागमनं नोचितम्, तद्धितमिच्छसि चेन्मां समाश्रय' इति। ततो देव्या च पातालमात्राधिपत्यं प्रगृह्य भूम्यादिपरित्यागार्थं भण्डाय वक्तुमाज्ञप्तः स दूतो दण्डिन्या प्रदर्शितां चमूं दृष्ट्वा तया बहिर्निस्सारितः पुनर्लब्धजीवन इव राजान्तिकं प्रययौ।

तत्रान्तरे विद्युन्माली च शक्त्या कृताममित्रघ्नावस्थां पश्यन् भीतो निशि कौशिकरूपेण सेनां निरीक्षमाणो रक्षिकया शक्त्या गगनमुड्डीय धृतस्तया युध्यमानस्तच्छूलाघातात्कथञ्चिन्मुक्तो भण्डसविधे आजगाम। ततो भण्डं प्रणम्य स विद्युन्माली आत्मनोर्वृत्तमुक्त्वा देव्याः सेनां च यथावद्वर्णयामास।'

## द्विषष्टितमेऽध्याये—पृ० ४३७-४४२

'अथामित्रघ्नश्च क्षणादागतो भण्डपादयोः पतितोऽमात्यैः समाश्वस्तः स्ववृत्तान्तं देवीप्रभाषितं च भण्डाय निवेद्य देव्या बलं प्रकटयन् दैत्यैस्तस्याः सर्वथाऽजेयत्वं प्रतिपाद्य विरराम। तदाकर्ण्य भण्डश्चेतसि परमानन्दितो राज्यदारादिभिर्विरक्तः स्व-

वधार्थं सन्नद्धस्त्रिपुरां मनसि प्रणम्य नट इव बहिः क्रोधारुणितलोचनो भूत्वा प्रज्व लन्निव तं रिपुश्लाघां कुर्वाणममित्रघ्नं दूतं प्रभत्स्र्य युद्धार्थं निर्जगाम। तद्दृष्ट्वा मन्त्रिणो बान्धवाश्च कुटिलाक्षमद्धरं नगररक्षणे नियोज्यासंख्यातैर्योद्धृभिः समेता भ-ण्डमनुजग्मुः।

अथागणितवाद्यघोषैर्भूभेदकरैर्दैत्यसैन्यागमनं परिज्ञाय महद्युद्धं निश्चित्य च तद्-वरोद्धुमुद्यता दण्डिनी दूतीमुखात् दैत्यबालाम्बयोर्युद्धं समुपक्रान्तं श्रुत्वा क्रोधताम्राक्षी किरिरथमारुह्यासंख्यातशक्तिवर्गैर्युता युद्धभूमावाजगाम।'

त्रिषष्टितमेऽध्याये—पृ० ४४३–४४८

'दैत्यसैन्यं पुरत आगतं वीक्ष्य युद्धोत्सुकाऽश्वारोहिणा बालाम्बा महत्या सेनयाऽऽ-वृता दैत्यसेनां प्राप्य शरानवर्षत्। तदवलोक्य कुटिलाक्षाख्यः सेनापतिः सैन्यपुरो-भागे स्थितो गजारूढोऽनेककोटिसैनिकैः सहितो बालायाः अनुपमं शौर्यं वीक्ष्यात्या-श्चर्यान्वितस्तां शरजालैरवरुरोध। सा च बाणैः सैनिकानर्दयन्ती तीक्ष्णैः शरैः कुटि-लाक्षस्य चापं प्रध्वस्य तद्वाहनं गजं च हत्वा तं च हृदि संविध्य मूर्च्छयामास।

अथ चमूमध्यस्थितं भण्डरथं दृष्ट्वा शराघातैर्दैत्यसेनासु मार्गं विधाय ततो दैत्य-शिरांसि पातयन्ती बालाम्बा तत्सैन्ये रथं प्रावेशयत्। सेनामुखं भिन्नं वीक्ष्य विस्मितो विशुक्राख्यो भण्डानुजो मनसि तच्छौर्यं संस्तुत्य पलायमानान् दैत्यान् निवर्तयन् तां बालामवारुधत्।

परितो भयङ्करं सैन्यसागरं वीक्ष्य रथनेत्र्या सख्या परावर्तितुं प्रार्थिता बालाम्बा तां धैर्यवचनैः सान्त्वयामास।

चतुःषष्टितमेऽध्याये— पृ० ४४९—४५५

'बालाम्बा विशुक्रसन्निकटे गत्वा कुलिशास्त्रेण महतीं सेनां नष्टप्रायां कृत्वा विशु-क्रशराघातेन स्वरथनेत्रीं गाढविद्धां दृष्ट्वा क्रुद्धा भल्लाघातेन विशुक्रं निःसंज्ञं कृत्वा पु-नरुत्थितस्य तस्य चापादि प्रच्छिद्य तद्वाहनं गजं शराघातेन नाशयामास। तदवलो-क्य स दैत्यो बालां खड्गेन हन्तुमुद्यतोऽपि तया शरैर्मस्तके गाढविद्धो बलात्तां प्रगृह्य गगनमुद्गतो बालाम्बया मुष्ट्या ताडितो भिन्नमूर्धा गाढमूर्च्छितः पपात।

ततो भण्डेन योद्धुमुत्कण्ठिता सा यावत्तत्समीपे रथं नयति तावत्तस्यापरेणानुजेन विषङ्गाख्येनावरुद्धा सा भण्डयुद्धे महाविघ्नं तन्मत्वा हस्तलाघवेन शरैस्तद्ध्वजसार-थ्यश्वादीन् हत्वा परिवहस्तं तं हृदि शराघातेन मूर्च्छयित्वा पातयामास।

अथ तां बालां पुरत आगतां शरान् वर्षन्तीं दृष्ट्वा स्वस्य परपदप्राप्तिसमयसां-निध्यं विचिन्त्य अत्यानन्दितो भण्डासुरो ललिताप्रतिबिम्बरूपायास्तस्याः पूजनार्थं समुत्सुकोऽभिमन्त्रितान् शरान् प्रक्षिप्य जलपुष्पवर्षणैस्तां पूजयामास। तदवलोक्य बाला विस्मितां रथनेत्रीं भण्डोत्पत्तिवृत्तमाख्याय पूजनप्रतिकृत्यर्थं पञ्चशाखात्मकं ह-स्तोपमं शरं भण्डमस्तके प्राक्षिपत्। अथ तयोर्दैत्यदेव्योः प्रचलिते घोरे संग्रामे कृतप्र-तिकृतोपेते बालाया हस्तलाघवाद्धीयमानं भण्डं दृष्ट्वा दैत्यसेनापरिवृता मुकुकदमला अनुजमन्त्र्याद्या असुराः संघीभूय युयुधुः।

एवं समुपक्रान्ते युद्धे दण्डिनी देवी तत्सैन्यं भित्त्वा एकलां बालां युध्यन्तीं दृष्ट्वा विस्मिता आससाद।'

पञ्चषष्टितमेऽध्याये—पृ० ४५६-४६२

'अथ दण्डिन्याऽऽज्ञप्ताऽश्वारूढा सेनानायिका युद्धादनिवर्तमानामपि बालां बलान्निवर्त्य ललितां निवेद्य तस्या अद्भुतं संग्रामवृत्तं कथयामास। युद्धोत्सुकां बालां स्वाङ्कमानीय ललिता सान्त्वयामास। ततो दण्डिनी शक्तिगणावृताऽत्युग्रं युद्धं कृत्वा दैत्यान् त्रासयामास। अथ दण्डिन्या विद्धान् पलायनपरान् सैनिकान् दृष्ट्वा क्रुद्धो विशुक्रस्तान्परावर्तयन् स्वमायया शक्तिसैन्यमपीडयत। ततः सम्पत्करी गजारूढा तमवारुधत। एवं विषङ्गेणाश्वारूढा सेनानायिका भण्डेन च दण्डिनी युयुधे।

अथ सम्पत्कर्या विमायास्त्रेण विशुक्रमायां निवार्य लाघवात्पुनः पुनः धार्यमाणमपि धनुःशतं प्रच्छिन्नमवलोक्य क्रोधाविष्टो विशुक्रो भल्लाघातेन सम्पत्कर्याश्चापं प्राच्छिनत। ततः सम्पत्कर्या गजेन स्ववाहनं गजं हतं दृष्ट्वा स दैत्योऽङ्कुशप्रहारेण किञ्चिन्मूर्च्छितायाः सम्पत्कर्याः मुष्टिप्रहारेण भिन्नशिरा गाढमूर्च्छितः पपात। अथायातो भण्डसुतश्च तया त्रस्तः पराबभूव।

सेनानायिकया युध्यमानो विषङ्गः शक्तिसंघान् विनिघ्नन् तत्पाशबद्धो देव्याः पराक्रममसहमानोऽन्तर्धिमगमत।

दण्डिन्या युध्यमानो भण्डश्च पुनःपुनर्महामायामुत्पादयन् तत्र तमसि गुप्तः शस्त्रवृष्ट्या शक्तिसैन्यं सञ्जहार। अथ दण्डिनी कुपिता गगनमुत्पत्य स्वाङ्गकान्तिप्रकाशे तं रथारूढमवलोक्य गदया ताडयामास। तेन किञ्चिन्मूर्च्छितोऽपि पुनरुत्थाय युध्यमानोऽमोघेन मुसलेन हन्तुमुद्यतामपि दण्डिनीं नभोवाण्या ललितया तद्दैत्यवधमाकर्ण्य विरतां दृष्ट्वा स भण्डोऽन्तर्बभूव।

अथामृतेश्या पुनरुज्जीवितैः शक्तिगणैर्युता दण्डिनी जयघोषाद्यावृता ललितामुपगन्तुं प्रययौ।'

षट्षष्टितमेऽध्याये—पृ० ४६३-४६८

'दण्डिनी ललिताऽन्तिके गत्वा प्रणम्य जयवृत्तं न्यवेदयत। भण्डश्च खिन्नचेताः शून्यकं प्राप्य तत्रान्तःपुरे नारदाल्ललितावृत्तं ज्ञातवतीभ्यो मोहिनीप्रमुखाभ्यः पत्नीभ्यः स्ववधनिश्चयमुक्त्वा ताः सान्त्वयामास। अथ सभायां दुःखाकुलं पञ्चोत्तरशतब्रह्माण्डाधिपतेरपि स्वस्य जातेन पराजयेन शोकविह्वलं भण्डमवलोक्य विशुक्रकुटिलाक्षौ तत्पादौ स्पृष्ट्वा ललितां जेतुं प्रतिज्ञां चक्रतुः। अथ सेनापतिः कुटिलाक्षोऽनेकाक्षौहिणीयुतो योद्धुं प्रचलितोऽप्युपसेनापतिना दुर्मदाख्येन स्वतो देव्या वधं प्रतिज्ञाय निवारितः।

उष्ट्रारूढं दशाक्षौहिणीयुतं दुर्मदं युद्धार्थमागतं ज्ञात्वा सम्पत्करी देवी सेनाधिपा च योद्धुमुद्यता असङ्ख्यातशक्तिगणोपेता युयुधे। दैत्यशक्त्योस्तुमुले युद्धे प्रचलिते शक्तिसैन्यैः स्वचमूं नाशितां दृष्ट्वा रोषमूर्च्छितो दुर्मदो गदाघातैः शक्तिसंघानर्दयन् संपत्कर्या वाहनेन गजेन स्ववाहनमुष्ट्रं हतमवलोक्य वेगात् गदां प्रहृत्य तं गजं सञ्जघान। अथ सम्पत्करी क्रुद्धा दैत्यहृदि बाणान्याहत्य दुर्मदं नाशयामास।'

## सप्तषष्टितमेऽध्याये—पृ० ४७०-४७५

'दुर्मदं हतं निशम्य तदग्रजः कुरण्डः कुटिलाक्षेनाज्ञप्तो विंशत्यक्षौहिणीसमेतोऽश्वारूढया सेनानायिकयाऽपारशक्तिगणोपेतया युयुधे। अतिभयङ्करे तत्समरे स्वसेनाभङ्गं दृष्ट्वा कुरण्डः शक्तिसैन्ये प्रविश्य शरैस्तं नाशयन् देव्याः शरैर्हताश्वो हृदि गाढविद्धो मूर्च्छितोऽपि क्षणात्प्राप्तचैतन्यो देव्या कृतप्रभर्त्सनेन कोपानलमुद्वमन् खड्गेन तस्या वाहनमश्वं हत्वा क्रुद्धया सेनानायिकया पाशे बद्ध्वाऽङ्कुशेन ताडितो भिन्नमूर्धा गतासुः पपात।

अथ दैत्यसेनाधिपतिना कुटिलाक्षेणाज्ञप्ताः करङ्कादयः पञ्च सैनिकाः सर्पिण्याख्यया मायया समेता विंशत्यक्षौहिणीसहिता गर्दभरथाद्यधिरूढाः शक्तिसैन्ये प्रविश्य युद्ध्यमानाः शक्तिभिः स्वसैन्यप्रध्वंसमवलोक्य सर्पोत्पादिकां सर्पिणीं महामायां निर्ममुः। सर्पिण्या मायया सृष्टैर्भयङ्करैः सर्पैः क्षणात् शक्तिसैन्यं प्रध्वस्तं विलोक्य पलायिताः काश्चिच्छक्तयो ललिताऽन्तिकं गत्वा न्यवेदयन्। तदाकर्ण्य ललिता वक्त्रान्नकुलीं महाशक्तिं निर्माय सर्वसंहारार्थमाज्ञापयत्।

अथ सा नकुली संग्रामे नकुलान् सृष्ट्वा तैः सर्पान् सर्पिणीं मायां च नाशयाञ्चकार। ततः क्रुद्धाः करङ्कादयश्च युध्यमानाः नकुल्या शिरांसि प्रच्छिद्य निपातिताः।

## अष्टषष्टितमेऽध्याये—पृ० ४७६-४८२

'कुटिलाक्षः करङ्कादिवधमाकर्ण्य दैत्यनाशं शक्तीनामविनाशं च श्रुत्वा खिन्नचेताः शोकपन्नस्तो ललितामजेयां चिन्तयन् तत्रान्तरे प्राप्तं भण्डानुजं विशुक्रं प्रपूज्य तद्वृत्तं न्यवेदयत्। विशुक्रो बभाषे—'हे कुटिलाक्ष! जहि शोकम्। मया युक्त्या ललिता जितप्रायाऽस्ति, तच्छृणु। अद्यास्माकं सर्वे योद्धार एकदैव युद्धार्थं प्रवर्तन्ताम्, तथा च शक्तयश्च ललितेतराः सर्वाः समरे आगमिष्यन्ति। प्रचलिते च युद्धेऽहं रात्रौ पार्श्वतो गत्वा एकलां तां ललितामाहरिष्यामि। ततश्च सर्वाः शक्तयो हतबला भवद्भिर्नाशयिष्यन्ते एव' इति। श्रुत्वैतदत्यानन्दितः कुटिलाक्षो विचक्षणं तं बहु प्रशस्ययु द्धार्थं समुदसाहयत्।

ततो विशुक्रः शून्यके नगरे गत्वा स्वनिश्चितं भण्डाय निवेद्य तदाज्ञया भण्डाहते यावत्सेनायुतो राजपुत्रैर्मन्त्र्यादिभिश्च समेतो युद्धार्थमाययौ। पुनरागतं यावत्सैन्यं वीक्ष्य ललिताज्ञप्ता मन्त्रिण्यादयो ललितेतराः सर्वाः शक्तयः सैन्यसागरयुताः समरे आजग्मुः। अथ प्रचलिते घोरे संग्रामे दैत्यसैन्यस्य महद्ध्वासं दृष्ट्वा विशुक्रेणाज्ञप्ता बलाहकादयः पञ्च भ्रातरः शक्तिसैन्ये प्रविश्य क्रूरदृष्ट्या नेत्रस्थितेन सूर्यांशेन संताप्य व्याकुलिताः शक्तीर्नाशयामासुः।

तदवलोक्य मन्त्रिण्या संस्मृता श्रीचक्ररक्षिका कृष्णवर्णा तिरस्करणिका शक्तिः कोटिशः स्वीयशक्तिगणैः समेता दैत्यसैन्ये प्रविश्य स्वास्त्रवृष्ट्या दैत्यान् अन्धान् कुर्वती युयुधे। अमृतेशी च मन्त्रिण्या आज्ञप्ताऽमृतवृष्ट्या शक्तीर्जीवयामास।

अथात्युग्रं युध्यमाना बलाहकप्रमुखा असुरास्तिरस्करणिकाखड्गप्रहारेण छिन्नशिरसः प्राणान्मुमुचुः। ततो मन्त्रिण्यादयो हृष्टास्तां समालिङ्ग्यास्तुवन्।'

## एकोनसप्ततितमेऽध्याये—पृ० ४८३-४८८

'अथास्तंगते सवितरि त्रिपुरामायामूढा विशुक्राद्याः ससैन्यं विपद्गं ललितायां प्र-

ण्य विशुक्रो मन्त्रिण्या, कुटिलाक्षो दण्डिन्या, भण्डपुत्रा बालाम्बया, मन्त्रिणस्तिरस्करणिकयेत्येवं युयुधुः । अथ प्रवृत्तेऽस्युग्रे संग्रामे तमसि व्याप्ते क्रोधान्धान् शक्तीर्दैत्यांश्च स्वपरज्ञानरहितान् दारुणं बीभत्सं युद्धयमानान् दृष्ट्वा तद्रणं विषमं मत्वा मन्त्रिण्या स्मृता ज्वालामुखी तत्राविर्भूय सर्वं तमो नाशयति स्म ।

ततः क्रमयुद्धे प्रचलिते बालाम्बया युद्धयमानास्त्रिंशत्संख्याका भण्डसुताः शस्त्रास्त्रैस्तामाच्छादयन्तोऽपि तया लाघवाद्धतसूताश्वरथास्तच्छराघातेन हृदि विद्धा गाढमूर्च्छिता अपतन् ।

भण्डभागिनेया उलूकजिदाद्यास्त्रिंशत्संख्या दैत्याश्चाश्वारूढया सम्पन्नाथया च युध्यन्तस्तत्पाशबद्धाः खड्गभल्लाघातैर्भिन्नशिरोहृदयाः प्राणाञ्जहुः ।

एवं तिरस्करणिकाखड्गेन छिन्नमस्तका उग्रकमप्रमुखा मन्त्रिणश्च निहताः ।

दण्डिनी च युद्धनिपुणं सेनाऽधिपं कुटिलाक्षं शरेण हतसूताश्वं कृत्वा हृदि शरमाहत्य मूर्च्छयाञ्चकार । क्षणादुत्थितः स गदया देव्या वाहनं सिंहमाहत्य तत्तलाघातेन विद्धहृदयोऽपि दण्डिनीशक्तिं जम्भिन्याख्यां गदया मूर्छितां कृत्वा क्षणादुत्थितया तया युध्यमानस्तद्गदाप्रहारेण भिन्नमूर्धा गतासुः पपात ।

मन्त्रिण्या युध्यमानो रणकुशलो विशुक्रस्तदीयशराघातेन विरथाश्वसारथिस्तां मुष्ट्या हन्तुमुद्यतोऽपि देव्या भल्लेनाहत्य ततः क्रोडद्वये निःसंज्ञः पातितः। ततोऽवशिष्टा दैत्याः पलायमाना गाढमूर्च्छितं विशुक्रं प्रगृह्य भण्डान्तिकं प्रययुः ।

अत्रान्तरे ललितामाहर्तुं गतः पञ्चदशाक्षौहिणीनाथैर्युतो विषङ्गः श्रीचक्रं पर्यक्रामत् । कोलाहलं श्रुत्वा प्रतिबुद्धाश्चक्ररक्षिकाः शक्तयो दैत्यवाहिनीं प्रविश्य युयुधिरे ।'

## सप्ततितमेऽध्याये—पृ० ४८९-४९६

'तस्यां रात्रौ श्रीचक्रं दैत्यसैन्यैर्वेष्टितमवलोक्य क्रुद्धाः कामेश्यादयो ज्वालामालिनीतः प्रकाशं विधाय तान्दैत्याञ्जघ्नुः । अथ दमनाद्या असुराः स्वपराक्रमैः शक्तिगणानर्दयन्तः कामेश्वर्यादिशस्त्राघातैर्विरथसारथ्यश्वाश्छिन्नशिरसोऽपतन् ।

कोपमूर्च्छितो विषङ्गश्च गजारूढः कामेश्वर्या युध्यमानस्तया क्षणाद्धतवाहनश्छिन्नशस्त्रस्तच्छस्त्राघातेन निश्चलोऽन्तर्धानं जिगमिषुरपि देव्या रुद्धमार्गो मायया दैत्यं निर्माय युयुधे । कामेश्वरी च तं करालं सहस्रवक्त्रं योजनोन्नतं मायापुरुषं विमायाऽस्त्रेण हत्वा मन्त्रपाशात् विषङ्गाख्यं बद्ध्वा लज्जाऽऽननं तं ललिताऽन्तिके समानयत् ।

अत्रान्तरे मन्त्रिण्याद्याश्च तत्रागताश्च सर्वाः शक्तयो दैत्यकपटमाकर्ण्यातिविस्मिता विषङ्गं हन्तुमुद्यता अपि ललिताऽऽज्ञया मन्त्रिण्या बद्धस्य मृततुल्यत्वमुक्त्वा ततो निवृत्तास्तद्वृत्तं भण्डायाववोधयितुं तं मुमुचुः । स च विषङ्गो गतासुमिवात्मानं मन्यमानोऽतिदुःखाक्रान्तो लज्जयाऽवनतमस्तकस्त्वरितं ततो जगाम ।

अथ कितवैर्दैत्यैः पुनर्युद्धशङ्कयाऽस्वस्थानां शक्तीनां सुखस्वापार्थं दण्डिन्यादिभिः प्रार्थितया ललितयाऽऽज्ञप्ता ज्वालामुखी शक्तिवाह्निन्याः परितो ज्वालासालं योजनमितं निर्ममौ । तन्मध्ये युद्धश्रान्ताः शक्तयो निश्चिन्ताः सुष्वपुः ।'

### एकसप्ततितमेऽध्याये--पृ० ४९६-५०२

'भण्डानुजो विषङ्गः स्वपराभवेन हतोत्साहः कुटिलाक्षादीनां नाशं श्रुत्वा शोकार्णवे मग्नो जीवितभाराक्रान्तो भ्रात्रे विशुक्राय स्वेतिवृत्तं निवेदयामास । तदाकर्ण्य विशुक्रोऽनुजमाश्वास्य शत्रुसंहारार्थं चिन्तितमुपायं भार्गवदत्तयन्त्रप्रक्षेपरूपमाख्यातवान् ।

ततो हृष्टे विषङ्गे विशुक्रः स्वनिश्चितं भण्डाय निवेद्य तेनाभिमतः शुचिः शिलापट्टे मारीं मूर्तिं विलिख्य मांसाद्युपचारैस्तां प्रपूज्य नग्नः परितो नग्नयुवतीभिः समेतो मन्त्रादिभिस्तद्यन्त्रं संसाध्य विषङ्गाय ददौ ।

अथ तद्विघ्नयन्त्रं प्रगृह्य विषङ्गः शक्तिसैन्यमुपगतो महत्या ज्वालया तत्परिवृतं दृष्ट्वा खमुत्पत्य बलात्तद्यन्त्रं शक्तिसेनायां प्रचिक्षेप । विशुक्रश्च भण्डेन राजपुत्रादिभिश्च सर्वैर्योद्धृभिः समेतस्तत्र गत्वा ज्वालाऽन्तःस्थितैः शक्तिगणैर्योद्धुं गगनमुत्पत्य गन्तुमुद्यतोऽपि ज्वालावृद्ध्या अशक्यं तन्मत्वा द्वारमार्गेण शस्त्रास्त्राणि प्राक्षिपत् ।

अथैतन्निशम्य दण्डिन्या युद्धार्थमाज्ञप्ताः शक्तयो यन्त्रप्रभावादालस्यादिभिरुपहता योद्धुमनिच्छन्त्यो विपरीतबुद्धयो दण्डिनीमेव विरुरुधुः । दण्डिन्या विचित्रं तद्वृत्तं निवेदिता मन्त्रिणी विस्मिता ललितामुपगम्य तन्न्यवेदयत ।'

### द्विसप्ततितमेऽध्याये--पृ० ५०३-५०८

'अथ ललिता स्वस्मितात् कामेशमुखसङ्गतात् गदाद्यायुधयुतचतुर्हस्तं गजाननं त्रिनेत्रं शक्त्या समाश्लिष्टं गणेशमुत्पाद्य विघ्नध्वंसार्थं तं समाज्ञापयत् । गणेशश्च त्वरया विघ्नयन्त्रमासाद्य दन्ताघातेन तच्चूर्णयित्वा योद्धुमुत्सुको ज्वालासालाद् बहिरागत्य दैत्यसंघान् मर्दयन् भण्डपुत्रान् विषङ्गं च गदाद्याहत्या निःसंज्ञान् कृत्वा घोरं युध्यमाणं क्रोधान्वितं विशुक्रं च गदया हतसारथ्यश्वरथं विधाय तद्गदाप्रहृत्या भिन्नकुम्भोऽपि तं हृदि शूलमाहत्यामूर्च्छयत ।

अथायान्तं गणेशं विलोक्याजेयं तं मत्वा भण्डो ललितयाऽऽत्मनाशमभिलपन् महाभीमं गजासुरं सृष्ट्वा-गणेशेन योद्धुं तं प्रेषयामास ।

एतस्मिन्नन्तरे विघ्नयन्त्रध्वंसात् प्रतिबुद्धैः शक्तिगणैः समेता मन्त्रिण्यादिभिः सहिता ललिताऽम्बा स्वयं युद्धार्थं निर्जगाम ।

अथ भण्डसुतैः सह एकला योद्धुं समुत्सुका बालाऽम्बा तदर्थं देव्यनुज्ञामयाचत । ततो ललिताऽऽज्ञया मन्त्रिणी एकेनासुरेण योद्धुं तस्या औचित्यं ब्रुवाणाऽपि सर्वैर्भण्डसुतैर्योद्धुं तस्या अत्याग्रहं दृष्ट्वा प्रीत्या तदनुज्ञां प्रददौ । ततस्तया स्वीये युद्धे हस्तक्षेपार्थं प्रतिषिद्धा दण्डिनी रुष्टां तां बालां विलोक्य प्रीत्या प्रणम्य च तदभिमतं तत्र स्थातुं स्वीचकार ।

अथ महाराज्ञीप्रमुखाः सर्वाः शक्तयो रणवाद्यजयघोषादिभिर्दिङ्मण्डलं प्रपूर्य दैत्यचमूं प्राप्यातिघोरं युयुधिरे । एवं संप्रवृत्तेऽतिभयंकरे समरे शक्तिभिर्दैत्यसैन्यं त्रस्तं पलायनपरमवलोक्य भण्डपुत्रास्त्रिंशत्संख्याकाः क्रोधमूर्च्छिता योद्धुं प्रावर्तन्त ।'

### त्रिसप्ततितमेऽध्याये--पृ० ५०९--५१५

''अगस्तिना गणेशगजासुरयोर्युद्धं विस्तृतमाख्यातुं पृष्टो हयग्रीवो बभाषे--'गजा-

क्षरेण युध्यमानो गणेशस्तेन सृष्टान् तत्तुल्यबलान् दैत्यान् दृष्ट्वा कोटिशो गणेशानुत्पाद्य नाशयाञ्चकार। ततः सृष्टान् गणेशान् स्वाङ्गे संहृत्य पुनरेकलो गणेशो शतसहस्रवक्त्रादियुतभयङ्कररूपं तं रणकौशल्येन दारुणं युद्ध्वा निरायुधं विधाय आयुधैरहन्यमानं तं दन्तेन हृदयं विदार्य संजघान। अथात्मतो वधमभिलषन्तं भण्डं दृष्ट्वा ललिता गणनाथमाहूय युद्धात्तं व्यरमयत्।

युद्धोत्सुका बालाऽम्बैकला मन्त्रिणीं दण्डिनीं च पृष्ठतः कृत्वा हस्तलाघवात् दैत्यसङ्घान् युगपदर्दयन्ती अगणितान्दैत्यसैनिकान् संजहार। स्वसैन्यं हन्यमानमवशिष्टं च पलायनपरमवलोक्य ज्वलन्नेत्रा भण्डपुत्रा युगपत्तया युयुधुः। बाला च कौशल्येन मन्त्रिण्याद्याः शक्तीर्दैत्यांश्च विस्माययन्ती एकदैव सर्वान् तान् निरायुधान् विरथाश्वसूतान्विधाय तत्साहाय्यार्थमागतौ महत्सैन्ययुतौ विषङ्गविशुक्रौ च वक्षसि शरान्प्रहृत्य मूर्च्छयामास।

ततः शस्त्रानयनार्थं परावर्तितुमभिलषतो भण्डसुतान्वीक्ष्य प्रभत्स्य च रोषसंतप्तान् मुष्टयैव हन्तुमुद्यतान् तान् भल्लैश्छिरांसि प्रच्छिद्य न्यवधीत्।

### चतुःसप्ततितमेऽध्याये—पृ० ५१६—५२३

'मन्त्रिणीदण्डिनीभ्यां तत्पराक्रमं बहुशः स्तुत्वा आनीतां बालाम्बां प्रीत्याऽऽश्लिष्य ललिता स्वपार्श्वे न्यवेशयत्।

अथ भण्डः पुत्रनाशाच्छोकाकुलोऽपि क्षणात् प्रतिबुद्धो ललितया स्वाकाङ्क्षितस्यैव पूर्णं तन्मत्वा आत्मनो नाशार्थं समुत्सुको भक्तकामप्रपूरिकां ललितां प्रार्थयन् क्षणात्तद्ध्यानमग्नो निःसंज्ञोऽभवत्। तावदागताभ्यां भ्रातृभ्यां विषङ्गविशुक्राभ्यां तदवस्थं तं दुःखितं मत्वा समाधानवचोभिः प्रशमितो भण्डो वस्तुस्वरूपगुप्तये मोहित इव पुत्रशोकाग्निदग्धो बहु विललाप। अथ विशुक्रविषङ्गौ रोषाक्रान्तौ देवीं ललितां हन्तुं प्रतिज्ञाय द्विशताक्षौहिणीसैन्यपरिवृतौ चक्रराजस्य पार्श्वभागे प्रययतुः। तत्र दक्षपार्श्वे विषङ्गो वामपार्श्वे च विशुक्रः पपात।

कोलाहलमाकर्ण्य शङ्किता दण्डिनी मन्त्रिण्यनुज्ञया किरिरथमारुह्य भैरवेन सारथिना युक्ता पृष्ठतः स्वप्नेश्वरीकालसङ्कर्षाभ्यां शक्तिभ्यां समेताऽसंख्यातशक्तिगणैः परिवेष्टिता दक्षपार्श्वे विषङ्गेण योद्धुं निर्ययौ। मन्त्रिणी च शुकश्यामलाद्याभिः शक्तिभिः सहिता सैन्यार्णवयुता विशुक्रान्तिकं गत्वा युयुधे। ततोऽतिभीषणे युद्धे संप्रवृत्ते मन्त्रिणीसैन्यैः स्वसैन्यमाक्रान्तं विवशं दृष्ट्वा विशुक्रस्तदीयाश्चत्वारः पुत्राश्च जीमूतकाद्यदयः शरान् वर्षन्तः शक्तिचमूमपीडयन्।

अथ शुकश्यामलाख्या शक्तिर्जीमूतकायं प्राप्य लाघवात्तदश्वरथसूतान् निहत्य शराघातेन तं निजघान। सारिका च शक्तिर्दैवार्याख्यं विशुक्रतनयं गदया व्यनाशयत्। सङ्गीताख्यया शक्त्या युध्यमानः करम्भो विशुक्रसुतस्तत्खड्गेन विच्छिन्नमूर्धा व्यसुः पपात। एवं साहित्यश्यामलया त्रिशूलेन हृदि ताडितः शिखिभाषणाख्यो विशुक्रात्मजः प्राणान्मुमोच।

अथ विशुक्रश्छन्नरूपो रथपार्श्वे समागतो लघुश्यामलायाः खड्गेन छिन्नमुकुटो वि-

रायुधस्तच्छराघातेनैवन्मूर्च्छितोऽपि क्षणादुत्थाय मुष्ट्या तामभिजघान । ततः स दैत्य-सैन्ये पतितान्पुत्रदेहान् विलोक्य शोकाकुलो मन्युना प्रज्वलन् शरवृष्ट्या शक्तिवाहिनीं त्रासयामास । अथ मन्त्रिण्या शरैर्मूर्ध्नि ताडितो विशुक्रो मूर्च्छितोऽपि क्षणादुत्थाय हतसूताश्वो निरायुधो मुष्ट्या तां हन्तुमुद्यतस्तया मन्त्रिण्याऽसिना प्रहृतच्छिन्नमस्तको गतासुरभवत् ।'

### पञ्चसप्ततितमेऽध्याये—पृ० ५२४--५३०

'विपङ्गाह्वरेण दण्डिन्याः प्रचलिते संग्रामे विषङ्गात्मजान् करालचक्रादीन् युद्धार्थमा-गतानवलोक्य जम्भिन्याद्यष्टौ सेनाधिपास्तैर्युयुधुः ।

अथ जम्भिनी करालचक्रगदया स्ववाहनं सूकरमाहतं दृष्ट्वा क्रुद्धा खड्गमाहत्य तमसुरं व्यसुमकरोत् । स्तम्भिनी विशिखेन युध्यमाना शरैस्तद्वाहनमुष्ट्रं हत्वा भल्लेन मस्तकं छित्वा तमपातयत् ।

अन्धिन्याख्या शक्तिर्विभण्डाख्येन विपङ्गसुतेन चिरं युद्ध्वा हृदि बाणाघातेन तं मूर्च्छितं विधाय तदीयवाहनं खरं चापातयत् । मुक्तकश्मलो विभण्डो देव्या वाहनं महिषं हन्तुमुद्यतस्तेन महिषेण शृङ्गे प्रगृह्य गगने उत्क्षिप्तो योजने दूरे गाढमूर्च्छितः पतितः । खरश्च महिषेण विदारितो ननाश । अथ गतमूर्च्छः पुनरागतो विभण्डो अन्धिन्या देव्या शरेण मस्तकं प्रच्छिद्य हतः पपात ।

मोहिनी स्ववाहनेन गरुडेन विकटेक्षणवाहनं गृध्रं नाशितं विलोक्य चक्रेण शिरश्छित्वा विकटेक्षणं जघान । एवं भैरवश्च कोटिभैरवयूथसमेतः इन्द्रशत्रोरसुरस्य चमूं निःशेषीकृत्य असिताङ्गप्रमुखैर्भैरवनाथैरेकलं युध्यमानं तं शूलेन हृदयं विद्ध्वा नाशयामास । कालकर्षिणिकया युध्यमानः सुराराातिस्तदङ्कुशाघातेन भिन्नशिराः ननाश । स्वप्नेश्या च महाकुक्ष्याख्यो दैत्यः खड्गेन कुक्षिं विदार्य पातितः । बटुको भैरवः स्वतुल्यबलैर्दश कोटिबटुकैः परिवृतो दैत्यसैन्यं संहृत्य दण्डाघातेन मदोद्धताख्यमसुरं पातयाञ्चकार ।

अथ पुत्रनाशेन क्रोधमूर्च्छितो विपङ्गः प्रलयाग्निरिव शक्तिवाहिनीं नाशयन्नपि शक्तिभिः स्वसैन्यं नाशाभिमुखं वीक्ष्य महामायां ससर्ज । तदद्भुतया मायया त्रस्ताः शक्तीराक्रोशन्तीर्दृष्ट्वा दण्डिनी क्रुद्धा विमायास्त्रेण तां मायां प्रध्वस्य क्षणात्तच्छिरः खड्गेन छित्त्वा विपङ्गमवधीत् ।'

### षट्सप्ततितमेऽध्याये—पृ० ५३१—५३६

'भ्रातृवधेन दुःखमाप्तोऽपि भण्डः क्षणात् प्रबुद्धः स्वनाशसमयप्राप्तिं चिन्तयन् आत्मानं कृतकृत्यं मन्यमानो भक्तकामप्रदात्रीं श्रीललितां द्रष्टुमुत्सुक आनन्दमग्नो वस्तुस्वरूपगुप्त्यर्थं बहिः क्रोधसमाक्रान्तः स्वीयामवशिष्टां सेनां संयोज्य सहस्रसिंहयुतं रथमारूढः पञ्चाशत्संख्याकैः सेनानायकैः समेतो जयवाद्यघोषैर्दिङ्मण्डलं व्याप्नुवन् जैत्रयात्रार्थं निर्जगाम ।

तन्निशम्य मन्त्रिण्या निवेदिता ललिताऽम्बा मन्त्रिणीदण्डिनीभ्यां समेता श्रीबालया संयुता अणिमाद्याभिः शक्तिभिरावृताऽगणितशक्तिवृन्दैः परिवेष्टिता युद्धार्थं दैत्यसेनाऽर्णवमुपागमत् ।

अथोभयोः सैन्ययोरतिदारुणे संग्रामे सम्प्रवृत्ते दैत्यसैन्यह्रासमवलोक्य भण्डसेनापतयो वक्राक्षादयोऽत्युग्रं युध्यमाना मन्त्रिण्यादिभिः शक्तिभिराहताः प्राणान्मुमुचुः ।

प्रहृष्टं भण्डं युद्धोत्सुकं वीक्ष्य तच्चित्तगतमानन्दमालक्ष्य साशङ्को भण्डसूतस्तत्कारणं पप्रच्छ । भण्डश्च तदाकर्ण्य विस्मितस्तस्मै ललितायाः परात्परत्वमाख्याय स्वस्य पूर्ववृत्तं देवीतो देहत्यागनिश्चयं चाकथयत ।'

## सप्तसप्ततितमेऽध्याये—पृ० ५३७-५४२

'अथ भण्डः पुरत आगता मन्त्रिण्याद्याः शक्तीर्युद्धनैपुण्यं प्रदर्श्य ललितया योद्धुं स्वाभिलापं कथयामास । ताश्च आत्मभिस्तमजेयं दृष्ट्वा ललितयैव तद्वधस्योचितत्वाच्च ततो निवृत्ताः ।

ततो भण्डो ललितां दृष्ट्वाऽतिहृष्टस्तां मनसा प्रणम्य जलपुष्पात्मकान् शरान् प्रक्षिप्य पूजयामास । अथ तयोः समुपक्रान्ते लोमहर्षणे महद्युद्धे कृतप्रतिकृतोपेते भण्डसृष्टान् मधुकैटभादीन् विष्णुशत्रून् अन्धकादीन् शिवरिपूंश्च युध्यतो दृष्ट्वा देवी विष्णोर्दशावतारान् शंकरं चोत्पाद्य तान् घातयाञ्चक्रे । हतानामपि सैनिकानां पुनः पुनः सृष्टिमवलोक्य भयाकुलैर्विघ्यादिभिर्मन्त्रिण्या च प्रार्थिता ललिता तानाश्वास्य पाशुपतास्त्रं मुक्त्वा सर्वान् भण्डेतरानसुरान् व्यनाशयत ।

पुनः क्षणात् धनुषि कामेशास्त्रं सन्धाय भूकम्पोल्कापातादिषु प्रचलत्सु आत्मध्यानपरं भण्डं विलोक्य तन्मुमोच । अतिभीषणं तदस्त्रं तेजसा दिङ्मण्डलमापूर्य शून्यकपुरसमेतं सस्त्रीपुत्रकं भण्डासुरं भस्मीचकार ।

तदद्भुतमवलोक्य विस्मिता विघ्यादयो हर्षमग्ना जयघोषं चक्रुः । एवं भण्डनाशेन सर्वं जगत् शान्तं विलोक्य सुरसिद्धादिवृन्दाः ललितां द्रष्टुं तत्राजग्मुः ।'

## अष्टसप्ततितमेऽध्याये—पृ० ५४३-५४७

'अथ देवास्तां प्रणम्य "जय जय ललिताऽम्ब" इत्यादिभिर्विविधैः स्तवैस्तुष्टुवुः । कोटिब्रह्माण्डेभ्य आगता विघ्यादीनां कोटयश्च प्रणतास्तां प्रशशंसुः । ततो विश्वकर्मणा स्वकृतं श्रीपुरनिर्माणमुक्ता श्रीललिता सर्वैर्युता मेरुशृङ्गे गत्वा प्रतिश्रीचक्रं तत्पुरं दृष्ट्वा हृष्टा विघ्यादिभिः प्रार्थिता तत्र स्थातुं स्वीचकार ।

ततो बृहस्पत्यादिभिः कल्पितयाऽभिषेकसामग्र्या ब्रह्मा वसिष्ठादिभिः सहितो ब्रह्माणीप्रमुखाभिः पूजितां ललितां सुरगन्धर्वादिषु स्तवगायननृत्यादिभिर्हर्षयत्सु रत्नसिंहासनेऽभ्यषिञ्चत् । ततो रत्नमञ्चकेऽधिष्ठिता सा मन्त्रिणीप्रमुखाभ्यः शक्तिभ्यो यथावत् स्थानानि प्रदाय विघ्यादिभिर्विविधैरुपचारैः पूजिता पुनः पुनः स्तुता च सा ललिता देवी जनान् समुद्धर्तुं तत्र व्यराजत ।'

अथागस्त्येन एवंविधस्य महतः श्रीपुरस्य एतावत्पर्यन्तमप्रत्यक्षकारणं पृष्टो हयास्यः प्राह—'हे कुम्भज ! तच्छ्रीपुरं त्रिपुरोपासकस्यैव दृष्टिगोचरीभवति, नान्यस्य । अतस्त्वं च भार्यातो लोपामुद्रातो दीक्षां प्राप्य विधिवत्त्रिपुरामुपास्य तद्दर्शनं विधेहि ।

हे घटोद्भव ! सिद्धेः पूर्वसोपानभूतं सर्वपातकनाशनं विघ्याद्याख्यानेषु मुख्यमिदं श्रीललितामाहात्म्यं शृण्वतां पठताञ्च जनानां त्रिपुराभक्तिमुत्पाद्य परं पदं प्रापयति' इति।"

### एकोनाशीतितमेऽध्याये--पृ० ५४८-५५३

अथ रामो भक्तिसागरे मग्न आनन्दाश्रुपरिप्लुतो बद्धाञ्जलिः श्रीगुरुं पुनः पुनः प्रणम्य स्तुत्वा गुरुभक्तिप्रवर्तकं संवर्तं च नत्वा आत्मानं धन्यं कृतकृत्यं मन्यमानः सर्ववेदशास्त्रविशारदस्याप्यगस्त्यस्य श्रीपुरदर्शनानर्हतायाः कारणं वक्तुं दत्तात्रेयं प्रार्थयामास।

दत्तात्रेयोऽब्रवीत्—हे राम ! सत्सङ्गात्प्राक्संचितवासनासमुद्बोधेन त्रिपुराभक्त्युद्गमे ततो दीक्षां प्रगृह्य गुरुपद्धत्या उपासनेन नरो मोक्षं प्राप्नोति। द्विजानामुपनयनवदत्यावश्यिकाया दीक्षाया ग्रहणं विनैव उपासनेऽपक्वरसायनसेवनेनेव देवद्रोही साधको नाशं प्राप्नोति।

केवलं वैदिकक्रमवादिनां पुंसां फलस्वरूपानभिज्ञानां वेदस्थतन्त्रभागस्य गुप्तत्वादुपासनार्हत्वं नैव भवति। ब्राह्मण्यमिव सर्वथा रक्षणार्हं श्रीविद्योपासनं त्यजन्नरोऽल्पपराधी नरके पतितो दारुणं दुःखं प्राप्नोति। उत्तमा तान्त्रिकी गतिः शुष्कवैदिकोपासकैः कदाऽपि न लभ्यते। दीक्षावन्तोऽबुधा अपि सद्गतिं लभन्ते। शिवाद्याराधनेऽपि त्रिपुरैव तत्फलं ददाति। तत्तच्छक्तिपूजकः शक्त्यनुसारेण तत्तत्फलभाग्भवति। सर्वं वस्तुजातं चिच्छक्तेः सत्त्वेनैव सम्भवतीत्यतः शिवादृते शक्त्यभावो नैवाशङ्क्यः।

मुख्यवेदार्थस्य त्रिपुरात्मकत्वात्तत्साधनमेव वेद उच्यते। सर्वानुद्धर्तुमिच्छन् परमेश्वरस्त्रिपुरामूर्तिभूतादपाराद्वेदात्पुराणागमादि उदभावयत्। तत्र ऋषय आगमाम्भोधिं प्रमथ्य सारभूतं तन्त्रशास्त्रमुद्धृतवन्तः। द्विजाः श्रौतसंस्कृताः, शूद्राश्च केवलमेव तान्त्रिकोपासनेऽधिकारं प्राप्नुवन्ति। वेदागमादिषु मन्त्रयन्त्रपूजाविध्यात्मको भागो मुख्यभूतस्तन्त्रमिति कथ्यते।

हे राम ! अगस्त्यः प्राक् केवलवैदिकोपासनपरः श्रीपुरमपश्यन्नपि त्रिपुरामाहात्म्यं श्रुत्वा पत्नीतस्तन्त्रदीक्षां प्रगृह्य विधिवत् त्रिपुरामुपास्य भार्यासहितः श्रीपुरे स्थानं लब्धवान्।"

### अशीतितमेऽध्याये--पृ० ५५४--५६३

रामेण त्वरितफलदायकं त्रिपुरोपासनविधानमाख्यातुं निवेदितो दत्तात्रेयो त्रिपुरामूर्तेः स्थापनं तत्पूजाकालान् पूजोत्सवादिकं तत्तत्फलानि चाख्याय अपूजकानां दोषमुक्त्वा ततो लक्षपूजाविधानं प्रदर्शयन् तत्पूजनप्रकारान् प्रतिमास्वरूपं चाख्याय तदङ्गं ब्राह्मणाद्यर्चनं जागरणमग्नौ हवनं विप्रभोजनादिकं चोक्त्वा तत्तत्पुष्पैरर्चने तत्तत्फलानि प्रतिपाद्य दीपाभिषेकादिप्रकारान् तत्तत्फलानि च प्रकथ्य अशक्तानां निर्बुद्धानां च त्रिपुराप्रसादसिद्ध्यर्थं तत्साधनान्याचख्यौ।

ततः श्रीचक्रदानविधिं तत्फलं चोक्त्वा दीक्षापद्धतियुतत्रिपुरोपासनसम्प्रदायप्रचालकस्यानन्तपुण्यफलम्, तदवरोधकस्य चाधमां गतिं प्रत्यपादयत्।

अथोपसंहरन् त्रिपुरामाहात्म्यश्रवणस्य भक्त्युत्पादकत्वान्मोक्षद्वारत्वं भक्तेः सर्वथाऽवश्यकतां च प्रतिपाद्य त्रिपुरामाहात्म्यपाठादिफलान्याख्यायान्ते नामात्मकं मङ्गलं कृत्वैतत्खण्डं समापयत् इति।

इति त्रिपुरारहस्ये ( माहात्म्यखण्डे ) विषयसूची समाप्ता।

॥ श्रीः ॥

# त्रिपुरारहस्यम् ।

## ( माहात्म्यखण्डम् )

श्रीगणेशाय नमः । श्रीगुरुभ्यो नमः । श्रीसरस्वत्यै नमः ।
श्रीत्रिपुराम्बिकायै नमः ।

ॐ नमः कारणानन्दहृद्बीजाकाशगात्रिणे ।
यल्लीलालेशलसिता लोकालोकाण्डरेणवः ॥ १ ॥
यदक्षरं परं ब्रह्म जगन्मालामणिप्रभम् ।
सर्वं सर्वात्मकं सर्वसारं सर्वपदाश्रयम् ॥ २ ॥
यदेवाऽशेषसंसारदलबीजशिवात्मकम् ।
शिवरूपं शक्तिरूपं ब्रह्मरूपस्वरूपकम् ॥ ३ ॥
त्रिपुरां परमेशानीं महाप्रलयसाक्षिणीम् ।
दग्धकामोज्जीवनाय सुधासारां नमाम्यहम् ॥ ४ ॥
अस्ति दक्षिणदिग्भागे मलयाद्रिर्महोच्छ्रयः ।
शृङ्गसङ्घातसंक्रान्तसप्तसप्तिमहापथः ॥ ५ ॥
अनेकशृङ्गलीलात्तमहापुरुषवैभवः ।
स्वाङ्गव्याप्तिपराक्षिप्तमहामेरुमहीत्वकः ॥ ६ ॥
नानावृक्षाङ्कुरप्रान्तविश्रान्तघनमण्डलः ।
मृदुप्रवालविलसच्छविक्षिप्तारुणप्रभः ॥ ७ ॥
भ्रमरीमृदुगीतात्तभृङ्गीरवसमश्रुतिः ।
श्रीगन्धगन्धसंरम्भाजितनाकयङ्गसौरभः ॥ ८ ॥

एलालतापरिमलविलसद्वालमारुतः ।
अनेकपद्मिनीफुल्लपद्मसंस्थितहंसकः ॥ ९ ॥
प्रावृड्जलदसंस्पर्धिगन्धसिन्धुरमण्डलः ।
भिन्नसिन्धुरदानोद्यद्वासनाभरितान्तरः ॥ १० ॥
सिंहव्याघ्रवराहौघशोभालसदधित्यकः ।
विस्तीर्णवनखण्डान्तराश्रमोद्यदुपत्यकः ॥ ११ ॥
तापसान्तेवासिवेदघोषघुङ्घुमितान्तरः ।
हुतगव्यघृतामोदपरिबृंहितमारुतः ॥ १२ ॥
वायुकम्पितशाखाग्रबद्धचीरपताकक्रः ।
क्वचित्तु तरुमूलेषु सुखासनसमाश्रयाः ॥ १३ ॥
तपस्विनो ध्यानपराश्चित्रार्पितनरा इव ।
क्वचिद्‍ब्रह्मपरं जप्यं जपन्तो ब्रह्मवादिनः ॥ १४ ॥
क्वचिदग्नीन्हूयमाना नित्यनैमित्तिकक्रमैः ।
क्वचिदध्यापयामासुर्वेदान् विप्रार्भकान्बुधाः ॥ १५ ॥
क्वचित्सभायां शास्त्रेषु मीमांसन्ते परस्परम् ।
क्वचित्प्रवचनं चक्रुः पुराणानां कथाविदः ॥ १६ ॥
एवंविधेऽद्रिप्रवरे सर्वर्त्तुगुणभूषिते ।
प्रत्यग्भागे विविक्तायां भुवि कासाररोधसि ॥ १७ ॥
तृणपर्णचयोदञ्चत्कुटीमध्यमहीतले ।
विष्टरे सुखमासीनः कार्ष्णसाराङ्गसम्भवे ॥ १८ ॥
कर्पूरगौरसर्वाङ्गः स्वच्छवस्त्रोपवीतकः ।
भस्मोद्धूलितसर्वाङ्गः कालशोभित्रिपुण्ड्रकः ॥ १९ ॥
कृतनित्यक्रियः शान्तो जामदग्न्यः शुभेक्षणः ।
यः साक्षादेवदेवस्य विष्णोरंशसमुद्भवः ॥ २० ॥
रामः सर्वजनारामः साक्षात्पशुपतेः प्रियः ।
विष्णोर्दत्तात्रेयमूर्त्तेः सेवालब्धात्मवैभवः ॥ २१ ॥

तं कदाचिन्मुनिवरं प्रसन्नेन्द्रियमानसम् ।
प्रियशिष्यः सुमेधाह्वः सदा सेवनतत्परः ॥ २२ ॥
पप्रच्छ प्राञ्जलिर्भूत्वा भक्तिश्रद्धासमन्वितः ।
राम दीनदयासिन्धो भक्तानुग्रहविग्रह ॥ २३ ॥
पुरैकदा मया पृष्टो भवान् भूरिविभावनः ।
किं दीनमानुषादीनां संसारक्लेशभागिनाम् ॥ २४ ॥
परं श्रेयोवहं पुण्यं सर्वोत्तमतमं भवेत् ।
यस्मादभ्यधिकं नैव किञ्चिच्छ्रेयः सुसाधनम् ॥ २५ ॥
एतन्मे ब्रूहि विप्रेन्द्र श्रोतव्यं यदि मे भवेत् ।
अपि गोप्यं वदन्तीह गुरवो दीनवत्सलाः ॥ २६ ॥
एवं मयापि संपृष्टो भवानीषत्स्मिताननः ।
वदामि कालक्रमतः प्रोक्तवानिति भार्गव ॥ २७ ॥
तस्याद्य षोडशसमा व्यतीयुस्त्रुटिलेशवत् ।
स एवार्थो मम स्वान्ते परिवर्त्तत्यहर्निशम् ॥ २८ ॥
वद मे तत्सुकृपया मय्यनन्यशरण्यके ।
इति तद्वचनं श्रुत्वा भार्गवः परिचिन्तयन् ॥ २९ ॥
सस्मार तत्पुरा प्रोक्तं दत्तात्रेयेण विष्णुना ।
त्रिपुराया रहस्यं यत्साक्षाच्छिवमुखाच्छ्रुतम् ॥ ३० ॥
विशुद्धहृदि संन्यस्तं तत्कालेन शिवाज्ञया ।
मयि संक्राम्य सर्वस्वं भक्तिज्ञानोपबृंहितम् ॥ ३१ ॥
माहात्म्यवैराग्ययुतमितिहासैर्विचित्रितम् ।
न देयमेतत्कस्मैचित्तन्त्रसर्वस्वमुत्तमम् ॥ ३२ ॥
नास्तिकाय शठायापि नाम्ना भागैकलेशतः ।
भक्तानामपि चान्येषां वक्तव्यं न पुरस्त्वया ॥ ३३ ॥
कारणात्परमेशस्य वाक्यार्थस्यापि गौरवात् ।
एकस्तव महाभक्तः सुमेधा हारितायनः ॥ ३४ ॥

शिष्यस्तस्मै सुभक्ताय वद कालेन भार्गव ।
स चैतत्समुपाकर्ण्य ग्रन्थतोऽनुविधास्यति ॥ ३५ ॥
संहितां पावनीं धन्यां तन्त्रसारसमन्वयाम् ।
ग्रन्थरूपां विधायाथ शिष्यानध्यापयिष्यति ॥ ३६ ॥
इति स्मृत्वा गुरुवचः शिष्यं दृष्ट्वा कृताञ्जलिम् ।
नियत्या भगवच्छक्तेरनुल्लङ्घ्य स्थितिं चिरम् ॥ ३७ ॥
चिन्तयित्वा सुनिश्चित्य तं प्राह पुरतः स्थितम् ।
वत्स कालं प्रतीक्षस्व सर्वं कालेन जायते ॥ ३८ ॥
श्वः पुष्ये शुभवेलायामुत्तरोपक्रमं भवेत् ।
एवं स्थिते समभवत्सन्ध्यामृदुकरो रविः ॥ ३९ ॥
अन्वास्य पश्चिमां सन्ध्यां तौ जप्यं जेपतुः परम् ।
ध्यायन् हृदि स्वात्मशक्तिं रात्रौ सुष्वपतुः सुखम् ॥ ४० ॥
अथ प्रातः समुत्थाय कृताह्निकविधिं गुरुम् ।
दण्डवत्प्रणिपत्याथ बद्धाञ्जलिपुटो नतः ॥ ४१ ॥
उपतस्थे समुचिते काले परमशोभने ।
अथ तं राम आहूय वत्सेति मधुरस्वरम् ॥ ४२ ॥
पुष्पाञ्जलिं प्रयोज्याग्रस्थितहैमासने शुभे ।
या बाला त्रिपुरा प्रोक्ता ललिता श्रीकुमारिका ॥ ४३ ॥
तस्या वपुर्वाङ्मयं यत्तच्छिष्याय प्रदत्तवान् ।
साङ्गं पीठं समभ्यर्च्य नानाविभवहेतुभिः ॥ ४४ ॥
प्रजप्तदिव्यकलशतोयैः संस्नाप्य मार्गतः ।
पाशत्रयमपि छित्त्वा चाधिवास्य निशां ततः ॥ ४५ ॥
ग्राहयामास तद्रूपमाधारत्रयशोभितम् ।
द्वादशाद्यं तुर्यमध्यमवसानचतुर्दशम् ॥ ४६ ॥
त्रिधास्थितं च तद्रूपं तथा चर्याक्रमं शुभम् ।
आचारक्रममुद्रादि रहस्यमखिलं क्रमात् ॥ ४७ ॥

मूर्धहृन्मूलदेशेषु प्रसादविनियोजनम् ।
स्वात्माम्नावाहुतिं तत्त्वत्रयाणां क्रमशोऽब्रवीत् ॥ ४८ ॥
इति प्रोच्य समादिश्य तत्साधनविधौ ततः ।
वत्सैतद्ब्रह्म परमं साधयस्वाविलम्बितम् ॥ ४९ ॥
ततः पूर्णपदं तुभ्यं ददाम्यचिरकालतः ।
इति संप्राप्तसर्वस्वरहस्यो हारितायनः ॥ ५० ॥
त्रिः परिक्रम्य नत्वा तं श्रीशैलं प्राविशद्द्रुतम् ।
तत्र श्रीभ्रामरी देवी नित्यसन्निहिता स्थिता ॥ ५१ ॥
तस्याः सम्मुखतः स्वच्छां वातातपसहां कुटीम् ।
निर्माय तत्र कालेन साधनं समुपाक्रमत् ॥ ५२ ॥
एवं साधयतस्तस्य फलाहारस्य योगिनः ।
भक्तिश्रद्धानिर्भरस्य नियतेन्द्रियचेतसः ॥ ५३ ॥
प्रसन्नचित्तस्य सदा ध्यानतत्परचेतसः ।
विश्वस्तगुरुवाक्यस्य नवपञ्चत्रिमासकाः ॥ ५४ ॥
ययुः क्षणमिवास्यर्थं संसिद्धं तस्य साधनम् ।
प्रसन्नदेहकरणः सुस्वरः शुभलोचनः ॥ ५५ ॥
लघुगात्राशनो हृष्टः पुष्टाष्टावयवः शुभः ।
अथ स्वप्ने तस्य रात्रौ बाला श्रीपरमेश्वरी ॥ ५६ ॥
सर्वावयवशोभाढ्या तरुणारुणसच्छविः ।
अक्षमालापुस्तकाभीवरशोभिचतुर्भुजा ॥ ५७ ॥
त्रिनेत्रचन्द्रशकलविलसन्मुकुटोज्ज्वला ।
कोटिमन्मथलावण्या कुमारी दशवार्षिकी ॥ ५८ ॥
प्रादुरासीज्जगन्माता लीलास्वीकृतविग्रहा ।
तां दृष्ट्वा स्वप्नसमये प्रसन्नो हारितायनः ॥ ५० ॥
दण्डवत्प्रणिपत्याथ हर्षगद्गदसुस्वरः ।
कृताञ्जलिपुटो भूत्वा संस्तोतुमुपचक्रमे ॥ ६० ॥

जय श्रीत्रिपुरे मातर्जय बालाम्बिके परे ।
जय भक्तप्रिये नित्यं जय कारुण्यविग्रहे ॥ ६१ ॥
लोके त्रित्रिक्रमोल्लासिवस्तुपूर्वस्थितिर्यतः ।
त्रिपुरेति ततः प्रोक्ता ब्रह्मादीनां पराश्रया ॥ ६२ ॥
महिम्नस्ते लेशं हरिहरभवाद्या अपि परं
न वक्तुं ज्ञातुं वा प्रभव इह देवादिगुरवः ।
तथा भूता देवी क इह भुवनेषु स्तुतिपथं
समीहेदारोढुं तव चरणसेवाविरहितः ॥ ६३ ॥
पदाम्भोजभक्तिस्तव भवति चिन्तामणिगणो
न तच्चित्रं देवि प्रभवति समीहाधिकफलम् ।
अतस्त्वत्पदाब्जप्रणिहितसमस्तेन्द्रियवतां
फलं न प्राप्यं किं वद परशिवे सुन्दरि परे ॥ ६४ ॥
त्वमेवादौ सृष्टेः सहजसुखपीयूषजलधि-
र्नितान्तं विश्रान्ता वपुषि विमले निश्चलतरे ।
न खं वायुस्तेजः सलिलमपि भूमिर्घटपटौ
न च ज्ञानाज्ञाने वचनविषयो वा स्थितमभूत् ॥ ६५ ॥
त्वमेवैका सेयं निरवधिमहाशक्तिभरिता
स्थिता संविद्रूपा सकलजगतामादिसमये ।
जगन्मालाजालाङ्कुरगणसुबीजैकवपुषा
परानन्दाकारा परमशिवजीवस्थितिकरी ॥ ६६ ॥
ततः संविद्रूपा तव सकलमेतद्विलसितं
विभातं सद्रूपं तदितरवपुश्चापि सहसा ।
यथाम्भोधौ भङ्गाः घटकलशकुण्डा इव मृदि
प्रभा भानोर्यद्वत्कनकशकलं भूषणगणाः ॥ ६७ ॥
अतस्त्वद्रूपान्नो पृथगिह भवेत्किञ्चिदपि वा
सदा सर्वात्मत्वाद्विलससि महाकाशवपुषा ।

तथाभूतायास्ते परिमितकराङ्‌घ्र्यादिवपुषा
विलासो भक्तेषु प्रभवति कृपा यन्त्रणवशात् ॥ ६८ ॥

तवाप्येतद्रूपं शिवगुरुपदाम्भोजविलसत्
सुभक्तिप्रोन्मीलद्विमलनयनानां विधिवशात् ।
कदाचित्केषाञ्चिद्भवति पुरतो भाग्यवशतः
परं यत्तद्रूपं कथमिह भवेदम्ब सुलभम् ॥ ६९ ॥

नमस्ते बालाम्ब त्रिपुरहरसौभाग्यनिलये
नमस्ते भक्तेहासमधिकफलोत्पादचतुरे ।
नमस्ते दैन्याद्रिप्रविदलनवज्रायितकृपे
नमस्ते मोहाम्भोनिधिकवलनागस्त्यचरणे ॥ ७० ॥

इति स्तुत्वा महादेवीं प्रेमविह्वलितान्तरः ।
दण्डवत्पतितो भूमौ तस्याश्चरणसन्निधौ ॥ ७१ ॥

आनन्दाश्रुकलारुद्धनेत्रः पुलकिताङ्गकः ।
भक्तिनिर्भरितस्वान्तो नाशक्नोत्किमपीहितुम् ॥ ७२ ॥

यदा स वक्तुं द्रष्टुं वा किञ्चित्कर्तुमनीश्वरः ।
प्रेमवारिधिनिर्मग्नस्तदा सा त्रिपुराम्बिका ॥ ७३ ॥

प्राह गम्भीरामृतौघवर्षिण्या सुस्मितानना ।
वाचा वत्सेत्युपामन्त्र्य मूर्ध्नि हस्ताम्बुजं न्यधात् ॥ ७४ ॥

स तु पूर्वं दर्शनेन मग्न आनन्दसागरे ।
पुनस्तस्याः करस्पर्शाद्ब्रह्मानन्दमयोऽभवत् ॥ ७५ ॥

उवाच सा जगन्माता सुमेधोत्तिष्ठ मा चिरम् ।
गच्छ शीघ्रं गुरोः पार्श्वे सिद्धोऽसीप्सितलाभतः ॥ ७६ ॥

इत्युक्त्वान्तर्हिता सद्यो मनोरथमनुष्यवत् ।
सोऽपि प्रबुद्धस्तत्काले किमेतदिति चिन्तयन् ॥ ७७ ॥

नातिस्वस्थमनाः स्वप्ने भूयो भूयो विचिन्तयन् ।
तां मूर्त्तिं सुन्दरीं वाचं पीयूषरससोदरीम् ॥ ७८ ॥

वेलां कल्पात्मिकां ज्ञात्वा स्नानायाऽगात्सरिद्वरे ।
तदेव चिन्तयानः स विस्मृताह्निकसत्क्रियः ॥ ७९ ॥

स्मयन्नुवाच स्वात्मानमेतत्किम्मे समीक्षितम् ।
सत्यं वा यदि वाऽसत्यं न वेद्म्येतस्य कारणम् ॥८०॥
विश्वस्य गुरुसान्निध्यं गत्वा किं प्रब्रवीम्यहम् ।
स्वप्नस्य भ्रान्तिरूपत्वादविश्वास्यो मनीषिणाम् ॥८१॥
न गच्छामि कथं देव्या वचनाच्छ्रद्धयाखलः ।
अहो विषममाभाति कालस्य गतिरुल्बणा ॥ ८२ ॥
तथापि नैव गच्छामि तत्परा क्षन्तुमर्हति ।
इति निश्चित्य नित्यार्थे प्रवृत्ते तु सुमेधसि ॥ ८३ ॥
आहाऽशरीरवाण्येनं श्रृणु वत्सेति वल्गुना ।
वचसां त्वमविश्वासं त्यज सत्यं न तन्मृषा ॥ ८४ ॥
इति श्रुत्वाऽथ वचनमाकाशे निर्जनालये ।
प्रसन्नचित्तः साष्टाङ्गं ननाम भुवि सादरः ॥ ८५ ॥
अथ शीघ्रं रामशयं गत्वा तत्पादपङ्कजम् ।
मूर्ध्ना संस्पृश्य तद्वृत्तं यथावत्स न्यवेदयत् ॥ ८६ ॥
तच्छ्रुत्वा भार्गवो रामः प्राह शिष्यं सुविस्मितः ।
धन्यस्त्वं वत्स ते स्वप्ने दृष्टा सा त्रिपुरा परा ॥ ८७ ॥
नान्यस्त्वत्तो धन्यतरः प्रसन्ना यस्य सा परा ।
मयापि सर्वमेतत्ते वृत्तं समवलोकितम् ॥ ८८ ॥
योगदृष्ट्याथ ते सर्वं सम्यक् सम्पद्यतेऽधुना ।
इत्युक्त्वा सुशुभे काले साङ्गोपाङ्गां सविस्तराम् ॥ ८९ ॥
श्रीविद्यां क्रममार्गेण दीक्षयामास योगिराट् ।
प्राप्तदीक्षस्य तस्याथो दत्तात्रेयाच्छ्रुतं पुरा ॥ ९० ॥
इतिहासं तन्त्रसारं पुण्यं भागवतोत्तमम् ।
साक्षाच्छिवोक्तं त्रिपुरारहस्यमुपदिष्टवान् ॥ ९१ ॥
वत्सैतत्परमं गोप्यं रक्षणीयं प्रयत्नतः ।
न्यस्तं मयि श्रीगुरुणा तदाज्ञावशस्त्वयि ॥ ९२ ॥

संक्रामितमभक्तेषु नास्तिकेषु न वक्ष्यसि ।
आराध्य त्रिपुरेशानीं तत्प्रसादमवाप्य च ॥ ९३ ॥
निबध्य ग्रन्थरूपेण सच्छिष्येषु नियोजय ।
एवमाज्ञा मम गुरोः तत्सत्यं स्यान्न चाऽन्यथा ॥ ९४ ॥
इत्युक्त्वा प्रणतं शिष्यमाशीर्भिरनुयोजयत् ।
अथ नत्वा गुरुं रामं परिक्रम्य प्रदक्षिणम् ॥ ९५ ॥
जगाम हालास्यपुरे यत्र श्रीमीनलोचना ।
पराम्बा राजते साक्षात्सुन्दरेश्वरवल्लभा ॥ ९६ ॥
सुवर्णपद्मिनीतीरे वेगवत्यविदूरतः ।
तपः परममातिष्ठदुद्दिश्य श्रीपराम्बिकाम् ॥ ९७ ॥
ध्याननिष्ठो महाभागो नियमैरन्वितो यमैः ।
काले काले पूजयन्तां नियतेन्द्रियमानसः ॥ ९८ ॥
तां ध्यायन् ललितां नित्यं भक्तिभावसमृद्धिमान् ।
पूजयामास परमामेवं तस्य सुमेधसः ॥ ९९ ॥
अतिक्रान्ताः समाः पञ्च ललितां ध्यायतोऽन्वहम् ।
अथैकदा ध्याननिष्ठो दृष्ट्वाऽन्तःपुरुषं शिवम् ॥ १०० ॥
कर्पूरगौरं जटिलं भस्मोद्धूलितविग्रहम् ।
करेण वादयन् वीणां पुरतः समवस्थितम् ॥ १०१ ॥
किमेतदिति साश्चर्यमुन्मील्य नयने तदा ।
पुरः स्थितं नारदं तमन्वीक्ष्योत्थाय विस्मितः ॥ १०२ ॥
विष्टरं प्रतिपाद्याथ प्रणिपत्य कृताञ्जलिः ।
उवाच मधुरं वाक्यं विनीतो हृष्टमानसः ॥ १०३ ॥
देवर्षे स्वागतं तेऽस्तु क्षन्तव्या मदपाकृतिः ।
मया ध्यानस्थितेनेह पुरस्त्वं नावलोकितः ॥ १०४ ॥
सतां समागमो लोके भूयोऽभ्युदयकारणम् ।
कृतार्थोऽहं भवद्भिर्यदनुग्रहविलोकितः ॥ १०५ ॥

२

ईप्सितं मे सुसम्पन्नं भवद्दर्शनमात्रतः ।
तथापि मे मुनिश्रेष्ठ प्रष्टव्यमवशिष्यते ॥ १०६ ॥
पृच्छामि किञ्चित्त्वां ब्रह्मन् महान् सन्देह आस्थितः ।
त्वं वहिः संस्थितोऽपीह कथं मेऽन्तः समीक्षितः ॥१०७॥
एतस्य कारणं ब्रूहि यदि श्रोतव्यमस्ति मे ।
साधवः समभावेन संस्थिता दीनवत्सलाः ॥ १०८ ॥
इति पृष्टस्तदा तेन लोकानुग्रहतत्परः ।
नारदः प्रहसन् वाक्यमुवाचाऽखिलदर्शनः ॥ १०९ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये द्वादशसाहस्र्यां संहितायां नारदाभिगमनं नाम प्रथमोऽध्यायः ॥ १ ॥



# अथ द्वितीयोऽध्यायः ।

हारितायन वत्सैतत्त्वया प्रोक्तं महाऽद्भुतम् ।
अन्तः समीक्षित इति विदुषेवाऽतिबालवत् ॥ १ ॥
नूनं मया पर्यटता दृष्टा भुवनपङ्क्तयः ।
विद्वांसो मन्दमतयः स्त्रियः शूद्राश्च पामराः ॥ २ ॥
बहुधा तैरहं पृष्टो नैवमद्यावधि क्वचित् ।
नाम्ना सुमेधा विद्वांस्त्वं प्रश्नार्थं वद मे स्फुटम् ॥ ३ ॥
अन्तः समीक्षित इति यत्त्वयोक्तं वचः शुभम् ।
किमन्तस्तत्र किं बाह्यं कस्मात्कस्य किमात्मकम् ॥ ४ ॥
अन्तः शरीर इति तु नात्र वक्तुं क्षमं भवेत् ।
दृष्टोऽहं देशसंस्थानो महाकाशेन संवृतः ॥ ५ ॥
असंख्याण्डप्रमाणन्तत् सप्तवैतस्तिकं त्विदम् ।
शरीरं तव तत्रापि द्रष्टा त्वं कुत्र संस्थितः ॥ ६ ॥
बाह्यादन्तस्त्वया दृष्टोऽथवान्तःसंस्थितेन वा ।
बाह्येन्द्रियैरान्तरं त्वमौदरं न समीक्षसे ॥ ७ ॥
यद्यान्तरेण संदृष्टस्त्वयाहं तत्र मे शृणु ।
आत्मा पर्यनुयोज्यः स्यात्तव तत्र त्वया सखे ॥ ८ ॥
त्वं बहिर्दृष्ट इत्येतदत्रापि शृणु मद्वचः ।
कस्य बाह्यं केन दृष्टं कथं किं तत्र कारणम् ॥ ९ ॥
इन्द्रियं देहतुल्यत्वाज्जडं स्वस्मिन् हि संस्थितम् ।
बहिर्गतं कथं तेन दृष्टं स्यादिति तद्वद ॥ १० ॥
सर्वं बहिर्गतं तत्र संस्थितं नेक्षितं कुतः ।
दृष्टश्चेदिन्द्रियेणाहं किं जातं तव तद्वद ॥ ११ ॥

आगतोऽहमब्जयोनेः सदनात्त्वां समीक्षितुम् ।
तत्राभूत्तव या वार्त्ता तां वदामि सखे शृणु ॥ १२ ॥
सभायां ब्रह्मणः स्थाने मार्कण्डेयो महानृषिः ।
पितामहं समासीनं देवाद्यैः समुपस्थितम् ॥ १३ ॥
नत्वा पप्रच्छ सर्वेषां शृण्वतां विनयान्वितः ।
भगवन् त्वं समस्तज्ञः सर्वलोकपितामहः ॥ १४ ॥
नाज्ञातं तव किञ्चित्स्यात्सर्वकर्त्ता भवान् यतः ।
अहं त्वत्कृपया देव चिरजीवितमाप्तवान् ॥ १५ ॥
साक्षाच्छिवाराधनतो जितं मृत्युपदं मया ।
सर्वशास्त्राणि दृष्टानि सेतिहासागमानि च ॥ १६ ॥
पुराणान्यपि सर्वाणि विद्याश्चाखिलगोचराः ।
किं तत्र सारं श्रोतव्यं यदि मे स्यात्सुनिश्चितम् ॥ १७ ॥
भवान् वदतु तन्मेऽत्र सन्देहो मे महानयम् ।
अत्र पृष्टा मया देवा ऋषयः सिद्धयोगिनः ॥ १८ ॥
वदन्ति स्वस्वाभिमतं भक्तिश्रद्धावशेन ते ।
सर्वानभिज्ञास्ते यस्मात्प्रोचुः स्वस्वोचितं वचः ॥ १९ ॥
त्वं लोककर्त्ता सर्वज्ञः सर्वात्मा सर्वदर्शनः ।
वद तन्मे दयासिन्धो यथापृष्टो मया प्रभो ॥ २० ॥
मार्कण्डेयवचः श्रुत्वा ब्रह्मा लोकपितामहः ।
क्षणं ध्यात्वा सुमनसा ननाम भुवि दण्डवत् ॥ २१ ॥
संस्मारितः पराशक्तेः प्रभावं तेन हर्षतः ।
पुलकाङ्कुरुहो नेत्रे पूर्णानन्दाश्रुनिर्भरः ॥ २२ ॥
कृताञ्जलिः प्रणम्याथो त्रिपुरां सर्वकारणम् ।
वक्तुं समुपचक्राम सम्बोध्य मुनिपुङ्गवम् ॥ २३ ॥
शृणु मद्वचनं ब्रह्मन् सत्यं ते कथयाम्यहम् ।
सभासद्भिः समेतस्त्वं श्रद्धस्वाऽत्र मयोदिते ॥ २४ ॥

अश्रद्दधाना ये केचित्तेषां नात्र भवेत्स्थितिः।
या सर्वजगतां हेतुर्यया सर्वमिदं ततम् ॥ २५ ॥
यस्यामत्येति सर्वं सा त्रिपुरा सर्वतोऽधिका।
यया विरहितं सर्वं वन्ध्यात्मजसमं भवेत् ॥ २६ ॥
यस्याः प्रसादलेशेन सर्वं स्वात्मनि संस्थितम्।
प्रत्यणुक्षणभागेषु या पूर्णा त्रिपुरा हि सा ॥ २७ ॥
या विचित्रतनुप्राणकरणानि प्रतिक्षणम्।
भुवनानि प्रभिन्नानि स्वात्मनाच्छादयत्यजा ॥ २८ ॥
यस्याः पर्यन्तमध्यादिभागं नाहं हरिर्हरः।
जानीमो वयमेतस्याश्चरणाम्बुजरेणवः ॥ २९ ॥
सृष्टिः स्थितिः संहृतिश्च तिरोधानमनुग्रहः।
क्रियते सर्वदाऽस्मासु स्थितया परया यया ॥ ३० ॥
सा सर्वदेवी सर्वेशी सर्वकारणकारणम्।
त्रिपुरा सुन्दरी प्रोक्ता स्वतन्त्रा चिद्विलासिनी ॥ ३१ ॥
अनेकरूपा सा शक्तिर्जाता भक्तकृपावशात्।
सर्वश्रेष्ठा सर्वमाता त्रिपुरा वाक्समाश्रया ॥ ३२ ॥
तन्मूर्त्तिः सर्वतोत्कृष्टा तत्सिद्धान्तः परो मतः।
सैव सर्वेश्वरी सर्वपूज्या शृणु मुनीश्वर ॥ ३३ ॥
तद्रहस्यं महापुण्यं शिववक्त्रैकगोचरम्।
आदिनाथाच्छक्तिमुखात्सदाशिवतुरीयकात् ॥ ३४ ॥
रुद्राद्विष्णोर्मया लब्धं नान्यो जानाति कश्चन।
मर्त्ये लोके महाविष्णोरंशो दत्तगुरुः स्मृतः ॥ ३५ ॥
तेन श्रीकण्ठमुखतः श्रुतं स्वांशे समाक्षिपत्।
भार्गवः सोऽपि गुर्वाज्ञावशेन प्रोक्तवान् ततः ॥ ३६ ॥
सुमेधसे स्वशिष्याय स सम्प्रति महीतले।
चिकीर्षुर्ग्रन्थरूपेण हालास्यं समुपास्थितः ॥ ३७ ॥

त्रिपुराध्याननिरतः श्रीगुरोराज्ञया बुधः ।
इत्युक्तं देवदेवेन ब्रह्मणा ब्राह्मणं प्रति ॥ ३८ ॥
तत्त्वां द्रष्टुमिह प्राप्तः सत्यमेतद्ब्रवीमि ते ।
इति सर्वं मया प्रोक्तं यथा वृत्तं समागमे ॥ ३९ ॥
उत्तरं वद मत्प्रश्ने यज्ज्ञातं हारितायन ।
इति नारदवाक्यं स श्रुत्वा सञ्चिन्त्य सर्वतः ॥ ४० ॥
नोत्तरं ज्ञातवान्वक्तुं लज्जितो मुनिमब्रवीत् ।
महर्षेऽत्र न जानामि किञ्चिदप्युत्तरं तव ॥ ४१ ॥
भवान्सर्वं वदतु मे यदत्रानन्तरं शिवम् ।
भवतोक्तं यथा तद्वद् गुरुणाहं प्रचोदितः ॥ ४२ ॥
ग्रन्थतः कुरु वत्सेति त्रिपुराया रहस्यकम् ।
श्रुतं गुरुमुखात्सर्वं ध्याननिष्ठेन तन्मया ॥ ४३ ॥
विस्मृतं मन्दबुद्धित्वाद्दयां कुरु मयि प्रभो ।
इत्युक्त्वा तस्य चरणौ प्रणिपत्यान्वयाचत ॥ ४४ ॥
नारदोऽथ चिरं तत्र ध्यात्वा सर्वमचेष्टत ।
अथ ध्यानाहुतो ब्रह्मा नारदेन महर्षिणा ॥ ४५ ॥
आजगाम क्षणात्तत्र कृपया भाविगौरवात् ।
प्राप्तं तत्र विधातारं ज्वलन्तमिव पावकम् ॥ ४६ ॥
नवविद्रुमसङ्काशं चतुर्वक्त्रं चतुर्भुजम् ।
कमण्डलुश्चाक्षमालामभयं वरमेव च ॥ ४७ ॥
दधानं श्वेतवसनं स्वच्छयज्ञोपवीतकम् ।
तेजोराशिं समीक्ष्याथो नारदः सहसोत्थितः ॥ ४८ ॥
सुमेधसाप्यनुगतो दण्डवत्प्रणनाम तम् ।
संपूज्यार्घ्यासनाद्यैस्तं कृताञ्जलिरवस्थितः ॥ ४९ ॥
दृष्ट्वाह नारदं ब्रह्मा वत्स किं ते स्मृतोऽस्म्यहम् ।
किं कर्त्तव्यं मया तेऽद्य वद यत्प्रार्थितं त्वया ॥ ५० ॥

इति श्रुत्वाऽथ वचनं नारदः प्रत्युवाच तम्।
भगवन् त्वत् प्रसादेन परिपूर्णमनोरथः ॥ ५१ ॥
भवतोक्तं पुरा वाक्यं मार्कण्डेयाय धीमते।
त्रिपुराया रहस्यस्य माहात्म्यमतिचित्रितम् ॥ ५२ ॥
तत एनं सुमेधाख्यं तद्रहस्यकर्त्रिं मुनिम्।
पश्यामीत्यागतोऽत्राहं दृष्टोऽयं हारितायनः॥ ५३ ॥
भवद्वाक्यं सत्यमस्तु कविर्भूयादयं मुनिः।
परं भवन्तं पृच्छामि किञ्चिन्मे मनसि स्थितम् ॥ ५४ ॥
त्रिपुरा परमेशानी साक्षात्परशिवात्मिका।
तत्केन पुण्यपाकेन प्राप्तमेतेन सेवनम् ॥ ५५ ॥
तद्रहस्याचार्य एषः सर्वोपासकपूज्यताम्।
कथं प्राप्तोऽत्र नैवास्ति साधारणफलादिदम् ॥ ५६ ॥
एतन्मे संशयं देव छेत्तुमर्हस्यशेषतः।
गोप्यमप्येतदिच्छामि श्रोतुं तत्कृपया वद ॥ ५७ ॥
एतच्छ्रुत्वा नारदोक्तं ध्यात्वा किञ्चिदुवाच ह।
शृणु नारद यत्स्रष्टमस्य पुण्यं पुरा कृतम् ॥ ५८ ॥
पुराऽयं ब्राह्मणः कश्चिदलर्क इति विश्रुतः।
सुमन्तुतनयः प्रत्यग्वाहिनी या सरस्वती ॥ ५९ ॥
तस्यास्तीरे सुरुचिरे निवासे निवसन्द्विजः।
चारुरूपा तस्य भार्या सती भर्तृपरायणा ॥ ६० ॥
अयं तस्य सुतो बालः पञ्चवर्षः प्रियः पितुः।
सुमन्तुरन्वहं दुर्गापूजोपासनतत्परः ॥ ६१ ॥
महाभक्तो दृढमतिः सदा दुर्गापरायणः।
अयीत्येवं स्वभार्यां आह्वयत्यनुवासरम् ॥ ६२ ॥
अलर्क एष तत् श्रुत्वा समभ्यस्य च मातरम्।
बालभावादाह्वयति ऐऐ इति मुहुर्मुहुः ॥ ६३ ॥

अथ रोगेणाभिभूतो बालो मातृप्रियः सदा ।
ऐऐ इति वदन्ध्यायन्मातरं प्राप पञ्चताम् ॥ ६४ ॥
त्रैपुरे मन्त्रराजे तदाद्यं बीजमबिन्दुकम् ।
प्रोक्तं वाग्भवमित्येतत् वाग्यस्माद्भवति द्रुतम् ॥ ६५ ॥
निरन्तरं तदावृत्त्या गतः कालोऽस्य भूयसा ।
अन्ते तदेव प्रवदन्देहन्यासमवाप्तवान् ॥ ६६ ॥
तत्पुण्यस्य प्रभावेन श्रीबाला त्रिपुरा परा ।
महायोगिभिरप्येषा प्रार्थ्यते दर्शनेच्छया ॥ ६७ ॥
सा प्रसन्ना ऽचिरेणास्य प्रत्यक्षाभवदम्बिका ।
अनुग्रहं कृतवती स्तोत्रेणानेन संस्तुता ॥ ६८ ॥
विचित्रार्थपदाढ्येन छन्दोबद्धात्मना तदा ।
न शक्तिरस्य पद्यानामासीद्विवेचितुं तदा ॥ ६९ ॥
तद्बीजजपमाहात्म्याद्देवतादर्शनेन च ।
अनुपस्थितमेवास्य स्तोत्रमत्यन्तविस्मृतम् ॥ ७० ॥
अज्ञानेन यतो जप्तं पुरा बीजमबिन्दुकम् ।
अतः सर्वं विस्मरति धारणाविरहादयम् ॥ ७१ ॥
तथापि भाविकार्यस्य गौरवाद्वचनान्मम ।
सर्वं प्रतिस्फुरत्वेनमदृष्टञ्चाऽश्रुतं तथा ॥ ७२ ॥
भूतं स्थितं भविष्यच्च गुर्वनुक्तमनीक्षितम् ।
छन्दोव्याकरणं चार्वर्थः काव्यरूपकलक्षणम् ॥ ७३ ॥
सर्वं भासतु तथ्येन कल्पान्तरगता अपि ।
लोकान्तरमानसाश्च व्यक्ताव्यक्ता अतीन्द्रियाः ॥ ७४ ॥
प्रतिभासन्तु चित्तेऽस्य न मृषोक्तं भवेत्क्वचित् ।
कर्त्ता स्यादेष त्रिपुरारहस्यस्य महामतिः ॥ ७५ ॥
पुरा स्थितमिदं सर्वमग्रन्थात्मतयाऽधुना ।
हारितायननिबद्धं ग्रन्थरूपं भविष्यति ॥ ७६ ॥

इतिहासमिदं श्रेष्ठं विचित्रार्थकथायुतम् ।
शृण्वतां पठतां भक्त्या तुष्टा स्यात्त्रिपुराम्बिका ॥ ७७ ॥
पठत्वशेषशास्त्राणि शृणोत्वखिलसत्कथाः ।
न यावदेतत्पठितं श्रुतं वा श्रुतिं जायते ॥ ७८ ॥
तावत् केन श्रुतं नैव पठितं वा भविष्यति ।
किं बहूक्तेन देवर्षे सर्वसारमिदं भवेत् ॥ ७९ ॥
एतत्सम्यग्विदित्वा तु नावाशिष्यते किञ्चन ।
यावदेतन्न जानाति तावन्न स्यात्सुपूर्णता ॥ ८० ॥
सुमेधः शृणु मद्वाक्यं तत्र सर्वं स्फुरिष्यति ।
आरभ्य रामवचनात्त्रिपुरास्वप्नदर्शनम् ॥ ८१ ॥
कर्त्तव्यं क्रमशः सर्वं ज्ञातं तत्र भविष्यति ।
षट्त्रिंशद्दिवसैरेतत्कर्तव्यं भवता भवेत् ॥ ८२ ॥
अध्यायानां चतुष्कं स्यात्प्रत्यहं कुर्वतस्तव ।
सहस्राणां द्वादशकं खण्डं त्रितयमेव च ॥ ८३ ॥
आद्यो माहात्म्यखण्डः स्यात् ज्ञानखण्डस्तथापरः ।
चर्याखण्डस्तृतीयः स्यादेवमेतद्भविष्यति ॥ ८४ ॥
कृत्वैतदादौ देवर्षे कर्त्तव्यं परमाद्भुतम् ।
वत्स नारद भक्त्यैतच्छ्रोतव्यं वै त्वया भवेत् ॥ ८५ ॥
वक्ताऽयमाद्यः श्रोता त्वं नारदेत्थं भविष्यति ।
इत्थमुक्त्वा जगत्कर्त्ता ताभ्यां तत्र प्रपूजितः ॥ ८६ ॥
तदैवान्तर्हितो ब्रह्मा नारदोऽपि सभाजितः ।
सुमेधसा ययौ वीणां रणयन्नीप्सितान्दिशम् ॥ ८७ ॥
अथ क्षणं स्थितस्तूर्ष्णीं विमना हारितायनः ।
सत्सङ्गविरहादीषत्कलुषीकृतमानसः ॥ ८८ ॥
अथ वेगवतीं गत्वा स्नात्वा कृतविधिर्मुनिः ।
सुन्दरेशं सुमीनाक्षीमभ्यर्च्य गणपं गुरुम् ॥ ८९ ॥

स्मृत्वा ग्रन्थस्य करणमुपचक्राम स द्विजः ।
ॐनमः कारणानन्देत्यारभ्य क्रमशः कृतम् ॥ ९० ॥
समाप्तिमकरोदन्ते सा भवेत्त्रिपुरैव ह्रीम् ।
शिवशक्तिप्रणवयोर्मध्ये ग्रन्थस्तु तन्मयः ॥ ९१ ॥
एवंविधस्तेन कृतो ब्रह्मणोक्तं यथा पुरा ।

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे
द्वितीयोऽध्यायः ॥२॥२००॥



# अथ तृतीयोऽध्यायः ।

आदिनाथो महेशानः सर्वकारणकारणम् ।
सर्वकर्त्ता विजयते सर्वात्मकतया स्थितः ॥ १ ॥
श्रीविष्णोरंशयोगीशो दत्तात्रेयो महामुनिः ।
गूढचर्यां चरंल्लोके भक्तवत्सल एधते ॥ २ ॥
जमदग्न्यरणेर्जातः क्षत्रेन्धनमहानलः ।
रामोऽभ्युदेति भक्तान्तरज्ञानध्वान्तनाशकः ॥ ३ ॥
एवं ध्यात्वा गुरून्स्वर्णपद्मिनीरोधसि स्थितः ।
पितामहोक्तविधिना षट्त्रिंशद्दिवसैः कृतम् ॥ ४ ॥
इतिहासं भागवतं तन्त्रसारमखण्डितम् ।
वैराग्यभक्तिमाहात्म्यक्रियाज्ञानसमन्वितम् ॥ ५ ॥
नानाख्यानकथाचित्रं त्रिपुराया रहस्यकम् ।
पठतां पापशमनं शृण्वतां क्लेशनाशनम् ॥ ६ ॥
विचारितं स्वात्मलाभजननं मोक्षसाधनम् ।
पूजितं त्रिपुराभक्तिकरं दृष्टं शुभोदयम् ॥ ७ ॥
विद्याप्रदं सुलिखितं सेवितं वाञ्छितार्थदम् ।
यत्र श्रीत्रिपुरादेव्याः कथाविभवकीर्तनम् ॥ ८ ॥
ज्ञानवैराग्यभक्त्याढ्यं नारदाद्यैः श्रुतञ्च यत् ।
तत्र किं दुर्लभतरं चिन्तामणिरिव स्थितम् ॥ ९ ॥
एतस्मिन्नन्तरे तत्र प्राप्तो देवर्षिसत्तमः ।
वल्लकीं वादयन्रम्यामानन्दाप्लुतमानसः ॥ १० ॥
सुमेधा अपि तं दृष्ट्वा सहसोत्थाय सुस्मितः ।
सम्पूज्यासनपाद्याद्यैः कृताञ्जलिरभाषत ॥ ११ ॥

देवर्षे त्वत्प्रसादेन ज्ञातं सम्यग्यथार्थतः ।
प्रगुणाञ्जनयोगेन प्रज्ञाचक्षुरिवाखिलम् ॥ १२ ॥
पितामहोक्तं संपन्नं रचितं तद्रहस्यकम् ।
आज्ञापयाग्रे शिष्यं मां भवतः किं करोम्यहम् ॥ १३ ॥
अद्य सर्वाणि शास्त्राणि छन्दांसि विविधानि च ।
सर्वे लोका दिशः कालाः सेन्द्रियाश्च निरिन्द्रियाः ॥१४॥
ज्ञाताः करस्थितस्वच्छचैकान्तमणिखण्डवत् ।
नमस्ते ब्रह्मपुत्राय नारदाय महात्मने ॥ १५ ॥
यत्कृपायोगतः सम्यक् ज्ञातं सर्वं परापरम् ।
इत्युक्त्वा पदयोस्तस्य दण्डवन्निपपात ह ॥ १६ ॥
अथ तं नारदोत्थाप्य वक्षसाऽऽपीड्य तं मुनिम् ।
आसने सन्निवेश्याऽथो मधुरं वाक्यमब्रवीत् ॥ १७ ॥
हारितायन धन्योऽसि त्वत्समो नैव विद्यते ।
यस्यैवं त्रिपुरापादभक्त्या सम्पत्तिरुद्गता ॥ १८ ॥
यत्त्वया त्रिपुरादेव्या रहस्यं रचितं शुभम् ।
तच्छुश्रूषुरहं प्राप्तस्त्वच्छ्रयं ब्रह्मवाक्यतः ॥ १९ ॥
श्रद्धावतो ममाग्रे तत्सर्वं वद सुविस्तृतम् ।
इति तद्वाक्यमाकर्ण्य प्राञ्जलिर्हृष्टमानसः ॥ २० ॥
आनन्दाश्रुकलापूर्णविकसन्नेत्रपङ्कजः ।
त्रिपुरास्मृतिसञ्जातरोमाञ्चाद्द्विगुणाङ्ककः ॥ २१ ॥
अवदन्नारदं वाक्यं मधुनिष्यन्दसुन्दरम् ।
उपपन्नं तवैवेदं ब्रह्मपुत्र महामुने ॥ २२ ॥
यच्छिष्यभूतान्मत्तस्त्वं शुश्रूषस्यखिलं विदन् ।
नैसर्गिकः स्वभावोऽयं सतां सुमहतां भवेद ॥ २३ ॥
अमत्सरा अवरतोऽप्यल्पं शृण्वन्ति सज्जनाः ।
नैतच्चित्रं परादेव्याश्चारित्र्यममृतोपमम् ॥ २४ ॥

न तु द्राक्षाफले भेदो लोष्ट्रस्थे मणिपात्रगे ।
समं स्वभावमधुरं न पात्राद्भिद्यते रसः ॥ २५ ॥
तवाज्ञां शिरसा धृत्वा विधात्राज्ञामनुस्मरन् ।
वदाम्यतिविचित्रं तद्रहस्यं परमाद्भुतम् ॥ २६ ॥
आवयोः संवादरूपं समाहितमतिः शृणु ।
आसीद्ब्रह्मसुतः श्रीमान्भृगुर्मुनिगणेडितः ॥ २७ ॥
तत्पुत्रश्च्यवनः साक्षाद्ब्रह्मणा सदृशो भुवि ।
सुकन्या यस्य चारित्र्यात्पित्रा दत्ता महात्मने ॥ २८ ॥
येन सोमग्रहो दत्तो जित्वाऽश्विभ्यां शतक्रतुम् ।
ऋचीकस्तस्य तनयो महात्मा च्यवनोपमः ॥ २९ ॥
तस्मै दत्ता स्वतनया गाधिना पुत्रमिच्छता ।
सेवया तोषितः सोऽपि वरं पत्न्यै प्रदत्तवान् ॥ ३० ॥
सा वव्रे भ्रातरं पुत्रं क्षत्रं ब्रह्मकुलोत्तरम् ।
अथ सर्वं क्षत्रवीर्यं ब्रह्मवीर्यं स वीर्यवान् ॥ ३१ ॥
आक्षिप्य निर्ममे तत्र पायसद्वयमुत्तमम् ।
तत्पुंसवनयुग्मं स हुत्वाऽग्नेः सम्भृतं तदा ॥ ३२ ॥
एकं पत्न्यै परन्तस्या मात्रे दत्तं महात्मना ।
अथ गाधिमहाराज्ञो महिषी विपरीततः ॥ ३३ ॥
कन्यायाः अधिकं मत्वा बुभुजे लक्षिता तया ।
कन्यया वञ्चयित्वा तां तज्ज्ञात्वा मुनिरब्रवीत् ॥ ३४ ॥
किं कृतं हे वरारोहे हतङ्कार्यं तवाधुना ।
वञ्चिताऽसि जनन्या त्वं चरुव्यत्ययहेतुतः ॥ ३५ ॥
भविता तनयो भद्रे कालान्तकसमो नृपः ।
भ्राता साक्षद्ब्राह्ममयो दैवमन्त्र परायणम् ॥ ३६ ॥
तच्छ्रुत्वा घोरसङ्काशं वचनं साऽन्वतप्यत ।
प्रार्थयामास भर्त्तारं नत्वा साध्वी पुनः पुनः ॥ ३७ ॥

ब्रह्मन्ननुग्रहो मेऽस्तु क्षन्तव्या मदपाकृतिः ।
ब्राह्मणस्य सुशान्तस्य तव पाणिगृहीत्यहम् ॥ ३८ ॥
न भूयादीदृशः पुत्रः प्रसादं कुरु सर्वथा ।
तच्छ्रुत्वाऽऽह महाभागः श्रूयतां मद्वचः शिवे ॥ ३९ ॥
पायसं मन्त्रसम्भूतममोघं तत्कथं भवेत् ।
न तद्व्यर्थं भवेदद्य किन्तु मद्वचनं शृणु ॥ ४० ॥
शान्तस्तव सुतो भूयात्तत्सुतस्तादृशो भवेत् ।
सर्वक्षत्रान्तकृत्साक्षाद्विष्णोरंशो महाबलः ॥ ४१ ॥
ब्राह्मणो भविता सोऽपि क्षत्रवीर्येण सम्भृतः ।
इति श्रुत्वा भर्तृवचोऽप्रसन्ना साऽभवत्तदा ॥ ४२ ॥
अथ कालेन सुषुवे जमदग्निं सुतं सती ।
स ब्राह्मणः सुशान्तात्मा ब्रह्मभूतः शुचिव्रतः ॥ ४३ ॥
तस्य कालेन सञ्जातो रेणुकायां शुभेक्षणः ।
क्षत्रनीहारमिहिरो महाबलपराक्रमः ॥ ४४ ॥
स कदाचित्पितृवधक्रोधात्सन्तोष्य शङ्करम् ।
प्राप्तवान्परशुं तस्मादमोघं चापमेव च ॥ ४५ ॥
त्रिः सप्तकृत्वः पृथिवीं निःक्षत्रां करवाण्यहम् ।
इति तत्र प्रतिज्ञाय पितृघातसुमन्युना ॥ ४६ ॥
आदाय परशुं दिव्यं क्षत्राणां कुलनाशनः ।
निःक्षत्रां पृथिवीं कृत्वा कश्यपायाऽखिलां भुवम् ॥ ४७ ॥
दत्त्वा प्रसक्तसमुद्रात्तु भूमिं जित्वा महौजसा ।
सम्प्रार्थितो ऋषिवरैर्विरतः क्षत्रघातनात् ॥ ४८ ॥
तप आतिष्ठदुग्रं सः प्रकृत्या चण्डकोपनः ।
क्रोधं शान्त्यनले हुत्वा तपसैवातिभूयसा ॥ ४९ ॥
जिताः समस्तपुण्यानां लोकास्तेन महात्मना ।
अथ कालेन महता रामः सत्यपराक्रमः ॥ ५० ॥

रावणस्य वधार्थाय स्वांशेनाऽवततार ह ।
तेन मैथिलभूपालगृहविन्यस्तशाङ्करम् ॥ ५१ ॥
धनुः समारोप्य तदा वीर्यशुल्कामुपावहत् ।
आरोप्यमाणं तद्भग्नं धनुः शैवं महोल्बणम् ॥ ५२ ॥
तत्कर्म सर्वलोकानां श्लाघ्यमासीन्महाद्भुतम् ।
एतच्छ्रुत्वा जामदग्न्यो वैमानिकमुखात्तदा ॥ ५३ ॥
असहन्क्षत्रियाणां तच्छ्लाघनां भार्गवस्तदा ।
गाढानलमुसम्पर्कजातोत्सेकपयो यथा ॥ ५४ ॥
क्रोधारुणितनेत्रान्तरागाग्निज्वालया जगत् ।
दहन्निव क्रोधमूर्त्तिः प्रलयाग्निरिव ज्वलन् ॥ ५५ ॥
आः क्षत्रबन्धोरद्याहमपनेष्यामि वै मदम् ।
आरोप्य परशुं स्कन्धे वामेनादाय वैष्णवम् ॥ ५६ ॥
चापं वदन्निति ततः प्रचचाल निजालयात् ।
देवर्षयोऽथ तं दृष्ट्वा भार्गवं मन्युना वृतम् ॥ ५७ ॥
ऊचुरद्य पुनः क्षौणीं क्षत्रहीनां करिष्यति ।
क्रोधेन तस्य महता चकम्पे वसुधा भृशम् ॥ ५८ ॥
हतप्रभो दिवानाथो धूलीधूसरितं नभः ।
वेलातिलङ्घिनो जाताः समुद्राः प्रलये यथा ॥ ५९ ॥
एवं स निर्गतः स्थानान्मार्गे सेनासमावृतम् ।
राघवं राममासाद्य कृतवैवाहिकोत्सवम् ॥ ६० ॥
रे राम क्षत्रबन्धो त्वं वीर्योत्सिक्तोऽतिमन्दधीः ।
त्वया कृतमकर्तव्यमज्ञात्वा शूरमानिना ॥ ६१ ॥
अद्य यावन्न श्रुतः किमहं क्षत्रकुलान्तकः ।
रामोऽस्तीति मदाद्यन्मामवज्ञाय कृतं ह्यगः ॥ ६२ ॥
नाद्यापि परशोर्धारा कुण्ठिता क्षत्रघातिनः ।
यत्त्वयाद्य कृतं कर्म फलं तस्य भुजिष्यसि ॥ ६३ ॥

अद्य मे परशोर्धारा पारणं प्रविधास्यति ।
बहुकालेन ते कण्ठच्छेदोष्णरुधिरेण वै ॥ ६४ ॥
क्षमां खलेषु नो कुर्यादुपेक्षेवाऽऽमयागमे ।
कालेन तस्यैव भवेद्देहः क्षीरमिवान्तकम् ॥ ६५ ॥
कथं सहेत शान्तोऽपि गुरोरपमतिं कृताम् ।
समर्थे मादृशस्तत्र पादाक्रान्त इवानलः ॥ ६६ ॥
मयि जीवति चापस्य गुरोः कैलासवासिनः ।
क्षत्रियापसदेनाभूद् बालेन परिभावनम् ॥ ६७ ॥
आः कालस्य व्यत्ययता नात्र क्षान्तिर्गुणावहा ।
जामदग्न्ये वदत्येवं रामो राजीवलोचनः ॥ ६८ ॥
पादयोः प्रणिपत्याऽथ सभाजनमकल्पयत् ।
सान्त्वपूर्वं क्षमस्वेति भूयो रामः कृताञ्जलिः ॥ ६९ ॥
ब्रह्मण्यो नम्रभावेन क्षमापनमथाकरोत् ।
यदा न क्षमते सोऽपि भूयोऽधिक्षेपतत्परः ॥ ७० ॥
तदैष क्रोधताम्राक्षो वाक्यमेतदुवाच ह ।
राम त्वं ब्राह्मणोऽसीति युज्यते क्षान्तिरत्र मे ॥ ७१ ॥
राघवाणां ब्राह्मणेषु शस्त्रधारा सुकुण्ठिता ।
अयं कण्ठः कुठारेण छिद्यतां मे यथासुखम् ॥ ७२ ॥
सर्वथा ब्राह्मणा गावः पूज्या नो रघुजन्मनाम् ।
इति ब्रुवति काकुत्स्थे जामदग्न्यो ज्वलन्निव ॥ ७३ ॥
तोयसम्पृक्ताज्यहोमाद्धव्यवाडिव सम्बभौ ।
अथाऽवदद्राघवं तं रामं रघुकुलोद्वहम् ॥ ७४ ॥
क्षत्राधमाऽतिधृष्टोऽसि ज्ञातः किं ब्राह्मणस्त्वया ।
साक्षान्मृत्युं क्षत्रियाणां न जानासि कुतः खल ॥ ७५ ॥
अथावदद्रघुवरो वेद्मि त्वां रेणुकासुतम् ।
नाहं नृपस्तथाभूतो ये हता ब्रह्मबन्धुना ॥ ७६ ॥

न चाहं रेणुकातुल्यः स्थितोऽस्मि पुरतस्तव ।
ब्राह्मण्यं वा क्षत्रभावं सन्त्यजाऽन्यतरद् द्रुतम् ॥७७॥
काकुत्स्थ एवं वदति रुषा धिग्धिगिति ब्रुवन् ।
स्वकरे संस्थितं चापं वैष्णवं प्रददौ द्रुतम् ॥ ७८ ॥
तस्मै प्रोवाच संक्रुद्धः कत्थनं किं वृथा तव ।
माहेश्वरं जीर्णधनुर्भग्नं दैवेन तत्त्वया ॥ ७९ ॥
इदं वैष्णवमारोप्य मत्समक्षं स्थिरीभव ।
ततो मया द्वन्द्वयुद्धे विमदस्त्वं भविष्यसि ॥ ८० ॥
एवमुक्तो रघुवरः श्रुत्वा वाक्यं धनुर्वरम् ।
आदाय लीलया मौर्वीमारोप्य निमिषार्धतः ॥ ८१ ॥
निषङ्गात्सायकं तीक्ष्णं सन्धायाऽऽकर्णपूरितम् ।
प्रदर्श्य भार्गवायाथो रुषा प्रोवाच राघवः ॥ ८२ ॥
राम शीघ्रं वदाऽमोघबाणः क्व विनिपात्यताम् ।
उपेक्षणीयस्त्वं यस्माद्ब्राह्मणो भार्गवोद्भवः ॥ ८३ ॥
विश्वामित्रस्य सम्बन्धादाततायष्यपि मे गुरुः ।
प्रदर्श्य लक्ष्यं बाणस्य जीव नाऽऽशु यथा गतः ॥८४॥
अमोघोऽयं महाबाणो जीवितान्तकरस्तव ।
श्रुत्वा राघवसम्प्रोक्तं दृष्ट्वाऽद्भुतपराक्रमम् ॥ ८५ ॥
मत्वाऽतिमानुषं साक्षात्परमात्मानमव्ययम् ।
प्रणम्य दण्डवद् भूमौ स्तुत्वा प्रोवाच भार्गवः ॥८६॥
जानामि त्वां परात्मानं पुरुषं प्रकृतेः परम् ।
जगद्रक्षाविधानार्थं जातो नटनरोपमः ॥ ८७ ॥
आसादिता मया पुण्यलोका बहुतपोगणैः ।
तत् सर्वं शरलक्ष्यार्थं दत्त्वा जीवामि राघव ॥८८॥
तथाऽस्त्विति वदन् रामो निपात्य शरमुल्बणम् ।
ब्रह्मण्यो भार्गवं प्राह नमस्ते रामभार्गव ॥ ८९ ॥

क्षन्तव्यं मे दुरुक्तं यत् ब्राह्मणो मे सदा गुरुः ।
इति तस्य वचः श्रुत्वा भार्गवो लज्जयाऽन्वितः ॥९०॥
नत्वा प्रदक्षिणीकृत्य जगाम स यथागतम् ।
इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे तृतीयोऽध्यायः ॥९१॥२९३॥

---

# अथ चतुर्थोऽध्यायः ।

अथ मार्गे जामदग्न्योऽत्यन्तनिर्वेदमाप्तवान् ।
परिभावित एवं स चिन्तयानो जगाम ह ॥ १ ॥
नूनं मया कश्यपाय दत्वा क्षोर्णी प्रतिश्रुतम् ।
नाऽतःपरं हेतिहस्तः क्रुध्यामि नृपजन्मसु ॥ २ ॥
अहो मे चित्तसम्मोहः किं वदामीदृशोऽभवम् ।
क्रोधेनाऽत्यन्तरिपुणा पातितो मोहखातके ॥ ३ ॥
क्रोध एव तपोमृत्युः क्रोधान्नश्यति वै तपः ।
क्रुद्धस्य दूरतो याति विचारः सत्त्वबुद्धिजः ॥ ४ ॥
तस्य स्पर्शोऽपि न भवेद्विटं दृष्ट्वा सती यथा ।
कथं क्रुद्धे विचारः स्याच्छ्वित्रे सौन्दर्यवत्किल ॥ ५ ॥
क्रुद्धो न कुर्यात्किं कर्म गर्ह्यं घोरं पिशाचवत् ।
नान्तरं लेशतोऽप्यस्ति पिशाचक्रुद्धयोर्भुवि ॥ ६ ॥
उभयोरीक्षितं पुत्रप्रियादिपरिपीडनम् ।
क्रुद्धो न हन्यात्कं को वा क्रुद्धो हन्ति गुरूनपि ॥ ७ ॥
क्रोध एव महाञ्शत्रुरीदृग्येन कृतस्त्वहम् ।
क्रोधान्मया पुरा क्षत्रस्तनन्धयगणा हताः ॥ ८ ॥
आच्छिद्याच्छिद्य जननीहस्ताभ्यां पुक्कसो यथा ।
अहो मे निर्दयं स्वान्तं किं कृतं क्षत्रपोतकैः ॥ ९ ॥
हिंसिताः कोटिशो बालाः सदृशा अदृशा अपि ।
नूनं क्रोधो येन नैव जितस्तस्य कथं तपः ॥ १० ॥
प्रवृद्धशत्रोर्नृपते राज्यसौख्यं यथा तथा ।
केन मे निहतस्तातः के हता नृपराशयः ॥ ११ ॥
पुरुषादेनेव मया कृतं कर्म सुगर्हितम् ।
अभिमानः क्रोधमूलो यस्माद्धेतुवशादहम् ॥ १२ ॥

निगीर्णः क्रोधसर्पेण प्रबलाजगरात्मना ।
एवं चिन्तयता तेन मार्गे कश्चन पूरुषः ॥ १३ ॥
दृष्टस्तेजोराशिमयो ज्वलदग्निगिरिर्यथा ।
पुष्टसुन्दरसर्वाङ्गः फुल्लपङ्कजलोचनः ॥ १४ ॥
मलिनाङ्गो मुक्तकेश उन्मत्तचरितोऽपि यः ।
महापुरुषवद् दृष्टो महात्मा मुनिराट् कविः ॥१५॥
दृष्ट्वैवं भार्गवो विप्रं त्यक्तलिङ्गाश्रमादिकम् ।
दिगम्बरं पङ्कदिग्धं गन्धसिन्धुरवत्स्थितम् ॥ १६ ॥
तं दृष्ट्वा जामदग्न्योऽथ परं संशयमागतः ।
कोऽयं विलक्षणाचारः सदसल्लिङ्गसंयुतः ॥ १७ ॥
किं महापुरुषो वाऽथाऽप्रमत्तो वाऽपि कश्चन ।
अत्र बुद्धिर्नान्तमेति यथा वेषान्तरे नटे ॥ १८ ॥
प्रमत्तश्चेत्कथमयं तेजोराशिपदं भवेत् ।
भूयः पश्याम्ययं मार्गं दूषयत्यपि नो सताम् ॥ १९ ॥
तस्मादयं कोऽपि महापुरुषो गूहिताकृतिः ।
परीक्षणीयः किञ्चिन्मे यत्नेनेत्यभिचिन्तयन् ॥ २० ॥
तमुवाच हसन् रामः कस्त्वं पुरुषसत्तम ।
महापुरुषवद् भासि स्थितिस्ते कीदृशी वद ॥ २१ ॥
इति तद्वाक्यमाकर्ण्य पलायनपरोऽभवत् ।
क्षिपन्पाषाणखण्डांश्च हसन्नुच्चैर्मुहुर्मुहुः ॥ २२ ॥
विप्रलापं तथा कुर्वन्बहुधोन्मत्तचेष्टितः ।
एवंविधं भार्गवस्तं करे जग्राह सत्वरः ॥ २३ ॥
गृहीत्वा चिन्तयामास नायं मे विदितोऽभवत् ।
भूय एवं परीक्ष्याऽथ व्रजाम्यहमपीप्सितम् ॥ २४ ॥
इति निश्चित्य भूयस्तमधिक्षेप्तुं प्रचक्रमे ।
अधिक्षिप्तोऽपि बहुधा परिभूतोऽपि न स्थितेः ॥ २५ ॥

प्रच्युतो मुखवैवर्ण्यमपीषन्नोपलक्षितम् ।
महापुरुष एवेति तदा निश्चित्य भार्गवः ॥ २६ ॥
तत्पादयोर्निपतितः प्रार्थयामास तं मुनिम् ।
अथ सोऽपि प्रसन्नात्मा जामदग्न्येऽनुकम्पयन् ॥२७॥
बभाषे सास्मितं वाक्यं बहुसन्दर्भगुम्फितम् ।
कस्त्वमित्यहमापृष्टस्त्वया तच्छृणु भार्गव ॥ २८ ॥
त्वमित्यवगते प्रश्नः पिष्टपेषणवत्कथा ।
त्वया नावगतश्चेत्त्वमिति वाक्यान्निरर्थिका ॥ २९ ॥
केनचिद्वपुषा ज्ञात इति चेत्तद्वदस्व मे ।
न ज्ञातस्ते चिदात्मा तदज्ञेयत्वात्तथाविधः ॥ ३० ॥
अन्नश्चेदं त्वया दृष्टं साक्षादेव न संशयः ।
तस्मात्पर्यनुयोगस्ते संज्ञायां सुव्यवस्थितः ॥ ३१ ॥
ज्ञातं कारणमप्येवं तस्मात्संज्ञैव न त्वया ।
ज्ञाता सा न स्वतःसिद्धा कल्पिता बहुधापि सा ॥ ३२ ॥
न संस्थिता साप्येकत्र सङ्घातस्याऽऽश्रयत्वतः ।
तस्मादहं त्वया राम सम्यक्पृष्टो वदामि ते ॥ ३३ ॥
एवं तद्वचनं श्रुत्वा स्तब्धवाग्बुद्धिपौरुषः ।
लज्जितः प्राह योगीशं नत्वा प्रार्थनपूर्वकम् ॥ ३४ ॥
महापुरुष न ज्ञातमुत्तरं तत्र तत्त्वया ।
ज्ञात्वाऽहं बोधनीयो वै शिष्यभूतमकल्मषम् ॥ ३५ ॥
इत्युक्तस्तेन रामेण सोऽनुकम्पितमानसः ।
वक्तुं स्ववृत्तमारेभे गिरा मधुरया तदा ॥ ३६ ॥
भार्गवाऽऽङ्गिरसं त्वं मां जानीह्यवरजं गुरोः ।
सम्वर्त इति विख्यातं त्रिलोक्यां प्रथितं गुणैः ॥३७॥
स्थितिं वक्ष्यामि मे राम शृणु संयतमानसः ।
पुरा मे गुरुणा भ्रात्रा विद्वेषस्समजायत ॥ ३८ ॥

तेनाऽहं प्राप्तनिर्वेदः प्राप्त एतां स्थितिं किल ।
दत्तात्रेयेण गुरुणा सुसम्यगनुबोधितः ॥ ३९ ॥
आत्मानमखिलं मत्वा तद्विलासमिमं तथा ।
अभयं मार्गमाश्रित्य शङ्कोन्मेषणवर्जितः ॥ ४० ॥
सञ्चराम्यचलस्थानः सूत्रपाञ्चालिका यथा ।
इत्युपाकर्ण्य तद्वाक्यं प्राह प्राञ्जलिरास्थितः ॥ ४१ ॥
रामः प्राह मुनिं वाक्यं सम्प्रार्थनगिरा तदा ।
महापुरुष मां दीनं संसारभयपीडितम् ॥ ४२ ॥
अनुगृह्य शुभं मार्गमधिरोहय निर्भयम् ।
इत्युक्तः स पुनः प्राह दयार्द्रहृदयो मुनिः ॥ ४३ ॥
शृणु वत्स मया प्रोक्तं सारं सर्वार्थसंग्रहम् ।
यस्मिन्मार्गे त्वमासीनः स भीमो बहुनर्थदः ॥ ४४ ॥
यथा कश्चित्क्वचिद्गच्छन्नभयं दैवमोहितः ।
मार्गं दस्युसमाकीर्णमाश्रितो याति निर्भयः ॥ ४५ ॥
अज्ञानादथ तन्मार्गे क्लिश्यन्बिभ्यन्पदे पदे ।
क्षेमप्राप्त्याशया याति तथा संसृतिवर्त्मनि ॥ ४६ ॥
अथ केनाऽपि मार्गज्ञपुङ्गवेन प्रबोधितः ।
सुमार्गमाश्रितो याति दुर्मार्गस्थान्हसन्यथा ॥ ४७ ॥
तथाऽहं नाथसम्प्रोक्तसुमार्गस्थोऽतिनिर्वृतः ।
हसन्नन्यान्कुमार्गस्थाश्चिरं गच्छामि सर्वतः ॥ ४८ ॥
तत्र संसृतिमार्गस्तु विपरीतो विषूचिकः ।
तत्राऽतिक्लेशभाजोऽपि न जानन्ति विमोहिताः ॥४९॥
विश्रब्धाः क्लेशजालेषु सुखबुद्ध्याऽतिपामराः ।
ये तेषां दुर्लभो मार्गो योऽस्मद्विधनिषेवितः ॥ ५० ॥
तस्मात्स्वमार्गसंस्थानं ज्ञात्वा तत्र विरक्तधीः ।
गुरूपदिष्टमार्गेण स्वात्मशक्तिं महेश्वरीम् ॥ ५१ ॥

त्रिपुरां सम्यगाराध्य तत्कृपालेशमाश्रितः ।
उपलभ्य स्वात्मभावं सर्वसाम्याश्रयात्मकम् ॥ ५२ ॥
इतरत्तच्छक्तिमयमाभासैकरसास्थितिम् ।
ज्ञात्वा सर्वं स्वात्ममयं शक्तिचक्रात्मनः पराम् ॥ ५३ ॥
जगद्गुरुसमापत्तिं प्राप्य निर्भयसंशयः ।
जामदग्न्य यथेच्छं त्वं चराऽहमिव निश्चलः ॥ ५४ ॥
स्वात्मानं सर्वभावस्थं स्वात्मस्थं सर्वभावकम् ।
पिण्डाऽहम्भावमुन्मूल्य वेत्तृभावासनास्थितः ॥ ५५ ॥
वेद्यं स्वदेहं संबुध्य सदा वेत्रभिलक्षकः ।
यश्चरेत्तस्य नो कार्यं विद्यते संसृतेः पथि ॥ ५६ ॥
दोषं विभावयेदादौ भूयः संसृतिवर्त्मनि ॥
तेन तत्राऽऽशु वैराग्यं ततः सन्मार्गलक्षणम् ॥ ५७ ॥
एतन्मयोक्तं संक्षेपात्सारं मर्त्यः सदाभ्यसन् ।
अचिरेणैव संयाति शुभमार्गं परात्परम् ॥ ५८ ॥
एवमुक्तं तस्य वचो दुर्विभाव्यमतीन्द्रियम् ।
मत्वाऽथ भार्गवः प्राह भूयः कलुषितान्तरः ॥ ५९ ॥
महापुरुष यत्प्रोक्तं त्वया सारतरं वचः ।
तस्याऽतिगहनत्वाद्वै न सम्यग्विदितं मया ॥ ६० ॥
सारसंक्षेपवचनात्तन्मे सन्देह आततः ।
विस्तरेण सुकृपया यथा ज्ञातं मया भवेत् ॥ ६१ ॥
तथा मे वद सर्वज्ञ रक्ष मां शरणागतम् ।
इति तद्वचनं श्रुत्वा सम्वर्तो ध्यानमास्थितः ॥ ६२ ॥
ज्ञात्वा तस्याऽखिलं भावि प्रोवाच मधुरं वचः ।
शृणु राम मयोक्तं त्वं नायं मार्गोऽतिगोचरः ॥ ६३ ॥
मलीमसाधियां पुंसां न सुज्ञेयमिदं भवेत् ।
ऊर्दूर्ध्वमार्गस्थितेः सूक्ष्मभावात्कलुषितात्मनाम् ॥ ६४ ॥

नीतिसुज्ञेयमेतद्वै वक्तुं न सुलभं तथा ।
अतिलौकिकवृत्तित्वाद् दुर्लभञ्चैतदुच्यते ॥ ६५ ॥
त्रिपुराम्बापादसेवामन्तरा नैव लभ्यते ।
सापि श्रीगुरुनाथस्य कृपाद्वारैव नान्यथा ॥ ६६ ॥
तत्कारणन्तु सत्सङ्गः सर्वं तन्मूलकं यतः ।
तस्माद्दत्तात्रेयगुरोः समीपं व्रज भार्गव ॥ ६७ ॥
तं समाराध्य सन्तोष्य वाञ्छितं प्राप्स्यसि द्रुतम् ।
विना गुरोराश्रयतः शुभं विन्देत वै कथम् ॥ ६८ ॥
मार्गच्युतस्य गहने रात्रौ सूर्यं विना यथा ।
विना सद्गुरुसेवाया न सुखं विन्दते क्वचित् ॥ ६९ ॥
अन्धस्याऽञ्जनकर्त्तेव विनाऽन्यत्र गुरोर्गतिः ।
साक्षात्सदाशिवो देवः शिष्यलोकानुकम्पितः ॥ ७० ॥
मनुष्यरूपमास्थाय सदा पर्यटति प्रभुः ।
विना श्रीगुरुपादाब्जसंश्रयं कः समीहितम् ॥ ७१ ॥
लभेत त्रिषु लोकेषु समृद्धोऽपि धनादिभिः ।
तस्मादितस्त्वं गच्छाऽऽशु तस्य पादान्तिकं गुरोः॥७२॥
आराधय सुभक्त्या तमकैतवधिया ततः ।
प्रसन्नेऽथ गुरौ किं स्याद्दुर्लभं भुवनत्रये ॥ ७३ ॥
स आस्ते सम्प्रति गिरौ गन्धमादनसंज्ञिते ।
आश्रमे पुण्यभूयिष्ठे सिद्धयोगिसुसेविते ॥ ७४ ॥
व्रजाम्यहं शुभं तेऽस्तु यथाऽभिलषितां गतिम् ।
इत्युक्त्वा पश्यतस्तस्य जगामाऽऽकाशमार्गतः ॥७५॥
वाततुन्नाभ्रपटलमिव दूरं निमेषतः ।
प्रागुत्तरान्तरादिशं ययौ दृग्गोचरातिगः ॥७६॥
ततः संवर्तवाक्यस्य श्रुतिजातत्वरान्वितः ।
गन्तुं मनो दधे तत्र यत्र दत्तगुरुः स्थितः ॥ ७७ ॥

इति श्रीमदि० त्रिपुरारहस्ये माहात्म्यखण्डे चतुर्थोऽध्यायः ॥३७७॥

# अथ पञ्चमोऽध्यायः ।

अथोत्तराशाऽभिमुखो जगाम भृगुवंशजः ।
दत्तात्रेयाऽश्रमं गन्तुं सत्वरो जातसंभ्रमः ॥ १ ॥
चिन्तयन् स्वात्मनि तदा मार्गे व्यवहृतेः स्थितिम् ।
नूनमद्याऽवधि मया मुख्यं चिन्त्यं न चिन्तितम् ॥ २ ॥
प्रवाहपतितो मर्त्य इव तद्वशतां गतः ।
यद्वदन्धानुगोऽन्धः स्यादविज्ञातगतिक्रमः ॥ ३ ॥
अग्रगस्य फलं भुङ्क्ते तथेमे सर्वतो जनाः ।
अविदित्वैव पर्यन्तं कुर्वन्ति कृतकर्मणः ॥ ४ ॥
विदन्ति तस्य च फलमन्यदेवाऽसमीहितम् ।
दृष्ट्वा क्वचित्फललवसम्भवं दैवतन्त्रजम् ॥ ५ ॥
बुध्वाऽन्यकर्मजं तच्च मोहिताः फलतर्षया ।
फललेशाभासलुब्धा आपदं प्राप्नुवन्ति हि ॥ ६ ॥
यथा चाऽमिषलोभने झषो वाडिशवेधितः ।
कस्य किं तत्सुखं जातं हतसंसारवर्त्मनि ॥ ७ ॥
आक्रमिश्वपचात्सर्वे सुखार्थं सततोद्यताः ।
यत्सुखं चिद्क्रमेर्जिह्वामैथुनोत्थन्तु यादृशम् ॥ ८ ॥
तदेव तादृशं लोकत्रयराजस्य नेतरत् ।
सर्वं हि भौतिकोत्थस्य देहस्याऽर्थं समीहितम् ॥ ९ ॥
स देहो मलमूत्रासृङ्मांसस्नाय्वस्थिसङ्कुलः ।
मुहुर्निन्द्यः सदा दुःखहेतुरत्यन्तकुत्सितः ॥ १० ॥
एतत्सम्बन्धिनः सर्वे पुत्रमित्रकलत्रकाः ।
इमं नश्वरमत्यन्तबीभत्समतिदुःखदम् ॥ ११ ॥

देहमात्मधिया दृष्ट्वा करोत्यपि विनिन्दितम् ।
को नाम गुणलेशोऽत्र वर्त्तते हतदेहके ॥ १२ ॥
सर्वैः सुविदितं लोके जनैः पामरपण्डितैः ।
सदा स्रवद्द्वारयुतममेध्याऽशुचिगन्धिनम् ॥ १३ ॥
विण्मूत्रकफनिष्यन्दं लोमत्वगसृगाततम् ।
मत्वा प्रियतमं देहमत्युत्तमतमं जनः ॥ १४ ॥
सुगन्धिगन्धकुसुमैर्मण्डयत्यतिसुन्दरैः ।
अत्रेत्थ मण्डितं देहं प्रमोदमुपयाति च ॥१५॥
विस्मृत्य नित्यप्रवहन्मूत्रविट्श्लेष्मसङ्कम् ।
पुष्टं रसाधिक्यवशात्प्रतिक्षणं विकारिणम् ॥ १६ ॥
स एव देहो जरसा व्यापृतो रोगदूषितः ।
व्रणादिप्रवहन्मज्जा दुर्गन्धप्रसरोद्यतः ॥ १७ ॥
चैतन्यकलया हीनो जलक्लिन्नोऽत्यमङ्गलः ।
कृमिराशिमयश्चान्यैर्भक्षितो विड्मयोऽशुचिः ॥ १८ ॥
एवंभूतदशायुक्तं पश्यन्नप्यन्यदेहकम् ।
मत्वा स्वदेहमजरामरमत्यन्तमूढधीः ॥ १९ ॥
एवंविधेऽतिबीभत्से नारीदेहे नृदेहके ।
परस्परस्य सौन्दर्यं दृष्ट्वाऽत्यन्तसुमोहिताः ॥ २० ॥
विचारणीयं सौन्दर्यं किं तत्राऽस्ति सुसूक्ष्मकम् ।
मलासृगस्थिसङ्घातमृते तत्प्रतिपाद्यताम् ॥ २१ ॥
अहोऽतिमुग्धदृष्टीनां कुणपेऽत्यन्तगर्हिते ।
नश्वरे दुःखदे चाऽतिभयदे क्षणिकेऽशुचौ ॥ २२ ॥
सौन्दर्यं भाति येनेमे मोहिताः प्रार्थयन्ति यम् ।
यत्स्त्रीगात्रं चारुतरं कामिनां प्रीतिवर्धनम् ॥ २३ ॥
पुरुषाङ्गाद्विशेषः कस्तत्र स्यादप्यणोर्मितः ।
मांसपिण्डौ स्तनौ तौ च स्फोटदुर्मांससम्मितौ ॥२४॥

दुर्व्रणस्फोटसंयोगे तयोः सौन्दर्यमीक्षितम् ।
देहेऽत्यन्ताऽशुचिमये ये प्रीतिमभियान्त्यहो ॥२५॥
धिगस्तु तान्कृमिप्रायानमेध्यरमणान्नरान् ।
अविचारस्य माहात्म्यं किं वदाम्यहमीदृशम् ॥ २६ ॥
पश्यन्नपि महादोषं गुणमेवाऽभिमन्यते ॥
एवं कुदेहाऽभिमतेः कामक्रोधादयोऽध्यरम्(?) ॥२७॥
भवन्ति येन विहता भ्रमन्त्युल्कामुखा इव ।
न कुत्र चित्स्थितिं यान्ति भ्रमवायुस्थतूलवत् ॥ २८ ॥
प्रायो जना मन्दधियो जिह्वोपस्थपरायणाः ।
न विदन्त्यतिसान्निध्यस्थितं मृत्युं भयङ्करम् ॥ २९ ॥
ईहन्ते चाऽतिदीर्घार्थसिद्धिमप्यल्पजीविताः ।
स्वार्थसिद्ध्यै परान्हन्ति कामक्रोधहताऽशयाः ॥ ३० ॥
कामक्रोधहता मर्त्याः सुखसिद्ध्यै सदोद्यताः ।
न क्वचित्सुखमायान्ति क्षणं किञ्चिदपि ध्रुवम् ॥ ३१ ॥
दुरन्ताऽशागाढवन्हिज्वालाप्लुष्टात्मनां नृणाम् ।
कुतो वैराग्यपाटीरपङ्कलेपनजं सुखम् ॥ ३२ ॥
धन्यास्ततो हि तिर्यञ्चः संशान्तमनसः सुखम् ।
क्षुधानिवृत्तिमात्रार्थास्तत्कालार्थकृतोद्यमाः ॥ ३३ ॥
असङ्ग्रहपरा नित्यं शयानाः स्वस्थमानसाः ।
अहो धिक्कामवशतां सदा सन्तापकारिणीम् ॥ ३४ ॥
दुष्पूरां सर्वथोपायैः चिरकालाऽर्थसाधनैः ।
लोके यावद्धनं धान्यं पशवः स्त्रिय एव च ॥ ३५ ॥
न तस्य तावत्प्राप्त्याऽपि क्षणं निश्चिन्तता भवेत् ।
अहो महादुःखिनस्ते येषां कामहतं मनः ॥ ३६ ॥
सर्वसम्पत्समृद्धानामपि साम्राज्यमृच्छताम् ।
धनमेव हि दुःखानां मूलं नित्यभयावहम् ॥ ३७ ॥

दुःखेन प्राप्यते लोकैः कायक्लेशादिभिश्चिरम् ।
तद्धनप्राप्तिमात्रेण मित्राण्यपि च शत्रवः ॥ ३८ ॥
आत्मभूतात्मजोऽप्यस्मै द्रुह्यति प्रेयसी प्रिया ।
मातुः पितुः प्रियान्मित्राच्छङ्कते करटो यथा ॥ ३९ ॥
मृत्युमस्य प्रार्थयन्ति पुत्रदारादयः प्रियाः ।
तस्माद्धनेनाऽत्ममृत्युसमेन किमु वै सुखम् ॥ ४० ॥
तथाप्यविद्वान्सततमीहते मुग्ध एव तत् ।
एवम्भूतधनेनेह कुटुम्बानान्तु रक्षणम् ॥ ४१ ॥
क्रियते बहनर्थाय महायासेन सर्वदा ।
कुटुम्बं पुत्रदारादि तद्वृथाऽभिनिवेशतः ॥ ४२ ॥
ममैते पुत्रदाराद्या इत्येवमभिमानयन् ।
अभिमानमृते किञ्चित्सम्बन्धोऽपि न लभ्यते ॥ ४३ ॥
तच्चाऽन्त्ये बहुशोकाय यथा कोशकृतः क्रिया ।
चिरं संयोगिनाञ्चाऽपि स्यादेवाऽन्ते वियोगता ॥ ४४ ॥
लोकेऽवश्यं युग्मभूताः शोचन्त्येकावियोगतः ।
एवं वियोगपर्यन्तं संयोगप्रीतिसंयुताः ॥ ५ ॥
शोचन्त्यतितरामन्त्ये संयोगफलमीदृशम् ।
फलव्ययक्षय एवाऽस्ति संयोगस्य तु सर्वथा ॥ ४६ ॥
अविचार्यैव पर्यन्तं दाराद्यैः संयुता नराः ।
निश्चित्य स्थिरसंयोगं मूढाः कौटुम्बिनो नराः ॥ ४७ ॥
सदा कुटुम्बैकरताः शोचन्त्यन्तेऽतिदुःखतः ।
एष एव महान्दोषो धनेष्विह जनेषु च ॥ ८ ॥
अस्थैर्यं सर्वसुगुणघस्मरं दुर्निवारणम् ।
एतेनाऽस्तङ्गतास्सर्वे गुणा निःशेषिता अतः ॥ ४९ ॥
सङ्गो नैव विधेयः स्याज्जातु स्वक्षेममिच्छता ।
सर्वं भयेन संव्याप्तं मृत्युनाऽतिबलीयसा ॥ ५० ॥

धनं गृहं तथा दाराः स्वर्गाद्यमपि कर्मजम् ।
तस्मान्नेच्छेत किमपि मृत्युग्रस्तञ्च शोकदम् ॥ ५१ ॥
अभयं सर्वदेच्छेत न शोचति यतो जनः ।
व्रजामि तं महात्मानं दत्तात्रेयगुरुं मुनिम् ॥ ५२ ॥
शरणं क्षेममन्विच्छन्नात्मनस्सर्वतोऽभयम् ।
एवं मार्गे चिन्तयानः पर्वतेन्द्रमवैक्षत ॥ ५३ ॥
पुरोभागे रोचमानशृङ्गाक्रान्तविहायसम् ।
शृङ्गसङ्घातविश्रान्तबलाहककदम्बकम् ॥ ५४ ॥
अमरीगणसङ्गीतनादघुङ्घुमितान्तरम् ।
नृत्यदप्सरसां श्रेणीनूपुराऽरावझाङ्कृतम् ॥ ५५ ॥
दोललोलाव्यग्रसिद्धपुरन्ध्रीगणसुन्दरम् ।
मैरेयक्षीवयक्षस्त्रीसंक्रीडद्गुह्यकावृतम् ॥ ५६ ॥
कदम्बकुसुमोदञ्चत्सौरभाऽऽभरिताऽन्तरम् ।
सौगन्धिककुसुगन्धाढ्यं मन्दगन्धवहस्थलम् ॥ ५७ ॥
पद्मिनीपद्मसंराजद्धंसचक्राङ्कसारसम् ।
भृङ्गीनिकरझङ्कारपरिबृंहितकुञ्जकम् ॥ ५८ ॥
एवं शोभामवेक्षन्स प्राप्तवानन्तिकं गिरेः ।
गन्धमादनसञ्ज्ञस्य गीर्वाणाऽवसतेस्तदा ॥ ५९ ॥
अत्राऽऽस्ते स महायोगी यः संवर्त्तेन वर्णितः ।
दीनान्जनानुद्दिधीर्षुर्भवपङ्काब्धिविप्लुतान् ॥ ६० ॥
इति चिन्तयतस्तस्य दृष्टिगोचरिताऽभवत् ।
पर्णशाला तस्य मुनेर्यद्दर्शनपिपासितः ॥ ६१ ॥
ननु शाला तस्य भवेदाङ्गिरसगुरोर्मुनेः ।
नूनं ममाऽल्पभाग्यस्य दैवमद्य प्रफुल्लितम् ॥ ६२ ॥
अहो जनानां कालेन भाग्यमभ्युदितं भवेत् ।
अद्याऽहं सम्प्रपश्यामि तत्पादसरसीरुहम् ॥ ६३ ॥

संसारदावतापघ्नममृताम्भोधिवर्षणम् ।
स एवं चिन्तयन् रामः शालाद्वारमुपागतः ॥ ६४ ॥
दृष्टवान् द्वारदेशस्थं ब्राह्मणं ध्यानतत्परम् ।
तद्ध्यानभङ्गभीत्याऽथ संस्थितो दूरतः क्षणम् ॥ ६५ ॥
उन्मीलिताक्षमथ तमुपलक्ष्योपसंसृतः ।
वन्दित्वा तस्य चरणौ प्रष्टुं समुपचक्रमे ॥ ६६ ॥
भो ब्रह्मन्नाश्रमः कस्य भवत्ययमतिप्रियः ।
दर्शनादेव सर्वेषामतिविश्रान्तिदायकः ॥ ६७ ॥
अत्र दत्तात्रेयगुरोराश्रमः कुत्र विद्यते ।
कृपया ब्रूहि योगेन्द्र द्रुतं मे दीनवत्सल ॥ ६८ ॥
इति तद्वचनं श्रुत्वा ब्राह्मणः शान्तमानसः ।
वाक्यं मधुरसासारमाह स स्मितपूर्वकम् ॥ ६९ ॥
अयमेवाऽश्रमस्तस्य योगिराजस्य सद्गुरोः ।
किमीहितं तव वद कस्त्वं कस्मादिहागतः ॥ ७० ॥
अथ तद्वाक्यमाकर्ण्य रामः प्राह कृताञ्जलिः ।
भृगुवंशप्रसूतोऽहं जामदग्न्यो महामुने ॥ ७१ ॥
रामो नाम जनैः ख्यातः केन चिद्धेतुनाऽत्र तु ।
प्राप्तः संवर्त्तमुनिना नोदितोऽतिकृपावता ॥ ७२ ॥
एतत्क्षणं द्रष्टुमेव गुरोश्चरणमीहितम् ।
मनो मे त्वरते ब्रह्मन् तत्पादावभिवन्दितुम् ॥ ७३ ॥
ततस्सर्वं सुविदितं भवेद्वै भवतो ननु ।
भ्रमन् मरुस्थलारण्ये दावसङ्गाऽतितर्षितः ॥ ७४ ॥
सुशीतजललाभाऽन्यद्यथा नो नन्दयेत्तु तम् ।
तथा मम गुरोः पाददर्शनाऽन्यन्न रोचते ॥ ७५ ॥
आख्यातु तं भवान्मह्यमाश्रितार्त्तिविनाशनम् ।
अथ तद्वाक्यमाकर्ण्य प्रहस्य मधुरं वचः ॥ ७६ ॥

राम जानामि ते सर्वमत्राऽऽगमनकारणम् ।
गुरोर्महात्मनः सेवामहिमत्वशतः स्फुटम् ॥ ७७ ॥
गच्छाऽन्तराऽऽस्ते मुनिराट् सर्वलोकसुहृत्तमः ।
इत्युक्तस्तेन मुनिना शालाऽन्तः प्रविवेश ह ॥ ७८ ॥
तत्राऽऽसीनमासनाग्र्येऽवधूतकुलनायकम् ।
उपासितं योगिमुख्यैरवदातगुणाशयैः ॥ ७९ ॥
दण्डवत्तत्पदाब्जाऽग्रे प्रणिपत्य कृताञ्जलिः ।
आस्थितो नाऽतिदूरे स पश्यन् तत्स्थितिचेष्टितम् ॥ ८० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
पञ्चमोऽध्यायः ॥ ४९० ॥



# अथ षष्ठोऽध्यायः ।

तं ददर्श महात्मानं तेजोराशिमनुत्तमम् ।
तमालकोमलदलनीलनालतनुच्छविम् ॥ १ ॥
फुल्लराजीवनयनं राकेन्दुप्रतिमाऽऽननम् ।
नवविद्रुमसामन्तदन्तच्छदविराजितम् ॥ २ ॥
मन्दस्मिताऽतिसौन्दर्य्यप्रभापूर्णदिगन्तरम् ।
प्रौढमुक्तापङ्क्तिशोभापरीभाविद्विजाऽऽवलिम् ॥ ३ ॥
पूर्णगण्डाभोगराजन्नासावंशलसन्मुखम् ।
कम्बुग्रीवं दीर्घबाहुद्वयशोभाविराजितम् ॥ ४ ॥
नवप्रवाललालित्ययुतपाणितलाऽञ्चितम् ।
विशालपृथुलोरस्कं तनुत्रिवलिकोदरम् ॥ ५ ॥
करिनासोरुसुभगं तूणीसोदरजाधिकम् ।
पङ्केरुहाऽतिसुभगपादपङ्केरुहान्वितम् ॥ ६ ॥
सौन्दर्यकन्दममलं तारुण्यश्रीनिषेवितम् ।
दर्शनादेव नारीणां कोटिमन्मथदीपनम् ॥ ७ ॥
एवंभूतं समालोक्य स्त्रिया लक्ष्मीसमानया ।
कयाचिदतितारुण्यलावण्यलसदङ्गया ॥ ८ ॥
मदिरामदसंरक्तघूर्णनेत्राम्बुजा तया ।
आलिङ्गितपुरोभागन्यस्तमैरेयकुम्भकम् ॥ ९ ॥
यतिवेषधरं मिश्रलिङ्गिनं शङ्कितोऽभवत् ।
किमेतदद्भुतं वृत्तं मुनेरस्य महात्मनः ॥ १० ॥
विषसंपृक्तमाध्वीकामिव पश्यामि चेष्टितम् ।
अहो महात्मनां लोके गतिरत्यन्तचित्रिता ॥ ११ ॥

क्वचिद्वाह्यसमीचीना क्वचिदान्तरसौभगा ।
अचिन्त्यवृत्तयो लोके योगिनः खलु मादृशम् ॥ १२ ॥
न ह्यसारं स संवर्त्तो मह्यमादिशति क्वचित् ।
द्वारेऽप्येष महाशान्तः संश्रयेत्प्राकृतं कथम् ॥ १३ ॥
अत्राऽपि परितः सर्वे निषण्णाः सात्त्विकर्षभाः ।
तस्मान्नैतद्यथा दृश्यमन्यदेवाऽस्ति किञ्चन ॥ १४ ॥
यथा तथा वा भवतु गुरुर्मेऽयं सनातनः ।
मनःकल्पितमेवेह सदसद्भेदभेदनम् ॥ १५ ॥
इति निश्चित्य मेधावी सुचित्तस्तत्र तस्थिवान् ।
तं समालोक्य स गुरुर्विनीतं भार्गवं ततः ॥ १६ ॥
प्रोवाच मधुरं वाक्यं विचित्राऽर्थसमन्वितम् ।
स्वागतं भार्गव तव कच्चित्ते कुशलं स्थितम् ॥ १७ ॥
आश्रमे तव गोविप्रतृणवीरुन्महीरुहाम् ।
कच्चिदभ्यागतश्चाऽग्निं काले शुश्रूषसि क्रमात् ॥ १८ ॥
काले काले स्वाध्ययनात्कच्चित्ते ब्रह्म सन्धृतम् ।
अकाण्डेषूत्थितान्देहजाताऽरीञ्जयसि ह्यरम् ॥ १९ ॥
तपसा ते जिता लोका बहवः पुण्यसंश्रयाः ।
त्वया भार्गववंशो वै नीतोऽप्युच्चपदं परम् ॥ २० ॥
तपसा विद्यया शक्त्या ब्रह्मचर्येण तेजसा ।
यदाऽऽगमनकार्यं ते मादृशा न सदाश्रयाः ॥ २१ ॥
लोकेऽक्षगोचरजयः पुरुषार्थैककारणम् ।
पुरुषार्थस्य सम्पत्तिः परो लाभ इह स्मृतः ॥ २२ ॥
अलब्धपुरुषार्था ये तत्राऽर्थेनैव चोद्यताः ।
पुरुषास्तेन जीवन्ति जीवत्कुणपसंज्ञकाः ॥ २३ ॥
इति बह्वर्थनिःश्वासाः स्वार्थघ्नाः काष्ठपूरुषाः ।
सूत्रपाञ्चालिकेवेह व्यर्थचेष्टापरा नराः ॥ २४ ॥

अहं पुराऽतिवैराग्यान्न्यस्तसर्वक्रियोऽभवम् ।
द्वयं तत्राऽतिबलवदिन्द्रियेष्वात्मशत्रुषु ॥ २५ ॥
रसनोपस्थयुगलं बहवस्तेन पातिताः ।
द्वयं येन जितं सम्यक्तेन सर्वं जितं भवेत् ॥ २६ ॥
अहमित्थम्भूत आभ्यां जातो नूनं विनिन्दितः ।
न संश्रयन्ति मां सन्तो निषिद्धपथसेविनम् ॥ २७ ॥
बुद्धिभ्रंशकरी चेयं सुरा सज्जनगर्हिता ।
तादृशी वारयोषाऽपि मयैतदुभयं श्रितम् ॥ २८ ॥
अतो मत्सङ्गतिं प्रायस्त्यक्त्वा सन्त इतो गताः ।
तस्मादेवंविधस्येह स्थाने त्वं कथमागतः ॥ २९ ॥
वद भार्गव तथ्यं तद्येन शुध्येत मन्मनः ।
इति पृष्टो जामदग्न्यो रामः प्राह सुविस्मितः ॥ ३० ॥
संवर्त्तचरितं तच्च पूर्वदृष्टमनुस्मरन् ।
नूनं स्वरूपगुप्त्यै नो मुनिराहेदृशं वचः ॥ ३१ ॥
उद्विग्नो मादृशां सङ्गात्कामिनां हतचेतसाम् ।
न प्राकृतं वदेन्मह्यं संवर्त्तोऽतिदयापरः ॥ ३२ ॥
इति व्यवस्य नत्वा तमाहाऽत्यन्तशुभं वचः ।
भगवन्नार्हसि मयि शङ्कितुं शरणागते ॥ ३३ ॥
अनन्यगतिरद्य त्वां दयापीयूषवारिधिम् ।
दीनः संसृतिकान्तारदुर्गभ्रमणकातरः ॥ ३४ ॥
दुःखदावाग्निजटिलज्वालामालाऽऽकुलाऽऽशयः ।
वाञ्छामध्याह्नतरणिकिरणैः परितापितः ॥ ३५ ॥
दैवात्संवर्त्त सन्मार्गं प्राप्याऽऽसादितवानहम् ।
स्वच्छीतलपीयूषमकरन्दाऽऽलवालकम् ॥ ३६ ॥
कल्पद्रुमवरं सेव्यं सेवकाऽलिकुलाऽऽवृतम् ।
त्वां महात्मानमनघं सोऽहं त्वदनुकम्पितः ॥ ३७ ॥

भवामि न चिरादेव संवर्त्तोक्तिमहस्वतः।
नाहं विशङ्कनीयः स्यामनन्यशरणागतः।
भवान्मया सुविदितो निश्चितश्चाऽपि मे गुरुः ॥ ३८ ॥
सद्वाऽसद्वा स एवाऽस्तु पन्थास्ते सद्गुरोर्मम।
गुरुः साक्षात्परः शिवस्सर्वेषामात्मदो मतः ॥ ३९ ॥
अनात्मदैरसाद्भिः किं को लाभस्तत्समागमात्।
धनैः पुत्रैर्गृहैः स्त्रीभिर्ग्रामैरखिलभूधनैः ॥ ४० ॥
प्राप्तैरनात्मभूतैस्तैरप्राप्ताऽऽत्मफलस्य किम्।
हृतात्मनः सुखं कस्माद्भवेदखिलवैभवैः ॥ ४१ ॥
जात्यन्धस्येव दीपानां सहस्रैरिव नो फलम्।
तस्मान्मयि कृपासिन्धो भगवन् दीनवत्सल ॥ ४२ ॥
कृपा कर्त्तुं समुचिता शुद्धोऽहं त्वत्पदाऽऽश्रितः।
इत्येवं तस्य वचनं श्रुत्वा दीनदयापरः ॥ ४३ ॥
प्रसन्नवदनः प्राह दत्तात्रेयो महामुनिः।
साधु वत्स जामदग्न्य सम्यग्व्यवसितं त्वया ॥ ३४ ॥
स्वाऽऽत्मनः पदवी श्रेष्ठा दुर्लभा परिमार्गिता।
नैतदल्पफलं ज्ञेयं यदात्मपदमार्गणम् ॥ ३५ ॥
आश्चर्योऽत्र नरो लोके स्वात्मलोकाऽनुचिन्तकः।
एतावदत्र नृतनौ सारभूतं महाफलम् ॥ ३६ ॥
शाश्वतप्रापकं सत्यं यदात्मपदमार्गणम्।
नूनं जना गोचरेषु संधृताक्षाशयाः सदा ॥ ४७ ॥
इन्द्रजालनिभेष्वद्धा समीहन्ते पदे पदे।
अलभ्य तत्र विश्रान्तिं कालपाशेन पाशिताः ॥ ४८ ॥
देहाद्देहान्तरं यान्ति चाऽसङ्ख्येयपरिक्रमैः।
चक्राऽऽन्दोलनयन्त्रस्थजना इव मुधा सदा ॥ ४९ ॥

ऊर्ध्वोऽधो मध्यगमनं यान्ति तत्तद्गतिक्रमात् ।
प्रसन्नोऽहं जामदग्न्य दृष्ट्वा निष्ठां तवाऽचलाम् ॥ ५० ॥
वद तेऽभीप्सितं किं तदागतो यन्निमित्ततः ।
श्रुत्वैवं तद्वचो रामः प्रसन्नेन्द्रियमानसः ॥ ५१ ॥
प्रणिपत्य प्रश्रयतः समाह प्राप्तविष्टरः ।
कृताञ्जलिर्मधुरया गिरा सूनृतया तदा ॥ ५२ ॥
महाराज गुरो स्वामिन् त्वयि तुष्टे महेश्वरे ।
किमलभ्यमिहास्त्यन्यदिह लोके परत्र च ॥ ५३ ॥
रत्नेच्छस्येव सम्प्राप्तरोहणस्य महात्मनः ।
नूनं मया बहुतिथं संसृतेर्वर्त्म संश्रितम् ॥ ५४ ॥
तत्र भ्रमन्न विश्रान्तिं लब्धवान् जातु लेशतः ।
ईहामन्युज्वलत्कीलिज्वालाजालसमाकुलः ॥ ५५ ॥
दन्दह्यमानोऽनुदिनं दीर्घकालोऽतिवाहितः ।
अन्तःशीतलता लब्धा न मया कुत्रचित्क्वचित् ॥ ५६ ॥
लोके सर्वे नरा नार्यो मृगा यादो विहङ्गमाः ।
आढ्यो रङ्को महीपालो मण्डलेशश्च चक्रपः ॥ ५७ ॥
गन्धर्वा गुह्यका यक्षाः सिद्धविद्याधराऽऽदयः ।
सर्पा नागा यातुधाना इन्द्रचन्द्रादयोऽपि च ॥ ५८ ॥
दन्दह्यमाना एवैते सदा काममहाऽग्निना ।
तस्माद्यथाऽहमनिशं भवेयं सर्वशीतलः ॥ ५९ ॥
दह्यमाने वने गङ्गामध्यस्थ इव सिन्धुरः ।
तथाऽहं भवतः सम्यग्बोधितः स्यामिति प्रभो ॥ ६० ॥
इति तद्वाक्यमाकर्ण्य दत्तात्रेयो महामुनिः ।
अवदत्सुशुभां वाणीं हर्षयन्भार्गवं मुनिम् ॥ ६१ ॥
राम संशृणु मद्वाक्यं यदुक्तं भवताऽनघ ।
अत्यन्तश्रेयसो मूलमेतत्ते वाञ्छितं शुभम् ॥ ६२ ॥

नूनं त्वयि कृपा सम्यग्भगवत्या समाहिता ।
अनेकप्राग्जनुकृतं सुकर्म फलितं तव ॥ ६३ ॥
न ह्यल्पकर्मभिर्जातु शुभमेवं प्रजायते ।
महाफलं व्यवसितमाराच्चे हि फलोदयः ॥ ६४ ॥
शृणु मद्वचनं राम सावधानेन चेतसा ।
आत्यन्तिकन्तु यत्क्षेमं तत्तेऽभीष्टतमं मतम् ॥ ६५ ॥
तद्विना ज्ञानयोगेन न सिध्यति कदाचन ।
सर्वेषां प्राणिनामात्मा साक्षादेव परः शिवः ॥ ६६ ॥
स्वमायावैभववशात्स्वात्मानमविदन्परम् ।
सङ्कोचे सर्वशक्तीनां स्वयं सङ्कुचितस्ततः ॥ ६७ ॥
नैतावदिह सत्यं स्याद्भाति रिक्तमपि क्वचित् ।
तथा तथा भासनात्तु विना किञ्चिन्न विद्यते ॥ ६८ ॥
भासनं भानमेवेह नाऽभानाद्भासनं पृथक् ।
भानशक्तिर्भासनं हि भानात्मा परमः शिवः ॥ ६९ ॥
स एवाऽत्यच्छया शक्त्या स्वयमेकः सनातनः ।
भासते विविधाऽऽकारो विचित्रत्वेन सर्वतः ॥ ७० ॥
स एवाऽऽत्मा तु सर्वेषां लोकानां नित्यसत्प्रभः ॥
अभात इव भातोऽपि सदा मोहेन मन्यते ॥ ७१ ॥
तस्मात्तत्प्रत्यभिज्ञानान्मोहनाशे सति द्रुतम् ।
अन्तर्बहिः सर्वतश्च गङ्गाऽन्तर्द्वीपगो यथा ॥ ७२ ॥
शीतलं भावमभ्येति नाऽन्यथा यत्नकोटिभिः ।
तज्ज्ञानं दुर्लभं लोके दुर्लक्ष्यं विषयाऽऽत्मभिः ॥ ७३ ॥
विना पराशक्तिकृपां नैव लभ्यं कदाचन ।
अत आदौ सर्वजनैः सेव्या सा त्रिपुराऽम्बिका ॥ ७४ ॥
सेवनं तु विना भक्त्या दुर्लभा जन्मकोटिभिः ।
साऽपि तस्याः सुमहिमाऽऽकर्णनेन विना तथा ॥ ७५ ॥

तस्मात्प्रयत्नेन जनैः सदा सुश्रद्धया युतैः ।
श्रोतव्या कीर्त्तितव्या च त्रिपुरायाः परा कथा ॥ ७६ ॥
शृण्वतोऽनुदिनं सैव दृढां भक्तिं प्रयच्छति ।
ययाऽऽसाद्य परां सेवां समाप्नोत्यभयं पदम् ॥ ७७ ॥
नान्यः पन्थाः तस्य भवेत्पदस्य प्रापणे क्वचित् ।
अत आदौ परा श्रद्धा कर्त्तव्या महिमश्रुतौ ॥ ७८ ॥
सैव कल्पतरुर्नृणां वाञ्छितार्थप्रसाधने ।

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे षष्ठोऽध्यायः ॥ ५१८ ॥



# अथ सप्तमोऽध्यायः ।

इति श्रुत्वा गुरोर्वाक्यं भार्गवः प्रीतमानसः ।
पुनराह शुभं वाक्यं मधुराऽक्षरसुस्वरम् ॥ १ ॥
श्रीगुरो या त्वया प्रोक्ता त्रिपुरेति पराऽम्बिका ।
कीदृशी सा कथम्भूता किं स्वभावा किमाश्रिता ॥ २ ॥
वद मे करुणासिन्धो सविस्तरतयाऽधुना ।
इति पर्यनुयुक्तस्तु प्रोवाच ललितं वचः ॥ ३ ॥
त्रिपुरामहिमसिन्धुमग्नाऽन्तःकरणो मुनिः ।
ध्यात्वा प्रणम्य परमां ध्यानजाऽऽनन्दसंप्लुतः ॥ ४ ॥
शृणु राम पराशक्तेर्महिमा केन वर्ण्यते ।
लोकेश्वरैर्विधात्राऽऽद्यैः सर्वज्ञैः सर्वशक्तिकैः ॥ ५ ॥
अद्याऽपि सा न विज्ञाता केयं कुत्र स्थितेत्यपि ।
न सा वर्णयितुं शक्या ईदृशीति यथार्थतः ॥ ६ ॥
वेदाः शास्त्राणि तन्त्राणि वक्तुं न प्रभवन्ति वै ।
प्रत्यक्षादिप्रमाणानि पराक्संस्थानि सर्वदा ॥ ७ ॥
विश्रान्तानि मेयपदे नाऽऽक्रमन्ति तु तत्पदम् ।
वैश्वानरस्य ज्वालेव नान्तर्गच्छति कुत्रचित् ॥ ८ ॥
सा शक्तिर्मातृसामस्त्यसङ्क्षद्दपदवीं श्रिता ।
न तर्केण युक्त्या वा ज्ञातुं योग्या कदाचन ॥ ९ ॥
अस्मीत्यवगमादन्यन्नोपलभ्येत कुत्रचित् ।
सा लीलाऽऽत्ततनुः शास्त्रैर्वेदाद्यैश्च निरूप्यते ॥ १० ॥
प्रमाणानां प्रमात्री सा चिच्छक्तिरिति शब्द्यते ।
लीलाऽऽत्तवपुषोऽप्यस्या नान्तोऽस्ति महिमाऽम्बुधेः ॥११॥

शक्या गणयितुं सम्यक्पार्थिवाः परमाणवः ।
नान्तोऽस्ति महिमाराशेरस्याश्चित्रतनोः क्वचित् ॥ १२ ॥
तथापि सारतो लेशं त्रिपुरा चरितस्य ते ।
अभिधास्यामि तद्राम सावधानमनाः शृणु ॥ १३ ॥
पुरा क्षीराम्बुधिमान्ते शयानः फणितल्पके ।
आदिनारायणः साक्षात्तस्याः सत्त्वतनुर्हरिः ॥ १४ ॥
श्रिया लालितपादाब्जयुगलोऽतिविराजितः ।
भिन्ननीलमणिस्तोमकान्तिकान्ताङ्गसुप्रभः ॥ १५ ॥
प्रावृषेण्यपयोवाहमध्यप्रोद्यत्तडित्प्रभम् ।
पीताम्बरं यस्य कटितटे संराजते स्फुटम् ॥ १६ ॥
श्रीवत्सशोभिपृथुलपीनवक्षःस्थलाञ्चितः ।
वनमालातुलसिकागन्धाऽऽहूतमधुव्रतैः ॥ १७ ॥
अङ्गात्कान्तिच्छटेवेह निर्गता लक्ष्यते बहिः ।
पीनदीर्घचतुर्बाहुनालपद्मतलान्वितः ॥ १८ ॥
करसंधृतशङ्खारिगदापद्मविराजितः ।
राकेन्दुप्रतिमानाऽऽस्यो बिम्बोष्ठश्चारुनासिकः ॥ १९ ॥
कर्णोल्लसत्सुमकरकुण्डलद्वयशोभितः ।
विकसत्पद्मयुगलपरिभाविशुभेक्षणः ॥ २० ॥
भृङ्गाऽऽवलिनिभस्निग्धदीर्घकेशालिमण्डितः ।
नूतनरत्नावलिप्रोद्यच्चारुकोटीरमस्तकः ॥ २१ ॥
प्रेमाऽवलोकनिष्यन्दैरभिषिञ्चन्मुहुः ।
भक्तैः प्रल्हादमुख्यैस्तु सेव्यमानोऽन्वहं हरिः ॥ २२ ॥
आस्ते समस्तजगतीरक्षणदक्षिणः सदा ।
कदाचित्तत्र लोकानां स्रष्टा गच्छन् पितामहः ॥ २३ ॥
दण्डवत्प्रणिपत्याऽथो कृताञ्जलिपुटो विधिः ।
स्तुत्वा बहुविधैस्तोत्रैः स्थितः सम्भ्रान्तविह्वलः ॥ २४ ॥

अथ देवाः शतमखमुखाः सम्मुखतो हरेः ।
आजग्मुर्विंन्नदन्तो वै क्रुद्धाः संरक्तलोचनाः ॥ २५ ॥
प्रणिपत्य विधातारं हरिञ्च कमलापतिम् ।
उपविष्टाः क्रमात्तत्र सम्प्राप्ताऽऽज्ञा मधुद्विषः ॥ २६ ॥
तत्र पार्षदमुख्येन सुनन्देन प्रचोदितः ।
शतक्रतुरुपक्रामद्वक्तुं वृत्तं निजं कलेः ॥ २७ ॥
भगवन् कमलाकान्त पुराणपुरुषाऽव्यय ।
विन्नदासो वयं सर्वे यन्नाऽर्थे तन्निशामय ॥ २८ ॥
अहं शतक्रतुर्देवराजस्त्रिभुवनेश्वरः ।
मत्प्रोक्तं देवसदसि प्रसङ्गात्सकलं जगत् ॥ २९ ॥
मयाऽधिष्ठितमेवाऽऽस्ते यज्ञानामप्यहं पतिः ।
पर्जन्यो ऽग्निस्तथा वायुः सर्वे मम वशंवदाः ॥३०-३१*॥
तस्मादहं सर्वतस्तु श्रेष्ठो नोऽन्यस्तु कश्चन ।
इति मद्वचनं श्रुत्वा प्राह वैश्वानरस्ततः ॥ ३२ ॥
माऽभिमानं वृथा कार्षीरिन्द्र त्वं मूढभावतः ।
किन्न पश्यसि मां सर्वलोकश्रेष्ठं सुरोत्तमम् ॥ ३३ ॥
अहं मुखं त्वत्पुरोगदेवानामस्मि वासव ।
यूयं भुञ्जथ मद्दत्तं हविस्सर्वमखे पुनः ॥ ३४ ॥
न स्यामहं यदि भुवि न यज्ञाः स्युः कदाचन ।
अहं रुद्रस्य नेत्रात्मा संहराम्यखिलं जगत् ॥ ३५ ॥
सेनानीर्मत्तनुजो वै तेन दैत्यजिगीषवः ।
तस्माद्वृथा मोहमिमं त्यक्त्वा देवगणैर्वृतः ॥ ३६ ॥
मां समाराधय क्षिप्रं नो चेत्त्वं न भविष्यसि ।
श्रुत्वैतत्सोम आहाऽथ मा मोहं प्रतिपद्यथ ॥ ३७ ॥
जीवन्त्यन्नेन वै लोकास्तत्रैव मदनुग्रहः ।
यद्यहं विमुखो भूयां तर्हि शस्यं विना जगत् ॥ ३८ ॥

अत्रसीदेत्क्षणेनैव मदङ्गजनिताऽमृतैः ।
वासवाग्निमुखा देवा जीवन्त्यनुदिनं ननु ॥ ३९ ॥
वृथाऽभिमानेन यूयं मा विनाशमुपैष्यथ ।
एतद्वाक्यं समाकर्ण्य जगत्प्राणश्चुकोप ह ॥ ४० ॥
सोम किं कत्थसे वृथा क्षणेनाऽहमिदं जगत् ।
सोमाऽग्निवासवयुतं सदेवाऽसुरमानुषम् ॥ ४१ ॥
कीर्त्तिशेषं करिष्यामि नन्वहं सर्वनाशनः ।
दह्यमाने ऽपराधार्त्ते न सोमो न च वासवः ॥ ४२ ॥
न ब्रह्मविष्णुरुद्रा वा तदाऽऽसन्नितरे कुतः ।
तदायं मत्सखा ह्यग्निर्ब्रह्माण्डमखिलं मया ॥ ४३ ॥
प्रेधितो दहति क्षिप्रं ततोऽहं वेगवान्बली ।
शून्याऽऽत्मकं करोम्यग्निसद्वितीयस्तदा त्वहम् ॥ ४४ ॥
यदि मेऽनुग्रहो न स्यात्तत्र स्पन्देत किं वद ।
अहमेकः सर्वमहान्मत्तः स्पन्दति वै जगत् ॥ ४५ ॥
इत्येवं कलहे प्राप्ते सभायां स्वर्गवासिनः ।
अग्निपक्षाऽऽश्रिताः केचित्सोमपक्षाऽनुगाः परे ॥ ४६ ॥
अन्ये मारुतपक्षास्स्युश्चान्ये मत्पदवृत्तयः ।
एवं परस्परं वादैर्जाते वादैकतत्परे ॥ ४७ ॥
क्रुद्धे दैवगणे स्वस्वशस्त्राऽऽदानपरे तदा ।
वाचस्पतिः सुराचार्यः प्राह सान्त्वनपूर्वकम् ॥ ४८ ॥
मा नाशमापद्यथ बुधा मद्वाक्यं शृणुताऽऽदरात् ।
अत्राऽन्तमभिजानाति जलशायी जनार्दनः ॥ ४९ ॥
तत्र गत्वा क्षीरनिधिप्रान्ते ते पुरुषोत्तमम् ।
नत्वा तन्मुखतो ज्ञात्वा शान्तिम्भजत सत्वरम् ॥ ५० ॥
तद्वयं समनुप्राप्तास्तव पादाम्बुजं ततः ।
संशयं छिन्धि भगवन् त्वं गतिर्देवताऽऽपदि ॥ ५१ ॥

इति सम्प्रार्थितो विष्णुः शतक्रतुमुखैर्बुधैः ।
विचार्य देवकलहशान्त्युपायं चिरं तदा ॥ ५२ ॥
नैते मद्वाक्यविस्रब्धाः स्वस्वपक्षदृढाऽऽशयाः ।
नाऽत्र शान्तिर्मया शक्या विधातुमिति चिन्तयन् ॥ ५३ ॥
कपर्दिनं महादेवं दध्यौ हृदि जनार्दनः ।
ध्यानाऽऽहूतस्तदा शम्भुराविरासीत्सभासुवि ॥ ५४ ॥
वृषाऽऽरूढोऽम्बिकापार्श्वः शुद्धस्फटिकसन्निभः ।
बालशीतकरप्रोद्यत्कपर्दमुकुटोज्ज्वलः ॥ ५५ ॥
मालतीमालिकाऽऽकारस्वर्धुनीशोभिमस्तकः ।
फालनेत्रोज्ज्वलत्कीलिज्वालाज्वलितदिक्तटः ॥ ५६ ॥
भस्मत्रिपुण्ड्रलसितफालदेशाऽतिसुन्दरः ।
कुण्डलीकृतनागेन्द्रमूर्धरत्नत्विषाऽरुणा ॥ ५७ ॥
माणिक्यमुकुराऽऽभासा गण्डभूमिर्विराजते ।
प्रणयाऽवलोकसुधाधाराभिः प्लावयन्सतीम् ॥ ५८ ॥
वहन् रुद्राक्षहाराणामावलिं पृथुलोरसि ।
शूलिनं परशुं बिभ्रद्वराऽभीतिं कराऽम्बुजैः ॥ ५९ ॥
व्याघ्रत्वक्पटसंराजत्कटीतटकसद्वपुः ।
इभचर्मोत्तरीयाऽऽढ्यभस्मोद्धूलितविग्रहः ॥ ६० ॥
कर्पूराऽच्चलवद्राजद्वृक्षोपरि विराजिते ।
नवरत्नप्रोच्यमानमहासिंहासने स्थितः ॥ ६१ ॥
पद्माऽऽसनमुपद्माऽऽभपदपद्माऽतिशोभनः ।
प्रमथाद्यैः पार्षदैश्च बाणाद्यैर्भक्तशेखरैः ॥ ६२ ॥
नन्दीभृङ्गीप्रभृतिभिर्वर्णैः संसेवितो भवः ।
तमोमूर्तिः पराशक्तेस्त्रिपुरायाः महेश्वरः ॥ ६३ ॥
देवाऽधिदेवो जगतीसंहाराऽऽचारतत्परः ।
निरीक्ष्य तं विष्णुमुखाः प्रोत्थिता विबुधेश्वराः ॥ ६४ ॥

साष्टाङ्गं प्रणिपत्याऽथो सपर्यां समकल्पयन् ।
स भाजितो हरिमुखैर्भवो विष्णुं रमापतिम् ॥ ६५ ॥
अवरुह्य वृषश्रेष्ठात्परिष्वज्य ससम्भ्रमम् ।
स्वाऽऽसनेऽथ समातिष्ठो जनार्दनमुखैर्बुधैः ॥ ६६ ॥
मुरारेरिङ्गितं ज्ञात्वा दृष्ट्वा देवानपीश्वरः ।
कलिना मन्युना ग्रस्तान् जगतां स्वस्तये ततः ॥ ६७ ॥
त्रिपुरां जगतां धात्रीं प्रार्थयामास शङ्करः ।
शङ्करस्य व्यवसितं ज्ञात्वा विधिहरी ततः ॥ ६८ ॥
नत्वा स्मृतिपरौ तस्या जातौ शुद्धाऽऽत्मना युतौ ।
कारणैः पुरुषैरेवं संस्मृता सा परात्परा ॥ ६९ ॥
जगद्रक्षावितानाय प्रादुरासीत्पराम्बिका ।
महाशब्दः समभवद्वज्रनिष्पेषनिष्ठुरः ॥ ७० ॥
तेन शब्देन महता ब्रह्माण्डान्तरमायता ।
लेशीकृतमहावज्रप्रपातौघमहास्वनः ॥ ७१ ॥
प्रजज्वालाऽतितरसा तथा प्रागुत्तरा हि दिक् ।
द्योतना कोटितडितां युगपत्तु यथा तथा ॥ ७२ ॥
तत्तेजसा च शब्देन बुधाः सेन्द्राग्निवायवः ।
अन्धीभूताश्च बधिरीकृताः सन्त्रासवेपिताः ॥ ७३ ॥
मूर्च्छिताः पतिता भूमौ छिन्नमूला इव द्रुमाः ।
विसंज्ञाः स्रस्तवसना भ्रष्टकोटीरभूषणाः ॥ ७४ ॥
विक्षिप्तबाहुचरणाः समासाद्येतरेतरम् ।
संघशः पतिताः केचित्केचिद्दूरलतो बुधाः ॥ ७५ ॥
एवं भूते देवरणे विधिविष्णुमहेश्वराः ।
दृष्ट्वा महाप्रकाशैकस्तोमं व्याप्तदिगन्तरम् ॥ ७६ ॥
तत्तेजसो न मूर्धानं न मध्यं नाऽन्तमेव च ।
लक्षितं तैस्तदा सर्वलोकं व्याप्य व्यवस्थितम् ॥ ७७ ॥

आ पातालादा द्युमूर्ध्नः प्रकाशैकघनं महत् ।
खद्योतीकृतमार्त्तण्डकोटिकोटिमहद्द्युति ॥ ७८ ॥
ज्ञात्वा पराशक्तिलीलाविभवं कारणेश्वराः ।
दण्डवत्पतिता भूमौ भक्त्या तां शरणं गताः ॥ ७९ ॥
भूयो भूयः प्रणेमुस्ते दृष्ट्वा तत्प्रभवाद्भुतम् ।
कृताञ्जलिपुटाः स्तोतुं प्रवृत्ता जगदम्बिकाम् ॥ ८० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे सप्तमोऽध्यायः ॥ ५९८ ॥

# अथ अष्टमोऽध्यायः ।

स स्तवं कर्तुमुद्युक्तो ब्रह्मा लोकपितामहः ।
भक्तिसन्ततवागग्र्यैरानन्दभरिताऽन्तरः ॥ १ ॥
जय जय मातर्जगतां जय जय सर्वाधिके महेशानि ।
जय जय भक्ताऽऽर्त्तिहरे जय जय सर्वाऽन्तरस्थचिद्रूपे ॥२॥
जगतां जनिमुखरचना यद्भ्रूलीलाविलासतः कुर्मः ।
विधिहरिरुद्रेशाऽऽद्या वयं महेशीं नमामि तां देवीम् ॥३॥
स्रष्टाऽस्म्यहं मुरारिः पालयिता चैष नाशको रुद्रः ।
ईशस्तिरोधिमूलं सर्वं त्वच्छक्तिलेशतः सिद्धम् ॥ ४ ॥
सर्वाऽनुग्रहमूलं सदाशिवोऽप्येष तावकपादाब्जम् ।
संश्रित्यैव प्रभवति तस्मात्त्वं सर्वसेवनीयाऽसि ॥ ५ ॥
वामाज्येष्ठारौद्रीरूपेणाऽस्मान् स्थिताऽसि संस्थाप्य ।
यर्हि वयं तर्हि तथा भूता तुर्यं तथाऽम्बिकावपुषा ॥ ६ ॥
संहृत्य तावदाकाशं स्वस्थाने संस्थिताऽसि यदि जननि ।
तर्हि वयं प्रथिताख्याः पञ्चमहाप्रेतसंज्ञया जगति ॥ ७ ॥
अखिलाऽऽपत्समयेष्वप्यस्माकं त्वं विचित्रतनुविभवा ।
रक्षापरा यथा स्वे जनयित्री दारके जगन्मातः ॥ ८ ॥
लोकानां सकलानां त्वद्गुणजाता वयं त्रयस्त्वाद्याः ।
अस्मभ्यमपि त्रिभ्यः पुरा स्थितेस्त्वं प्रकीर्त्तिता त्रिपुरा ॥९॥
इति संस्तुत्य लोकानां स्रष्टा भक्त्यैकनिर्भरः ।
दण्डवत्पतितो भूमौ ध्यायन् हृदि पराऽम्बिकाम् ॥१०॥
अथ पीताम्बरो भक्त्या गद्गदस्वरतो हरिः ।
अस्तौषीदतिचातुर्यप्रकरोक्तिप्रगुम्फनैः ॥ ११ ॥

श्रीमातर्वयमिह ते गुणप्रभूतास्त्वच्छास्ति सततमतीव जागरूकाः ।
कुर्म स्तज्जननि पदाम्बुजैकभक्तिं वाञ्छामो भवतु तदेव सर्वदा नः॥१२

देवेशि त्वयि सति सर्वभाववर्ग-
स्तत्तद्रूपगुणप्रभेदभिन्नगात्रः ।
नानाशक्तिविभवशोभितो विभानो-
नोचेद्देवि किमपि नैव भावितः स्यात् ॥ १३ ॥

भूरापोऽनलचरखानि जङ्गमानि
भूतानि स्थिरविभवानि चाऽपि माता ।
दिक्कालौ सदसदपीह सर्वमेत-
त्वद्रूपं न भवति लेशतस्त्वदन्यत् ॥ १४ ॥

लोकेषु प्रथितमहाप्रभावयुक्ता
ब्रह्माद्या वयमिह लोकनाथनाथाः ।
त्वत्पीठप्रपदनिकेतना हि जाताः
सेवाऽतस्तव पदपद्मयोर्नमस्ते ॥ १५ ॥

रूपं ते परममतीन्द्रियं श्रुतीनां
मूर्धानोऽप्यतिचकिता वदन्ति नैव ।
त्वन्मायाविभवपराकृताऽन्तरङ्गा
ये ते त्वां कथमिह तादृशीं विदन्ति ॥ १६ ॥

भूयस्त्वत्पदसरसीरुहैकसेवाऽ-
न्यग्भूताऽखिलमलदोषसङ्घयुक्तः ।
श्रीनाथाऽमृतवचसा सुशुद्धचित्तो
वेत्ति त्वां परमशिवात्मरूपिणीं सः ॥ १७ ॥

सर्वज्ञोऽप्यजनित वाङ्मयो हि वेदस्त्वद्रूपं वदति गुणप्रभेदभासम् ।
तस्मात्त्वं परकृपया बिभर्षि चैतत्तेजोघात्मकवपुरेतदस्मदर्थम् ॥१८॥

रूपश्चैतदपि महाप्रकाशमात्रं त्वत्सेवाविभवत एव लक्षितं नः ।
देवेन्द्राद्यखिलसुरौघदोषं शान्त्यै मातस्ते भवतु समीहितस्वरूपम्॥१९॥

एवं सुरारिः संस्तुत्य त्रिपुरां परमेश्वरीम् ।
भक्तिपीयूषवारिधिमग्नो नैक्षत किञ्चन ॥ २० ॥
अथ स्तोतुं पशुपतिः समारेभे कृताञ्जलिः ।
भक्तिनिर्भरसंराजत्सुकोमलवचोगणैः ॥ २१ ॥
नमामि परमेश्वरि त्वामिह सर्वदेवोत्तमै-
र्विधातृहरिशङ्करैः परमपूरुषैः पूजिता ।
अतस्त्वदधिकः कथं भवति कोऽपि देवाऽभिध-
स्त्वमेव सकलोत्तमा भवसि राजराजेश्वरी ॥ २२ ॥
धिगस्तु मनुजाऽभिधाम्बरपशून् विमूढान् हि तान्
विहाय परमेश्वरीं पराशिवां समस्तोत्तमाम् ।
मुधा हि विबुधाऽधिपान् परिचरन्ति ये कामिनो
विहाय सुरशाखिनं मृतकरीरवृक्षाऽऽश्रयान् ॥ २३ ॥
जगज्जननि तावके चरणपङ्कजे मे सदा
स्थिरीभवतु मानसं विषयवासनानिर्गतम् ।
तदीयपरिसेवने सततमस्तु पाणिद्वयं-
वचो भवतु कीर्त्तने गुणगणाऽमृताब्धेः शिवे ॥२४॥
विधातृहरिशङ्करप्रियतमाः सतीः शारदा-
रमागिरिसुताऽभिधास्तव कलाः सुमुख्या वयम् ।
मुखे हृदि निजाऽर्धके वपुषि धारयन्तः सदा
जगद्विसृतिधारणप्रलयकर्मसु प्रोद्यताः ॥ २५ ॥
त्वमेव विसृतिविधौ स्थितिरहीशपर्यङ्कके
मयि प्रलयनं शिवे गुणविलापना चेशके ।
अनुग्रहकृतिः शिवे परतरे परब्रह्मणि
स्थिता परशिवाऽऽत्मना सहजचित्प्रकाशाऽऽत्मिका ॥२६॥
भुवः कठिनता यथा रस इवाऽप्सु रूपं शुचे-
र्यथा च मरुतो गतिर्भवति शून्यता खे यथा ।

यथा भवति चोष्मता दिनकृतस्तथा त्वं शिवे
शिवादितनुधान्तके परशिवे च साराऽऽत्मिका ॥ २७ ॥
बुधाधिपमुखामरास्तत्र महामहेश्याः पर-
प्रभावपरिमोहिताः परिभवन्ति चाऽन्योन्यतः ।
समुद्धर तवार्भकान् जननि दानवारीन् शिवे
विभावयत्कथाऽमृताऽप्लुतकटाक्षलेशैः सकृत् ॥ २८ ॥
जगज्जननि सततं विषयदावसन्तापिता-
ञ्जनान् करुणया दृशाऽमृतरसौघनिःष्यन्दया ।
विभावय परात्परे सकलतापसंहारिणी
त्वमेव जगदाश्रया सततमस्तु तुभ्यं नमः ॥ २९ ॥
एवं संस्तुत्य सद्भक्त्या ब्रह्माद्या भक्तिनिर्भराः ।
दण्डवत्पतिता भूमौ ध्यायन्तस्त्रिपुराऽम्बिकाम् ॥ ३० ॥
अथ सा त्रिपुरेशानी प्रसन्ना संस्तवैः स्तुता ।
सुराणां तमपाकर्त्तुं मोहं सावयवा बभौ ॥ ३१ ॥
तप्तकाञ्चनवर्णाऽङ्गी दिव्याऽऽभरणभूषिता ।
अष्टादशभुजा कन्यारूपिणी सुस्मिताऽऽनना ॥ ३२ ॥
मञ्जीरनूपुराऽऽरावझणज्झणितदिक्तटा ।
तलपादप्रभाक्षिप्तनवविद्रुमपल्लवा ॥ ३३ ॥
सुमन्दपेशलगतिसतीर्थीकृतहंसिका ।
कौसुम्भाऽम्बरसंराजत्कटीतटविराजिता ॥ ३४ ॥
गम्भीराऽऽवर्त्तसदृशनाभिहृद्वलिराजिता ।
रक्तकौशेयोत्तरीयसंशोभितभुजाऽन्तरा ॥ ३५ ॥
धनुः पाशन्तथा घण्टां डमरुं रत्नपात्रकम् ।
खेटकं जयमालाञ्च पङ्कजं पुस्तकन्तथा ॥ ३६ ॥
चिन्मुद्रां चक्रशङ्खौ च खड्गं शूलं परश्वधम् ।
गदां सृणिं शरान् हस्तैर्बिभ्राणा पल्लवाऽरुणैः ॥ ३७ ॥
हेमपद्मस्रजं कण्ठे रत्नकेयूरशोभिताम् ।
रत्नाऽङ्गुलीयसंराजदङ्गुलीकोरकोज्ज्वला ॥ ३८ ॥

नवरत्नलसद्ग्रैवेयकशोभितकन्धरा ।
मणिमाङ्गल्यशोभाऽऽढ्या श्रीचन्दनसुरूषिता ॥ ३९ ॥
चन्द्रसूर्यसमानाऽऽभताटङ्कयुगलोज्ज्वला ।
पक्वबिम्बफलच्छायादन्तच्छदविराजिता ॥ ४० ॥
नासाऽऽभरणमाणिक्यद्विगुणाऽरुणदृक्छदा ।
पद्मपत्रनिभत्र्यक्षलीलाऽऽहूतमृगीगणा ॥ ४१ ॥
कस्तूरीतिलकाऽऽख्यातमुखपूर्णेन्दुलाञ्छना ।
मुखाम्बुजमिलिन्दौघसमानचिकुरावलिः ॥ ४२ ॥
मृदुदीर्घघनश्यामकेशाऽऽमोदसुमेदुरा ।
अनर्घ्यमणिकोटीरप्रभापूर्णद्युमण्डला ॥ ४३ ॥
फालशोभिनिशानाथकलिकोत्तंसमण्डिता ।
सदा कुमारिका देवी परब्रह्मस्वरूपिणी ॥ ४४ ॥
ईदृशी सा पराशक्तिस्त्रिपुरा लोकसुन्दरम् ।
लीलार्थं सन्धृतवती रूपं परमपावनम् ॥ ४५ ॥
ततो विधिहरीशानानाह गम्भीरया गिरा ।
वत्साः शृणुध्वं मद्वाक्यं कल्याणं करवाणि वः ॥ ४६ ॥
देवानां मोहनाशाय प्रादुर्भूताऽस्मि सम्प्रति ।
इत्युक्त्वाऽमृतवर्षिण्या दृष्ट्या देवान् सुमूर्च्छितान् ॥ ४७ ॥
मृतप्रायान् समालोक्य समाश्वस्तांस्तदाऽकरोत् ।
अथेन्द्रप्रवरा देवा निद्रामुक्ता इवोत्थिताः ॥ ४८ ॥
किमिदं किमिदञ्चेति प्रोचुरन्योन्यसङ्गताः ।
न विजानाति कोऽप्येनां परमाद्भुतरूपिणीम् ॥ ४९ ॥
अथाऽग्निं प्रेषयामासुरिन्द्राद्याः सुरसत्तमाः ।
त्वमग्ने सत्वरं गच्छ जानीह्येतं महत्तरम् ॥ ५० ॥
भूतं कस्मात्समुद्भूतं किं वीर्यं किं स्वरूपकम् ।
इत्याकर्ण्य हविर्भक्षो वाक्यमिन्द्रमुखोदितम् ॥ ५१ ॥
साटोपमुपसृत्याऽथ प्राह तां परमेश्वरीम् ।
तत्प्रभाऽऽक्षिप्ततेजस्कः कथञ्चित्सविधं गतः ॥ ५२ ॥

का त्वं कुमारि वद मे किंवीर्या त्वं कुतः स्थिता।
जिज्ञासुरहमायातस्त्वां वरेण्यां महत्तराम् ॥ ५३ ॥
श्रुत्वा तद्वाक्यमथ सा जगाद परमं वचः।
वद त्वं कतमः कस्मादागतस्ते च किं बलम् ॥ ५४ ॥
अनन्तरं ममाऽशेषवृत्तान्तः कथ्यते मया।
इत्युक्तोऽग्निरुवाचैनां शृणु कल्याणि मद्वचः ॥ ५५ ॥
अहं हुताशनः साक्षान्मुखं विबुधसन्ततेः।
जिज्ञासिता त्वमिन्द्राद्यैः प्रहितोऽहं तवाऽन्तिके ॥ ५६ ॥
वीर्यं मे महदुत्कृष्टममोघमतिदारुणम्।
यदिदं दृश्यते किञ्चिज्जगत्स्थावरजङ्गमम् ॥ ५७ ॥
भस्मीकुर्यां क्षणेनैव नैवमन्योऽस्ति कश्चन।
इत्याकर्ण्य शुचेर्वाक्यं प्रहस्य प्राह सा परा ॥ ५८ ॥
अग्ने तवेदृशं वीर्यं यदि तर्ह्याशु मेऽग्रतः।
प्रदर्शयैतन्निहितं तृणं दह तवाऽग्रतः ॥ ५९ ॥
श्रुत्वाऽवहेलनं वाक्यं क्रुद्धो वैश्वानरस्तदा।
प्राह चाऽतिस्तब्धधिया स्वात्मानं मानयन् गुरुम् ॥ ६० ॥
नूनं त्वमबला बाला तस्मान्मुग्धप्रभाषिणी।
सर्वभस्मीकरो योऽहं तृणदाहे नियोजितः ॥ ६१ ॥
करोमि तस्य सदृशं सतृणां त्वां दहेऽधुना।
इत्युक्त्वा क्रोधताम्राऽक्षो महाज्वालापरीवृतः ॥ ६२ ॥
भक्षितुं तां तृणमपि पपात तरसा शुचिः।
महाबलोद्योगयुतः सर्वप्राणेन सत्त्ववान् ॥ ६३ ॥
प्रवृत्तोऽपि तृणं दग्धुं न शशाक धनञ्जयः।
हिमाऽब्धिपतितोल्केव शान्ताऽर्चिः शीततां गतः ॥ ६४ ॥
वेपमानः सुशीतेन खद्योतसदृशप्रभः।
करकेव समस्ताऽङ्गमारब्धं गलितुं यदा ॥ ६५ ॥
तदा समस्तप्राणेन पलायनपरोऽभवत्।
लज्जितः कुण्ठितोऽर्चिष्मानन्तर्धानं गतस्ततः ॥ ६६ ॥

इन्द्राय चाऽनदद्वृत्तं न ज्ञातुमशकं हरे।
तदग्रे संस्थितं भूतं महासत्त्वपराक्रमम् ॥ ६७ ॥
अथेन्द्र आह शुभ्रांशुं ज्ञातुं भूतं महोन्नतम्।
त्वं गच्छ सोम सुजवाज्जानीह्येतं महत्तरम् ॥ ६८ ॥
भूतं कस्मात्समुद्भूतं किंवीर्यं किंस्वरूपकम्।
इत्याऽऽकर्ण्याऽथ शुभ्रांशुर्वाक्यमाखण्डलोदितम् ॥ ६९ ॥
साटोपमुपसृत्याऽथ प्राह तां परमेश्वरीम्।
तत्प्रभाहततेजस्कः कथञ्चित्सविधं गतः ॥ ७० ॥
का त्वं कुमारि वद मे किंवीर्या त्वं कुतो ह्यसि।
जिज्ञासुरहमायातस्त्वामद्भुततमां स्त्रियम् ॥ ७१ ॥
श्रुत्वा शुभ्रांशुवाक्यं सा जगाद परमं वचः।
वद त्वं कः कुतः प्राप्त इमं देशश्च किम्बलः ॥ ७२ ॥
अनन्तरं मया स्त्रीयद्वृत्तं संकथयामि ते।
सोम एवं तया प्रोक्त आगत्यैनामुवाच ताम् ॥ ७३ ॥
सोमराज इति ख्यातः सर्वलोकस्य पालकः।
ओषधीनामहं स्वामी जीवयाम्यमृतांशुभिः ॥ ७४ ॥
तृणवीरुद्गुल्मवृक्षान्मया जीवति वै जगत्।
एतत्सोमवचः श्रुत्वा महस्य प्राह सा परा ॥ ७५ ॥
यदि सोमेदृशं वीर्यमाशु दर्शय मेऽग्रतः।
तृणं मया दह्यमानं निहितञ्चैतदग्रतः ॥ ७६ ॥
संशामय स्वकिरणैरमृताढ्यैः सुशीतलैः।
श्रुत्वैतत्फल्गुवचनं मत्वा स्वात्माऽवहेलनम् ॥ ७७ ॥
क्रुद्धः प्राह मदोत्सिक्तः शशाङ्को बलगर्वितः।
अबला त्वं बालभावादज्ञात्वा मत्पराक्रमम् ॥ ७८ ॥
उक्तवत्यसि यद्वाक्यं तस्याऽपचितिमेव ते।
दिशामि त्वां शीतकरैर्जडीभूतां करोम्यहम् ॥ ७९ ॥

इत्युक्त्वाऽनेककिरणैः शीतनीहारवर्षणैः।
ववर्ष चाऽतिवेगेन वलाहकगण इव ॥ ८० ॥
तस्य नीहारधारास्ताः फालनेत्राऽर्चिर्भिर्हताः।
कीर्त्तिशेषमनुप्राप्तस्तदाऽप्लुष्टकलेवरः ॥ ८१ ॥
सोमोऽपि दन्दह्यमान ईषत्प्राणाऽवशेषितः।
भीतः पलायितः शीघ्रं माहेन्द्रं नाऽशकं हरे ॥ ८२ ॥
ज्ञातुं तत्तु महाभूतं महासत्त्वपराक्रमम्।
अथ शक्रः प्राह वायुं तत्सत्त्वप्रतिवेदने ॥ ८३ ॥
वायो त्वं सत्वरं गच्छ जानीह्येनं महत्तरम्।
भूतं कस्मात्समुद्भूतं किंवीर्यं किंस्वरूपकम् ॥ ८४ ॥
इति श्रुत्वा वचो वायुः पुरन्दरमुखोदितम्।
साऽभिमानं गतस्तत्र यत्र श्रीपरमेश्वरी ॥ ८५ ॥
उवाचाऽऽतिवलं मत्वा स्वात्मानं सावहेलनम्।
का त्वं वदाऽवले कस्माद्देशात्प्राप्ताऽत्र किंवला ॥ ८६ ॥
पुरन्दरादिप्रहितस्त्वां जिज्ञासुरिहाऽऽगतः।
वायुवाक्यमिति श्रुत्वा सा प्रोवाच शुभं वचः ॥ ८७ ॥
वद त्वं कः कुतः प्राप्तः किंवलः किंपरायणः।
वदाम्यनन्तरं यस्ते कृतः प्रश्नस्तदुत्तरम् ॥ ८८ ॥
इति श्रुत्वा वचो देव्याः प्रोवाचाऽऽपन्त्य तां पराम्।
अबले शृणु मे वृत्तं लोकोत्तरतमं शुभम् ॥ ८९ ॥
अहन्त्वतिवलो वायुर्जगत्प्राणो महागतिः।
इन्द्रादिसन्निधेः प्राप्तो जगतामाश्रयः परः ॥ ९० ॥
मया संवेपिताः काले महान्तोऽपि च भूभृतः।
ज्वालाणुका इव सदा प्रचरन्ति च सर्वतः ॥ ९१ ॥
समुद्राश्चाऽपि शुष्यन्ति मयि क्षुब्धे प्रभञ्जने।
गतिं मम स्थगयितुं समर्थो नैव कश्चन ॥ ९२ ॥

इति श्रुत्वा मरुद्वाक्यं प्राह सा परमेश्वरी ।
ननु वायो समर्थस्त्वं वीर्यं पश्यामि तावकम् ॥ ९३ ॥
तृणश्चैतत्पुरो न्यस्तं समाहर्तुं तदर्हसि ।
कदर्थनावचश्चैतच्छ्रुत्वा मन्युपरीवृतः ॥ ९४ ॥
प्राहाऽधिक्षेपणं वाक्यं मारुतो बलगर्वितः ।
विनाशमवले कस्मात्प्रार्थयस्यतिमूढधीः ॥ ९५ ॥
महाबलं महावेगं कः सोढुं शक्नुयाद्बली ।
मूढा त्वमवलिप्ताऽसि शमयामि मदं तव ॥ ९६ ॥
आदौ तृणायितां त्वां वै नामशेषां करोम्यहम् ।
स्थिरीभव सहस्वाऽऽशु मम वेगं सुदुःसहम् ॥ ९७ ॥
इत्युक्त्वा तां परां देवीं मारुतो मन्युना वृतः ।
महाबलेन वेगेन यावद्धन्तुं मनो दधे ॥ ९८ ॥
तावत्पङ्गुमिवाऽऽत्मानं दृष्ट्वा हीनगतिं तदा ।
सर्वप्राणेन चोद्युक्तः पदान्न चलितुं क्षमः ॥ ९९ ॥
तदा ह्रिया भयेनाऽपि पलायनपरोऽभवत् ।
पुरन्दरं प्राह वायुर्नैतज्ज्ञातुमलं मम ॥ १०० ॥
अमोघं तन्महाभूतं महासत्त्वपराक्रमम् ।
एवमग्नीन्दुवायूनां दृष्ट्वा तस्मात्पराभवम् ॥ १०१ ॥
पुरन्दरः शङ्कितोऽभूत् किं मे तदिति चिन्तयन्
चिन्तयित्वाऽपि बहुधा नाऽध्यगच्छत किञ्चन ।

× × × ×

विमना इव संमूढो न किञ्चित्प्रत्यपद्यत ॥ १०२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
अष्टमोऽध्यायः ॥ ७०० ॥

# अथ नवमोऽध्यायः ।

चिन्तयित्वा चिरं शक्रस्तज्जये कृतनिश्चयः ।
बलदर्पसमुन्नम्रो वज्रमुद्यम्य सत्वरः ॥ १ ॥
जगामाऽऽरुह्य जीमूतं यत्र सा संस्थिताऽम्बिका ।
तां दृष्ट्वा सुकुमाराङ्गीं पद्मकिञ्जल्कवर्चसम् ॥ २ ॥
स्वसौन्दर्यजिताऽनेककोटिकन्दर्पसौभगाम् ।
दूरे स्थितस्तां पप्रच्छ तेजसा मुषितेक्षणः ॥ ३ ॥
का त्वं पद्मपलाशाक्षि व्याप्याऽङ्गप्रभया जगत् ।
स्थिताऽसि कन्या कस्य त्वं कस्मादत्र समागता ॥ ४ ॥
रूपन्ते रुचिरं तद्वदङ्गविन्याससौष्ठवम् ।
वन्द्यो ममाऽमरपुरे सन्ति रम्भामुखाः स्त्रियः ॥ ५ ॥
नेदृशी देवलोके वा भुवि वाऽपि रसातले ।
मया दृष्टा सुचार्वङ्गी भुजाऽष्टादशकोज्ज्वला ॥ ६ ॥
वद शीघ्रं मया पृष्टा सत्यमत्र यथा स्थितिम् ।
तच्छ्रुत्वा शक्रवचनं पराम्बा प्राह तं प्रति ॥ ७ ॥
कस्त्वं किमर्थं सम्प्राप्तः किं वीर्यस्त्वं किमुद्यमः ।
श्रुत्वा वृत्तं तव ततो वदामि मम संस्थितिम् ॥ ८ ॥
इति श्रुत्वा वचो देव्याः प्राह शक्रः सहस्रदृक् ।
शृणु मे वचनं सम्यगहं सुरपुरेश्वरः ॥ ९ ॥
शतक्रतुस्त्रिभुवनश्रियो भोक्ता महाबलः ।
त्वां जिज्ञासुरिह प्राप्तो नान्योऽस्ति भुवने क्वचित् ॥१०॥
बलेन यशसा लक्ष्म्या तुल्यो वीर्येण सम्पदा ।
सदा भुवनशास्ताऽहं देवा मम वशंवदाः ॥ ११ ॥
वज्रं ममाऽऽयुधञ्चैतदमोघं सर्वदुःसहम् ।
एतेन प्रहृतेनैव न जीवन् यास्यति क्वचित् ॥ १२ ॥

बहवो दानवा दैत्या महाबलपराक्रमाः ।
सकृद्वज्रस्य संस्पर्शात्कृतान्तशरणं गताः ॥ १३ ॥
बलः पाकोऽथ नमुचिर्वृत्रस्त्वाष्ट्रोऽपि तारकः ।
समस्तलोकजेतारो गता वज्रात्पराभवम् ॥ १४ ॥
बहुनाऽत्र किमुक्तेन न मे तुल्यबलः क्वचित् ।
जानीहि मां महेन्द्राख्यं महाबलपराक्रमम् ॥ १५ ॥
इतीन्द्रवचनं श्रुत्वा प्राह सा परमेश्वरी ।
नूनमिन्द्र मया ज्ञातस्त्वं कश्यपतनूद्भवः ॥ १६ ॥
इदं तृणं सुनिहितं तवाऽग्रे लघु बल्वजम् ।
यत्किञ्चित्तव वीर्यं वा वज्रस्याऽपि शतक्रतो ॥ १७ ॥
प्रदर्शयाऽस्मिन्नो चेत्त्वं वैश्वानरमुखा इव ।
पलायमानं पश्यामि त्वामपीन्द्र ह्रिया नतम् ॥ १८ ॥
निशम्यैतद्वचो देव्याः शक्रः प्रस्फुरिताऽधरः ।
उद्यम्य वज्रं संक्रुद्धस्तां प्रहर्त्तुं मनो दधे ॥ ९ ॥
उद्यते स्वायुधं शक्रे सहसा ज्वलिता दिशः ।
तस्मिन्निन्द्रे स्थिते चोद्यद्वज्रहस्तेऽतिकोपने ॥ २० ॥
स्मितमीषच्चकाराऽम्बाहसत्कोटीन्दुचन्द्रिकम् ।
स्मितमात्राच्छतघ्नेरुद्यतः सायुधः करः ॥ २१ ॥
संस्तम्भितस्तथा पादोवाङ्नेत्रादीन्द्रियाणि च ।
ईषन्न वेपितुं शक्तो हस्तादिकमपि स्वयम् ॥ २२ ॥
एवं संस्तब्धसर्वाङ्गो मघवा लिखिताऽऽकृतिः ।
वक्तुं कर्त्तुं प्रचलितुं नेष्ट ईषदपीश्वरः ॥ २३ ॥
एवं भूतं सहस्राक्षं दृष्ट्वा काष्ठनराकृतिम् ।
अन्वतप्यन्त विबुधा भयेन परिवेपिताः ॥ २४ ॥
दीना नष्टस्वरा देवा हा हेत्युच्चैर्विचुक्रुशुः ।
अथेन्द्रस्तब्धमात्मानमपराधात्स्वयं विदन् ॥ २५ ॥

तत्कालाऽऽपद्रक्षणार्हं सस्माराऽऽङ्गिरसं गुरुम्।
तदा संस्मृतमात्रस्तु हरिणाऽऽङ्गिरसो मुनिः॥ २६॥
देव्या कृतं मदशमं ज्ञात्वेन्द्रस्याऽभ्यगात्त्वरन्।
योगिराजः सुमेधावी ज्ञातज्ञेयपराऽवरः॥ २७॥
क्षणेन तत्र सम्प्राप्तो यत्रेन्द्रस्तु जडीकृतः।
दृष्ट्वा बुधगणाः सर्वे जीवमिन्द्रावनक्षमम्॥ २८॥
स्रोतोऽभिरुह्यमानानां नौप्राप्तिरिव सम्बभौ।
गीष्पतेर्दर्शनाद्देवमाश्वस्तास्त्रिदशास्तदा॥ २९॥
एतस्मिन्नन्तरे तत्र धिषणो दीर्घदर्शनः।
विश्वेश्वरीं समालोक्य हर्षरोमाञ्चपीवरः॥ ३०॥
आनन्दाऽश्रुकलारुद्धनेत्रो मूर्ध्नि कृताऽञ्जलिः।
साष्टाङ्गं प्रणिपत्याऽथो गद्गदस्वरसंयुतः॥ ३१॥
बद्धाञ्जलिः परामम्बामीडितुं समुपाक्रमत्।
गूढाशाया मोदभरैर्वाक्पुष्पैः पूजयन्निव॥ ३२॥

जय जय शङ्करि जगदभयङ्करि विधिमुखकिङ्करि वेदनुते।
दुष्टभयङ्करि शिष्टशुभङ्करि सकलवशङ्करि पाहि सुरान्॥ ३३॥
जगतां जननस्थितिहरणादिषु विधिहरिशङ्करविबुधेशाः।
तव पदपङ्कजसेवाऽऽसादितकरुणालेशाः प्रभवन्ति॥ ३४॥
यदि तव करुणालेशविहीनो विबुधगणेशोऽप्यतिमूढः।
नेदं चित्रं त्वद्विमुखोऽपि हि न क्वचिदीशः परमेशः॥ ३५॥
विधिहरिमुख्या अपि तव लीलां न प्रभवः स्युर्वर्णयितुम्।
तत्र कथं मम शक्तिः स्तोत्रे तव महिमाऽब्धेर्वद मातः॥ ३६॥
वाचः प्राश्वस्तव निश्वसितं विधिहरिमुख्या गुणजाताः।
लीलाजनितं सकलं तत्त्वे न विदन्त्यवरास्त्वामम्बाम्॥ ३७॥
सकलचराऽचरवपुराद्या त्वं स्वाऽऽश्रितलोकाऽलोकगणा।
नाऽन्यत्किञ्चित्तव शरणं स्वं विभवं श्रित्वा ननु भासि॥ ३८॥

तन्तुभिरोतः प्रोतो यद्वत्पट इह हेम्ना कटकाद्यम् ।
अखिलञ्चोतं प्रोतं तद्वत् कलया त्रिपुरे परमपरम् ॥३९॥
वर्णाद्या अपि षड्विधमार्गाः कालाद्या अपि नवसङ्ख्याः ।
स्थैर्याद्या अपि पञ्चकला ननु चिच्छक्तेस्त्वन्नास्त्यन्यत्॥४०॥
सर्वस्याऽदौ परचितिवपुषा विलससि चैका शिवरूपा ।
द्रष्टा श्रोता वक्ता नान्यस्तत्त्वां स्तोतुं कः शक्तः ॥ ४१ ॥
दिनमणिबिम्बात्किरणगणा इव तस्यास्त्वत्तः सकलमभुत् ।
तस्मात्त्वत्तो नान्यत्किञ्चन दृश्याऽदृश्यं जगदखिलम् ॥४२॥
देवेशि त्वद्दुर्घटशक्त्याऽऽच्छादितनेत्रास्त्वद्रूपम् ।
जानीयुस्ते कथमिह विबुधाः पालय सर्वान्सुरसङ्घान्॥४३॥
एष महेन्द्रस्तव पदसविधे स्तब्धतनुस्त्वां न विजानन् ।
ईषद्दृष्ट्या करुणारसया पाहि शतक्रतुममरेशम् ॥ ४४ ॥
इति संस्तुत्य गीर्वाणगुरुः परमहेश्वरीम् ।
नत्वा भूयः प्रार्थनया प्रसादं योजयद्गुरौ ॥ ४५ ॥
अथ तस्याः कृपादृष्टिलेशपीयूषसंप्लुतः ।
इन्द्रः पुरेव प्रकृतिङ्गतोऽहं स्तम्भवर्जितः ॥ ४६ ॥
ज्ञात्वा विश्वेश्वरीं सम्यग्गुरोर्वाक्याद्यथाविधि ।
भक्त्या परमया युक्तो देवीं सर्वोत्तमोत्तमाम् ॥ ४७ ॥
पराशक्तिं सर्वजगन्निदानं शुद्धचिन्मयीम् ।
भूयः प्रणम्य साष्टाङ्गं कृताञ्जलिपुटो हरिः ॥ ४८ ॥
भक्त्या गृहीतप्रस्वान्तः किञ्चिद्विनतकन्धरः ।
अस्तौषील्लोकजननीं मधुकोमलवाग्गणैः ॥ ४९ ॥ ॥
शृण्वतां सर्वदेवानां सविधे बलशासनः ।
तस्याः कृपादृष्टिलेशाच्छिन्नो मायासु बन्धनः ॥ ५० ॥
नमस्ते त्रिपुरे मातर्नमः परशिवाऽऽश्रये ।
नमः कारणसत्ताऽऽख्यपराऽऽनन्दसुधाऽऽत्मिके ॥ ५१ ॥

त्वं हि कारणरूपाऽसि सदसद्वस्तुसन्ततेः ।
त्वत्तः सकलमुत्पन्नं त्वयि सर्वं प्रतिष्ठितम् ॥ ५२ ॥
त्वयि प्रलीयमानञ्च त्वं सत्यं सर्ववस्तुषु ।
मृत्तिकेव घटादीनां भूषणानाञ्च काञ्चनम् ॥ ५३ ॥
नाऽन्यस्त्वत्तो लेशतोऽपि जगदेतद्भवेत्क्वचित् ।
जलं विना शैत्यमिव प्रकाशोऽग्नेरिव क्वचित् ॥ ५४ ॥
द्युमणेः शक्तयो यद्वत्किरणाः संस्थितास्तथा ।
त्वत्तः सकलवस्तूनि विभान्ति परमेश्वरि ॥ ५५ ॥
विधौ हरौ शिवे तद्वदन्यस्मिन् देवताऽभिधे ।
यत्सारमस्ति तत्सर्वं तव शक्तेर्विजृम्भितम् ॥ ५६ ॥
नामाऽऽकृतिक्रियाहीना संविन्मात्रैकरूपिणी ।
अनुग्रहाय लोकानां रूपं नाम क्रियाऽपि ते ॥ ५७ ॥
तस्मादनन्यः सततं पुरुषार्थेच्छुरन्वहम् ।
त्वामेव भक्त्या सेवेत श्रितचिन्तामणिं शिवे ॥ ५८ ॥
त्वयि प्रसन्ने किमिहास्त्यलभ्यं त्वय्यप्रसन्ने किमिहाऽस्ति लभ्यम् ।
विहाय सेवां जगदीशशक्ते वृथैव चाऽन्यत्र रता विमूढाः ॥५९॥
मितेश्वरेणाऽपि हि सम्प्रबद्धा विना तदाराधनतो न मुक्ताः ।
महेशशक्त्या दृढसम्प्रबद्धास्तदप्रसादात्कथमस्तु मुक्तिः॥६०॥
अनादिशक्त्या तव मायया वै बद्धा जनाश्चिरकालाद्विमूढाः ।
हित्वाऽऽत्मशक्तिं परदेवतां त्वां दैवाऽभिधान् भिन्नरूपान्नमन्ति६१॥
त्वमेव सर्वाऽऽद्यतया परात्परा त्वत्तो जाता देवताऽऽख्याः कथं स्युः।
यद्वद्धेम्नोऽन्यो न भूषागणः स्यादाख्याशेषास्तद्वदीशादिदेवाः॥६२॥
ईशाद्येष्वप्यन्ततस्त्वीश्वरत्वं सर्वेश्यास्तेऽनुग्रहस्यैव लेशः ।
तन्मामोहो जाह्नवीमतिसंस्थां हित्वा कुल्यान्वेषका दावदग्धाः॥६३॥
सत्त्वं मूढं मृतके देहकाऽऽख्ये सर्वेशत्वाऽऽद्यभिमानेन युक्तम् ।
मातर्भूयस्त्वघकृत्यं दुरीहं त्वत्तो ऽन्या का रक्षितुं मां समर्था ॥६४॥

सा त्वं विश्वग्रसंवित्री परांम्बा सर्वं मेऽघं क्षन्तुमेवाऽर्हसीति ।
न प्राध्यर्या स्वे तोककृते मातुरेषा क्षान्तिर्यस्मात्सहजा सुप्रसिद्धा॥६५॥
योऽहं तेऽग्रे स्तब्धकायोऽभवं वै नैतद्रोपादपि तेऽनुग्रहः स्यात् ।
रोषे सर्वं भस्मशेषं समीयान्मातुस्तोके तर्जनैवाऽतिदुष्टे ॥ ६६ ॥

एवं बहुविधैर्वाक्यैः स्तुत्वा पीयूषसंस्रवैः ।
क्षमापयत्परां देवीं महेन्द्रो भक्तिनिर्भरः ॥ ६७ ॥
शक्रमेवंविधं दृष्ट्वा पावकाद्या दिवौकसः ।
ज्ञात्वा तां लोकजननीमपराधमपि स्वकम् ॥ ६८ ॥
भीताः प्राञ्जलयो नेमुर्दण्डवच्चरणाऽन्तिके ।
स्तुत्वा विविधसूक्तैस्तां क्षामयामासुरम्बिकाम् ॥ ६९ ॥
तदा सा परमेशानी विधिमुख्यान् दिवस्पतीन् ।
प्रसन्ना प्राह कल्याणी कल्याणं परमं वचः ॥ ७० ॥
भो भो देवा विधीन्द्राद्याः शृणुध्वं वचनं मम ।
अप्रमादिभिरायत्तैः स्वस्वकार्येषु सततम् ॥ ७१ ॥
भवितव्यं भवद्भिर्मेशास्तिपालनतत्परैः ।
विधातृहरिरुद्राणां वशे शक्र सदा भव ॥ ७२ ॥
अन्ये देवास्तद्वशे च तिष्ठन्त्वग्निपुरोगमाः ।
मयि सन्ततसंन्यस्तभावा भवथ सात्त्विकाः ॥ ७३ ॥
विधातृमुख्या यूयञ्च सृष्ट्यादिकरणोद्यताः ।
ध्यायन्तो मां सदा स्वाऽऽत्मसंविदेकस्वरूपिणीम् ॥ ७४ ॥
एवं तस्या वचः श्रुत्वा धातृमुख्याः सुरेश्वराः ।
नत्वा बद्धाञ्जलिपुटाः प्रार्थयामासुरम्बिकाम् ॥ ७५ ॥
मातरस्माकमनिशं तव पादाब्जदर्शनम् ।
त्वयि चाऽनन्यभक्तिश्च भूयादेतन्महेश्वरि ॥ ७६ ॥
एतावति समृद्धे तु सर्वं सम्पन्नमेव नः ।
प्राप्ते कल्पतरौ चाऽन्यन्न प्राप्यं शिष्यते क्वचित् ॥ ७७ ॥

भक्तिलक्ष्मीसमृद्धानां किमन्यैः फल्गुभावनैः ।
तद्रिक्तानामपि प्राप्तैः किं चिन्तामणिकोटिभिः ॥ ७८ ॥
चिन्तामणिगणैर्देवि दीयते सभयं फलम् ।
त्वत्पादभक्तिलेशोऽपि प्रयच्छत्यभयं फलम् ॥ ७९ ॥
तस्मादभयमन्विच्छुः श्रयेत्त्वत्पादपङ्कजम् ।
सदा नो दिश सद्भक्तिं किमन्यद्याचितेन नः ॥ ८० ॥
इति ब्रह्मादिवाक्यं सा श्रुत्वा लीलाऽऽत्तविग्रहा ।
उक्त्वा तथाऽस्त्विति ततस्तत्रैवाऽन्तरधीयत ॥ ८१ ॥
अन्तर्धिमागतायान्तु तस्यामिन्द्रादयः सुराः ।
विरिञ्चिं हरिं शिवं नत्वा बध्वाऽञ्जलिमथो वचः ॥ ८२ ॥
प्राहुर्विनीतभावेन प्रश्रयाऽवनतेन च ।
विधे मुरारे शम्भो नः कृपयाऽर्हथ रक्षितुम् ॥ ८३ ॥
पराऽपराधान्महतः कथञ्चिद्गुरुणा वयम् ।
मोचिताश्चाऽथ वाञ्छामस्तद्रूपं वास्तवन्तु यत् ॥ ८४ ॥
तज्ज्ञातुं कृपयाऽस्मभ्यं वदन्तु श्राव्यमस्ति चेत् ।
त्वद्गतानथ किं कुर्मो दिशन्त्वाज्ञामतःपरम् ॥ ८५ ॥
इतीन्द्रादिवचः श्रुत्वा मुरारिः प्राह सस्मितः ।
शतक्रतो शृणु वचो मम संयतमानसः ॥ ८६ ॥
इयन्तु परमा शक्तिर्या समस्तविभावना ।
सा शक्तिः परमेशस्य विमर्शाऽऽख्या महत्तरा ॥ ८७ ॥
महाकाशाऽऽत्मिका यस्यां जगदेतद्विराजते ।
सेयं द्रष्ट्रात्मना भूत्वा जगद्व्याप्य व्यवस्थिता ॥ ८८ ॥
दृश्यते यज्जगदिदमिति तद्रूपमुच्यते ।
दृश्यन्तु द्विविधं प्रोक्तं कालदेशविभेदतः ॥ ८९ ॥
कालः क्रियामयो रयो देशो मूर्त्तिमयः स्मृतः ।
वर्णः पदं तथा मन्त्र इति कालस्त्रिधा स्थितः ॥ ९० ॥

कला तत्त्वञ्च भुवनमिति देशोऽपि वै त्रिधा ।
षडध्वनाम्ना चैतत्तु प्रोक्तं षट्सङ्ख्यरूपतः ॥ ९१ ॥
स्वकारणात्मकं कार्यं तरोर्बीजात्मता यथा ।
तेन वर्णादयः कालः कलादिर्देश उच्यते ॥ ९२ ॥
द्रष्टुस्तदृद्वयनिर्भानाद्द्रष्ट्रात्मकमुदीरितम् ।
तस्मादखिलमेतद्वै द्रष्टृरूपमुदीरितम् ॥ ९३ ॥
तं द्रष्टारं स्वात्मरूपं चितिशक्तिस्वरूपिणम् ।
दृश्यदेहादितो भिन्नं मत्वा तां ज्ञातुमर्हसि ॥ ९४ ॥
इदं संग्रहतः प्रोक्तमात्मशक्त्यवबोधनम् ।
न सकृच्छ्रवणाल्लभ्यं तद्रूपं पारमेश्वरम् ॥ ९५ ॥
अनन्तजन्मस्वभ्यस्तमिथ्यामार्गनिषेविणाम् ।
तस्मादेतन्मया प्रोक्तं धृत्वाऽन्तःश्रद्धया सदा ॥ ९६ ॥
तत्पादभक्त्या तस्यान्तमचिरेणाऽधिगच्छसि ।
शक्रपावकमुख्यैस्त्वं द्युलोकमनुपालय ॥ ९७ ॥
स्वस्वकार्ये नियुङ्क्ष्वैतान् देवान्सततजाग्रतः ।
सदा हृदि महाशक्तिं भावयन्नुक्तमार्गतः ॥ ९८ ॥
अधिगच्छाऽभयं मार्गमञ्जसा त्वं शतक्रतो ।
एवं मुरारिवचनं श्रुत्वा बलभिदादयः ॥ ९९ ॥
प्रदक्षिणीकृत्य धातृमुखान्लोकेश्वरान् सुराः ।
प्रणम्याऽऽज्ञां समादाय जग्मुः स्वं स्वं निवेशनम् ॥१००॥
ईशानो हरिधातृभ्यां भक्त्या सम्यक् सभाजितः ।
पश्यतोस्तत्क्षणेनैव गतोऽन्तर्द्धिं महेश्वरः ॥ १०१ ॥
अथ नारायणं ब्रह्मा स्तुत्वा नत्वा यथाविधि ।
ययौ स्वभवनं राम सर्वलोकपितामहः ॥ १०२ ॥
एवं सा परमा शक्तिर्महाद्भुततराक्रिया ।
सर्वदेवोत्तमा सर्वसाक्षिणी विश्वमोहिनी ॥ १०३ ॥

ननु श्रुतं भार्गवैतत्कुमार्याख्यानमद्भुतम् ।
यत्र सा परमा शक्तिः कुमारीवपुषा स्वयम् ॥ १०४ ॥
इन्द्रादीनां मोहनाख्यमकरोत्परदेवता ।
इदमाख्यानमशुभनाशनं शृण्वतां सदा ॥ १०५ ॥
श्रीपरापादसद्भक्तिवर्धनं पावनं महत् ।
श्रोतव्यमेतत्सततं त्रिपुराप्रीतिमिच्छता ॥ १०६ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्य-
खण्डे नवमोऽध्यायः ८०६ ॥



# अथ दशमोऽध्यायः ।

जामदग्न्यस्तु संश्रुत्य कुमार्याख्यानमद्भुतम् ।
विस्मितः प्राह मधुरं वाक्यं तं प्रणतस्तदा ॥ १ ॥
भगवन् महदाश्चर्यमाख्यानं भवतोदितम् ।
न कदाचिच्छ्रुतं पूर्वं त्रिपुरामाहिमोन्नतम् ॥ २ ॥
ब्रह्मविष्णुहरैर्येवं पूजिता संस्तुता तथा ।
ततः सर्वाधिका सा वै त्रिमूर्त्तिर्जननी यतः ॥ ३ ॥
अहो मयाऽद्य भवतः कथाऽमृतरसं मुखात् ।
निर्गतं श्रुतिरन्ध्रेण पीतं स्वान्तरुजाऽपहम् ॥ ४ ॥
कृपयाऽनुगृहीतोऽहं श्रीमता गुरुमूर्त्तिना ।
धन्योऽहं कृतकृत्योऽहं यन्मे तुष्टो गुरुर्भवान् ॥ ५ ॥
नेदृशं श्रीकथासारममृतं पिबतो मम ।
क्षुत्तृट्परिश्रमो निद्रा जायते जातु सन्ततम् ॥ ६ ॥
भगवन् त्वन्मुखेन्दूद्यच्छ्रीकथाऽमृतसेवनात् ।
न तृप्तोऽस्मि मनाक्कोऽपि प्रत्युत तृषितोऽस्म्यहम् ॥ ७ ॥
भूयः श्रीत्रिपुराम्बाया लीलाविभववर्णनम् ।
श्रोतुमिच्छामि तन्मह्यं कृपया निगद प्रभो ॥ ८ ॥
एवं सम्प्रार्थितो भूयो दत्तात्रेयो महाशयः ।
सन्तुष्टो जामदग्न्यस्य ज्ञात्वा श्रद्धाऽतिरिक्तताम् ॥ ९ ॥
उवाच त्रिपुरादेव्या अवतारकथाः शुभाः ।
शृणु रामाऽभिधास्यामि त्रिपुरायाः कथाः शुभाः ॥ १० ॥
या च श्रीत्रिपुरा प्रोक्ता परमाकाशरूपिणी ।
यस्यां सर्वमिदं विश्वं प्रविभक्तं प्रकाशते ॥ ११ ॥

सा चिदानन्दाऽद्वयाऽऽत्मरूपिणी परमेश्वरी ।
वागिन्द्रियमनोऽतीता साक्षिणी सकलाश्रया ॥ १२ ॥
सा भक्तकृपया देवी नानाविधतनुक्रिया ।
तद्भेदगणने शेषः सहस्राऽऽस्योऽपि न प्रभुः ॥ १३ ॥
तस्मात्प्रधानरूपाणि कानिचित्कथयामि ते ।
आद्या कुमारी तत्रोक्ता त्रिरूपाऽनन्तरा मता ॥ १४ ॥
गौरी रमा भारतीति ततः काली च चण्डिका ।
दुर्गा भगवती पश्चात्प्रोक्ता कात्यायनी परा ॥ १५ ॥
ललिता श्रीमहाराज्ञी तत्र पूर्णतमा मता ।
एतासां क्रमतो लीलाः शृणु वक्ष्यामि भार्गव ॥ १६ ॥
तत्र प्रोक्ता कुमारी सा या स्तुता विधिमुख्यकैः ।
भूयः सा त्रिपुरा देवी त्रिरूपा समजायत ॥ १७ ॥
तत्तेऽभिधास्ये परममाख्यानं परमाद्भुतम् ।
पुरा सर्गाऽऽदिसमये त्रिपुरा चितिरूपिणी ॥ १८ ॥
एकाऽऽसीन्नेतरत्तत्र तस्याः किञ्चिदपि स्थितम् ।
सा तथारूपिणी शक्तिः स्वस्वातन्त्र्यवशेन तु ॥ १९ ॥
सृष्ट्युन्मुखी यदा जाता तदेच्छा समजायत ।
इच्छाया ज्ञानमुत्पन्नं क्रिया च तदनन्तरम् ॥ २० ॥
ततस्त्रिमूर्त्तयो जातास्त्रितयाद्दैवतेक्षितात् ।
इच्छामयः पशुपतिर्ज्ञानात्मा हरिरेव च ॥ २१ ॥
ब्रह्मा क्रियात्मकस्तान् सा भावयामास शङ्करी ।
ते निसर्गमहावीर्याः सत्यसङ्कल्पशालिनः ॥ २२ ॥
तपः सुपरमं चक्रुर्यतचित्तेन्द्रियक्रियाः ।
तदा न रात्रं न दिवा न सूर्यो न च तारकाः ॥ २३ ॥
न भूमिर्न जलं तेजो वायुर्वा न दिशः क्वचित् ।
न निमेषो युगश्चाऽपि स्थितं सर्वं नभोमयम् ॥ २४ ॥

१०

स्वयम्प्रभास्तु ते देवा नभोनिलयसंश्रयाः ।
महता तपसा युक्ताः समाधये सुनिश्चलाः ॥ २५ ॥
अनेकयुगपर्याप्तकाले ऽतीते पराम्बिका ।
पराऽऽकाशमयी तत्र विधातारमुवाच ह ॥ २६ ॥
वत्सोत्तिष्ठ विधे किं ते तपसा कर्त्तुमिच्छसि ।
सृज लोकान् सभुवनानतस्त्वं जनितो मया ॥ २७ ॥
इत्यादिष्टः पराशक्त्या जगत्स्रष्टुं मनो दधे ।
अहं कुत्र सृजामीति चिन्तयन् समपश्यत ॥ २८ ॥
तदा दृष्टो महाकाशः सर्वशून्यमयोऽमलः ।
अनन्तविस्तरोऽनादिर्नाऽन्तं तस्योपलक्षितम् ॥ २९ ॥
अवकाशोऽस्ति मे सृष्टेरिति मत्वा पितामहः ।
व्यचलत्किञ्चिदङ्गेन स्पर्शं तत्रोपलब्धवान् ॥ ३० ॥
स्वाऽङ्गस्य चलनादेव स्पर्शाद्वायुर्व्यजृम्भत ।
वायोर्वेगादूष्मणस्तु प्रादुर्भावोऽभवत्तदा ॥ ३१ ॥
ऊष्मणो रूपसंयुक्तमग्निं प्रेक्षितवान् विधिः ।
ततो वन्हेस्तु परितो शीतसंस्पर्शसंयुतम् ॥ ३२ ॥
रसाढ्यं सलिलं स्यन्दि स्नेहसंयुक्तमेव च ।
तत्र गन्धस्तु संदृष्टोऽनन्तरं तन्मलेन तु ॥ ३३ ॥
पृथिवी ददृशे तस्य कठिना धारणक्षमा ।
दृष्ट्वैतावज्जगत्स्रष्टा चाऽस्ति मत्सृष्टिधारिणी ॥ ३४ ॥
अस्यां सृजामि भुवनं नानातनुविचित्रितम् ।
इति मत्वा तत्र सृष्टिं वितेने जगदीश्वरः ॥ ३५ ॥
श्रुत्वैवं वचनं तस्य दत्तात्रेयस्य भार्गवः ।
प्राह संशयितस्वान्तो मधुराऽक्षरया गिरा ॥ ३६ ॥
भगवन्नत्र मे चित्तमन्तं नैवाऽधिगच्छति ।
बहुशङ्काऽऽस्पदं वाक्यं श्रुत्वा तव विचित्रितम् ॥ ३७ ॥

आकाशमुखभूतानि सिद्धवद्धातुरीक्षणात् ।
अकर्त्तृकाणि मे भान्ति कर्त्ता नाऽन्यो यतः स्थितः ॥३८॥
कथं तेषां जगद्धात्रा विना संज्ञापकं तदा ।
शब्दः प्रवर्त्तितस्तस्मात्पूर्वं भूतस्ततः कथम् ॥ ३९ ॥
पाञ्चभौतिकदेहस्य सम्बन्ध इति शंस मे ।
न मे संशयनीहारहरणेऽन्यत्प्रगल्भते ॥ ४० ॥
त्वद्वाक्यचण्डकिरणाद्भगवन् करुणानिधे ।
अपृष्टमपि शिष्याय प्रपन्नाय दयालवः ॥ ४१ ॥
गुरवः प्राहुरत्यन्तशुद्धचित्ता भवादृशाः ।
इति पृष्टो भार्गवेण दत्तः प्रीतः कृपानिधिः ॥ ४२ ॥
प्राह सूनृतया वाचा सम्बोध्य वदतां वरः ।
राम बुद्धिमतां श्रेष्ठ प्रश्नस्तेऽतिविशारदः ॥ ४३ ॥
त्रिधा स्थितस्तन्मयाऽग्रे प्रोच्यतेऽवसरे स्फुटम् ।
न ज्ञातुं शक्यते सद्यस्त्वया तस्मात् स्थिरीभव ॥ ४४ ॥
असाम्प्रतं तु शिष्याय वदन् स्यान्मुग्ध एव सः ।
विपरीतं प्रसिध्येत चाऽसाम्प्रतनिरूपणात् ॥ ४५ ॥
असाम्प्रतस्य श्रवणाद्विनश्येत्कटकारवत् ।
इति श्रुत्वा गुरोर्वाक्यं पुनराह भृगूद्वहः ॥ ४६ ॥
स्वामिन् किमुक्तं भवता कटकारः कथंविधः ।
किं वृत्तं तस्य कस्माद्वै विनष्टस्तन्निवेदय ॥ ४७ ॥
एवं पर्यनुयुक्तः सोऽवदद्विद्वच्छिरोमणिः ।
शृणु राम पुरा वृत्तं कटकारसमाश्रयम् ॥ ४८ ॥
आसीत्कश्चित्कलिङ्गेषु कुवलाख्यो यदोः पुरे ।
कटकारोऽतिनिपुणः कटकर्मसुशिक्षितः ॥ ४९ ॥
कृत्वा विचित्रचित्राणि कटानि कुवलाभिधः ।
राज्ञे निवेदयत्तेन राजा तुष्टः सुशिक्षया ॥ ५० ॥

तस्मै ददौ धनं भूरि तेनाऽऽढ्यः समजायत ।
धनेन तेन कटकृत् ब्राह्मणाऽऽराधनोद्यतः ॥ ५१ ॥
श्रुत्वा क्वचित्पुराणेषु ब्राह्मणानां प्रशंसनम् ।
कदाचित्कुवलः पुण्यकथातत्परतः स्थितः ॥ ५२ ॥
तत्राऽध्यात्मविचारस्तु प्रवृत्तस्तेन संश्रुतः ।
न तद्वेदाऽतिसूक्ष्मत्वात्पुनः पुनरपि श्रुतम् ॥ ५३ ॥
तदाऽऽप्तवचनं विप्रमेकान्ते सङ्गतः क्वचित् ।
भगवन् यत्त्वया प्रोक्तमध्यात्मविषयं वचः ॥ ५४ ॥
तदतीव गभीरार्थं मया भूयोऽपि संश्रुतम् ।
तत्र सारं समाकृष्य मम धारयितुं क्षमम् ॥ ५५ ॥
वद ब्रह्मन्करुणया दृष्ट्या पश्य सकृत्तु माम् ।
प्रार्थितः कुवलेनैवं प्राह संक्षिप्य सारतः ॥ ५६ ॥
शृणु ते कथयिष्यामि कुवलाऽध्यात्मसंग्रहम् ।
अक्षार्थाद्विमुखः शान्तो दृश्यं मत्वा दृगात्मकम् ॥ ५७ ॥
ज्ञात्वा सर्वं समं पश्चादागतं न त्यजन्सदा ।
अनागतमनिच्छन्वै सन्तुष्टो निर्भयः सदा ॥ ५८ ॥
विचरेत्सङ्गरहित इति ते सुनिरूपितम् ।
एवं तद्वाक्यमाकर्ण्य कुवलो मोहितोऽविदन् ॥ ५९ ॥
समज्ञानेन विप्रेषु भक्तिशैथिल्यमाश्रितः ।
आढ्यः सदा सुखं प्राप्तान्कामान्सेवन्कथादिकम् ॥६०॥
देवतासेवनञ्चाऽपि त्यक्त्वा पापभयं तथा ।
संस्थितो नास्तिकप्रायः प्राप्तवानधमां गतिम् ॥ ६१ ॥
एतत्ते भार्गव प्रोक्तं वृत्तं कटकृतो मया ।
तस्मादकाले सम्प्रोक्तो दोषाय परिकल्पते ॥ ६२ ॥
एवं श्रुतं समालोक्य जगतां प्रपितामहः ।
मनसैवाऽसृजत् सर्वान् सचराऽचरमानुषान् ॥ ६३ ॥

मनुष्यान्यक्षगन्धर्वान्सिद्धविद्याध्रकिन्नरान् ।
रक्षांसि दानवान्दैत्यान्भूतप्रेतपिशाचकान् ॥ ६४ ॥
देवान्पितॄन्सुराऽधीशान् पशूनश्वानजान्खगान् ।
भूचराञ्जलजातांश्च तृणवीरुद्द्रुमांस्तथा ॥ ६५ ॥
भुवनान्यपि चित्राणि विधिरेवं ससर्ज वै ।
सृष्टं सृष्टं क्षणेनैव सर्वं तत्राऽवसीदति ॥ ६६ ॥
दृष्ट्वाऽवसन्नां सृष्टिं स्वां पुनरेव मनो दधे ।
तपस्यास्तु तदाऽतीते वहुकाले पराम्बिका ॥ ६७ ॥
प्राहाऽशरीरवचसा विधे किं तपसि स्थितः ।
मया सृष्टौ नियुक्तः सन्सृष्टिं त्यक्त्वा किमास्थितः ॥६८॥
तच्छ्रुत्वा वचनं प्राह विधाताऽऽकाशरूपिणीम् ।
मातर्मया सृज्यमानं क्षणादेवाऽवसीदति ॥ ६९ ॥
तत्पालने नियुङ्क्ष्वैनं विष्णुं लोकेश्वरं शिवे ।
विमृश्य ब्रह्मवचनं सा पराऽऽकाशरूपिणी ॥ ७० ॥
आकाशवाण्या तं विष्णुं प्राह सा परमेश्वरी ।
उत्तिष्ठ विष्णो तपसो विरमाऽऽचक्ष्व मद्वचः ॥ ७१ ॥
पालनार्थं मया सृष्टः स त्वमाज्ञावशेन मे ।
विधिसृष्टं पालयस्व स्वात्मशक्तिं समाश्रितः ॥ ७२ ॥
इति वाक्यं समाकर्ण्य पराम्बाया हरिस्तदा ।
नमस्कृत्य तथेत्युक्त्वा जगत्पालनतत्परः ॥ ७३ ॥
स्वात्मशक्तिं समाश्रित्य हरिर्योगेश्वरो जगत् ।
तत्र तत्र स्थितं सर्वमपालयदशेषतः ॥ ७४ ॥
एवं जगत्सृज्यमानं पाल्यमानञ्च विष्णुना ।
समवर्द्धत वर्षाऽम्बुस्रोतोभिर्ह्रदतोयवत् ॥ ७५ ॥
आपूरितं जगत्सृष्ट्या प्रत्यहं वर्धमानया ।
भूचरैर्भरिता भूमिः खेचरैर्भरितं नभः ॥ ७६ ॥

यादोभिर्जलमाक्रान्तं कृमिकीटैर्बिलं तथा ।
तरुगुल्मादिभिस्तद्वद्व्याप्ताऽद्रेर्दुर्गभूमिकाः ॥ ७७ ॥
श्वापदैर्मृगव्याघ्राद्यैः संव्याप्तानि वनानि च ।
मशकैर्मक्षिकाद्यैश्च व्याप्तं सर्वान्तरं तदा ॥ ७८ ॥
एवं जगति संव्याप्ते निरन्तरतया स्थिते ।
आक्रन्दस्समभूत्तत्र प्राणिनां पीडिताऽऽत्मनाम् ॥ ७९ ॥
विदीर्यमाणं ब्रह्माण्डमासीत्प्राणिभिराततम् ।
बीजपुष्ट्या दाडिमानां यथा पक्वफलं तथा ॥ ८० ॥
एवं जाते निरुच्छ्वासे लोके संमृदिताऽऽकुले ।
दृष्ट्वा विधिश्चिन्तयानो हा कष्टमिति निश्वसन् ॥ ८१ ॥
पुनरातिष्ठत तपो विधिर्लोकहितेप्सया ।
तपसा तस्य सन्तुष्टा पुनराह पराम्बिका ॥ ८२ ॥
आकाशवाण्या धातारं हर्षयन्ती महेश्वरी ।
विधे पुनः किं तपसि स्थितस्तद्वद मा चिरम् ॥ ८३ ॥
अभीष्टं यदहं तत्ते विधास्यामि न संशयः ।
इत्युक्तः प्राह लोकानां कर्त्ता धाता पराम्बिकाम् ॥ ८४ ॥
मातर्मया सृज्यमानं पाल्यमानं गदाभृता ।
व्याप्तं प्राणिभिरत्यन्तं पीडितं सकलं जगत् ॥ ८५ ॥
अनन्तरं विधेयं यत्तदाज्ञापय शङ्करि ।
एवमुक्ता जगद्धात्री प्राह रुद्रं महेश्वरम् ॥ ८६ ॥
रुद्राऽलं तपसा शीघ्रमुत्तिष्ठ मम शासनात् ।
विधिसृष्टं प्राणिगणं संहर्तुं त्वमिहाऽर्हसि ॥ ८७ ॥
इति श्रुत्वा जगन्मातुर्वचनं स्वाश्रितं तदा ।
नमस्कृत्वा पशुपतिस्तां परब्रह्मरूपिणीम् ॥ ८८ ॥
ओमित्याहाऽथ जगतस्संहारे कृतनिश्चयः ।
फालनेत्रोन्मेषणेन युगपद्भस्मसात्करोत् ॥ ८९ ॥

तद्दृष्ट्वा कृत्यमाश्चर्यं विधाता जगतः क्षयम् ।
असन्तुष्टः प्राह रुद्रं नमस्कृत्य कृताञ्जलिः ॥ ९० ॥
अलं महेश भवतः संहृतेरतिचित्रितात् ।
बहुकालेन सृष्टं मे त्वया भस्मीकृतं क्षणात् ॥ ९१ ॥
तत्पुनस्तप आतिष्ठ लोकानां स्वस्तयेऽधुना ।
इति सम्प्रार्थितो धात्रा पुनस्तपसि संस्थितः ॥ ९२ ॥
ततश्चिन्तासमाविष्टः सृष्टिर्मे स्यात्कथन्त्विति ।
ततः प्रजापतीन् ब्रह्मा स्वांऽशेनाऽसृजत प्रभुः ॥ ९३ ॥
दक्षकश्यपमुख्यान्वै सृष्टास्तैः प्राणिनस्तदा ।
विविधास्तैः समग्रं वै जगद्व्याप्तं चराऽचरैः ॥ ९४ ॥
तदा क्रमेण जगतां संहारार्थमचिन्तयत् ।
स्तुत्वा रुद्रं पशुपतिं प्रसाद्य प्रपितामहः ॥ ९५ ॥
तस्यांऽशेनाऽसृजन्मृत्युं संहारे तं न्ययोजयत् ।
मृत्यो ममाऽऽज्ञया चैतान्संहर क्रमशोऽखिलान् ॥९६॥
मया त्वमेतदर्थं वै सृष्टः संहृतिहेतवे ।
तच्छ्रुत्वा ब्रह्मणो वाक्यं मृत्युः प्राह प्रणम्य तम् ॥ ९७ ॥
न संहर्तुमिहेच्छामि भगवन्क्षन्तुमर्हसि ।
शपिष्यन्ति जना मां वै न मा क्रौर्ये नियोजय ॥ ९८ ॥
बहुधैवं प्रार्थितोऽपि न तद्ब्रह्माऽनुमन्यत ।
प्रतिषिद्धस्तत्र धात्रा तपः परममास्थितः ॥ ९९ ॥
वर्षाणामयुतं तत्र पादाङ्गुष्ठसमाश्रयः ।
शीर्णपर्णाशनो दान्तस्तदा लोकसृडीश्वरः ॥ १०० ॥
सुप्रसन्न उवाचैवं मृत्योऽहं तपसा तव ।
तुष्टः प्रतीच्छ यन्मत्तो वरं वाञ्छितमस्ति तत् ॥ १०१ ॥
तच्छ्रुत्वा प्राह धातारं मृत्युर्नत्वा कृताञ्जलिः ।
भगवन्यदि मे तुष्टस्तदाऽऽज्ञापय मां विभो ॥१०२॥

नेच्छाम्यहं सुसंहर्त्तुमेतद्देवाऽभिवाञ्छितम् ।
तदाकर्ण्य प्राह विधिर्मृत्यो नैतद्भविष्यति ॥ १०३ ॥
नासीन्ममाऽनृता वाणी संहरेति पुरोदितम् ।
अन्यद्वरं प्रतीच्छाऽशु यत्ते मत्तोऽभिवाञ्छितम् ॥ १०४ ॥
तच्छ्रुत्वाऽतिभयान्मृत्युः प्रारुदत्सहसा तदा ।
रुदतस्तन्नेत्रयुगादश्रुधाराऽभिजायत ॥ १०५ ॥
तद्गृहीत्वाऽञ्जलौ धाता व्यसृजद्बहुधा भुवि ।
ततो रोगाः बहुविधाः जाता विविधमूर्त्तयः ॥ १०६ ॥
तदा विधिरुवाचेदं मृत्यो मा क्लेशमावह ।
इमे रोगाः समुत्पन्नास्तव साहाय्यकारणात् ॥ १०७ ॥
एते भवन्ति ते रोगाः पुरोगास्तेन ते जनाः ।
नाऽभिजानन्ति तस्मात्ते सिद्धं सर्वं समीहितम् ॥ १०८ ॥
तथेति प्रतिजग्राह तुष्टो मृत्युर्विधेर्वचः ।
तदेवं जगतः सृष्टिस्थितिसंहारसंस्थितौ ॥ १०९ ॥
ब्रह्मा हरिः पशुपतिः स्वे स्वे कर्मणि संस्थिताः ।
जगत्कृत्येन संभ्रान्ता विषण्णा विगतप्रभाः ॥ ११० ॥
उपतस्थुर्महादेवीं जगत्कारणकारणम् ।
तदा प्रसन्ना परमा प्रादुर्भूता महेश्वरी ॥ १११ ॥
त्रिवर्णा द्वादशभुजा दशवक्त्रा महाप्रभा ।
पञ्चविंशतिनेत्राढ्या ब्रह्माण्डं व्याप्य संस्थिता ॥ ११२ ॥
कमण्डलुं स्वक्षमालां वरं त्राणं सुदर्शनम् ।
शङ्खं गदां पङ्कजातं मृगं शूलं परश्वधम् ॥ ११३ ॥
कपालं धारयन्ती सा त्रिमूर्त्यैकस्वरूपिणी ।
तां दृष्ट्वा विधिमुख्यास्ते दण्डवत्प्रणता भुवि ॥ ११४ ॥
तत्पादभक्तिसञ्जातहर्षाऽश्रुभरितेक्षणाः ।
तद्दर्शनाऽऽनन्दितान्तःकरणास्तं समीडिरे ॥ ११५ ॥

नमामस्त्वां देवीं श्रितजनसमीहाऽधिकफल-
प्रदानां लोकेशीमगणितमहावैभवयुताम्।
स्वलीलामात्रार्थप्रकटितविधात्रण्डविततिं
परब्रह्माकारां परमशिवजीवाख्यधमनीम्॥ ११६॥
विहाय त्वां देवीं क्षितिमुखशिवान्तात्मकगणे
प्रमेये कालाग्निप्रमुखशिवपर्यन्तनिवहे।
प्रमातॄणां तद्वत्स्थिरचरविभेदेऽपि सकले
त्वया रिक्ते जाते भवति मृगतृष्णाजलविधिः॥ ११७॥
महच्चित्रं देवि स्वयमिह जगद्भेदनिवहे
स्थिता संव्याप्याऽपि प्रकटतरमूर्त्या ननु सदा।
नखानि श्रोत्रादीन्यपि वचनमुख्यान्यपि तथा
प्रवर्त्तेते जातु त्वयि नहि मनोऽप्यन्तरतमः॥ ११८॥
नतानां भक्तानामतिकरुणयाऽनुग्रहपरा
मनोवाङ्नेत्राणां सुलभगतिहेतोस्त्वमनघे।
यथा ध्याता तैस्तैः पदनलिनसेवापरजनै-
स्तथा रूपं धत्से जननि जगदुद्धारणपरे॥ ११९॥
निमेषोन्मेषाभ्यामगणितविधात्रण्डविलयो-
द्भवौ स्यातां यस्याः परतरमहाशक्तिवपुषः।
महामायाशक्तेः श्रितजनसमीहाफलविधौ
कियच्चित्रं नानाविधतनुधृतिस्ते परशिवे॥ १२०॥
भवत्या ब्रह्माद्या वयमिह जगत्सृष्टिविलय-
स्थितौ संस्थां प्राप्ता जननि सततं तद्व्यवसिताः।
विषण्णाः स्मः कृत्ये विहतबलवीर्यादिविभवाः
समुद्धर्तुञ्चाऽस्मान्प्रभवसि हि चैकैव परमा॥१२१॥
इति संस्तुत्य धात्राद्या जगद्धात्रीं पराम्बिकाम्।
कृतप्रणतयो भक्त्या स्ववृत्तं प्रोचुरादरात्॥ १२२॥

तच्छ्रुत्वा धातृमुख्यानां वाक्यं सा परमेश्वरी ।
प्राह प्रसन्ना वरदा प्रियं तेषां वितन्वती ॥ १२३ ॥
ब्रह्मन्मुरारे शम्भो वो ज्ञातं वृत्तं मयाऽनघाः ।
भवन्तः स्थूलरूपेण मदंशेन विना स्थिताः ॥ १२४ ॥
अतो न निर्वृता यूयं श्रान्ताश्च स्वेषु कर्मसु ।
हृतप्रभा हृतबला निर्वीर्या इव संस्थिताः ॥ १२५ ॥
तच्छुभं वो विधास्यामि चिन्तां जहथ मा चिरम् ।
एवमुक्त्वा क्षणेनैव त्रिपुरा सा महेश्वरी ॥ १२६ ॥
स्वाङ्गात्त्रिधा स्थिता त्रीणि रूपाणि व्यसृजत्तदा ।
ब्रह्मविष्णुमहेशांशाद्रूपत्रयमभूत्तदा ॥ १२७ ॥
वाणी रमा च रुद्राणी श्वेतरक्ताऽसितप्रभाः ।
हंसपद्ममृगेन्द्रस्थाः सौन्दर्यमणिरोहणाः ॥ १२८ ॥
मत्तेभमन्दगमना मृदुशोणलसत्तलाः ।
नखचन्द्रांशुनिवहन्यक्कृतेन्दुगणप्रभाः ॥ १२९ ॥
कमठाऽभ्रपदकाः पुष्टगुल्फविराजिताः ।
कन्दर्पतूणाभजङ्घानभोभूतावलग्नकाः ॥ १३० ॥
अनर्घ्यकौशेयगूढपृथुश्रोणीभराऽलसाः ।
स्मरकल्पलतावालनिम्ननाभिविराजिताः ॥ १३१ ॥
मृदूदरत्रिवलिकास्तनुरोमालिशोभिताः ।
माणिक्यकलशाऽकारकुचद्वयभरानताः ॥ १३२ ॥
मृदुदीर्घचतुर्बाहुकरकञ्जमृणालिकाः ।
कम्बुकन्धरविन्यासाः पक्वबिम्बफलाऽधराः ॥ १३३ ॥
कुन्दकोरकपङ्क्त्याभदन्तपङ्क्तिसुशोभनाः ।
चाम्पेयकलिकाकारनासावंशविराजिताः ॥ १३४ ॥
श्वासामोदपरीवाहभरिताशाकृशोदराः ।
मणिदर्पणसाधर्म्यव्रतगण्डद्वयोज्ज्वलाः ॥ १३५ ॥

नीलोत्पलसुहृत्कान्तिनेत्रत्रयसुसौभगाः ।
अर्धशीतांशुदापादनिटिलाभोगभासुराः ॥ १३६ ॥
जगत्तिमिरसन्दोहसंक्षेपाकारचूलिकाः ।
निसर्गचाम्पेयसुमसौरभास्पदवालिकाः ॥ १३७ ॥
मणिप्रवेकपटलमत्युग्रमुकुटोज्ज्वलाः ।
अनर्घ्यरत्नपुरटक्लृप्तकुण्डलमण्डिताः ॥ १३८ ॥
नासामणिप्रभाचोरासुरशिक्षकतारकाः ।
गलविन्यस्तमाणिक्यग्रैवेयकविभूषिताः ॥ १३९ ॥
मुक्ताहारमृणालोत्थविकसन्मुखपङ्कजाः ।
केयूराङ्गदमाणिक्यवलयाङ्गुलिभूषणाः ॥ १४० ॥
गाङ्गेयपट्टिकाकाञ्चीदामनद्धांशुकावृताः ।
मञ्जीरहंसकक्वाणक्वणत्क्वाणितनिर्भराः ॥ १४१ ॥
एवं विधा वागधीशा शुद्धस्फटिकसन्निभा ।
त्रिनेत्रा चन्द्रचूडाला वीणापुस्तवराभयान् ॥ १४२ ॥
धारयन्ती कराम्भोजैर्विद्यातततिनूज्ज्वला ।
विद्रुमाभा विशालाक्षी पद्मा पद्मचतुष्टयम् ॥ १४३ ॥
दधाना पाणिजलजैरैश्वर्यनिवहेश्वरी ।
दलदिन्दीवराभासा चतुर्भिः पाणिपल्लवैः ॥ १४४ ॥
आसादिताः खड्गखेटाशूलमुद्गरहेतिकाः ।
कोटीरकोटिसंक्लृप्तशीतांशुकलिकोज्ज्वला ॥ १४५ ॥
एवंविधास्तदङ्गात्तु त्रिविधाः क्षणमात्रतः ।
प्रादुर्भूता महादेव्यो विस्फुलिङ्गा इवार्चिषः ॥ १४६ ॥
ताः प्रणम्य परां देवीं सविधे संस्थितास्तदा ।
विधात्रादीनतः प्राह त्रिपुरा परमेश्वरी ॥ १४७ ॥
भो ब्रह्मकेशवहराः भवदर्थं मया इमाः ।
स्वांशात्सृष्टा महादेव्यः प्रतीच्छध्वं क्रमेण ताः ॥ १४८ ॥

इयं विद्रुमवर्णाभा धातर्जाता तवांऽशतः ।
तथा रौद्री मेचकाभा त्वदंशेनोद्गता हरे ॥ १४९ ॥
विशदङ्गा भारतीयं रुद्र तेंऽशात्समुद्गता ।
तत्तदंशोद्भवा तस्य सोदरीति प्रसिध्यतु ॥ १५० ॥
विधातुः सोदरी विष्णोर्विष्णो रुद्रस्य तस्य तु ।
विधेरेवं विवाहेन विधिना द्रुतमस्तु वः ॥ १५१ ॥
पत्नी तथाद्या भवतु विवाहो मङ्गलाय वः ।
एवं कृतविवाहानां शक्तिभिर्मम योगतः ॥ १५२ ॥
त्यक्तश्रमा निर्वृताश्च समर्था विश्वकर्मसु ।
यूयं भवथ धात्राद्या जगतां स्वस्तयेऽधुना ॥ १५३ ॥
इत्युक्त्वा सा महेशानी तत्रैवाऽन्तरधीयत ।
अन्तर्द्धिमागतायान्तु देव्यां ते जगदीश्वराः ॥ १५४ ॥
स्वां स्वां शक्तिं समादाय स्वस्थानं प्रतिपेदिरे ।
अथ काले शुभे तत्र त्रयस्ते जगदीश्वराः ॥ १५५ ॥
वैवाहिकविधानेन बभूवुर्दारसंयुताः ।
मेरुपृष्ठे सुविपुले योजनायुतविस्तरे ॥ १५६ ॥
विवाहशाला रुचिरा निर्मिता विश्वशिल्पिना ।
चतुर्योजनमुन्नम्रा नियुतस्तम्भसंयुता ॥ १५७ ॥
वितानमाकाशनिभं तारकाकारचित्रितम् ।
परितो लम्बमानैस्तु रत्नगुच्छैः सुशोभितम् ॥ १५८ ॥
पताकाभिर्ध्वजैर्नीलमणिवैडूर्यनिर्मितैः ।
त्रिंशद्योजनमुन्नम्रैः समन्तादुपशोभितम् ॥ १५९ ॥
विद्रुमस्तम्भविन्यस्तपाञ्चालीगणमण्डिता ।
तत्र स्वर्णमयी भूमिः हीरकास्तरणानि च ॥ १६० ॥
मणिप्रवरसञ्जातवेदिकाभिः समुज्ज्वला ।
नवरत्नमयैर्दीपवृक्षैः सर्वत्र मण्डिता ॥ १६१ ॥

हरिन्मणिकृताऽत्यच्छतोरणौघपरीवृता ।
प्रतिस्तम्भसमाबद्धमणिरम्भातरूज्ज्वला ॥ १६२ ॥
मणिपाञ्चालिकाहस्तन्यस्तहीरकचामरा ।
यक्षकर्दमसंसिक्ता धूपामोदसुधुन्धुमा ॥ १६३ ॥
दीपसन्ततिसञ्जातप्रभा संमूर्च्छनावशात् ।
मणिप्रत्येकज्वालितधगद्धगितदिक्तटा ॥ १६४ ॥
शालायाः परितस्तत्र कल्पानोकहवाटिकाः ।
निसर्गस्यन्दिमधुरमकरन्दौघनिर्झराः ॥ १६५ ॥
तदामोदप्रसक्ताऽलिपङ्क्तिझङ्कारजृम्भिताः ।
माद्यच्छुकपिकारावभरितान्तरसुन्दराः ॥ १६६ ॥
फलसङ्घभराक्रान्तिभूलम्बिविटपायुताः ।
तस्यां सर्वं विवाहार्थं कल्पयामास शिल्पिराट् ॥ १६७ ॥
तत्राऽऽजग्मुर्देवगणाः स्वलङ्कृतविमानगाः ।
तेषां विमानाविततिव्यापृता वनभूमयः ॥ १६८ ॥
ऋषयो मुनयः सिद्धा विद्याधरसकिन्नराः ।
नरा नागाः पूर्वदेवा यातुधानाः सहस्रशः ॥ १६९ ॥
तैरापूर्णा विशालापि शाला शुभसमागमे ।
गायद्गन्धर्वमधुररागालापसुमूर्च्छनैः ॥ १७० ॥
मञ्जुलारावझङ्कारझङ्कृतैः सुमनोहरा ।
नृत्यद्रम्भादिविबुधवेश्यागणलयोच्चरैः ॥ १७१ ॥
भरिता श्रवणानन्दैर्वाद्यैरुच्चावचैस्तथा ।
देवासुरमनुष्यादियोषितः समलङ्कृताः ॥ १७२ ॥
नूत्नरत्नोत्कीर्णहेमविविधाकल्पकोटिभिः ।
पराध्यैरत्नविलसद्वसनैः परिपेशलाः ॥ १७३ ॥
एवंविधायां शालायां विवाहः समवर्त्तत ।
शुभे मुहूर्त्ते विलसत्सभामण्डपमध्यतः ॥ १७४ ॥

नवरत्ना कल्पवेदी मध्ये ज्वलति पावके ।
नारायणानुजायास्तु शर्वाण्याः पाणिपल्लवम् ॥ १७५ ॥
जग्राह शङ्करो वेदविधिना मन्त्रमुच्चरन् ।
एवंविधात्रवरजारमापाणिसरोजनिम् ॥ १७६ ॥
समाददत्तदा तत्र साक्षान्नारायणः परः ।
अथ तस्याः पशुपतेः कनीयस्याः करग्रहम् ॥ १७७ ॥
पितामहः समकरोद्वाग्देव्याः पावकाग्रतः ।
तत्रोत्सवः समभवत्परमः शोभनोदयः ॥ १७८ ॥
सर्वे समुदितास्तत्र कल्याणोत्सवमण्डपे ।
एवं विवाहविधिना ब्रह्मविष्णुमहेश्वराः ॥ १७९ ॥
त्रिपुरायाः कलाः प्राप्य वाणीलक्ष्मीशिवाभिधाः ।
जगतां जननीर्भक्तजनतापापहारिणीः ॥ १८० ॥
जगत्सु मङ्गलकरीर्वाक्सम्पज्ज्ञानदायिनीः ।
विचित्रवस्त्राभरणस्वायुधादिसुशोभिताः ॥ १८१ ॥
परां निर्वृतिमायाता विश्राममभवंस्तदा ।
तच्छक्तिसंयुताः स्वे स्वे लोके गत्वा महेश्वराः ॥ १८२ ॥
जगत्सृष्ट्यादिकृत्येषु सन्नद्धा विधिमुख्यकाः ।
निरन्तरं महादेव्याः पादपद्मार्चने रताः ॥ १८३ ॥
एतत्ते भार्गवाख्यातं त्रिरूपाख्यानमुत्तमम् ।
यत्र सा त्रिपुरेशानी त्रिरूपा समजायत ॥ १८४ ॥
वाणी रमा शिवारूपा सर्वलोकप्रसादिनी ।
ब्रह्मविष्णुशिवान् यत्र भावयन्ती कलात्मभिः ॥ १८५ ॥
एतदाख्यानमायुष्यमभीष्टफलदायकम् ।
श्रोतव्यं त्रिपुराभक्तैः सर्वदा संयतात्मभिः ॥ १८६ ॥
श्रोतॄणां परमादेवी भक्तानां सहसा द्रुतम् ।
सम्पाद्य वाञ्छितानर्थानैहिकान्सुखसाधनान् ॥ १८७ ॥

अन्ते भक्तिक्रमेणैव कृत्वा शाम्भववेदनम् ।
प्रददाति परं स्थानं पुनरावृत्तिवर्जितम् ॥ १८८ ॥
श्रुतमेतज्जामदग्न्य कच्चिदव्यग्रचेतसा ।
परमाद्भुतमाहात्म्यं त्रिपुराया महाफलम् ॥ १८९ ॥
अभक्तानां नास्तिकानां शठानां दुष्टचेतसाम् ।
न वाच्यं सम्मुखे जातु नोचेत्सा कुप्यतीश्वरी ॥ १९० ॥
त्वया सदा धारणीयं चिन्तनीयश्च सर्वदा ।
किं पुनः श्रोतुमिच्छा ते वद राम महामते ॥ १९१ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये दत्तात्रेयपरशुरामसंवादे माहात्म्यखण्डे त्रिरूपाख्यानं नाम दशमोऽध्यायः ॥ १०७ ॥

# अथैकादशोऽध्यायः ।

एवं विधं समाख्यानं त्रिरूपाया महत्तरम् ।
श्रुत्वा सविस्मयो रामः श्रीदत्तमुखपङ्कजात् ॥ १ ॥
निर्गमन्नूतनामोदमकरन्दमनोहरम् ।
आनन्दामृतवाराशिमग्नस्वान्तो बभूव ह ॥ २ ॥
आह भक्तिप्रेमभरपेशलं वाक्यमुत्तमम् ।
अहोऽत्यद्भुतमेतद्वै प्रोक्तमाख्याननायकम् ॥ ३ ॥
नैवंविधं समाख्यानं श्रुतमासीद्दयानिधे ।
भवन्मुखाब्जनिर्गच्छत्कथामृतझरीभरम् ॥ ४ ॥
पिबतः श्रोत्रपुटतस्तृषा शान्तिर्न विद्यते ।
यथा कामिजनस्याऽतिसुन्दरी भासगोचराम् ॥ ५ ॥
जुषतोऽनुक्षणं तृष्णा वर्धते मे तथाऽभवत् ।
गुरो श्रीनाथ मे सम्यक् श्रुतमाख्यानमुत्तमम् ॥ ६ ॥
त्रिरूपायाः शुभं पुण्यं गौर्य्यादीनामपि प्रभो ।
वदाऽऽख्यानं कथं भूतं कृपया करुणानिधे ॥ ७ ॥
इति पर्यनुयुक्तोऽथ दत्तात्रेयो यतीश्वरः ।
प्राह गम्भीरया वाचा मधुराक्षरसुस्वरम् ॥ ८ ॥
भार्गव शृणु गौर्यादिचरित्रं लोकपावनम् ।
एवं गौरीं रमां वाणीं प्राप्य रुद्रादयस्तदा ॥ ९ ॥
निर्वृताः स्वेषु कृत्येषु त्रिक्रमाः स्युरतीव ते ।
एवं सृष्टेषु लोकेषु कर्मवैचित्र्यहीनतः ॥ १० ॥
समाः समाचारपरा बभूवुर्मानवा भुवि ।
तेनाऽऽसीत्कोऽपि नैवाढ्यो न रिक्तो न सुखाधिकः ॥ ११ ॥

न क्लेशी न च पाल्यो वा पालको वापि कश्चन ।
न सेव्यः सेवको वापि न राजा न प्रजास्तथा ॥ १२ ॥
सर्वं समं समाक्षीद्धै योगीश्वरमनो यथा ।
एवंविधे जने जाते न यज्ञो न च दक्षिणा ॥ १३ ॥
न दानं नापि पूजादि शान्तमासीन्निराकुलम् ।
एवंभूते भुवि तदा देवाद्याः सेन्द्रनायकाः ॥ १४ ॥
न सुखं लेभिरे मर्त्यसेव्यभावविहीनतः ।
तदा गुरुं सभासीनं प्रणम्य विबुधैः सह ॥ १५ ॥
पप्रच्छेन्द्रः सहस्राक्षो विनीतः पुरतः स्थितः ।
आङ्गिरस गुरो ब्रह्मन् भवान् नः कुलदैवतम् ॥ १६ ॥
बुधानां कृच्छ्रवाराशितरणे तरणिर्मतः ।
तदस्माकं महत्कृच्छ्रं सम्प्रति प्रेक्ष्यतां भवान् ॥ १७ ॥
मर्त्या बुधानां पशव इति नः श्रुतिभिः श्रुतम् ।
कथं पितामहवचो मृषा स्यादिति चिन्त्यताम् ॥ १८ ॥
यद्यस्मत्तन्त्रमासीना न स्वतन्त्रा भवन्ति ते ।
मर्त्यास्तदा देवपाल्याः पशुत्वं तेषु जायते ॥ १९ ॥
तन्नः सम्पद्यते येन तदाशु परिचिन्त्यताम् ।
भवान् नो विषमे त्राता त्वन्धस्याऽञ्जनकृद्यथा ॥ २० ॥
इत्थं पुरन्दरवाचो निशम्याऽऽङ्गिरसो गुरुः ।
क्षणं विमृश्य प्रोवाच सम्बोध्येन्द्रपुरोगमान् ॥ २१ ॥
हे पुरन्दर मद्वाक्यं श्रोतव्यं भवताऽऽदरात् ।
देवानामिष्टसिध्यर्थं यद्ब्रवीमि हितं वचः ॥ २२ ॥
गच्छ देवैर्वृतः शीघ्रं शरण्यं प्रपितामहम् ।
शरणं स भवत्क्लेशो विधास्यत्यम्बुजासनः ॥ २३ ॥
जगत्तन्त्रस्वतन्त्रोऽसौ सर्वज्ञः सर्वकृद्विभुः ।
एवमेव भवेत्क्षेमं भवतां भयनाशनम् ॥ २४ ॥

१२

नाऽन्योऽत्र विद्यते कश्चिदुपायो भवदीप्सिते ।
इत्याकर्ण्य गुरोर्वाक्यं प्रणम्य धिषणं तदा ॥ २५ ॥
ओमिति द्रुतमेवेन्द्रः सदेवपितृगुह्यकः ।
जगाम ब्रह्मसदनं सत्यलोकं शचीपतिः ॥ २६ ॥
तत्र गत्वा जगद्धातुः सभां ब्राह्मसमाश्रयाम् ।
शतयोजनविस्तीर्णां विंशद्योजनमायताम् ॥ २७ ॥
त्रिंशदुच्छ्रायसंयुक्तां रत्नस्तम्भप्रदीपिताम् ।
स्तम्भप्रभामूर्च्छनेन हेमभूमिप्रभाधिकाम् ॥ २८ ॥
भूमिप्रभाशबलितचन्द्रकान्तोर्द्ध्वभूमिकाम् ।
कान्तित्रयसुसङ्क्रान्तमुक्ताजालविचित्रिताम् ॥ २९ ॥
स्तम्भसंन्यस्तमाणिक्यमयपुत्तलिकाञ्चिताम् ।
चन्द्रकान्तखण्डक्लृप्तप्रतिमानेत्रभासिताम् ॥ ३० ॥
इन्द्रनीलतारकिकापक्ष्मकेशप्रकाशिताम् ।
चन्दनाऽगरुकस्तूरीकाश्मीरपटवासकैः ॥ ३१ ॥
घुमघुमितगन्धाढ्यां मणिकाञ्चनचित्रितैः ।
तोरणैः कदलीस्तम्भैः पूगवृक्षैः समन्ततः ॥ ३२ ॥
मण्डितां माल्यजालैश्च मन्दमारुतशीतलाम् ।
मध्ये मणिप्रवेकाढ्यं मुक्ताच्छत्रविराजितम् ॥ ३३ ॥
सिंहासनं जगत्स्रष्टुः परितोऽपि सभासदाम् ।
नानाविधान्यासनानि संस्थितानि सहस्रशः ॥ ३४ ॥
तेषु सिद्धा महात्मानः कपिलाद्या महर्षयः ।
भृग्वाद्याः सनकाद्याश्च योगीन्द्राः सुव्यवस्थिताः ॥ ३५ ॥
कोटिमन्मथलावण्यपरिपूर्णाङ्गसौभगाः ।
तारुण्यगर्विता रामा रमण्यश्चाऽमरग्रहाः ॥ ३६ ॥
ताभिः सुवीज्यमानास्ते कामिनीभिः समन्ततः ।
तासां वदनराकेन्दुमन्दस्मितमरीचिभिः ॥ ३७ ॥

सम्पृक्तास्तम्भसंक्रान्तप्रतिमानेत्रपङ्क्तयः ।
मुमुचुर्नीरपृषतानतिस्वच्छान्निरन्तरान् ॥ ३८ ॥
सभाशोभादर्शनोद्यदानन्दाश्रुकला इव ।
तत्र सिंहासने धाता नवविद्रुमसच्छविः ॥ ३९ ॥
प्रसन्नवेदवदनो ब्रह्मव्याख्यानतत्परः ।
एवंविधं विधातारं चाऽपश्यदमराऽधिपः ॥ ४० ॥
सप्तलोकान्तरे चाऽपि स्थित एवंविधो विधिः ।
रूपद्वितयमासीनः लोकरक्षणहेतवे ॥ ४१ ॥
अन्तःसभायां देवेन्द्रमुखानाममृतान्धसाम् ।
प्रवेशो नास्ति तत्प्रोक्तं जितषड्रिपुसंश्रयम् ॥ ४२ ॥
तत्र प्राप्ता न मुह्यन्ति नाधो यान्ति कदाचन ।
कामक्रोधादिभिर्नैव परिभूता भवन्ति च ॥ ४३ ॥
कामक्रोधादियुक्तानां बाह्ये सदसि संस्थितिः ।
एतदर्थं द्विधाऽत्र संस्थितः प्रपितामहः ॥ ४४ ॥
तत्राऽमराधिपो देवैः साकं दृष्ट्वा जगत्प्रभुम् ।
दूरादेवाऽमरेशानो दण्डवत् प्रणनाम तम् ॥ ४५ ॥
प्रणेमुर्विबुधाः सर्वे बद्धाञ्जलिपुटास्तदा ।
तान् दृष्ट्वा जगतां धाता प्रोवाच प्रसभं तदा ॥ ४६ ॥
भो पाकशासन बुधैर्मा भैरुत्तिष्ठ ते हितम् ।
सेत्स्यति ब्रूहि किं तेऽत्र प्राप्तौ कारणमाशु मे ॥ ४७ ॥
इति श्रुत्वा चतुर्वक्त्रवचनं विबुधेश्वरः ।
उत्थाय मूर्ध्नि विन्यस्तकरकञ्जपुटस्तदा ॥ ४८ ॥
स्ववृत्तं वक्तुमारेभे विबुधैः सह वज्रभृत् ।
विधातर्नः स्ववृत्तेषु भवानेव परायणम् ॥ ४९ ॥
भवदाज्ञां मूर्ध्नि धृत्वा त्रिलोकीशासने स्थितः ।
भवत्कृपालेशतोऽपि मयि त्रिभुवनेशिता ॥ ५० ॥
सुस्थिता जगतां नाथ देवेशत्वमपि ध्रुवम् ।

परन्तु लोकत्रितयनाथता मयि तादृशी ॥ ५१ ॥
यादृशी चित्तविन्यस्ता विधातुर्वै विधातृता ।
बल्वजेऽपि तृणे यद्वन्मेघनादादिशब्दनम् ॥ ५२ ॥
नाहं मर्त्यैर्मानितोऽद्य मां मर्त्या भजन्ति च ।
नेष्टो न पूजितो नैव प्रणतो नापि संस्तुतः ॥ ५३ ॥
मर्त्यास्तु पशवः प्रोक्ता धातर्नोऽह्यमृतान्धसाम् ।
तदद्यापि न सम्पन्नं भवतोक्तं हि यत्पुरा ॥ ५४ ॥
मां मानयन्ति विबुधा भवद्वचनगौरवात् ।
श्रद्धामात्रनिमित्तेन ममेन्द्रत्वमिति स्थितम् ॥ ५५ ॥
एवं प्रोक्तं ममाऽशेषवृत्तमग्रे यथोचितम् ।
आज्ञापयतु नो देवो यत्कर्त्तव्यमनन्तरम् ॥ ५६ ॥
इति श्रुत्वा सहस्राक्षवचनं विश्वसृट् तदा ।
विमृश्य किञ्चिद्गम्भीरवचसा प्रत्यवोचत ॥ ५७ ॥
मघवन्नत्र मे वाक्यं शृणु यत्ते ब्रवीम्यहम् ।
यत्त्वां मर्त्या न मन्यन्ते इत्युक्तं तत्र कारणम् ॥ ५८ ॥
निबोध वदतो मत्तः स्वहितायेतराश्रयाः ।
स्वार्थरिक्तस्य चाऽहं वा हरिर्वा शंकरोऽपि वा ॥ ५९ ॥
कियान् तस्य जगत्सर्वं सेश्वरं तृणतो लघु ।
आश्रयन्ति परं सर्वे स्वार्थं किञ्चित्समाश्रिताः ॥ ६० ॥
मर्त्यानां भवतां किञ्चिन्न प्रयोजनमस्ति वै ।
तेनाऽप्रयोजका यूयं कथं मान्यत्वमर्हथ ॥ ६१ ॥
तद्गम्यतां मद्वरां लक्ष्मीं पद्मासनां शुभाम् ।
प्रसाद्य विष्णुरमणीं शुभं प्राप्स्यथ मा चिरम् ॥ ६२ ॥
इति श्रुत्वा स्वात्मयोनिवचनं तद्दिवस्पतिः ।
प्रणम्य हिमवत्पार्श्वं ययौ लक्ष्मीकृपाऽऽप्तये ॥ ६२ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये दत्तात्रेयपरशु-
रामसंवादे माहात्म्यखण्डे रमोपाख्याने एकादशोऽध्यायः ॥११॥

# अथ द्वादशोऽध्यायः।

अथ ते पुरुहूताद्यास्तुहिनाद्रितटे स्थिताः।
स्वर्धुनीसविधे पद्मां तुष्टुवुर्हरिवल्लभाम् ॥ १ ॥
नमो लक्ष्म्यै महादेव्यै पद्मायै सततं नमः।
नमो विष्णुविलासिन्यै पद्मस्थायै नमो नमः ॥ २ ॥
त्वं साक्षाद्धरिवक्षःस्था सुरज्येष्ठा वरोद्भवा।
पद्माक्षी पद्मसंस्थाना पद्महस्ता परामयी ॥ ३ ॥
परमानन्ददाऽपाङ्गहृतसंश्रितदुर्गतिः।
अरुणानन्दिनी लक्ष्मीर्महालक्ष्मीस्त्रिशक्तिका ॥ ४ ॥
साम्राज्या सर्वसुखदा निधिनाथा निधिप्रदा।
निधीशपूज्या निगमस्तुता नित्यमहोन्नतिः ॥ ५ ॥
सम्पत्तिसम्मता सर्वसुभगा संस्तुतेश्वरी।
रमा रक्षाकरी रम्या रमणी मण्डलोत्तमा ॥ ६ ॥
एवमिन्द्रमुखा देवा नामाऽष्टाविंशतिं पठन्।
उपतस्थुर्हरेः कान्तां ब्रह्मशक्तिं समाहिताः ॥ ७ ॥
एवं तत्परचित्तास्ते यदा तां शरणं गताः।
तदा लक्ष्मीः प्रादुरासीद्देवानां प्रीतये द्रुतम् ॥ ८ ॥
अनन्तकोटितडितां पुञ्जीभूतसमप्रभा।
दलद्रक्तोत्पलाभाङ्गी तप्तहेमाम्बराऽन्विता ॥ ९ ॥
करपद्मलसच्चूतदलपद्मचतुष्टया।
हेमकुम्भप्रभाक्षेपतुङ्गवक्षोजशोभिता ॥ १० ॥
पक्वविद्रुमन्यक्कारिमृदुदन्तच्छदाऽन्विता।
मुखामोदसमाहूतभृङ्गीझङ्कारमध्यगा ॥ ११ ॥

इन्दीवरसुसौभाग्यवदान्याऽऽकर्णलोचना ।
कस्तूरीतिलकाऽऽख्यातमुखराकेन्दुलाञ्छना ॥ १२ ॥
अनर्घ्यरत्नमत्युग्रभूषणौघविभूषिता ।
एवंविधां रमां दृष्ट्वा दण्डवत्प्रणताः सुराः ॥ १३ ॥
आनन्दाऽश्रुकलोपेताः स्तुवन्तो गद्गदस्वरैः ।
तान् विलोक्य तदा लक्ष्मीरुवाच स्मितपूर्वकम् ॥ १४ ॥
मधुनिर्झरनिष्पन्दकन्दसुन्दरभाषिणी ।
भो भो शक्र सहस्राक्ष भो देवा असुरद्विषः ॥ १५ ॥
प्रसन्नाऽस्मि वरं यद्वो वाञ्छितं मत्सकाशतः ।
प्रतीच्छध्वं स्तुता साऽहं भवद्भिर्गुप्तनामभिः ॥ १६ ॥
त एवंविधमाकर्ण्य वचनं निर्जरास्तदा ।
प्रोचुर्विडौजाप्रमुखा बद्धाञ्जलिपुटाः परम् ॥ १७ ॥
मातस्त्वयि प्रसन्नायां दुष्प्रापं किमिहोच्यते ।
प्राप्तकल्पतरोः किं वा वाञ्छितं परिशिष्यते ॥ १८ ॥
अम्बाऽस्माकं यथा मर्त्याः सेवकाः सम्भवन्ति वै ।
तथा कुरु शुनासीरः स्याद्यथा त्रिजगत्पतिः ॥ १९ ॥
सदा वशंवदाः सर्वे मानवाः सन्तु नः शिवे ।
यजन्त्वस्मान् समुद्दिश्य वितरैवं वरं शिवे ॥ २० ॥
इति वर्हिर्मुखोक्ता सा प्राह मञ्जुलया गिरा ।
देवाः शृणुध्वं मद्वाक्यमहं सम्पदधीश्वरी ॥ २१ ॥
अद्य प्रभृति ये मर्त्याः सुत्रामप्रमुखान् सुरान् ।
यजन्ति विधिवत्तेषां सम्पदः स्युर्हि वाञ्छिताः ॥ २२ ॥
उदासीना ये सुरेषु तेषां सम्पत्तिराशयः ।
क्षयं गच्छन्तु तरसा ग्रीष्मे पल्वलतोयवत् ॥ २३ ॥
भवदुक्तैर्नामभिर्ये मां स्तुवन्ति सदा नराः ।
तेषां सदाऽहं सन्तुष्टा निवसामि समीपतः २४ ॥

य एतैर्नामभिर्देवा भृगुवारे निशोद्भवे ।
पूजयित्वा मत्समीपे पठन्त्यष्टोत्तरं शतम् ॥ २५ ॥
सुवासिनीं पुजयन्ति नामैकैकेन मानवाः ।
एकैकवासरे त्वेवं चणकाद्यैर्निवेदनम् ॥ २६ ॥
अष्टाविंशतिवारैस्ते भजन्त्यचलसम्पदम् ।
प्रसन्ना सर्वदेवाऽहं तथा यूयं प्रसादकाः ॥ २७ ॥
गच्छन्तु स्वर्गवसतिं फलितं वोऽभिवाञ्छितम् ।
इत्युक्त्वा सा परा देवी जगामाऽऽकाशतां तदा ॥ २८ ॥
ततः शतक्रतुमुखास्तां दिशं भक्तिभावतः ।
प्रणम्य कृतकृत्यत्वं मत्वा स्वभुवनं ययुः ॥ २९ ॥
अथ काले बहुतरे गते देवास्त्रिविष्टपे ।
समासीनाः सुधर्मायामाङ्गिरससमाश्रयाः ॥ ३० ॥
जीवे शृण्वति ते प्राहुरिन्द्रं सिंहासनस्थितम् ।
भो देवराज नो वाक्यं श्रूयतां हेतुसंयुतम् ॥ ३१ ॥
पुरा लक्ष्मीः प्रसन्ना नो वरं दत्तवती च यम् ।
तत्राऽद्य धरणीमध्ये न फलं दृश्यते क्वचित् ॥ ३२ ॥
क्वचिल्लक्षे सहस्रे वा दृश्यते तादृशो जनः ।
एको यथा व्रतोऽस्माभिरन्ये शान्ताऽऽशयाः स्थिताः ॥ ३३ ॥
अद्याप्यस्मदभीष्टन्तु न सिद्धं सुरनायक ।
विचारयाऽग्रे यद्योग्यं शुभं नः स्याद्यथा हरे ॥ ३४ ॥
एवमुक्तः शतमखः विचार्य वचनं तदा ।
प्रणिपत्य गुरुं वाचस्पतिमूचे कृताञ्जलिः ॥ ३५ ॥
गुरो विमृश्यतां चैतत्कुतो नः सिद्धिरद्य नो ।
हरिवल्लभया प्रोक्तं न मृषा भवितुं क्षमम् ॥ ३६ ॥
तत्कुतोऽस्मान् मानवा नो यजन्ति विधिपूर्वकम् ।
भवतः स्यादविदितं न हि लोकत्रये स्थितम् ॥ ३७ ॥

त्वं हि सर्वान्तरगतं वेत्सि सर्वाऽऽन्तरेशवत् ।
तन्नो ब्रूहि शिवं येन प्राप्स्यामो ह्यविलम्बितम् ॥ ३८ ॥
एवं शतक्रतुवचो निशम्याऽऽङ्गिरसो मुनिः ।
निमीलिताक्षः सुचिरं ध्यात्वोवाच सुरेश्वरम् ॥ ३९ ॥
शृणु मद्वचनं पाकशासनाऽतिशुभोदयम् ।
अभीष्टं भवतां कालात्सेत्स्यत्यत्र न संशयः ॥ ४० ॥
गच्छ देवगणैः साकं पुनः कमलवासिनीम् ।
सन्तोष्याऽभीष्टसिद्धिं त्वं भजिष्यसि शतक्रतो ॥ ४१ ॥
उपायो नास्ति चाऽत्राऽन्यो येनेष्टं सिध्यति द्रुतम् ।
तत्त्वं गच्छ महादेवीं शरणं शरणेष्टदाम् ॥ ४२ ॥
इति श्रुत्वा गुरुवचो देवैः सह दिवस्पतिः ।
जगाम जाह्नवीतीरे हिमशैलतटोपरि ॥ ४३ ॥
तत्र गत्वा सुविमले स्वर्धुनीतोय आप्लुतः ।
अनिमेषगणैः साकं तपस्येव मनो दधे ॥ ४४ ॥
ध्यायन् हरिमनोज्ञाङ्गीपादपद्मयुगं मुहुः ।
आवर्त्तयन्नामगणमष्टाविंशतिसङ्ख्यकम् ॥ ४५ ॥
अवष्टभ्य भुवं पादाऽङ्गुष्ठाऽग्रेणेन्द्रमुख्यकाः ।
ऊर्ध्ववाहा निरालम्बा मारुताऽऽहारतत्पराः ॥ ४६ ॥
एकाग्रचिता ह्यचलकायचक्षुर्मनोवचः ।
शिलोत्कीर्णसुपाञ्चालीसङ्घवत्संस्थितास्तदा ॥ ४७ ॥
एवं त्रिसप्तदशके मासेऽतीते भृगूद्वह ।
उग्रेण तपसा तुष्टा प्रत्यक्षीभवदञ्जसा ॥ ४८ ॥
तत्राऽऽगत्य सुरानिन्द्रप्रमुखान् तान् निशाम्य तु ।
काष्ठकुड्यसमान् ध्यानतत्परान् प्राह सा रमा ॥ ४९ ॥
भो भो देवाः सुरेशान प्रसन्नाऽस्मि वरप्रदा ।
विरमन्तु भवन्तोऽस्मादत्युग्रतपसो बुधाः ॥ ५० ॥

ब्रुवन्तु वो वाञ्छितं यत्प्रददाम्यविशङ्कितम् ।
इति श्रुत्वा वचो देव्या मधुरस्वरसुन्दरम् ॥ ५१ ॥
उन्मीलितदृशो देवा दृष्ट्वा देवीं हरिप्रियाम् ।
पूर्वदृष्टां स्मितापाङ्गीं दण्डवत्पतिता भुवि ॥ ५२ ॥
हर्षरुद्धकलाऽव्यक्तवाचा स्तोतुं प्रचक्रमुः ।
शरणागतदीनार्त्तगिरिदारणवज्रिणि ॥ ५३ ॥
रक्षाऽस्मान् प्रणतान् लक्ष्मि नारायणि नमोऽस्तु ते ।
यत्कृपालेशमासाद्य नराः पङ्ग्वन्धका अपि ॥ ५४ ॥
स्पर्धन्ति विधिमुख्यैः सा नारायणि नमोऽस्तु ते ।
पुराणपुरुषो विष्णुर्यां विना सोऽपि पालने ॥ ५५ ॥
न शक्तः सा परा त्वं वै नारायणि नमोऽस्तु ते ।
पराशक्तिस्त्वमीशानी वाच्यवाचकरूपिणी ॥ ५६ ॥
सर्वसारमयी त्वं वै नारायणि नमोऽस्तु ते ॥
सृष्टिकर्त्री ब्रह्मशक्तिर्गोश्री(?)र्विष्णुवलोद्यमा ॥ ५७ ॥
संहारिणी रुद्रशक्तिर्नारायणि नमोऽस्तु ते ।
इति स्तुत्वा स्ववृत्तान्तं प्रवक्तुमुपचक्रमुः ॥ ५८ ॥
मातः पुरा वरं प्राप्य त्वत्तो याता वयं दिवि ।
तदद्यापि न सम्पन्नं नरा नो न यजन्ति वै ॥ ५९ ॥
तद्यथाऽस्मान् यजन्त्येते भवन्त्सत्परायणाः ।
तथा कुरु महादेवि स्युर्नराः पशवो हि नः ॥ ६० ॥
इति देववचः श्रुत्वा देवसाहाय्यकारणात् ।
विचार्य देवान् प्रोवाच शृणुध्वं विबुधर्षभाः ॥ ६१ ॥
मया यदुक्तं पूर्वं वो तत्तथैव न चाऽन्यथा ।
निष्कामास्तु नराः कालस्वभावात्तत्र किम्भवेत् ॥ ६२ ॥
भवत्वेवं तथाप्यत्र विधास्ये भवदीप्सितम् ।
इत्युक्त्वा सा स्वमनसा कुमारं दिव्यवर्चसम् ॥ ६३ ॥

उत्पाद्य तरसा तेभ्यो दत्त्वोवाच बुधान् तदा ।
अयं कुमारः कामाख्यो महाबलपराक्रमः ॥ ६४ ॥
साधको भवतां कार्ये भविष्यति न संशयः ।
एतत्सत्याय योगेन मर्त्याः स्युर्वो वशंवदाः ॥ ६५ ॥
एनं गृहीत्वा गच्छन्तु भवन्तो वाञ्छिताऽऽप्तये ।
वत्स काम सुरार्थं त्वं जित्वा मर्त्यानशेषतः ॥ ६६ ॥
संस्थापय सुरेन्द्रादिसुराणां वशवृत्तिषु ।
इत्युक्त्वाऽन्तर्हिता सद्यः पश्यतां च दिवौकसाम् ॥ ६७ ॥
ततः सुरा नमस्कृत्य काममादाय संययुः ।
आगत्य स्वर्भुवि तदा कामं सत्कृत्य सर्वतः ॥ ६८ ॥
देवैः सह तदोवाच कामं संश्रयपूर्वकम् ।
इन्द्रः संस्तुत्य सम्बोध्य मधुरस्मितपूर्वकम् ॥ ६९ ॥
काम त्वं रमया सृष्टो मनसाऽस्मद्धितेप्सया ।
त्वं पञ्चहायनो बालः कथमस्मत्समीहितम् ॥ ७० ॥
साधयिष्यसि तद्ब्रूहि यथाऽस्मद्वाञ्छितम्भवेत् ।
एवमिन्द्रवचः श्रुत्वा मत्वा स्वस्याऽवहेलनम् ॥ ७१ ॥
रुषा कषायिताक्षः स उवाच स्फुरिताऽधरः ।
शृणु शक्र सहस्राक्ष नाऽवज्ञां कर्त्तुमर्हसि ॥ ७२ ॥
बालोऽपि सिंहः करिणां मण्डलीदण्डनक्षमः ।
न पश्यस्यग्निकणिका दहत्याखण्डलं वलम् ॥ ७३ ॥
वीर्येन कालो देशो वा हेतुर्नैसर्गिकं हि तत् ।
तस्मादभीष्टं किं यत्ते मया साध्यं वद द्रुतम् ॥ ७४ ॥
पश्यसीमं क्षणं शक्र भवदीप्सितसाधनम् ।
नोक्तं त्वया यावदिह तावत्सिद्ध्यन्तरायकम् ॥ ७५ ॥
इति कामवचः श्रुत्वा प्राह वज्रधरस्तदा ।
काम मा क्रुध यन्नोक्तं तत्ते वीर्यविवृद्धये ॥ ७६ ॥

रमादेव्या यदुक्तं तन्मृषा नैव तथैव तत् ।
त्वं साक्षात् परमेशानीमनोजातोऽस्मदर्थतः ॥ ७७ ॥
साक्षाद्धरेः क्षेत्रभवः किमसाध्यं त्वया भवेत् ।
नरा यथाऽस्मद्वशगा यजन्त्यनुदिनं हि नः ॥ ७८ ॥
कर्त्तव्यं भवता तद्वत् येनाऽहं त्रिजगत्पतिः ।
भवामि पशवोऽस्माकं पाल्याः स्युर्मनुजा भुवि ॥ ७९ ॥
एवमिन्द्रवचः श्रुत्वा कामः प्रोवाच सस्मितः ।
फल्गुवाचा हर्षयंस्तान् सुरान् वीर्येण दर्पितः ॥ ८० ॥

इति श्रीत्रिपुरारहस्ये इतिहासोत्तमे दत्तरामसंवादे-माहात्म्यखण्डे कामोपाख्यानं नाम द्वादशोऽध्यायः ॥१०४९॥

# अथ त्रयोदशोऽध्यायः ।

पुरन्दर गतोऽहं ते कार्यसिध्यै न तन्मृषा ।
एकलोऽहं विजित्याऽऽशु करोमि त्वद्वशे नरान् ॥ १ ॥
इत्युक्त्वा धनुरादाय निषङ्गञ्च महत्तरम् ।
पश्यतां सर्वदेवानां भुवमाक्रान्तवान् रुषा ॥ २ ॥
पद्मकिञ्जल्कसङ्काशः पद्मपत्रनिभेक्षणः ।
फुल्लपद्मसमानाऽऽस्यः पक्वविम्बरदच्छदः ॥ ३ ॥
कुण्डलप्रोल्लसद्गण्डो रत्नकोटीरशोभितः ।
कोमलाङ्गो दीर्घबाहुः पीताम्बरलसत्कटिः ॥ ४ ॥
वामहस्तलसच्चापो दक्षहस्ताऽऽत्तसायकः ।
आमर्षसभ्रुकुटिलः कुमारः पञ्चहायनः ॥ ५ ॥
जगाम पृथिवीमध्ये पश्यतां नयनोत्सवः ।
इन्द्रोऽपि स्वगणैर्द्रष्टुं कृत्यं कामस्य दुष्करम् ॥ ६ ॥
ऐरावतं समारुह्य वज्रहस्तस्समाययौ ।
अन्येऽपि देवा ऋषयः सिद्धविद्याध्रकिन्नराः ॥ ७ ॥
गगने संस्थितास्तत्र यत्र कामो भुवि स्थितः ।
अथ कामो नरान् प्राह समाहूय रुषा वचः ॥ ८ ॥
भो नराः शृणुताऽऽज्ञां मे भवन्तः सर्व एव हि ।
यजन्तु देवान् शक्रादीन्न चेच्छास्या हि मे नराः ॥ ९ ॥
एतद्वाक्यं समाकर्ण्य जना जहसुरुच्चकैः ।
नूनं स्तनन्धयः कस्याप्ययं स्यात्क्रीडने रतः ॥ १० ॥
वदन्त एवमन्योन्यं जनास्तत्सौभगेक्षकाः ।
अहो धन्यतमा चाऽस्य जननी यदपत्यकम् ॥ ११ ॥

ईदृग्विधं सुचार्वङ्गं नयनाकर्षणं प्रियम् ।
नैवंविधः शिशुर्दृष्टो भुवि कस्याऽपि केनचित् । १२ ।
कोऽप्ययं राजतनयो नेदृशः प्राकृतो भवेत् ।
इत्येवं वदतां तेषां जनानां स रमासुतः ॥ १३ ॥
विस्मापयन्नुवाचोच्चैः शृण्वतां वसुधौकसाम् ।
भो नरा मां प्राकृतकं न जानीथ कुमारकम् ॥ १४ ॥
अहं पद्मालयासूनुरागतो मातृशासनात् ।
विधातुं वो निर्जराणां सर्वान् मर्त्यान् वशंवदान् ॥ १५ ॥
साम्नाऽथ वाऽपि दण्डेन करोमि वशवर्त्तिनः ।
देवानां नात्र सन्देहो मतं वो वदथाऽऽशु मे ॥ १६ ॥
एवं वचः समाकर्ण्य प्रोचुस्ते विस्मिता जनाः ।
कुमार शृणु नो वाक्यं किमर्थं देवतावशे ॥ १७ ॥
स्थास्यामस्ते कुतोऽस्माकं न तिष्ठन्ति वशे सुराः ।
यथाऽस्माभिर्न कृत्यं वै तेषां तैरपि नस्तथा ॥ १८ ॥
अन्यच्चाप्यवगच्छ त्वं राजा नो मानवः प्रभुः ।
वीरव्रतोऽयमध्यास्ते ब्रह्मावर्त्ते तु सम्प्रति ॥ १९ ॥
वशंवदास्तस्य वयं स नः पालयिता प्रभुः ।
न तवाऽऽज्ञां करिष्याम एकाज्ञावशवर्त्तिनः ॥ २० ॥
इत्थं ब्रुवत्सु मर्त्येषु क्रोधारुणितलोचनः ॥
अस्त्रजालेन तान्मर्त्यान् बबन्धाऽद्भुतविक्रमः । २१ ॥
एतस्मिन्नन्तरे तत्र कर्णात्कर्णं निशम्य तत् ।
समागता राष्ट्रपालाः कोटिशः प्रोद्यताऽऽयुधाः ॥ २२ ॥
तान् दृष्ट्वा पुनरेवैषः क्रोधाग्निज्वलिताऽऽकृतिः ।
शरान् धनुषि सन्धाय पदैकमपि नाऽचलत् ॥ २३ ॥
तं दृष्ट्वा सुन्दरं बालं विस्मापनपराक्रमम् ।
प्राहुस्तं राष्ट्रपालास्ते दर्पमानोद्धतं वचः ॥ २४ ॥

रे कुमारक मा नाशमुपैह्यद्य बलात् स्वयम् ।
पतङ्ग इव दावाग्निमस्मद्रोषेण सङ्गतः ॥ २५ ॥
आत्मनाशाय चोद्युक्तो व्यर्थं त्वं मातृशोचन ।
एवं तेषामुपश्रुत्य वचो वै मर्मकृन्तनम् ॥ २६ ॥
नाऽपश्यत्तत्र किमपि रोषाऽन्धीकृतलोचनः ।
प्रबुद्धः क्रोधमूर्च्छायाः क्षणेन प्राह तान् प्रति ॥ २७ ॥
व्यर्थं कत्थन्ति वै बालाः न बालो वयसाऽल्पकः ।
वीर्याल्पकोऽल्पमेधाश्च बालः प्रोक्तो विचक्षणैः ॥ २८ ॥
तद्वो वीर्यं बलं शस्त्रं प्रदर्शयत मा चिरम् ।
अनन्तरं मदीयास्त्रवीर्योर्वरितकीर्त्तिकान् ॥ २९ ॥
विधास्यामि द्रुतं युष्मान् व्यर्थां वाचं विमुञ्चथ ।
अथैतद्वाक्यतो द्राग् तुन्नास्ते राष्ट्रपालकाः ३० ॥
ववर्षुरस्त्रजालानि सान्द्राऽऽसारानिवाऽम्बुदाः ।
शस्त्राऽऽसारास्तेऽभितस्तं पतन्तः प्रोल्लसन्ति वै ॥ ३१ ॥
राकेन्दोर्ज्वलितोल्कानां सहस्रं पततामिव ।
आयातीं शस्त्रवृष्टिं स दृष्ट्वा लघुपराक्रमः ॥ ३२ ॥
अस्त्रवृष्ट्या क्षणेनैको नाशयामास सर्वतः ।
खण्डितान्यष्टधा तेषां शस्त्राण्यासन् पृथक्पृथक् । ३३ ॥
शस्त्रनीहारमुक्तोऽथ कामो दिनमणिर्बभौ ।
तद्दृष्ट्वा शक्रमुख्यास्तं शशंसुः साधु साध्विति ॥ ३४ ॥
अवाकिरन् पुष्पवर्षैर्वादयन्तोऽथ दुन्दुभीन् ।
पुनर्द्रुततरं कामस्तान् प्रत्येकं शरैस्त्रिभिः ॥ ३५ ॥
विव्याध समरे तैस्ते नामशेषत्वमापिताः ।
कटिबाहुशिरोवंङ्घ्रिपार्श्वकुक्षिषु दारिताः ॥ ३६ ॥
ते खण्डिताः समभवन् खण्डैः कीर्णा वसुन्धरा ।
शोणितस्रोतसस्तत्र वव्रुरुष्णोदका इव ॥ ३७ ॥

केशाऽन्त्रशैवला मीनीकृताङ्गुलिसहस्रकाः ।
ऊर्ध्वन्मुण्डाऽसंख्यगणाः (?) पिशाचोत्सवदर्शनाः ॥ ३८ ॥
मरालीभूतकाकौघाः तरङ्गीभूतहोतिकाः ।
फेनिलौघा महावेगा निम्नाऽऽवर्त्तशताऽऽकुलाः ॥ ३९ ॥
भीरूणां हृदये कम्पं विदधति पदे पदे ।
एतदत्यद्भुतं दृष्ट्वा कामस्याऽमोघविक्रमम् ॥ ४० ॥
इन्द्रादयोऽमराः स्वेष्टं सिद्धमित्येव सञ्जगुः ।
तत्राऽन्तरे चारगणाः श्रुत्वा राज्यस्य विप्लवम् ॥ ४१ ॥
वीरव्रताय कथितुं ब्रह्मावर्त्ते समागताः ।
प्रविश्य राजधानीं ते द्वारिकान् प्रोचुरञ्जसा ॥ ४२ ॥
विज्ञापयन्तु नः प्राप्तान् महाराज्ञे यशस्विने ।
कार्यमात्यन्तिकं ह्यस्ति द्रुतं नात्र विलम्ब्यताम् ॥ ४३ ॥
इति श्रुत्वा चारवाक्यं द्वारिकाः सहसोत्थिताः ।
स्वनाथाय जगुर्वृत्तं चारोक्तं तं निशम्य तु ॥ ४४ ॥
द्वारनाथो महाराजसविधे वेगवत्तरम् ।
गत्वाऽऽशीर्भिर्वर्धयित्वा कृताञ्जलिरुवाच तम् ॥ ४५ ॥
सिंहासनगतं मन्त्रिमुख्यैः पौरैरुपासितम् ।
मण्डलाधिपसंघातैर्दूतैर्देशान्तराऽऽगतैः ॥ ४६ ॥
भटैर्भटाधिपैः शूरैः प्रतिपक्षक्षयङ्करैः ।
निशितोत्खातसंवेल्लत्करवालकरोद्यतैः ॥ ४७ ॥
परीतं हेमशृङ्गस्थमृगेन्द्र इव संस्थितम् ।
महाराज यशःसूर्यहतशत्रुतमिस्रक ॥ ४८ ॥
प्राप्ताश्चारैः सोमदिशः प्रोचुरासन्तिकन्तु तैः ।
अग्रे यदाज्ञापयति देवस्तद्विदधाम्यहम् ॥ ४९ ॥
इति श्रुत्वा द्वारनाथवाक्यं राजेङ्गितस्ततः ।
वर्द्धनो मन्त्रिराट् प्राह प्रवेशय स मां द्रुतम् ॥ ५० ॥

आज्ञप्त एवं द्वारेशश्चारान् तत्राऽऽनयद्द्रुतम् ।
चारा दूरान्महीपालं नत्वा बद्धकराः स्थिताः ॥ ५१ ॥
तान् प्राह वर्द्धनोऽत्यन्तप्रियो राज्ञः प्रिये स्थितः ।
चारा निरामयं कच्चिद्देशेषु प्रविभावितम् ॥ ५२ ॥
राष्ट्रकोशेषु सेनासु प्रकृतिष्वस्ति सारुप्रतम् ।
आत्यन्तिकं वचो राज्ञः पादयोर्विनिवेद्यताम् ॥ ५३ ॥
तन्निशम्य नता भूयश्चारा बद्धकराम्बुजाः ।
नाथ ते वर्धते कीर्तिसितचन्द्रः प्रतिक्षणम् ॥ ५४ ॥
पराः पारं गताः सद्यो लोकालोकमहीभृतः ।
हिमवत्पार्श्वतः कश्चित्कुमारोऽर्कप्रतापनः ॥ ५५ ॥
औत्तरानष्टपालान् स निजघान महारणे ।
बद्धाः प्रकृतयः सर्वा देशो विप्लावितोऽद्य वै ॥ ५६ ॥
स एकाकी पद्मसमः कमलाऽङ्घ्रिकराङ्कः ।
हतास्तेन मुहूर्त्तेन कोटिशो राष्ट्रनायकाः ॥ ५७ ॥
एतद्विज्ञापितं देव भवानग्रे परायणम् ।
इति तद्वाक्यमाकर्ण्य राजा वीरव्रतस्तदा ॥ ५८ ॥
परामृशन् पार्श्वसंस्थं चापं शरधिमाशु वै ।
उत्थाय निर्ययौ सोमकाष्ठाभिमुखतस्तदा ॥ ५९ ॥
तदा शीघ्रं पुरो गत्वा वर्धनः प्रणिपत्य तम् ।
उवाचाऽमृतसंस्राववाक्यं वाक्यज्ञकोविदः ॥ ६० ॥
क्षम्यतां नाथ भगवन् स्वयं तं शुभमेष्यति ।
विमृश्यकारिणं सम्यगशुभं दूरतस्त्यजेत् ॥ ६१ ॥
मन्त्रिभिः सहितो मन्त्रं कृत्वा निश्चित्य चाऽऽगमम् ।
फलाऽवसानं कर्त्तव्यं विभज्य स्वमनीषया ॥ ६२ ॥
एवं बहुप्रार्थितं तन्मन्त्रिणाऽऽकर्ण्य भूपतिः ।
सभां सभासदः पश्चाद्राजानमनु ये गताः ॥ ६३ ॥

पञ्चाशदक्षौहिणीपाः राज्ञोऽग्रे दूरतो गताः।
ससेनास्तान् वर्धनस्तु संन्यवर्त्तयत द्रुतम्॥ ६४॥
पुनः सभां समागम्य नानारत्नोज्ज्वलान्तदा।
आसीनाः स्वस्वसंस्थाने राज्ञा सह सभासदः॥ ६५॥
अनन्तरं महाराजं वर्धनः प्राह सान्त्वयन्।
आकर्णय महाराज समाधाय मनो वचः॥ ६६॥
दण्डनीतिमुपाश्रित्य राजानः सुखभागिनः।
विमृश्यकारी तत्राऽऽदौ श्लाघितस्तेन वच्म्यहम्॥ ६७॥
राज्ञा विमृश्य कर्त्तव्यं सर्वं सम्यक् सुमन्त्रिभिः।
साम दानं भेददण्डौ प्रोक्ता नीतावुपायकाः॥ ६८॥
पूर्वपूर्वाऽसम्भवे तु तत्र स्यादुत्तरोत्तरम्।
अत्राऽर्हः कतमोपायो भवेद्विमृश मन्त्रिभिः॥ ६९॥
क्वचिद्विमर्शरहितं कर्त्तव्यं सविधोद्भवे।
अन्तरयति तत्राऽपि स्यात्तर्हि तदपीष्यते॥ ७०॥
व्यवस्य मन्त्रिभिश्चैतदुद्यमं क्रियतां ततः।
एतच्छ्रुत्वा वचो राजा मन्त्रिणां मुखमैक्षत॥ ७१॥
ज्ञात्वेङ्गितं मन्त्रिणस्तु प्राहुः स्वस्वमतं तदा।
कश्चित्सामोत्तमं प्राह दानमेकः परं परः॥ ७२॥
दण्डमाहाऽपरस्तत्र श्रुत्वा बहुविधं मतम्।
राजा तुष्णीं स्थितः किञ्चिदीक्षाञ्चक्रेऽथ वर्धनम्॥ ७३॥
तदोत्थाय प्रणम्याऽग्रे वर्द्धनः प्राक्रमद्वचः।
राजाऽन्यन्मन्त्रिभिः प्रोक्तं स्वस्वाऽवसरगोचरम्॥ ७४॥
सर्वं सदेव तत्राऽपि प्रकृते तद्विचार्यताम्।
समे साम स्वपक्षा ये चाऽन्यये वाऽपरं बले॥ ७५॥
तदसत्त्वे द्वितीयं स्यात्परे परबलाश्रये।
परस्य तत्र नो लाभो यत्राऽयः स्वस्य वै भवेत्॥ ७६॥
तत्राप्यसति तस्याऽन्त्योऽपरः स्याद्बहुसंश्रयः।
सोऽप्याद्याभ्यामेव भवेद् न चेद्बहुसमाश्रयः॥ ७७॥

चतुर्थस्तत्र वै प्रोक्तः सर्वथाऽन्याऽनुपस्थितौ ।
यत्राऽऽद्येन सुसम्पाद्यं तत्रान्त्यं वै प्रयोजयन् ॥ ७८ ॥
अनर्थायैव तत्सर्वं न फलोदयमावहेत् ।
पराऽर्थस्य विशेषेण निश्चयान्नाऽद्ययोः स्थलम् ॥ ७९ ॥
आद्योत्थितत्वान्नाऽद्यस्य चाऽसहायात् परश्च न ।
तस्मादन्त्य उपायोऽत्र भाति शेषित इत्यसौ ॥ ८० ॥
तत्र चाऽन्त्यमनालोच्य कुर्वन्नप्यवसीदति ।
बालः पञ्चाब्दक इति तेन राष्ट्रेश्वरा जिताः ॥ ८१ ॥
देवकार्यार्थमायातस्तस्माद्बलवदुत्तरम् ।
तत्राप्यर्थो न राज्यादौ तत्र दानं हि सत्तमम् ॥ ८२ ॥
दाने समुन्नतिर्नो चेत् समानं बलमिष्यताम् ।
एकः कुमारस्तेनाऽत्र हता राष्ट्राधिपाः क्षणात् ॥ ८३ ॥
कोटिशोऽतिबलास्तेन दैवं बलमिदं भवेत् ।
तत्राऽस्माभिः प्राकृतकैः फलं नैव समीहितम् ॥ ८४ ॥
तस्माद्राजन् कुलगुरुमुपतिष्ठ पिनाकिनम् ।
महादेवं तदंशेन सर्वं सेत्स्यति ते मतम् ॥ ८५ ॥
इतोऽन्यन्मे बुद्धिपथे न समायात्युपायकः ।
समं स्वस्वबलेनैव समाक्रामन्ति निम्नगम् ॥ ८६ ॥
तस्मान्महाराज मया विज्ञापितमिदं वचः ।
ससभ्यस्त्वं विचार्याऽथ सफलं कर्त्तुमर्हसि ॥ ८७ ॥
एतच्छ्रुत्वा वर्द्धनस्य मतं सर्वमतोत्तमम् ।
साधु साध्विति ते सभ्या मन्त्रिणोऽप्यूचुरादरात् ॥ ८८ ॥
राजा तदाकर्ण्य तदा महादेवस्य तोषणे ।
चकार निश्चलां बुद्धिं वर्द्धनोक्त्या विचक्षणः ॥ ८९ ॥
विप्रैराचार्यमुख्यैश्चाऽप्यनुज्ञातो यथाविधि ॥ ९० ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
दत्तरामसंवादे कामाख्याने त्रयोदशोऽध्यायः ॥१३९॥

# अथ चतुर्दशोऽध्यायः ।

अथ राजा शुभेऽरण्ये तीर्थरोधसि निर्जने ।
राज्यं मन्त्रिषु संन्यस्य तपस्येव मनो दधे ॥ १ ॥
तत्र स्थितः शशाङ्कार्धशेखरं जगदीश्वरम् ।
ध्यायन्नेकाग्रचित्तेन जितबाह्येन्द्रियो बभौ ॥ २ ॥
एवं सर्वात्मना राजा जलाहारो महेश्वरम् ।
उपस्थितो दिनानान्तु पञ्चकं तदनन्तरम् ॥ ३ ॥
निराहारो निराधारो नियतेन्द्रियमानसः ।
ध्यायन् पिनाकिपादाब्जमूर्ध्वबाहुर्नरेश्वरः ॥ ४ ॥
बाह्यं वाऽप्यान्तरं वाऽपि न किञ्चिद्वेद तत्परः ।
एवं दिनत्रयेऽतीते चाष्टमे क्षणदामुखे ॥ ५ ॥
आविर्बभूव सर्वेशः साधितुं भक्तवाञ्छितम् ।
शारदाभ्रप्रतीकाशवृषस्कन्धविराजिते ॥ ६ ॥
आसने नूत्नरत्नौघचित्रजातिविचित्रिते ।
मुक्ताजालसमाकीर्णे राङ्कवाजिनकोमले ॥ ७ ॥
आसीनः स्फटिकाऽच्छाऽऽभो जटामण्डलमण्डितः ।
बालचन्द्रकृतोत्तंसस्त्रिनेत्रो नागकुण्डलः ॥ ८ ॥
फुल्लपङ्कजपञ्चास्यः प्रसन्नवदनोडुपः ।
कुण्डलाऽहिफणान्यस्तमणिराजत्कपोलभूः ॥९॥
चतुर्बाहुलसच्छूलकपालमृगटङ्ककः ।
सर्पयज्ञोपवीताऽऽढ्यो रुद्राक्षस्त्रगलङ्कृतः ॥ १० ॥
व्याघ्रचर्मपरीधानो गजचर्मोत्तरीयकः ।
व्यालेशमण्डितौघेन मण्डिताङ्गोऽतिसुन्दरः ॥ ११ ॥

रुद्राणीविलसद्वामवामाऽङ्कः करुणानिधिः ।
भस्मोद्धूलितसर्वाङ्गो रुद्राक्षस्रगलङ्कृतैः ॥ १२ ॥
पठद्रुद्राऽध्यायमन्त्रैः प्रमथैः परिवारितः ।
राज्ञः पुरोऽवस्थितः स महादेवः परात्परः ॥ १३ ॥
प्रोवाच दृष्ट्वा राजानं ध्येयमात्रात्मना स्थितम् ।
मधुराऽक्षरसंयुक्तं सम्बोध्य कृपया शिवः ॥ १४ ॥
तदा प्रमथसङ्घस्य कोलाहलमहाध्वनेः ।
ध्येयात्परावृत्तमनः प्रोन्मील्य नयनेऽग्रतः ॥ १५ ॥
अपश्यद्देवदेवं तमम्बिकाप्रमथाऽन्वितम् ।
प्रणतो दण्डवद्भूमौ मूर्ध्न्याऽऽहितकराञ्जलिः ॥ १६ ॥
तद्दर्शनोत्सवोद्यच्चन्द्रमाश्च द्विगुणाङ्ककः ।
आनन्दाऽश्रुपरीवाहप्लावितोरःस्थलाऽवनिः ॥ १७ ॥
भूयो भूयः प्रणम्यैवं प्रस्तोतुमुपचक्रमे ॥ १८ ॥
शङ्कर भक्तहितङ्कर जगतां रक्षक दुष्टसुशिक्षक
ते पादाम्भोजं विबुधेशानामपि नो लभ्यं करुणाब्धे ।
तत्ते भवतो निर्मलदृष्ट्या पश्याम्यद्य महाफलदं
तस्मान्मत्तो धन्यो नाऽन्यो मानुषलोके जगदीश ॥ १९ ॥
प्राग्जन्मार्जितपुण्यसमूहैराप्तं दुर्लभमानुष्यम्
तत्र च गात्रं बलवन्नेत्रज्ञातं स्वान्तं विमलतरम् ।
एवं सत्यपि करुणासिन्धुं त्यक्त्वाऽन्यत्र रता मनुजा
ये तान्मूढान्नरपशुभूतान् धिग्धिक् स्वार्थच्युतिहेतून् ॥ २० ॥
हस्तौ तावकपदपरिचर्यासक्तौ वाणी गुणकथने
नेत्रे श्रीशिवमूर्तिनिरीक्षाकर्माणि चित्तं ते तत्त्वे ।
कर्णौ लीलाऽकर्णननिरतौ चरणौ देवपरिक्रमणे
कालो यस्य त्वेवं यातो धन्याद्धन्यः स एवाऽत्र ॥ २१ ॥

शम्भो तावकपदसेवायां क्षणमपि येन स्थितमत्र
तस्य बुधेशपदं तृणतुल्यं मानुषभाग्यं कियदुक्तम् ।
एवं सत्यपि मम या वाञ्छा क्षुद्रार्थेषु निविष्टा सा
लोके विद्वत्परिहसनार्था भूयादीश्वर चिरकालम् ॥ २२ ॥
तस्मान्मह्यं दिश देवेश प्रेमोच्छित्तिं विषयेषु प्रायो
जानन्नपि भुवि लोको विषयो दुःखनिदानमिति ।
वाञ्छन्त्येव सदा तव मायामोहितचित्ता शिव मयि ते
करुणादृष्टिर्विलसतु दीनेऽनन्यशरण्ये प्रणतोऽस्मि ॥ २३ ॥
एवं संस्तुत्य देवेशं शङ्करं लोकशङ्करम् ।
प्रेमविह्वलितस्वान्तो दण्डवत् प्रणतो भुवि ।
अथ देवोऽवरुह्याऽऽशु वृषाद्गौरीयुतस्तदा ॥ २४ ॥
उपसृत्य समीपे तं राजानं मूर्ध्नि सोऽस्पृशत् ।
उवाच प्रेममधुरसुन्दरं वचनं शिवः ॥ २५ ॥
वत्सोत्तिष्ठ द्रुतं ब्रूहि प्रियं किं तेऽभिवाञ्छितम् ।
यन्न लभ्येत तल्लोके मद्भक्तस्य न विद्यते ॥ २६ ॥
तच्छ्रुत्वा वचनं राजा प्रोत्थायाऽञ्जलिसंयुतः ।
शिवाऽङ्घ्रिदर्शनोदश्चद्वैराग्यभरमन्थरः ॥ २७ ॥
महादेव प्रियं मेऽद्य यदि त्वं दातुमिच्छसि ।
तर्हि मे विषयाऽऽसक्तिं समूलां विनिवर्त्तय ॥ २८ ॥
नेच्छामि किञ्चित्त्वत्पादसेवनादन्यदल्पकम् ।
कृपा पूर्णा यदि मयि नय मां त्वत्समीपतः ॥ २९ ॥
राज्ञ एवं वचः शम्भुर्निशम्य प्राह सुस्मितम् ।
वत्सैतदस्तु कालेन मत्सामीप्यं भविष्यति ॥ ३० ॥
परन्तु सद्यस्त्वं गच्छ कामं जय दुरासदम् ।
तस्य जेता भुवि दिवि प्रायो नैवाऽस्ति मामृते ॥ ३१ ॥

तस्मात् कामं विनिर्जित्य प्रजाः पालय धर्मतः ।
एवं तद्वचनं श्रुत्वा ननाम भुवि दण्डवत् ॥ ३२ ॥
प्राह देवं महेशानं न वाञ्छामीति ते रितम् (?) ।
प्रसादं कुरु ते पादसेवां हित्वा महत्तरम् ॥ ३३ ॥
त्रिलोकेशत्वमपि मे माऽस्तु किं सार्वभौमता ।
वद देव त्वया प्रोक्तं ददामीत्यभिवाञ्छितम् ॥ ३४ ॥
तदन्यथयितुं कस्मान्नाऽहं शत्रुजयं वृणे ।
त्वत्सान्निध्यं यदि न मे तर्ह्यहं देवसंस्थितः ॥ ३५ ॥
तपस्येव ततो देव वरं फल्गु न मे मतम् ।
इति श्रुत्वा नृपवचो भूयः प्राह महेश्वरः ॥ ३६ ॥
शृणु राजन् त्वया पूर्वं कामस्य जयहेतवे ।
तपश्चरितमेतस्मात्तद्व्यर्थं न भविष्यति ॥ ३७ ॥
यदि पूर्वं मत्समीपप्राप्तये पातितं भवेत् ।
तर्हि तत्फलमेव स्यान्न भवेद्भावना वृथा ॥ ३८ ॥
तस्मादिदं फलं नैव मदुक्तं व्यर्थतामियात् ।
गच्छ कामं रणे जित्वा सार्वभौमत्वमास्थितः ॥ ३९ ॥
अन्ते मज्ज्ञानमासाद्य मत्समीपं प्रपत्स्यसि ।
मत्प्रसादात्तव मनः सदा निर्वासनं भवेत् ॥ ४० ॥
इत्युक्त्वा पश्यतः शम्भुरन्तर्धानं गतस्तदा ।
ततो राजा महादेवं प्रणम्य प्रेमभावतः ॥ ४१ ॥
शिवाज्ञां मानयन्नन्तर्निर्मलः सम्बभूव ह ।
एतस्मिन्नन्तरे कामः सर्वाञ्जित्वा जनान् भुवि ॥ ४२ ॥
बध्वा समागमद्ब्रह्मावर्त्ते तत्र बहिःस्थिताः ।
दृष्ट्वा जनाः कुमारं तं सौन्दर्यौघपरिप्लुतम् ॥ ४३ ॥
निबद्धनयनास्तत्र विस्मृताऽऽत्मगृहादयः ।
यद्यदङ्गं येन दृष्टं तत्सौन्दर्याऽऽहृतेक्षणाः ॥ ४४ ॥

दारुमूर्त्या इव जना निश्चेष्टास्तत्र संस्थिताः ।
तदा कामो नागरिकानाह रोषाऽरुणेक्षणः ॥ ४५ ॥
हे जना मां महाराजं वदन्तु प्राप्तमन्तिके ।
शीघ्रं मच्छास्तिमथ वा युद्धं वा स्वीकरोतु सः ॥ ४६ ॥
इति तद्वचनं श्रुत्वा कामस्याऽत्यद्भुतं जनाः ।
पुरा श्रुतं महाभीमवीर्यं प्राप्तं निशाम्य ते ॥ ४७ ॥
तत्र सुनागराः सर्वे पलायनपरा भवन् ।
हाहेति पुत्र पुत्रेति मातर्भ्रातः सखे इति ॥ ४८ ॥
निर्गच्छध्वं पलायध्वमित्याक्रन्दः समाबभौ ।
तत् परम्परया श्रुत्वा जनाः पौरास्तु सर्वतः ॥ ४९ ॥
निर्जग्मुः स्त्रीबालवृद्धा आह्वयन्तः परस्परम् ।
एवं क्षणात्तन्नगरमुद्वेलमिव सागरम् ॥ ५० ॥
व्याक्षुब्धं जनसन्दोहाक्रन्दकोलाहलेन तत् ।
दुर्गपाला भटाः सेनानायकौघाः सहस्रशः ॥ ५१ ॥
वाहनानि समारुह्य शस्त्रास्त्रधृतबाहवः ।
एतस्मिन्नन्तरे तस्य सेनानीः सुधृतिर्द्रुतम् ॥ ५२ ॥
महावीर्यबलः सेनां प्रस्थाप्य नगराद्बहिः ।
द्वारे निवेश्य द्वाराधिपतीन् प्रागादितः क्रमात् ॥ ५३ ॥
कोणेष्वपि महाशूरभटान् संस्थाप्य गुल्मशः ।
वर्धनस्य गृहं प्रागात् द्रुतं वाहनमास्थितः ॥ ५४ ॥
वर्धनस्तावदेवाऽऽशु संस्थाप्याऽन्तःपुरे जनान् ।
रक्षकान् रक्षणार्थाय दूतान् शीघ्रगमानपि ॥ ५५ ॥
राज्ञे निवेदितुं प्रेष्य स्वयं मन्त्रिभिरावृतः ।
निवेद्य राजपुत्रेषु कामस्याऽऽगमनं ततः ॥ ५६ ॥
निर्जगाम स्वभवनात् सुधृतिं समवैक्षत ।
आगत्य वर्धनं नत्वा प्रोवाच स चमूपतिः ॥ ५७ ॥

शृणु वर्द्धन मद्वाक्यं सेनासेनाधिपैः सह ।
प्रेषिता कामरोधाय विहितं द्वाररक्षणम् ॥ ५८ ॥
गुल्मा निवेशिताः कोणे नागराः सन्निवार्त्तिताः ।
पलायनपराः सर्वे गच्छाम्यहमितः परम् ॥ ५९ ॥
राजपुत्रानुपादातुं शत्रुञ्जयमुखान् ततः ।
तान् पुरस्कृत्य तरसा गच्छामि समराऽवनिम् ॥ ६० ॥
एवं वदति तत्काले सुधृतौ राजपुत्रकाः ।
सहिताः स्वस्वसेनाभिर्निर्जग्मुरमितौजसः ॥ ६१ ॥
शत्रुञ्जयः शत्रुहा च भीमः समरतापनः ।
चत्वारो राजतनयाः शक्रतुल्यपराक्रमाः ॥ ६२ ॥
सन्नद्धगात्रा मुकुटकुण्डलाऽऽद्यैरलङ्कृताः ।
वज्रसंहननाः प्रोद्यद्बहुशस्त्रास्त्रकोविदाः ॥ ६३ ॥
रथेषु सूर्यवर्चःसु सदश्वेषु विराजिताः ।
चामरैर्वीज्यमानास्ते स्तुता वन्दिगणैर्मुहुः ॥ ६४ ॥
सुधृतिस्तान् सुसङ्गम्य नत्वाऽऽरुह्य गजाधिपम् ।
जगाम राजपुत्राणामग्रे सर्वान् समाक्षिपन् ॥ ६५ ॥
उवाच राजपुत्रोऽथ वर्धनं कुलवर्धनम् ।
अप्रमत्तैः कुरु भटै रक्षणं सेनया युतैः ॥ ६६ ॥
सान्तःपुरे स्वनगरे चारैर्वृत्तं निवेदयन् ।
इति श्रुत्वा राजसुतवाक्यं स्वीकृत्य तद्वचः ॥ ६७ ॥
प्रोवाच वदतां श्रेष्ठो वचस्तत्कालसम्मितम् ।
राजपुत्र महाभाग गच्छ त्वं सह सेनया ॥ ६८ ॥
कर्त्तव्यमत्र यत्किञ्चिन्नगरे मयि जीवति ।
न ह्रास्यति त्वत्प्रसादात् प्रायः कृत्यन्तु साम्प्रतम् ॥६९॥
कृतमेवाऽत्रजानीहि भवताऽपि रणोद्यमे ।
सावधानेन योद्धव्यं + + सेनाधिपैः सह ॥७०॥

एतस्मिन्नन्तरे तत्र प्राप्तः कुलपुरोहितः ।
विद्यापतिर्ब्राह्मणौघवृतस्तेजोमयः शुचिः ॥ ७१ ॥
तं दृष्ट्वा राजपुत्रास्ते रथादुत्तीर्य सत्वरम् ।
अभिवाद्य गुरुं विप्रान् प्रश्रयाऽवनताः स्थिताः ॥ ७२ ॥
ततो विद्यापतिः विप्रैराशीर्भिरनुयोज्य तान् ।
फालेषु तिलकं कृत्वा सम्पृश्याऽङ्गानि सर्वशः ॥ ७३ ॥
रक्षां समकरोन्मन्त्रैर्भटावन्नामसंयुतैः ।
अग्रे शिवो रक्षतु त्वां शूलपाणिस्त्रिलोचनः ॥ ७४ ॥
पिनाकी पृष्ठतः पार्श्वे पाशहस्तो महेश्वरः ।
मूर्धानं जटिलस्तेऽव्याद्धस्तौ सर्पविभूषणः ॥ ७५ ॥
कालाग्निनयनो वक्षः कटिं करोटित्वक्पटः ।
रुद्राक्षभूषणः कुक्षिं कपाली पादयुग्मकम् ॥ ७६ ॥
पुष्पवद्दृक् पृष्ठदेशं सर्वतः श्रीशिवङ्करः ।
भस्मनैव विधायाऽङ्गरक्षां दत्त्वाऽऽशिषः शुभाः ॥ ७७ ॥
कारयित्वा महादानान्यपि नानाविधानि च ।
प्रणतस्तैः राजपुत्रैर्विप्रैर्विद्यापतिर्ययौ ॥ ७८ ॥
अथ सर्वे जनाश्चक्रुर्जयशब्दं दिविस्पृशम् ।
सिंहनादं भटास्तद्वच्छङ्खनादञ्च सैनिकाः ॥७९॥
दुन्दुभीन् पटहान् भेरीन् वादयन्तः सुकाहलान् ।
निर्जग्मुः सैनिका राजपुत्रान् संवृत्य सर्वतः ॥८०॥
अश्वानां ह्रेषितं वीरहुङ्कारा गजचीत्कृताः ।
रथघोषा ज्यानिनादा आस्फोटाः क्ष्वेलना अपि ॥८१॥
मिलिता रोदसीमध्यं विदारणकरा इव ।
उत्सिक्तोदधिवत्सेना नगरद्वारतस्तदा ॥८२॥
निर्जगाम महाभीमा भीरुहृत्स्फोटदर्शना ।
द्वितीयसागरमिव भूमध्ये संस्थितिं गतम् ॥८३॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे कामाख्याने चतुर्दशोऽध्यायः ॥१२२२॥

# अथ पञ्चदशोऽध्यायः ।

अथ तां महतीं सेनां सुधृतिर्व्यभजत् क्रमात् ।
शत्रुञ्जयं राजपुत्रं दशाऽक्षौहिणीसंयुतम् ॥१॥
मध्ये निवेश्य पुरतः स्वयं कुञ्जरसंस्थितः ।
विंशत्यक्षौहिणीयुतः स्थितः सेनाधिपैर्वृतः ॥२॥
वामे शत्रुहणं विंशत्यक्षौहिणीयुतं तथा ।
दक्षे भीमं सन्निवेश्य विंशत्यक्षौहिणीयुतम् ॥३॥
विंशत्यक्षौहिणीयुतं पश्चात् समरतापनम् ।
तद्बहिः पृष्ठभागे तु शूलखेटकधारिणः ॥ ४ ॥
महाशूराः सिंहसमाः समरेष्वनिवर्त्तिनः ।
लक्षकोटिसहस्राणां कोटिकोटिशतैर्मिताः ॥ ५ ॥
गदापरिघहस्तास्तु तावन्तो दक्षतः स्थिताः ।
शक्तिचक्रधरा वामे स्थिताः शूरास्तथाऽमिताः ॥६॥
एवं सन्नद्धसेनानां विभज्य सुधृतिस्तदा ।
राजपुत्राय विज्ञाप्य स्वयमग्रे गजास्थितः ॥७॥
कामस्याऽभिससाराऽग्रे विकर्षन् महतीं चमूम् ।
तदन्तरे नारदस्तु जगामाऽऽखण्डलाऽग्रतः ॥ ८ ॥
तमपश्यच्छतमखो रजताऽद्रिसमप्रभम् ।
कृष्णाजिनपरीधानं भस्मदिग्धकलेवरम् ॥९॥
शारदेषज्जलयुतजीमूतमिव खे स्थितम् ।
वायुवेगादिवाऽऽयान्तं वृत्तान्ताऽम्बुसुवृष्टये ॥ १० ॥
कामयुद्धाय लोकाय गजराजोपरि स्थितम् ।
विबुधेशो गजात्तस्मादवरुह्य मुनेस्तदा ॥११॥

चरणौ शिरसा नत्वा सभाज्य विधिदृष्टतः।
पुरः स्थितस्तदा प्राह नारदो विबुधेश्वरम् ॥१२॥
सुत्रामन् किं पश्यसि त्वं राज्ञस्तु महती चमूः।
सुसन्नद्धाऽत्र सम्प्राप्ता पश्याऽनन्ता समुद्रवत् ॥ १३ ॥
भवदर्थं कथश्चैकः कामः संसाधयिष्यति।
यद्यपि श्रीमहत्त्वेन साध्यमेवाऽतिदुष्करम् ॥ १४ ॥
मूर्त्तिप्रधानं नो वीर्यं किन्तु बीजगुणात्तु तत्।
उपलं वटधानाख्या स्थूलमप्यवनीगतम् ॥ १५ ॥
प्ररोहयेच्चैव वटशाखाश्चाप्यतिपल्लवाम्।
तथाऽपि राज्ञः सेना सा त्वसङ्ख्या काम एकलः ॥ १६ ॥
विपरीतमिवाऽऽभाति तस्माद्देवगणैर्वृतः।
कामपृष्ठं समाश्रित्य कामं लक्ष्मीञ्च तोषय ॥ १७ ॥
अन्यथा सा जगन्माता तुभ्यं क्रुध्यत्यवज्ञया।
इति नारदसद्वाक्यमाकर्ण्य सुरराट् ततः ॥ १८ ॥
युक्तमित्येव तज्ज्ञात्वा गन्तुमेव मनो दधे।
ततो नत्वा देवं मुनिं सहितो देवसेनया ॥ १९ ॥
आजगाम कामपार्श्वं मरुत्पितृगणैर्वृतः।
प्राप्तं शक्रं देवगणैर्दृष्ट्वा कामः प्रसन्नधीः ॥ २० ॥
आत्मानं पूजितं मत्वा देवैः शक्रमुवाच ह।
देवेश पश्य महतीं सेनामर्णवसन्निभाम् ॥ २१ ॥
भीरुहृत्कम्पनकरीं नानाध्वजविचित्रिताम्।
वायुतुल्याऽभ्रसदृशैर्धावद्भिरभितो रथैः ॥ २२ ॥
गजैर्नीलाद्रिसदृशैर्दानधारासु निर्झरैः।
रक्तकम्बलसन्ध्याऽभ्रैः चित्रधातुविचित्रितैः ॥ २३ ॥
अश्वैः कल्लोलसदृशैः सर्वतः परिवारिताम्।
एवं शक्रः कामवचो निशम्य प्राह तत्तदा ॥ २४ ॥

शृणु काम कथञ्चैकः सर्वतः संस्थितां चमूम् ।
नानाशूरसमाक्रान्तां योधयस्वतिदारुणाम् ॥ २५ ॥
इति तद्वाक्यमाकर्ण्य कामः क्रोधाऽरुणेक्षणः ।
शृणु शक्र मृषा पूर्वं मया नोक्तं कदाचन ॥ २६ ॥
इमां सेनां निमेषाऽर्द्धात् पश्यतस्तव संक्षयम् ।
नयामि त्वं न सन्देहं कुरु सत्यं वदामि ते ॥ २७ ॥
यावदेव न सम्प्राप्ता मत्समक्षमियं चमूः ।
तावदेव विलम्बं त्वं जानीहि विबुधेश्वर ॥ २८ ॥
एवं तद्वाक्यमाकर्ण्य देवाः सेन्द्रपुरोगमाः ।
अपूजयन् साधुशब्दैर्विस्मिताः सर्वतः स्थिताः ॥ २९ ॥
एतस्मिन्नन्तरे तत्र सेना प्राप्ता समीपतः ।
कामस्तदा तां महतीं सेनां दृष्ट्वा स्वयं पुरः ॥ ३० ॥
ससार पुरतस्तस्याऽऽविस्फारितधनुष्करः ।
यावज्जिगमिषुः कामस्तावदिन्द्रो बुधैर्वृतः ॥ ३१ ॥
परिवार्य बभूवाऽग्रे कामं योद्धुं महामृधे ।
यावत्सेनाद्वयमुखं युक्तं तावच्चमूद्वये ॥ ३२ ॥
महाशब्दः समभवत् युद्धवाद्यित्रनिर्गतः ।
मृदङ्गभेरीपटहशृङ्गकाहलशङ्खजः ॥ ३३ ॥
सिंहनादनेमिघोषमिश्रः प्रतिभयङ्करः ।
प्रवृत्तः शस्त्रसम्पातः सघोषः सेनयोर्द्वयोः ॥ ३४ ॥
विबुधानां मानवानां परस्परमभूद्रणः ।
तत्र शूरा महाकाया मृगेन्द्रसमविक्रमाः ॥ ३५ ॥
नानाशस्त्राऽस्त्रकुशलाः शत्रुपक्षभयङ्कराः ।
समेता द्वन्द्वशस्तत्र समशस्त्रास्त्रवाहनाः ॥ ३६ ॥
रथिभिस्तत्र रथिनो गजस्थैर्गजिनस्तदा ।
अश्विभिश्चाऽश्विनः पादक्रामिणः पादचारिभिः ॥ ३७ ॥

धानुष्कैर्धनुषा युक्ता गदाहस्तैर्गदाधराः ।
खड्गिनः खड्गकुशलैर्धृतमल्लैश्च भल्लिनः ॥ ३८ ॥
भुशुण्डीशक्तिपरशुपरिघप्रासशूलिनः ।
भुशुण्डीशक्तिपरशुपरिघप्रासशूलिभिः ॥ ३९ ॥
योद्धुं समुद्यतास्तत्र क्रमेण समभावतः ।
एवं न्यायेन समरो दैत्यैर्देवैः समेधितः ॥ ४० ॥
मुहूर्त्तमभवत् साम्यान्निश्चले(?)नाप्यनाकुलः ।
धर्मयुद्धरताः सर्वे परस्परजयैषिणः ॥ ४१ ॥
छिद्रान्वेषपराः शस्त्राण्युत्सृजन्तोऽन्तरेऽन्तरे ।
अथ मर्त्यसुरानीकद्वयं सम्मिलितं तदा ॥ ४२ ॥
युद्धं समभवद्घोरं तुमुलं लोमहर्षणम् ।
आह्वयन्तो रोषवाक्यैर्भ्रूकुटिकुटिलाऽननाः ॥ ४३ ॥
स्थिरीभव मत्समक्षं पश्य प्राणान् हरामि ते ।
तव त्राता न चान्योऽस्ति प्रेषयामि यमक्षयम् ॥ ४४ ॥
धिक् त्वामनार्य बहुधा मुधा कत्थस्ययं क्षणः ।
जीवितान्तकरस्तेऽद्य धात्रा क्लृप्तो न चाऽन्यथा ॥ ४५ ॥
हतः पश्य मया त्वं वै न पलाय्य गमिष्यसि ।
इत्यादि वाक्यं बहुधा वदन्तस्ते परस्परम् ॥ ४६ ॥
एवं युद्धे जायमाने महाघोरे भयङ्करे ।
क्रोधेनाऽन्धीकृताः सर्वे नाऽविदुः स्वं परं तथा ॥ ४७ ॥
बुधैर्बुधानां मर्त्यानां मर्त्यैर्युद्धं तदाऽभवत् ।
सेनासंक्षुब्धरजसा पटलेनाऽऽवृतं नभः ॥ ४८ ॥
हेतिवर्षसमाक्रान्त्या ध्वान्तीभूतञ्च सर्वतः ।
एवं स्थितेऽतिरोषेण भूयोऽप्यन्धीकृता युधि ॥ ४९ ॥
नाऽविदन् स्वं परं वाऽपि जघ्नुः स्वीयान् स्वयं रुषा ।
न विदुस्तेऽतिरोषेण भुवं खं वा दिशस्तथा ॥ ५० ॥

दिनं रात्रं तथाऽऽत्मानं युद्धं शस्त्रमपीतरत् ।
सम्प्रहारैकसंस्कारशेषा जघ्नुः परस्परम् ॥ ५१ ॥
एतस्मिन्नन्तरे शक्रसुतो वसुगणैर्वृतः ।
जगामैरावतसुतस्कन्धारूढोऽत्यमर्षणः ॥ ५२ ॥
जयन्तः सुधृतेरग्रे महत्या देवसेनया ।
तयोः समभवद्युद्धं मुहूर्त्तमतिदारुणम् ॥ ५३ ॥
तदा सुधृतिसेनाग्र्यैर्निहतेन्द्रमहाचमूः ।
छिन्नपादशिरोहस्तपार्श्वाऽक्षिश्रोत्रनासिकाः ॥ ५४ ॥
सुरसङ्घा गतप्राणाः पतिताः क्ष्मातले ततः ।
गतप्राणास्तत्र केचिदल्पप्राणास्तथाऽपरे ॥ ५५ ॥
मूर्च्छिताश्चेतरे चान्ये भीत्या त्वत्र मृषा मृताः ।
निमील्य नेत्रे प्राणानां गतिं रुद्ध्वा चिरं बलात् ॥ ५६ ॥
वीरे दूरस्थिते नेत्रकोणेनाऽप्यवलोकनम् ।
कुर्वतः श्वासमपि च रेचयन्ति शनैः शनैः ॥ ५७ ॥
एवं निशाम्य कदनमन्ये भीत्याऽभिदुद्रुवुः ।
भग्नामेवं देवचमूं दृष्ट्वा वसुगणास्तदा ॥ ५८ ॥
सावित्रप्रमुखास्तत्र सुधृतेस्तां महाचमूम् ।
उद्वेलसागरमिव प्रवृद्धां जघ्नुरञ्जसा ॥ ५९ ॥
वसुभिर्हन्यमाना सा सुधृतेर्महती चमूः ।
ननाश तीव्रवातेन वर्षाभ्रततिवद्द्रुतम् ॥ ६० ॥
केचिद्द्विधा कृता मध्ये केचिच्छिन्नकराऽङ्घ्रयः ।
केचिदर्धाङ्गविधुराः केचिच्च तिलशः कृताः ॥ ६१ ॥
एवं चमूं विलोक्याऽन्ये दुद्रुवुर्भयकातराः ।
अशक्नुवन्तः सरितः शोणितानां व्यतिक्रमे ॥ ६२ ॥
इतस्ततश्च धावन्तो वसुभिस्ताडिता भृशम् ।
अप्राप्य शरणं किञ्चित्पतिता रक्तसिन्धुषु ॥ ६३ ॥

अगाधरक्तसलिले निमग्नास्तत्र केचन ।
बाहुभ्यां प्रतरन्त्यन्ये मज्जन्तश्च पदे पदे ॥ ६४ ॥
मृतान् गजान् समासाद्य तस्थुः प्राणपरीप्सवः ।
अन्तरीपमिवाऽऽसाद्य दूरात् प्रोह्य समागताः ॥ ६५ ॥
अन्ये रथाङ्गमासाद्य तेरुर्नौकामिवाऽर्णवे ।
अश्वान् रथान् तथा केचित्तीर्णाः शोणितवाहिनीम् ॥६६॥
सेनापराभवं दृष्ट्वा सुधृतेस्तनुजस्तदा ।
रणधीरो महाशूरः वज्रसंहननो युवा ॥ ६७ ॥
रथमारुह्य सन्नद्धो मणिहेमपरिष्कृतम् ।
धनुर्विस्फारयन् प्रागाद्वसूनां पुरतो रुषा ॥ ६८ ॥
प्राहोच्चैः सैनिकान् स्वीयान् पलायनपरान् तदा ।
निवर्त्तध्वं निवर्त्तध्वं नोचितं वः पलायनम् ॥ ६९ ॥
अभिद्रवन् तं धर्मश्च जहाति श्रीर्यशस्तथा ।
भर्त्तृपिण्डस्य निष्कृतिर्युद्धे देहसमर्पणम् ॥ ७० ॥
एवं वदन् वसुगणं समासाद्य वचोऽब्रवीत् ।
धिग्वोऽबलान् कातरांश्च यदनुद्रुत्य सर्वतः ॥ ७१ ॥
शस्त्रैः महरथाऽलं तन्मां पश्यत पुरः स्थितम् ।
शूरैर्विगर्हितः पन्थाः भीतानां यदनुद्रवः ॥ ७२ ॥
पश्यामि भवतां वीर्यं प्रदर्शयत मे द्रुतम् ।
तदन्वहं स्ववीर्येण तोषयाम्यचिरेण वः ॥ ७३ ॥
वसवस्तद्वचः श्रुत्वा रणधीरोदितं तदा ।
युगपत्परिवव्रुस्तं रसं मधुकरा इव ॥ ७४ ॥
तथापि रणधीरस्तु वसुमध्ये रथस्थितः ।
न चचाल सुवर्णाद्रिर्यथोपगिरिसंवृतः ॥ ७५ ॥
अथ तं शरवर्षेण ववर्षुर्वसवोऽभितः ।
तथा मुसलशक्त्यृष्टिकुन्तभल्लाऽसिद्वष्टिभिः ॥ ७६॥

वसुशस्त्राऽतिवर्षेण संप्लुतं सेनयाऽऽत्मजम् ।
दृष्ट्वा मृतं मेनिरे तं सैनिका दूरसंस्थिताः ॥ ७७ ॥
कलभं सर्वतः सिंहैराक्रान्तमिव कश्चन ।
न समर्थो मोचयितुं विषण्णवदनो भवन् ॥ ७८ ॥
अथ तां शस्त्रवृष्टिं स लघुहस्तः क्षणाऽद्भुतः ।
एकैकमष्टधा छित्त्वा तान्जघान त्रिभिः शरैः ॥ ७९ ॥
प्रत्येकं निशितैस्तच्च दृष्ट्वाऽद्भुतपराक्रमम् ।
शशंसुर्देवता मर्त्याः साधु घोषैश्च सर्वतः ॥ ८० ॥
ततस्ते विविधैरस्त्रैर्जघ्नुर्मण्डलसंस्थिताः ।
सोऽपि शीघ्रं तमस्त्रौघं प्रत्यस्त्रैरहनत् क्रमात् ॥ ८१ ॥
एकोऽष्टभिर्महद्युद्धमकरोद्भ्रमिवद्भ्रमन् ।
एवं मुहूर्तमभवद्युद्धं वसुगणैस्तदा ॥ ८२ ॥
भ्रमन्नावर्त्तवद्युद्धं सर्वेषां सम्मुखेऽकरोत् ।
ततः प्रत्येकमुरसि विव्याध निशितैः शरैः ॥ ८३ ॥
ध्वजानेकैकशः छित्त्वा चतुर्भिश्चतुरो हयान् ।
सारथीनां शिरो भल्लैश्चकर्त्ताऽतिद्रुतं तदा ॥ ८४ ॥
निशितेन क्षुरप्रेण हृदि विव्याध तान् वसून् ।
हतध्वजाऽश्वयन्तारो वसवः सुदृढाऽर्दिताः ॥ ८५ ॥
मूर्च्छिताः पतिता भूमौ कृत्तमूला इव द्रुमाः ।
हा हा कारो महानासीद्वसून् दृष्ट्वा निपातितान् ॥८६॥
देवसेनासु मर्त्येषु जयशब्दो महानभूत् ।
एतस्मिन्नन्तरे तत्र वसुः सावित्रसंज्ञकः ॥ ८७ ॥
मूर्च्छामुक्तो ऽतिनिशितैः रणधीरं शरैस्त्रिभिः ।
निहत्य सिंहनादं स कृतवान् प्राह मण्डले ॥ ८८ ॥
सावित्रशरसंविद्धो रणधीरोऽतिमर्षितः ।
अर्द्धचन्द्रेण चिच्छेद धनुः सावित्रहस्तगम् ॥ ८९ ॥

स छिन्नधन्वा महतीं गदामादाय वेगतः ।
अश्वान् विसंज्ञानकरोद्वलाहकसमान् तदा ॥ ९० ॥
रणधीरोरसि तदा प्रास्यत् सर्वायसीं गदाम् ।
अथाऽऽयान्तीमशनिवद्गदामातिभयङ्करीम् ॥ ९१ ॥
लघुहस्तः प्रचिच्छेद त्रिधा नभसि मध्यतः ।
अथाऽऽददेऽतिनिशितं खड्गं चर्म च सुन्दरम् ॥ ९२ ॥
सावित्रो रणधीरस्य रथेऽवप्लुत्य तद्धनुः ।
चिच्छेद यन्ता भल्लेन हतः क्रोडेऽतिवेगितः ॥ ९३ ॥
शिरो जहार खड्गेन यन्तुः समुकुटं रुषा ।
रणधीरः छिन्नधनुर्हतसारथिरुच्चकैः ॥ ९४ ॥
क्रुद्धः खेटकनिस्त्रिंशौ जगृहे शत्रुतापनः ।
गृहीतमात्रं तरसा तौ चिच्छेद महाजवी ॥ ९५ ॥
गदां शक्तिञ्च शूलञ्च गृहीतं सोऽच्छिनदद्भुतम् ।
एवं सावित्रखड्गस्य लाघवं वीक्ष्य देवराट् ॥ ९६ ॥
अपूजयत् साधुवादै रणधीरश्चुकोप ह ।
विवृत्य मुष्टिं सुदृढां वज्रनिष्पेषनिष्ठुराम् ॥ ९७ ॥
जघान वक्षसि वसुं जगर्ज च महामृधे ।
अपाऽक्रामत् पञ्चहस्तं संज्ञामीषज्जहौ ततः ॥ ९८ ॥
प्राहरत् पुनरेवाऽऽजौ रणधीरं महाबली ।
अवप्लुत्याऽन्तरे हस्ताद्वसोराक्षिप्य खड्गकम् ॥ ९९ ॥
बभञ्ज जानुना मध्ये तदद्भुतमिवाऽभवत् ।
अथ तौ मुष्टिभिर्घ्नन्तौ विशस्त्रौ च परस्परम् ॥ १०० ॥
मुहूर्त्तं तत आप्लुत्य सावित्रं भुव्यपोथयत् ।
तस्य वक्षसि संरुह्य मुष्टिना मूर्ध्न्यताडयत् ॥ १०१ ॥
मुष्टिनाऽभिहतो रक्तं सावित्रः पतितो वमन् ।
ज्ञात्वा मुमूर्षुं सावित्रं सिंहाऽऽक्रान्तगजं यथा ॥ १०२ ॥

प्रेषयामास देवेशो जयन्तं तद्विमोक्षणे ।
ततो जयन्तो महतीं शक्तिमादाय वेगतः ॥ १०३ ॥
जघान पृष्ठतस्तस्य धर्माऽपेतेन वर्त्मना ।
रणधीरो हतः शक्त्या न्यपतन्मूर्च्छितो भुवि ॥ १०४ ॥
तदन्तरे तु साविन्नमपोवाहेन्द्रनन्दनः ।
कथञ्चित्प्राणसंशेषमिन्द्रपार्श्वं समानयत् ॥ १०५ ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे पञ्चदशोऽध्यायः॥१३२७॥



# अथ षोडशोऽध्यायः ।

जयन्तशक्तिसंविद्धो गाढमूर्च्छामुपेत्य तु ।
रणधीरोऽक्लिन्नाङ्गो मुहूर्त्तात्प्रत्युपस्थितः ॥ १ ॥
तदन्तरे जयन्तोऽपि रथाऽऽरूढाऽऽत्तकार्मुकः ।
रणधीराऽग्रतः गागात्तिष्ठ तिष्ठेति वै वदन् ॥ २ ॥
तं दृष्ट्वा रणधीरोऽपि निर्भर्त्सयत वै रुषा ।
शचीसुतं त्वां जानामि न च त्वं शक्रनन्दनः ॥ ३ ॥
स्त्रीस्वभावं समासाद्य पृष्ठतो मां यतोऽवधीः ।
कृत्वैवं कर्म यल्लोके कृतं कापुरुषैर्लघु ॥ ४ ॥
पुरुषम्मन्य एव त्वं वीरगोष्ठीवहिष्कृतः ।
व्रजाऽत्र वीरभूमौ ते न कार्यमवशिष्यते ॥ ५ ॥
न शोचय शचीं व्यर्थं धिगनार्याऽसतीसुत ।
अथवा ते भवेच्छ्रद्धा युद्धे तर्हि स्थिरीभव ॥ ६ ॥
मदग्रे निमेषार्धेन नयाम्यन्तकसन्निधिम् ।
इत्युक्त्वा निशितैर्भल्लैश्चिच्छेद तिलशो रथम् ॥ ७ ॥
तदन्तरे जयन्तोऽपि गदां चिक्षेप रोषतः ।
हतोऽसि रणधीरेति तदवप्लुत्य सोऽग्रहीत् ॥ ८ ॥
गृहीत्वा तां गदां प्राह साधु शूरोऽसि शक्रज ।
हतोऽस्मि नात्र सन्देहो हतस्त्वां निहनिष्यति ॥ ९ ॥
इति ब्रुवति रोषेण कषायीकृतलोचनः ।
चिच्छेद खड्गपातेन धनुस्तदपि शक्रभूः ॥ १० ॥
छिन्ने द्वितीये चापेऽपि रुषा खड्गं परामृशत् ।
वेगादाप्लुत्य सव्येन करेण निमिषार्द्धतः ॥ ११ ॥
निपात्य शक्रतनयकिरीटं जगृहे शिखाम् ।
विचकर्ष शिखां धृत्वा तार्क्ष्यः सर्पपतिं यथा ॥ १२ ॥

छेत्तुं गले यावदयं करवालं समुन्नयत् ।
तावदग्निः शतमखसुतं मत्वा हतं जवात् ॥ १३ ॥
आक्रोशत्स्वमृतान्धःसु हा हेति परिघेण तम् ।
जघान दक्षिणकरे सर्वप्राणेन पावकः ॥ १४ ॥
परिघाऽऽहतहस्तात्तु करवालोऽपतद्भुवि ।
व्यर्थीकृतन्तु तत्कर्म दृष्ट्वा स्वात्मपराभवम् ॥ १५ ॥
चुक्रोध रणधीरोऽथ जयन्तश्च पदाऽऽहनत् ।
संहतः पादघातेन पपात भुवि मूर्च्छितः ॥ १६ ॥
पावकं वामहस्तेन गले जग्राह सत्वरः ।
दक्षमुष्टिं वज्रकल्पां पातयामास मूर्धनि ॥ १७ ॥
मुष्टिनाऽभ्याहतो वन्हिर्घूर्णमानो भुवं ययौ ।
तदन्तरे शतमखः प्राप्तः पुत्रपरीप्सया ॥ १८ ॥
ऐरावतस्थस्तं दृष्ट्वा रणधीरो ह्यवप्लुतः ।
तलेनाऽऽहत्य देवेन्द्रं किरीटं पातयद्रुषा ॥ १९ ॥
किरीटभङ्गाऽवमतोऽताडयत् कुलिशेन तम् ।
वज्राऽऽहतोऽथ जघने निपपात महीतले ॥ २० ॥
विसञ्ज्ञो मूर्च्छितो गाढं रणधीरोऽभवत्तदा ।
सेनापतिसुतं तादृग्विधं भीमो निशाम्य तु ॥ २१ ॥
सारथिञ्चोदयामास रणधीराऽन्तिकं नय ।
इत्याज्ञप्तो निमेषेण रथं सारथिरानयत् ॥ २२ ॥
अवतीर्य रथाद्भीमो रथोपरि निधाय तम् ।
अपवाह्य स्वयं भीमो गदामादाय सुप्रभाम् ॥ २३ ॥
सर्वायसीं महारत्नप्रत्युप्तां शत्रुतापनीम् ।
उड्डीय शक्रशिरसि पातयामास वेगतः ॥ २४ ॥
गदयाऽभिहतः शक्रो भग्नमूर्धा पपात ह ।
मूर्च्छितः करिराजस्य पृष्ठे कृत्तद्रुमो यथा ॥ २५ ॥

तथाविधं देवपतिं ज्ञात्वैरावतसत्तमः ।
माद्रवद्वेगतो युद्धाच्छक्रमाणरिरक्षया ॥ २६ ॥
दृष्ट्वा पराङ्मुखं भीमो देवेभं जगृहे जवात् ।
लाङ्गूले विचकर्षाऽथ धनुःशतमितं बली ॥ २७ ॥
आत्मानं नो मोचयितुं समर्थः करिराट् तदा ।
करेण तं समादातुं प्रचक्राम पुनः पुनः ॥ २८ ॥
सव्याऽपसव्यमार्गेण भ्रामयित्वा मुहुर्मुहुः ।
गदया कटिदेशे तं जघान बलवद्रुषा ॥ २९ ॥
ताडितस्तेन गदया चीत्कुर्वन् त्रिःपरिक्रमन् ।
जगाम धरणीमग्रजानुभ्यां रुधिरं वमन् ॥ ३० ॥
ततो भीमः क्षमाप्लुत्य पतितं शक्रपार्श्वतः ।
वज्रं समाददे तस्य पृष्ठतस्तदनन्तरम् ॥ ३१ ॥
शक्रं निहन्मि तस्यैव शस्त्रेणेति व्यचिन्तयत् ।
तदन्तरे शक्रहेतिरन्तर्धानं गता द्रुतम् ॥ ३२ ॥
एतस्मिन्नन्तरे वायुर्मरुद्गणसमावृतः ।
भीमेन युद्धमकरोन्मृत्योस्त्रातुं शचीपतिम् ॥ ३३ ॥
गदामादाय भीमोऽपि बहुभिः परिवारितः ।
गदया ताडयामास मरुतस्तान् समन्ततः ॥ ३४ ॥
तदन्तरे सारथिस्तु रणधीरं सुमूर्च्छितम् ।
सुधृतेः सन्निधिं नीत्वा पुनः प्रत्याऽऽगतस्त्वरा ॥३५॥
बहुशो देवतावृन्दैर्निरुद्धोऽपि सुवेगतः ।
वञ्चयित्वा भर्तृशयं रथमानयदक्षतम् ॥ ३६ ॥
दृष्ट्वा रथं सर्वशस्त्रसम्भृतं प्राऽरुहत्तदा ।
सारथिं पूजयामास वाक्यैर्मधुरपेशलैः ॥ ३७ ॥
उद्यम्य चापमस्त्रौघैर्वायुना समयुध्यत ।
कुरङ्गवाहनरथे शस्त्रास्त्रसुपरिष्कृते ॥ ३८ ॥

समासीनो धूम्रवर्णः पाशाङ्कुशमुखाऽऽयुधः ।
भीमं निशितबाणौघैर्ववर्षाऽतिबलो रुषा ॥ ३९ ॥
बाणौघेन समाच्छन्नो विवस्वान् तुहिनैरिव ।
प्रतिसायकवृष्ट्या तं नाशयामास वेगतः ॥ ४० ॥
अथ तीक्ष्णेन भल्लेनाऽहनद्वायुं स्तनाऽन्तरे ।
गाढविद्धो वायुरपि क्षणमासीज्जडीकृतः ॥ ४१ ॥
तदन्तरे तु मरुतो युगपत् समयोधयन् ।
अङ्कुशान् चिक्षिपुर्भीमं निहन्तुमतिवेगिनः ॥ ४२ ॥
तावद्भिरर्धचन्द्रैस्तान् भीमश्छित्त्वाऽतिवेगतः ।
एकैकं हृदि विव्याधाऽऽकर्णाऽऽकृष्टैः शरैस्त्रिभिः ॥ ४३ ॥
मरुतस्तैर्हताः सर्वे पेतुरुर्व्यां सुमूर्च्छिताः ।
बुद्धस्तदन्तरे वायुर्भीमे प्रास्यदथाऽङ्कुशम् ॥ ४४ ॥
तेनाऽतिविद्धो हृदये कश्मलं क्षणमाविशत् ।
पुनः संज्ञामवाप्याऽथ गदामादाय वेगतः ॥ ४५ ॥
स्वस्माद्रथादवप्लुत्य वायोः स्यन्दनमारुहत् ।
भ्रामयित्वा गदां मूर्ध्नि मारुतस्य जघान ह ॥ ४६ ॥
पतितस्तु गदाऽऽविद्धो भग्नमूर्धा समीरणः ।
मूर्च्छितो विगतप्रज्ञः सारथिस्तमपावहत् ॥ ४७ ॥
पराभवं मारुतस्य दृष्ट्वा यक्षपतिस्तदा ।
वरुणः पितृराडिन्द्रो गन्धर्वपतिरेव च ॥ ४८ ॥
विमृश्य दुर्जयं भीमं समीयुर्युगपन्मृधे ।
ऐरावतस्थो देवेन्द्रः पितृराण्महिषस्थितः ॥ ४९ ॥
झषस्थो वरुणोऽमर्त्यवाहनो धननायकः ।
गन्धर्वपतिरश्वस्थो विविधैर्हेतिभिर्वृताः ॥ ५० ॥
आजग्मुर्भीममायोद्धुं समेताः कृतसंविदः ।
तद्दृष्ट्वा सुधृतिः प्राह गत्वा शत्रुञ्जयान्तिके ॥ ५१ ॥

राजपुत्रा महेन्द्राद्या गच्छान्ति कृतसंविदः ।
हन्तुं भीमं महाबाहुं तद्यामस्तत्र वै वयम् ॥ ५२ ॥
एकस्य बहुभिर्युद्धं विषमं प्रतिभाति मे ।
इति तद्वाक्यमाकर्ण्य युक्तमित्यभिमन्यत ॥ ५३ ॥
ततः शत्रुञ्जयमुखानरुन्धन् देवतागणान् ।
समाशश्वास सुधृतिर्देवेशं गजसंस्थितः ॥ ५४ ॥
शत्रुञ्जयो धनपतिं वरुणं शत्रुहा तथा ।
गन्धर्वराजं भीमोऽपि यमं समरतापनः ॥ ५५ ॥
शत्रुञ्जयसुतो वीरविक्रमश्च प्रभञ्जनम् ।
शत्रुघ्नतनयो वन्हिं वीरसेन इतीरितः ॥ ५६ ॥
इन्द्राऽऽत्मजं भीमपुत्रो वीरभानुसमाह्वयः ।
वीराग्रगः समरतापनपुत्रो वसुं तथा ॥ ५७ ॥
एवं समासाद्य तदा युद्धं चक्रुर्महाऽद्भुतम् ।
भीरुहृत्कम्पजननं परस्परजयैषिणः ॥ ५८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामाऽऽख्याने षोडशोऽध्यायः ॥ १३८५ ॥

# अथ सप्तदशोऽध्यायः ।

मुहूर्त्तमात्रमभवत् सुयुद्धं रोमहर्षणम् ।
भीममश्वसमारूढश्चित्रसेनः शरैस्त्रिभिः ॥ १ ॥
विव्याध तद्धनुर्मध्ये चिच्छेद च महेषुणा ।
स छिन्नधन्वा परिघं गन्धर्वेशे समुत्सृजत् ॥ २ ॥
आयान्तं परिघं मध्ये चिच्छेद निशितेषुणा ।
सार्धपत्रैश्चतुःसंख्यैश्चतुरो भीमवाजिनः ॥ ३ ॥
कृत्वा गताऽसून् समरे सारथिञ्चैकपत्रिणा ।
छित्त्वा किरीटमेकेन सिंहनादमथाऽकरोत् ॥ ४ ॥
हताश्वसारथिर्भीमः प्रजज्वाल सुमन्युना ।
गदयाऽताडयच्चित्रसेनाश्वमतिवेगतः ॥ ५ ॥
गदापातप्रणष्टाऽसुर्भिन्नमूर्धा वमन्नसृक् ।
पपात तुरगात्तस्य चित्रसेनं परामृशत् ॥ ६ ॥
ज्ञात्वा तु बलिनं चित्रसेनोऽन्तर्धानमागतः ।
अन्तर्हितो महामायां प्रचकार विमोहिनीम् ॥ ७ ॥
अश्मवर्षान् शस्त्रवर्षान् सर्पान् प्रेतगणानपि ।
प्रादुश्चकार मुण्डौघानसृगङ्गारमारुतान् ॥ ८ ॥
यतो यतो निःसरति माया तस्य ततस्ततः ।
एवं भीमस्समालोक्य मायां गन्धर्वनिर्मिताम् ॥ ९ ॥
तदा प्रायुङ्क्त निर्माय शस्त्रं भीमो विहायसि ।
चित्रसेनमहामाया विनष्टाऽस्त्रेण तत्क्षणे ॥ १० ॥
ददर्श गन्धर्वपतिमायान्तं स्वस्य सम्मुखे ।
वेगात्त्रिशूलमादाय पुराऽरिमिव चाऽन्धकम् ॥ ११ ॥
तस्य मूर्ध्नि गदां भीमः प्राहिणोदतिवेगतः ।
गदयाऽभिहतो भूमौ पपात विगताऽसुवत् ॥ १२ ॥

अथाऽवहत्तं गन्धर्वो विवक्षुः प्राणरक्षणम् ।
वीराऽग्रगो वसून् युद्धे शस्त्राऽस्त्रैः समवाऽकिरत् ॥ १३ ॥
वसवः शरवर्षेण ववर्षुः समराऽङ्गणे ।
अपोह्य शरवर्षं तं वसूनेकैकशस्तदा ॥ १४ ॥
त्रिभिः सुपुङ्खैर्विव्याध पादहृन्मूर्धसु क्रमात् ।
ते हता मन्युनाक्रान्ताः पर्याप्तं युगपद्रणे ॥ १५ ॥
शस्त्रैरुच्चावचैर्जघ्नुः सर्वप्राणैर्बलीयसः ।
अथ वीराग्रगस्तीक्ष्णभल्लैर्हृदि जघान तान् ॥ १६ ॥
कर्णान्ताऽऽकृष्टैरथ ते गाढविद्धा महेषुभिः ।
निपेतुर्मूर्च्छिताः सर्वे सावित्रस्तु शरैस्त्रिभिः ॥ १७ ॥
छित्त्वा वीराऽग्रगरथं सारथिं वाजिनस्तथा ।
खण्डशः शरवर्षेण चकार निमेषाऽर्धतः ॥ १८ ॥
अथ खड्गेन सावित्रं जघानोड्डीय पक्षिवत् ।
तदा सावित्रमुकुटं खड्गहत्या द्विधाऽभवत् ॥ १९ ॥
सावित्रः शेखरभ्रंशात् सक्रोधः परिघेण तम् ।
प्राऽहरन्मूर्ध्नि तेनाऽसौ भिन्नमूर्धा पपात ह ॥ २० ॥
मुहूर्तं मूर्च्छितः सोऽथ प्रोत्थाय गदयाऽहनत् ।
सावित्रं बलवत् सोऽथ वमन् रक्तं पपात ह ॥ २१ ॥
अग्निना वीरसेनोऽपि चिरं युद्ध्वा महाऽसिना ।
जघानाऽग्निं सुवेगेन हतस्तेन च मूर्धनि ॥ २२ ॥
असृग्धारासम्प्लुतां गां वह्निर्जज्वाल मन्युना ।
प्राहिणोन्निजशक्तिं स वीरसेनं विनाशितुम् ॥ २३ ॥
तां दृष्ट्वा वीरसेनोऽपि ज्वलन्तीमशनिप्रभाम् ।
तोयाऽस्त्रं प्राहिणोच्छीघ्रं शान्ता शक्तिस्तदस्त्रतः ॥ २४ ॥
अथाऽग्निः स्वां विनिहतां दृष्ट्वा शक्तिं रुषा पुनः ।
इषुभिर्निशितैस्तस्य चिच्छेदाऽऽयुधसन्ततिम् ॥ २५ ॥

हतसर्वायुधः सोऽपि मुष्टिमुद्यम्य वेगतः ।
जघान मूर्ध्नि तेनाऽग्निर्निपपात महीतले ॥ २६ ॥
तावत्तु वीरसेनोऽपि जग्राह ज्वलनं जवात् ।
बाहुभ्यां वक्षसाऽऽपीड्य नगरे तं समानयत् ॥ २७ ॥
शीतिकामन्त्रितदृढरज्जुभिस्तमबन्धयत् ।
अकरोत्तुमुलं युद्धं वायुना वीरविक्रमः ॥ २८ ॥
शरवर्षैः समाच्छाद्य सिंहनादमथाऽकरोत् ।
शरवर्षं क्षणेनैव विधूय प्रतिवर्षतः ॥ २९ ॥
जघानोरस्यङ्कुशेन महता वीरविक्रमम् ।
अङ्कुशेनाऽऽहतं वक्षः स्फुटितं रुधिरस्रवम् ॥ ३० ॥
अङ्कुशाऽऽघातसञ्जातव्यथयाऽकम्पत क्षणम् ।
विघूर्णमाननयनो निष्प्रज्ञः क्षणमास्थितः ॥ ३१ ॥
अथ प्रज्ञां समासाद्य हृदि मग्नाऽङ्कुशं तदा ।
बलादुत्पाट्य वेगेन ताडयत्तेन मारुतम् ॥ ३२ ॥
निजाऽङ्कुशाऽऽहतो वायुर्भग्नमूर्धाऽपतद्भुवि ।
मृतवन्मूर्च्छितो वायुस्तदाऽसौ वीरविक्रमः ॥ ३३ ॥
पुनः पपात तां सोढुमशक्तो हृदयव्यथाम् ।
बहु सुस्राव रुधिरं हृदयादङ्कुशाऽऽहतात् ॥ ३४ ॥
वायोश्च मस्तकाच्चद्वदुभावपि सुमूर्च्छितौ ।
शत्रुञ्जयः कुबेरेण चकार तुमुलं रणम् ॥ ३५ ॥
शत्रुञ्जयो रथाऽऽरूढः कुबेरो नरवाहनः ।
उभौ शस्त्राऽस्त्रकुशलौ धनुर्विद्याविचक्षणौ ॥ ३६ ॥
परस्परं दर्शयन्तौ स्वस्वशस्त्रास्त्रकौशलम् ।
चिरं युद्ध्वा कुबेरेण शत्रुञ्जय उवाच तम् ॥ ३७ ॥
धनेश किं विलम्बेन दर्शय स्वम्बलाऽवधिम् ।
नो चेदिमं शरं विद्धि तव प्राणहरं परम् ॥ ३८ ॥

शत्रुञ्जयवचः श्रुत्वा क्षणेन निशितेषुणा ।
शरेणाऽऽपूरितं चापं चिच्छेदाऽद्भुतविक्रमः ॥ ३९ ॥
अथाऽश्वान् सारथिं केतुं चतुर्भिश्च त्रिभिस्त्रिभिः ।
छित्त्वा जगर्ज धनपो हतमातङ्गसिंहवत् ॥ ४० ॥
साधु शूर श्लाघ्यतमो विदितं मे बलं तव ।
इतो याहि न चेदेप क्षणः स्याज्जीविताऽन्तकः ॥ ४१ ॥
शत्रुञ्जयो धनेशोक्तं श्रुत्वाऽमर्षेण पूरितः ।
गदामुद्यम्य वेगेनताडयद्वाहनं नरम् ॥ ४२ ॥
गदयाऽभिहितो मर्त्यः पपात भुवि मूर्च्छितः ।
तदन्तरे धनेशस्य गदया मूर्ध्न्यताडयत् ॥ ४३ ॥
वज्रनिष्ठुरया मूर्ध्नि ताडितो गदया भृशम् ।
क्षणमात्रं मूर्च्छितोऽसौ तदा तद्धस्तगं धनुः ॥ ४४ ॥
शत्रुञ्जयः समाक्षिप्य बभञ्जाऽतुलविक्रमः ।
निवृत्तमूर्च्छो धनपः दृष्ट्वा चापस्य भञ्जनम् ॥ ४५ ॥
क्रोधसंरक्तनयनो जग्राह महतीं गदाम् ।
तदा शत्रुञ्जयः प्राह सखे शृणु वचो मम ॥ ४६ ॥
पृथिव्यान्तु गदायुद्धे मत्तुल्यो नहि विद्यते ।
शस्त्राऽचार्यः प्राह यन्मे तद्ब्रवीमि निशामय ॥ ४७ ॥
शिक्षितोऽतितरां तेन गदायां तदनन्तरम् ।
गदायुद्धेन ते तुल्यं पश्यामि भुवि कञ्च न ॥ ४८ ॥
यदि जेताऽसि धनपं गदायां स महत्तमः ।
तदद्य यावन्मनासि त्वद्गदेक्षा समाहिता ॥ ४९ ॥
अर्थात्त्वया सङ्गतोऽहं गदायुद्धे धनेश्वर ।
प्रदर्शयाऽऽत्मनो वीर्यं गदायुद्धेऽतिसम्भृतम् ॥ ५० ॥
एवं शत्रुञ्जयवचो निशम्य धनदस्तदा ।
ओमित्युक्त्वा तेन सह गदायुद्धं समारभत् ॥ ५१ ॥

शत्रुञ्जयो धनेशश्च गदायुद्धविशारदौ ।
सुशिक्षितौ महाप्राणौ दृप्तपञ्चास्यविक्रमौ ॥ ५२ ॥
तौ चेरतुर्मण्डलानि सव्यसव्येतराणि च ।
विषमाणि समाऽर्धानि विषमाऽर्धसमानि च ॥ ५३ ॥
समानि समनिम्नानि समनिम्नाऽर्धकाणि च ।
अवप्लुतप्लुताऽर्धानि विषमप्लुतकानि च ॥ ५४ ॥
उत्प्लुतप्रोत्प्लुतव्युत्थप्लुतंहसप्लुतानि च ।
गदायुद्धप्रोक्तगतीः सर्वा अपि परस्परम् ॥ ५५ ॥
दर्शयन्तौ गतिज्ञौ तौ सुशिक्षौ युद्धकोविदौ ।
परस्परप्रहारस्य सन्धिप्रेक्षणकोविदौ ॥ ५६ ॥
उपक्रमगतिज्ञानात् संश्लाघन्तौ परस्परम् ।
अलक्ष्यवेगसञ्चारौ लक्षितौ कन्दुकाविव ॥ ५७ ॥
एवं तयोर्गदायुद्धं प्रेक्षन्तः सिद्धचारणाः ।
शशंसुर्युद्धकौशल्यमहो युद्धमितीङ्गनैः ॥ ५८ ॥
एवं चिरं तेन सह युद्ध्वा धनपतिस्तदा ।
स्वतोऽधिकं गदायुद्धे मेने शत्रुञ्जयं ततः ॥ ५९ ॥
आप्लुत्य खे धनपतिः प्रहर्त्तुश्चोन्नयद्गदाम् ।
तज्ज्ञात्वाऽवञ्चयच्छत्रुञ्जयोऽमोघमवप्लुतम् ॥ ६० ॥
ज्ञात्वा स्वं धनपः पृष्ठे जघानाऽधर्मतस्तदा ।
शत्रुञ्जयः पृष्ठदेशे ताडितो मूर्च्छितः क्षणम् ॥ ६१ ॥
ततः प्रज्ञां समासाद्य क्रोधादरुणलोचनः ।
धिक्त्वामनार्यमशुभं धर्माऽपेतं धनाऽधिपम् ॥ ६२ ॥
यन्मामधर्मयुद्धेन जघ्निवान् राक्षसो यथा ।
न त्वया गदया योद्धुमर्होऽहं धर्ममाश्रितः ॥ ६३ ॥
युद्धेषु संश्लाघ्यतमं गदायुद्धं प्रचक्षते ।
बहुभिर्धर्मनियमैर्नियतं योगवत्र्मवत् ॥ ६४ ॥

तस्त्वत्कृतस्याऽपचितिं पश्य कर्त्तास्मि सम्प्रति ।
इत्युक्त्वा भुवि चिक्षेप गदां सर्वायसीं ततः ॥ ६५ ॥
मुष्टिमुद्यम्य वेगेन जघान हृदि वै ततः ।
मुष्टिनाऽभिहतो यक्षराजः शोणितमुद्गिरन् ॥ ६६ ॥
पपात भुवि चाऽत्यन्तं मूर्च्छितो मृतवत्तदा ।
पतितं तं पाशचयैर्बबन्ध निमिषाऽर्धतः ॥ ६७ ॥
अथ मोचयितुं यक्षा राजानं कोटिकोटिशः ।
शस्त्रोद्यतकराः शत्रुञ्जयं हन्तुं समारभन् ॥ ६८ ॥
अथ तान् गदया सर्वान् शमयामास वेगतः ।
दिनेश इव भूतौघान् ततस्तं निधिपं ज़वात् ॥६९॥
समादाय व्रजन्तं तं पुलस्त्यः मुनिशाम्य वै ।
आगत्य वत्सेत्यामन्त्र्य मधुरं वाक्यमब्रवीत् ॥ ७० ॥
शत्रुञ्जय धनेशोऽयं जितो युद्धे त्वया बलात् ।
देहि मह्यमिमं पौत्रं प्रेयांसं हृदयङ्गमम् ॥ ७१ ॥
वीरव्रतो याचितं न विप्रेभ्यो न प्रयच्छति ।
तं तत्सुतः कथं मह्यं न ददास्यभियाचितम् ॥ ७२ ॥
मुनेस्तद्वचनं श्रुत्वा प्रणम्य भुवि दण्डवत् ।
समर्प्य तस्मै धनपं संन्यवर्त्तत वेगतः ॥ ७३ ॥
एवं जयन्तेन तत्र वीरभानुरयोधयत् ।
तौ युद्ध्वा सुचिरं तत्र बहुशस्त्राऽस्त्रकोविदौ ॥ ७४ ॥
लोकान् विस्मापयामासतुः स्वकौशलकर्मभिः ।
खड्गयुद्धं समासाद्य जयन्तो वीरभानुना ॥ ७५ ॥
बलिना ताडितो मूर्ध्नि न्यपतत् स्यन्दनोपरि ।
सारथिः पतितं दृष्ट्वा जयन्तं तमपाऽवहत् ॥ ७६ ॥
शत्रुहा वरुणेनाऽथो युयोधाऽतिबलीयसा ।
शस्त्रैरस्त्रैर्बहुविधैः शंसनीयपराक्रमः ॥ ७७ ॥

वरुणो मकराऽऽरूढः शत्रुहा रथसंस्थितः ।
विचित्रं युद्धं चक्राते लोकविस्मापनं महत् ॥ ७८ ॥
शत्रुहा वरुणेनैवं सुसंयुध्याऽचिरं ततः ।
त्रिभिः शरैः सुनिशितैर्हृदि विव्याध तोयपम् ॥ ७९ ॥
त्रिभिः शरैर्गाढविद्धो वरुणः क्रोधमाययौ ।
चतुर्भिर्निशितैर्भल्लैश्चतुरस्तस्य वाजिनः ॥ ८० ॥
निहत्य ध्वजमेकेन यन्तारञ्चैकपत्रिणा ।
हत्वा कर्णान्तपूर्णेन हृदि विव्याध तोयपः ॥ ८१ ॥
शत्रुहा हतकेत्वश्वसारथिर्गाढमन्युना ।
वारुणं मकरं तीक्ष्णकर्णिना मूर्ध्न्यताडयत् ॥ ८२ ॥
अन्येन चापं चिच्छेद किरीटमपरेषुणा ।
आकर्णाऽऽकृष्टबाणेन विव्याध निटिले तदा ॥ ८३ ॥
तीक्ष्णबाणविनिर्भिन्नफालदेशाज्जलेशितुः ।
असृग्धाराऽतिवेगेन निरगात् सोऽपि मूर्च्छितः ॥ ८४ ॥
शुशुभेऽसृग्धारया स फालनिर्गतया तदा ।
शैलेश इव शृङ्गोद्यच्छोणतोयझराऽऽवृतः ॥ ८५ ॥
अथ सञ्ज्ञां समासाद्य क्रोधेन वरुणो रुषा ।
बबन्ध निजपाशेनाऽमोघेन बलिनं बलात् ॥ ८६ ॥
तदा दृष्ट्वा शत्रुहणं बद्धं समरतापनः ।
नीयमानं जलेशेन रुरोध पथि सायकैः ॥ ८७ ॥
वरुणो बलवान् तेन युयोध सुचिरं तदा ।
बद्धं शत्रुहणं चापञ्च गृहीत्वा शस्त्रकोविदः ॥ ८८ ॥
तस्याऽपि निशितैर्बाणैः सारथिं रथवाजिनः ।
निहत्य छित्त्वा तच्चापं वरुणः प्रययौ जवात् ॥ ८९ ॥
तदा खड्गं समादाय गत्वा समरतापनः ।
वरुणं निजघानाऽऽशु मूर्ध्नि तीक्ष्णाऽसिना स च ॥९०॥

तेन खड्गप्रहारेण भिन्नमूर्धा जलेश्वरः ।
मूर्च्छितः पतितो भूमौ कृत्तपक्षमहीध्रवत् ॥ ९१ ॥
तदन्तरे तु वरुणं बद्ध्वा समरतापनः ।
नेतुं समीहते यदा तदा वैवस्वतो यमः ॥ ९२ ॥
महामहिषसंरूढो योद्धुं समरतापनम् ।
आययौ भिन्ननीलाऽद्रिप्रतिमो मृत्युनाऽऽवृतः ॥ ९३ ॥
रोगैर्दूतैश्च सहितो विकृताऽऽस्याऽङ्गबाहुभिः ।
आयान्तं सम्मुखे दृष्ट्वा भीमं भीमगणैर्वृतम् ॥ ९४ ॥
यद्दर्शनेनैव जनाः संत्यजन्ति भयादसून् ।
तं दृष्ट्वाऽपि तदा धीरो नाऽकम्पत महीध्रवत् ॥ ९५ ॥
युयोधाऽन्यरथारूढः शस्त्राऽस्त्रैर्विविधैर्बली ।
युद्ध्वा चिरं यमेनैवमर्धचन्द्रेण वक्षसि ॥ ९६ ॥
आकृष्य कर्णपर्यन्तं जघान शमनस्य वै ।
तेनाऽऽहतो दण्डधरो वमन् रक्तं सुफेनिलम् ॥ ९७ ॥
पपात महिषाद्भूमौ दूता हा हेति चुक्रुशुः ।
वरुणं पुनरासाद्य गन्तुमेव मनो दधे ॥ ९८ ॥
तदद्भुतं यमपराभवं दृष्ट्वा सुरा नराः ।
विस्मिताः प्रशशंसुस्तं सर्वे समरतापनम् ॥ ९९ ॥
तदन्तरे यमगणा वरुणस्य गणा अपि ।
आगत्य रोद्धुं युगपत्प्रवृत्ताः सर्वतो दिशम् ॥ १०० ॥
तान् दृष्ट्वा परितः सर्वानसंख्यातगणान् तदा ।
गदामादाय महतीं सर्वानेवाऽभ्यकालयत् ॥ १०१ ॥
ते काल्यमाना बहुधा न न्यवर्त्तन्त वै यदा ।
वायव्याऽस्त्रेण वरुणगणं तूर्णमपाऽकरोत् ॥ १०२ ॥
गणं याम्यमथाऽग्नेयाऽस्त्रेण हत्वा तदा पुनः ।
गन्तुं मनो दधे यावत्तावद्रोगाः सहस्रशः ॥ १०३ ॥

परिवार्य विलोप्तुं तं यदा समरतापनम् ।
उद्ययुस्तावदेवाऽयं मत्वाऽन्याऽस्त्रैः सुनिर्गतान् ॥ १०४ ॥
नाम त्र्यास्त्रमासाद्य रोगान् प्रति समुत्ससृजत् ।
तदस्त्रोत्सर्गमात्रेण क्षणादेवाऽखिलाऽऽमयाः ॥ १०५ ॥
महावातेन जलदा इव निःशेषतां ययुः ।
तदन्तरे महाकालमहिषो यमवाहनः ॥ १०६ ॥
क्रुद्धो विनिःश्वसन् हन्तुं प्रागात् समरतापनम् ।
खुरैर्विदारयन् पृथ्वीं शकृन्मूत्रमथाऽसृजत् ॥ १०७ ॥
लाङ्गूलमुन्नयन्नर्दन्नदन् जातिरवं तदा ।
आयान्तं वीक्ष्य महिषमग्रे समरतापनः ॥ १०८ ॥
पशौ शस्त्रेण किमिति त्यक्त्वा शस्त्रमशेषतः ।
मुष्टिना प्राऽहरन्मूर्ध्नि बलवान् बलवत्तरम् ॥ १०९ ॥
तेन मुष्टिप्रहारेण भिन्नमूर्धा ह्यपाऽसरत् ।
ईषत्क्लममलमायातो महिषोऽभ्यद्रवत् पुनः ॥ ११० ॥
अभिद्रुत्य विषाणाभ्यां हित्वा समरतापनम् ।
गृहीत्वा शृङ्गयोर्मध्ये पलायनपरोऽभवत् ॥ १११ ॥
तदद्भुतं वीक्ष्य सुरा जहर्षुः शत्रुयातनात् ।
विषण्णा मनुजा मत्वा हतं समरतापनम् ॥ ११२ ॥
ततः प्रज्ञां समासाद्य पृष्ठमारुह्य सत्वरम् ।
महिषस्याऽहनत् पृष्ठतलाभ्यां बलवद्रुपा ॥ ११३ ॥
तलप्रहाराऽभिहतं पृष्ठं तस्य विदीर्यत ।
विदीर्णपृष्ठः पतितो मृतवन्निर्गतेक्षणः ॥ ११४ ॥
निर्यातितबहिर्जिह्वो घर्घरारावसंयुतः ।
मूर्च्छाविमुक्तः प्रेतेशस्तद्दृष्ट्वाऽतिरुषाऽन्वितः ॥ ११५ ॥
उद्यम्य कालदण्डं तं हन्तुं समरतापनम् ।
ययौ यदा तदा दृष्ट्वा सुधृतिः समचिन्तयत् ॥ ११६ ॥

अमोघः कालदण्डोऽयं प्राप्तः समरतापनम् ।
भस्मीकुर्यान्न सन्देहः किं कृत्वा नः शुभं भवेत् ॥११७॥
एवं विमृश्य मनसि ययौ शीघ्रं यमाऽन्तिकम् ।
तिष्ठ.क्व गच्छसीत्युक्त्वाऽयमङ्गजवरास्थितः ॥ ११८ ॥
तीक्ष्णेनाऽऽकर्णकृष्टेन भल्लेन समताडयत् ।
दण्डोद्यते सव्यभुजे ततस्तेनैवमाहतात् ॥ ११९ ॥
कराच्च्युतः कालदण्डः निपपात महीतले ।
पुनर्दण्डं समादातुं यमो यावत् समागतः ॥ १२० ॥
सुधृतिस्तावदन्येन भल्लेन यममूर्धनि ।
जघान तेन भल्लेन भग्नमूर्धा पपात ह ॥ १२१ ॥
तत्कर्माऽत्यद्भुतं दृष्ट्वा शशंसुर्निर्जरा नराः ।
साधुशब्देन महता तदा वै मेघवाहनः ॥ १२२ ॥
दृष्ट्वाऽतिमानुषं तस्य सुधृतेर्विक्रमं जवात् ।
ऐरावतसमारूढः मायाद्योद्धुं शतक्रतुः ॥ १२३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
सप्तदशोऽध्यायः ॥ १५०८ ॥

# अथाऽष्टादशोऽध्यायः ॥

सुधृतिं प्राप्य समरे गजसंस्थं पुरन्दरः ।
चिरं युद्धं समकरोत्तुमुलं लोमहर्षणम् ॥ १ ॥
सुधृतेर्युद्धसारत्वं सुधृतित्वं निशाम्य तु ।
शतक्रतुर्विस्मितोऽभूत् युध्यमानो रणाऽजिरे ॥ २ ॥
शतक्रतुः सितशरधाराभिः सुधृतिन्तदा ।
ववर्ष तोयद इव मेरुशृङ्गं सुवृष्टिभिः ॥ ३ ॥
शतक्रतुशराऽऽसारसंच्छन्नः सुधृतिस्तदा ।
न दिशो नाऽपि चाऽऽकाशं भुवं वा पश्यति क्वचित् ॥ ४ ॥
एवमिन्द्रशराऽभ्रौघच्छन्नं सुधृतिपूषणम् ।
हा हेति चुक्रुशुर्दृष्ट्वा मर्त्यसेनाः समन्ततः ॥ ५ ॥
एतस्मिन्नन्तरे शक्रशरवृष्टिं महाऽस्त्रतः ।
विनाश्य निर्ययौ सूर्य इव जीमूतमण्डलात् ॥ ६ ॥
अथ सायकवृष्ट्याऽऽशु देवेशं समवाऽकिरत् ।
तीक्ष्णनाराचजालेन विव्याध च शचीपतिम् ॥ ७ ॥
इन्द्रोऽपि तावदेवाऽऽशु शरजालं समन्ततः ।
चिच्छेदाऽस्त्रेण महता वायुनेवाऽभ्रमण्डलम् ॥ ८ ॥
एवं कृतप्रतिकृतं निरीक्षन्तौ परस्परम् ।
संश्लाघन्तौ च सुधृतिदेवेन्द्रौ लाघवं बलम् ॥ ९ ॥
तन्मध्ये सुधृतिः शीघ्रहस्तस्तीक्ष्णैः शरैस्त्रिभिः ।
धनुर्निषङ्गं मुकुटं चिच्छेद युगपद्द्रुतम् ॥ १० ॥
अथेन्द्रः शेखरभ्रंशात् क्रुद्धः प्रस्फुरिताऽधरः ।
दधाराऽन्यत्किरीटाऽग्र्यं विश्वकर्मविनिर्मितम् ॥ ११ ॥

तावत्तदपि वेगेन चकर्त्त सुधृतिः शरैः।
पुनरन्यद्विश्वकर्मदत्तं मूर्ध्न्यभिधारयत् ॥ १२ ॥
तावत्तदपि चिच्छेद भूयोऽन्यान्यपि भार्गव।
किरीटानां शतञ्चैकं सुधृतिर्लघुविक्रमः ॥ १३ ॥
चिच्छेदैवं तदा देवराजो लज्जाऽनताऽऽननः।
क्रोधाऽग्निना प्रज्वलित ऐन्द्राऽस्त्रं समवाऽसृजत् ॥ १४ ॥
सुधृतिस्तरसा तच्च वायव्यास्त्रेण नाशयत्।
तथा दीर्घेण भल्लेन प्राहरच्चेन्द्रवाहनम् ॥ १५ ॥
हतो भल्लेन देवेन्द्रगजः कुम्भान्तरे दृढम्।
क्रुद्धः सुधृतिहस्तस्थश्चापमाच्छिद्य सत्वरम् ॥ १६ ॥
बभञ्ज पादेन तदा तदद्भुतमिवाऽभवत्।
साधु साध्विति देवाः श्लाघितो गजपुङ्गवः ॥ १७ ॥
ससार सुधृतिं वेगात्करेणाऽऽदातुकामुकः।
तदन्तरे तु सुधृतिरङ्कुशं बृहदायसम् ॥ १८ ॥
गजराजाय चिक्षेप महामात्रस्तमाच्छिनत्।
इन्द्रोऽपि बद्धमुकुटश्चिक्षेप परिघन्तदा ॥ १९ ॥
गजराजाय सुधृतेः परिघेनाऽऽहतो गजः।
क्रुद्धोऽभिधावदिन्द्रं स मुसलात्तकरः करी ॥ २० ॥
तावद्वज्रेणाऽभिहतो ममार सुधृतेर्गजः।
ततः स्यन्दनमास्थाय सुधृतिर्लघुविक्रमः ॥ २१ ॥
तीक्ष्णैः शरैस्त्रिभिर्देवपतिं मूर्ध्न्यभिताडयत्।
गाढविद्धः शरैस्तीक्ष्णैरीषत्कश्मलमाप सः ॥ २२ ॥
पुनरैरावतश्चाऽपि त्रिभिः संजघ्निवान् शरैः।
इन्द्रोऽपि मूर्च्छानिर्मुक्तः शक्तिं तावत्समाक्षिपत् ॥ २३ ॥
नवघण्टासुरुचिरां दीप्तामशनिसन्निभाम्।
दृष्ट्वाऽयान्तीं महावेगाममोघां सुधृतिस्तदा ॥ २४ ॥

रथादुद्रुतं गदाहस्त आप्लुतः पक्षिराडिव ।
तावत् स्यन्दनमासाद्य शक्तिरैन्द्री ससारथिम् ॥ २५ ॥
साश्वध्वजं सशस्त्रञ्च भस्मशेषं चकार ह ।
सुधृतिः क्रोधताम्राक्षस्तावदैरावतं बली ॥ २६ ॥
गदां सर्वायसीं भूयो भ्रामयित्वा जघान ह ।
गदयाऽभिहतः कुम्भे बलेनाऽभ्रमुवल्लभः ॥ २७ ॥
भूयो भ्रमान्निपतितो वमन् रक्तं सफेनिलम् ।
इन्द्रस्तावदवप्लुत्य वज्रहस्तोऽभिधावत ॥ २८ ॥
सुधृतिस्तावदेवाऽऽशु गदया दक्षिणे भुजे ।
ताडयामास बलवत्ताडितो देवभूपतिः ॥ २९ ॥
मूर्च्छामवाप नितरां पतितं कुलिशं करात् ।
सुधृतिः सत्वरं तावद्देवेन्द्रं मूर्च्छितं भुवि ॥ ३० ॥
बद्ध्वा नेतुमभिक्रामत्तावद्देवाः समन्ततः ।
नानाविधप्रहरणाः सुधृतिं बभ्रुरोजसा ॥ ३१ ॥
सुधृतिस्त्वाशु सुधृतिरिन्द्रं वामेन पाणिना ।
गृहीत्वैव दक्षिणेन गदया तानभिद्रवत् ॥ ३२ ॥
तदन्तरे वीरसेनः शत्रुञ्जयमुवाच ह ।
पितृव्य किं पश्यसि त्वं सुधृतिं हन्ति देवता ॥ ३३ ॥
इन्द्रं बध्वा गृहीत्वाऽसौ एको युध्यति संयुगे ।
नाऽयं विलम्बने काल इत्युक्त्वा चोदयद्रथम् ॥ ३४ ॥
शत्रुञ्जयमुखाः श्रुत्वा वीरसेनस्य भाषितम् ।
शस्त्रवृष्टिं प्रकुर्वन्तो विविशुः शक्रवाहिनीम् ॥ ३५ ॥
अथाऽभवद्घोरतरो रणः परमदारुणः ।
अमर्त्यानाञ्च मर्त्यानां शस्त्राऽस्त्रबहुसङ्कुलः ॥ ३६ ॥
करवालप्रासशूलगदाचक्रपरश्वधैः ।
भुशुण्डीशक्तिपरिघशतघ्नीतोमरेषुभिः ॥ ३७ ॥

उच्चावचैः शस्त्रजालैरन्योन्यमभिहन्यताम् ।
पक्वतालफलानीव वायुना शिरसां गणः ॥ ३८ ॥
पतन्ति शस्त्रघातेन हस्तपादादिकं तथा ।
रथाऽश्वगजपदातिपदघातोद्गतं रजः ॥ ३९ ॥
आच्छाद्य ज्योतिषां राशिं गाढसन्तमसायितम् ।
तत्र केचिन्न पश्यन्ति परं वा स्वीयमेव वा ॥ ४० ॥
शब्दमार्गाऽनुसारेण युध्यन्ति निपुणा रणे ।
अश्वेभ्यः पतिताः केचिद्गजेभ्योऽपि तथा परे ॥ ४१ ॥
गजैः सम्मृदितास्तत्र बहवोऽश्वाः पदातयः ।
तावच्छस्त्रौघसम्पातवेगनिर्यदसृक्स्रवैः ॥ ४२ ॥
परितः प्रोच्छलद्भिस्तु यन्त्रादिव विनिर्गतैः ।
रजः संशान्तमभवदभ्रनिर्गमवत् क्षणात् ॥ ४३ ॥
प्रकाशे सति ते शूरा भ्रष्टवाहाः समागमन् ।
वाहनैर्विविधैः स्वीयैरन्यैरपि सुगूढहैः ॥ ४४ ॥
रथिनो गजसंस्थाना गजिनश्चाऽश्ववाहनाः ।
अश्वारोहा रथारूढा एवं व्याकुलितं भवत् ॥ ४५ ॥
यथाप्राप्तं समारूढा भ्रष्टवाहा विशङ्किनः ।
युद्धायैव सुसन्नद्धा न विदुर्वाहनं स्वकम् ॥ ४६ ॥
एवमत्यन्तसम्मर्दैः प्रादुरासीदसृग्वहा ।
नदी फेनाऽऽवर्त्तयुता महावेगा भयङ्करा ॥ ४७ ॥
अनेकक्षुद्रसरितां योगेनेव महानदी ।
क्षुद्रशोणितधाराभिर्युता साऽसृग्वहा नदी ॥ ४८ ॥
द्वीपप्रायमृतकरी निरोधप्रतिवाहिनी ।
कङ्कवायसहंसाऽऽढ्यदीर्घकेशाऽन्त्रशैवला ॥ ४९ ॥
हस्तिहस्तग्राहवती खेटकूर्मौघसंवृता ।
नृजङ्घोरुमहामत्स्या क्षुद्रमत्स्याऽङ्गुलाऽऽवलिः ॥ ५० ॥

महाघोषवती भीरुहृदयोत्कम्पकारिणी ।
युध्यमाना भटास्तत्र परस्परजिघांसवः ॥ ५१ ॥
नष्टशस्त्रा मुष्टितलनखदन्ताऽऽयुधा भवन् ।
विस्फारिताक्षा भ्रुकुटीकुटिला दष्टदक्छदाः ॥ ५२ ॥
शस्त्राण्युद्यम्य धावन्तश्छिन्नबाहूदराः परे ।
क्वचिन्मस्तकहीनाश्च युयुधुः शस्त्रपाणयः ॥ ५३ ॥
एवं प्रवृत्ते समरे मर्त्याऽमर्त्यसमाकुले ।
शत्रुञ्जयाद्या नृपतिपुत्रास्तत्सूनवोऽपि च ॥ ५४ ॥
विविशुर्देवसेनायां महाबलपराक्रमाः ।
चिरं ते देवसेनाभिर्युद्ध्वा संक्षोभ्य चाऽमरान् ॥ ५५ ॥
आसेदुः सुधृतिं सेनापतिं बद्धसुराधिपम् ।
बद्धं सुरेशं वामेन गृहीत्वेतरहस्ततः ॥ ५६ ॥
गदया समयुध्यन्तं दृष्ट्वा ते विस्मिता भवन् ।
साधु शूररणश्लाघ्य इति स्तुत्वा नृपाऽऽत्मजाः ॥ ५७ ॥
संजघ्नुर्देवसेनां ते बलवद्युद्धदर्पिताः ।
तैर्हन्यमाना विबुधा सोढुमप्रभविष्णवः ॥ ५८ ॥
त्यक्त्वा शस्त्राणि हा हेति चुक्रुशुश्चाऽभिविद्रुताः ।
तदा कुबेरो वरुणो यमो गन्धर्वराडपि ॥ ५९ ॥
मिलित्वा युयुधुस्तत्र वायुसोममुखैर्युताः ।
तान् युध्यमानान् सुचिरं ते युद्ध्वा राजनन्दनाः ॥ ६० ॥
बबन्धुस्ते कुबेरादीन् बलाद्युद्धेन निर्जितान् ।
शत्रुञ्जयो धनपतिं शत्रुहा वरुणं तथा ॥ ६१ ॥
चित्रसेनो यममपि भीमं समरतापनः ।
जयन्तं वीरसेनश्च वीरभानुः समीरणम् ॥ ६२ ॥
वीराग्रगो वसूंस्तद्वत् शशाङ्कं वीरविक्रमः ।
बद्ध्वा सेन्द्रान् सर्वदेवान्नेतुं समुपचक्रमुः ॥ ६३ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
अष्टादशोऽध्यायः ॥ १५१७ ॥

# अथैकोनविंशोऽध्यायः ।

एवमिन्द्रमुखान् बद्ध्वा यदा नेतुं प्रचक्रमुः ।
तदा कामो धनुर्दिव्यं तान् रुरोध विकर्षयन् ॥ १ ॥
विद्रुता विबुधाः केचित् केचित्तत्र निपातिताः ।
बिडौजप्रमुखा देवप्रवृद्धा बन्धनं गताः ॥ २ ॥
देवगन्धर्वदाराद्याश्चुक्रुशुर्भयपीडिताः ।
तदा कामो विकर्षन् स्वं धनुर्मर्त्यानरुन्धत ॥ ३ ॥
विमुञ्चन् शस्त्रवर्षाणि शरजालेन संवृणोत् ।
तदा सुधृतिमुख्यास्ते न्यस्य बद्धान् दिवौकसः ॥ ४ ॥
युयुधुः सर्व एवैते कामेनाऽतिबलीयसा ।
पञ्चहायनको बाल एकः सर्वानयुध्यत ॥ ५ ॥
कामः शस्त्राऽस्त्रकुशलस्तदद्भुतमिवाऽभवत् ।
विस्मयं परमं जग्मुर्मर्त्या देवास्तथेतरे ॥ ६ ॥
सर्वेषामस्त्रजालानि शस्त्राण्यपि पृथक् पृथक् ।
छित्त्वा जघान प्रत्येकं सायकैः सितशल्यकैः ॥ ७ ॥
हताः सुधृतिमुख्यास्ते स्यन्दनं संश्रिताः पृथक् ।
सर्वप्राणैरयुध्यन्त कामेन बलवत्तराः ॥ ८ ॥
तदा ते निशितैर्बाणैः कामं विव्यधुरेकशः ।
कामस्तानपि चिच्छेद मध्ये प्राप्तान् शरैः पृथक् ॥ ९ ॥
कामस्य दृष्ट्वाऽतिबलं सुधृतिः प्रजवात्तदा ।
भो राजपुत्राः शृणुत वर्धनेन पुरोदितम् ॥ १० ॥
एकः कुमारस्तेनाऽत्र हता राष्ट्राऽधिपाः क्षणात् ।
कोटिशोऽतिबलास्तेन दैवं बलमिदं भवेत् ॥ ११ ॥

इति तत्सत्यमेवात्र पश्यामः कामपौरुषम् ।
एकः कुमारः सर्वान् नो रुरोध समितिञ्जयान् ॥ १२ ॥
अद्यापि नाऽऽगच्छति नो राजा वीरव्रतो विभुः ।
कामो न जेतुमस्माभिः शक्यो वीरव्रतादृते ॥ १३ ॥
सोऽपि राजा महादेवं सन्तोष्य तपसा यदि ।
भूयात् प्राप्तवरो नो चेत्कामोऽस्माञ्जयति क्षणात् ॥ १४ ॥
वदत्स्वेवमनीकेशे कामः शीघ्रतरक्रियः ।
सुधृतेरायुधं तीक्ष्णशरेणाऽच्छिनदञ्जसा ॥ १५ ॥
अन्येन हृदि विव्याध गाढं बाणेन पत्रिणा ।
सुधृतिर्हृदि संविद्धः कृत्तमूल इव द्रुमः ॥ १६ ॥
पपात भुवि निष्प्रज्ञो विभिन्नहृदयस्तदा ।
शत्रुञ्जयं शत्रुहणं भीमं समरतापनम् ॥ १७ ॥
विजेययुद्धकुशलो विध्वा मर्मसु सायकैः ।
तीक्ष्णैराशीविषप्रख्यैर्मूर्च्छितानकरोद्भृशम् ॥ १८ ॥
ते हताः कामबाणौघैर्जर्जरीभूतविग्रहाः ।
हित्वा प्रज्ञामायुधञ्च प्रेयसीमिव कामुकः ॥ १९ ॥
संश्लिष्य भूमिं सर्वाङ्गैर्न विदुर्बाह्यमान्तरम् ।
वीरविक्रमप्रमुख्यास्ते पुत्रा दृष्ट्वा तथाविधान् ॥ २० ॥
पितॄन् शोकसमाक्रान्ताः परिदेवितुमारभन् ।
हा ताताऽस्मान् परित्यज्य क्व गतोऽनाथतां गतान् ॥ २१ ॥
तव ताते च किं ब्रूमो सोऽपि त्यक्ष्यति जीवितम् ।
विना भवद्भिर्निमिषमपि नो भविता नृपः ॥ २२ ॥
एवं विलपमानान् तान् दृष्ट्वा सुधृतिनन्दनः ।
रणधीरः प्राह तदा वचो मे शृणुताऽऽदरात् ॥ २३ ॥
पराक्रमस्य कालोऽयं न च वै परिदेवितुम् ।
शत्रुरस्येति सर्वान् नो भवेच्छोको हि वीर्यहा ॥ २४ ॥

योद्धव्यं क्षत्रियैर्युद्धं यावत्प्राणस्य धारणम् ।
तस्माच्छोकं परित्यज्य युध्यामोऽत्र यथाबलम् ॥ २५ ॥
राज्ञे निवेदनायैष वीरसेनः प्रयात्वितः ।
भवतां देवितं दृष्ट्वा सैनिकाः सर्वतो दिशम् ॥ २६ ॥
प्रयान्ति भीता हा हेति रटन्तस्त्यक्तहेतयः ।
निवर्त्तयध्वं शोकात् स्वं चित्तं धैर्यसमाश्रयात् ॥२७॥
निशम्यैव सुधृतिजवाक्यं धैर्यं समाश्रिताः ।
युद्धाय निर्ययुः सर्वे वीरविक्रमसुख्यकाः ॥ २८ ॥
राज्ञे निवेदनायाऽऽशु वीरसेनः सुनिर्गतः ।
शत्रुजयसुताद्यास्ते कामस्याऽभिमुखे स्थिताः ॥ २९ ॥
एतस्मिन्नन्तरे देवा दृष्ट्वा कामात् पराभवम् ।
इन्द्रादीन्मोचितुं सर्वे धृतधैर्याः समाक्रमन् ॥ ३० ॥
रणधीरोऽथ तान् सर्वान्निवार्य शरवृष्टिभिः ।
विद्रुतानाह्वयत् सर्वान् सैनिकान्मर्त्यपक्षगान् ॥ ३१ ॥
हे हे शूरा नोचितं वः पलायनमशंसितम् ।
पलाय्य समराद्यूयं भर्तृपिण्डविनिर्ययम् ॥ ३२ ॥
अकृत्वा गच्छथाऽत्यन्तमघशंसनिकां गतिम् ।
भर्तृपिण्डस्य निर्योगो युद्धे देहसमर्पणम् ॥ ३३
पलाय्याऽभ्यागतं वीरपत्न्यश्चोपालभन्ति वै ।
अलं प्राणपरित्राणाल्लोकद्वितयनाशनात् ॥ ३४ ॥
निवर्त्तध्वं निवर्त्तध्वं धैर्यमालम्ब्य सत्वरम् ।
इति तद्वचनं श्रुत्वा निवृत्ताः सर्व एव ते ॥ ३५ ॥
पुनः समभवद्युद्धं देवमानवसेनयोः ।
मुहूर्त्तमात्रमभवद्रणः परमदारुणः ॥ ३६ ॥
तदन्तरे तु मनुजान् कामः सायकवृष्टिभिः ।
विधमन्मारुत इव मेघवृन्दं नभस्तले ॥ ३७ ॥

१९

ते हन्यमानाः समरे कामस्य शरवृष्टिभिः ।
न शेकुः सम्मुखे स्थातुं वायोरग्रे घना इव ॥ ३८ ॥
तदन्तरे सुधृतिजः शत्रुञ्जयसुतं बली ।
प्राह तत्कालसदृशं रणधीरो महाधृतिः ॥ ३९ ॥
राजपुत्र शृणु वचो भ्रातृभिः सेनयाऽपि ।
युतस्त्वं देवसेनाभ्यो रक्षेन्द्रादीन् पितॄनपि ॥ ४० ॥
अहं कामं योधयिष्ये पश्य मेऽद्य पराक्रमम् ।
इत्युक्त्वा रथमारूढो धनुर्विस्फारयन्महत् ॥ ४१ ॥
कामस्य सम्मुखं प्रागात् सायकैरभिवर्षयन् ।
अथ कामोऽपि तं वर्षं शरस्य शरवृष्टिभिः ॥ ४२ ॥
विनिवार्य सुनिशितान् प्रायुञ्जत् सायकान् तदा ।
तान् प्राप्तानेव मध्ये चिच्छेद सायकैस्त्रिभिः ॥ ४३ ॥
छित्त्वा द्रुतं मुष्टिदेशे मन्मथस्य महेषुणा ।
जघान रणधीरोऽपि तदा कामकराद्धनुः ॥ ४४ ॥
प्रापत भुवि तद्दृष्ट्वा शशंसुः साधु साध्विति ।
कामोऽपि विक्रमं दृष्ट्वा रणधीरस्य संयुगे ॥ ४५ ॥
साधु वीरश्लाघ्यतम स्तुत्वैवं निशितं शरम् ।
चापमादाय सन्धाय रणधीरस्य पश्यतः ॥ ४६ ॥
चिच्छेद चापं शरौघं लघुहस्तः प्रतापवान् ।
तेन क्रुद्धः सुधृतिजश्चापमन्यत् समाददे ॥ ४७ ॥
अथ कामस्तस्य रथमश्वान् सूतं शरासनम् ।
चिच्छेद युगपद्बाणैः शीघ्रं लघुपराक्रमः ॥ ४८ ॥
अथाऽऽदाय गदां सर्वलोहामशनिसन्निभाम् ।
प्राद्रवन्मदनं हन्तुं क्रोधेनाऽग्निरिव ज्वलन् ॥ ४९ ॥
रणधीरं तथाऽऽयान्तं दृष्ट्वा कामः सुवेगतः ।
चकार वर्षं निशितशराणां घनराडिव ॥ ५० ॥

रणधीरोऽपि तां दृष्टिं सर्पानिव खगेश्वरः ।
ग्रसन् जघान गदया सर्वप्राणेन मन्मथम् ॥ ५१ ॥
गदया ताडितो मूर्ध्नि भ्रमन्नेत्रः पपात ह ।
गाढमूर्च्छामवाप्तोऽथ रणधीरोऽपि तत्क्षणम् ॥ ५२ ॥
कामसायकवर्षेण चालनीभूतविग्रहः ।
पपात मूर्च्छितोऽत्यन्तं वज्राहत इवाऽद्रिराट् ॥ ५३ ॥

इति त्रिपुरारहस्ये माहात्म्यखण्डे एकोनविंशतितमोऽध्यायः॥१६२४॥



# अथ विंशतितमोऽध्यायः ॥

तदन्तरे वीरसेनो मार्गे राजानमैक्षत ।
प्रणम्य चरणौ मूर्ध्ना विमना इव संस्थितः ॥ १ ॥
तथाविधं प्रियतमं पौत्रं राजा निरीक्ष्य तु ।
आशीर्भिरनुयोज्याऽथ मूर्ध्न्युपाघ्राय चाऽब्रवत् ॥ २ ॥
वत्स किं दीनभूतोऽसि कच्चित्ते कुशलं तनौ ।
नगरे भ्रातृषु तथा पितृषु स्त्रीगणेषु च ॥ ३ ॥
सेनासु भृत्यवर्गेषु कोशेषु गुरुमन्त्रिषु ।
वद शीघ्रं समीक्ष्य त्वां दीनं शुष्यति नो मनः ॥ ४ ॥
इति श्रुत्वा तदा वीरसेनः प्राञ्जलिरब्रवीत् ।
राजंस्त्वन्निर्गमादिनाच्चतुर्थेऽह्नि पुरा श्रुतः ॥ ५ ॥
कामो गीर्वाणसेनाभिरिन्द्राद्यैरपि संवृतः ।
समागतः सुतुमुलं युद्धं चक्रुर्बुधा नरैः ॥ ६ ॥
अथाऽस्माभिः सुधृतिना सेनया सह संयुगे ।
युद्ध्वा विनिर्जिता देवा बद्धा इन्द्रमरुन्मुखाः ॥ ७ ॥
अथ कामः क्षणेनैव महाबलपराक्रमः ।
शत्रुञ्जयादीन् सुधृतिं पातयामास संयुगे ॥ ८ ॥
अक्षौहिणीनां पञ्चाशद्धतास्तेन दिनाऽर्धतः ।
भ्रातरो रणधीरेण तदाऽऽश्वस्ताः सुदुःखिताः ॥ ९ ॥
साम्प्रतं योधयत्येको रणधीरः स्वसेनया ।
मन्ये निपतितः सोऽपि कामेन सह सङ्गरे ॥ १० ॥

सुधृतिप्रमुखा येन क्षणाद्युद्धे निपातिताः ।
तत् कथं योधयेदेको रणधीरो महाबलम् ॥ ११ ॥
इति प्रोक्तं सर्ववृत्तं भवानग्रे परायणम् ।
तच्छ्रुत्वा पौत्रवचनं मा भैरिति समीरयन् ॥ १२ ॥
आजगाम युद्धभुवि धनुर्विस्फारयन्मुहुः ।
क्षणेन तावत् कामोऽपि मूर्च्छितः प्रत्यबुध्यत ॥ १३ ॥
राजानं पुरतो दृष्ट्वा कामः शरसुवृष्टिभिः ।
अवाकिरन्मेरुगिरिं पर्जन्य इव वृष्टिभिः ॥ १४ ॥
राजाऽपि प्रतिवर्षेण शरवृष्टिं व्युदस्य ताम् ।
नीहारपटलान्मुक्तः चण्डांशुरिव सम्बभौ ॥ १५ ॥
अथ राजाऽपि निशितैर्गार्धपत्रैः सुतेजितैः ।
विव्याध मदनं भूयः सोऽपि तान्मध्यआच्छिनत् ॥ १६ ॥
आच्छिद्याऽऽकर्णपूर्णेन राजानं ताडयद्भृशम् ।
राजाऽपि तं शरं मध्ये चिच्छेदाऽप्राप्तमांशुगैः ॥ १७ ॥
एवं युद्धमभूत् कामराज्ञोरत्यन्तदारुणम् ।
राजानं वीक्ष्य सम्प्राप्तं सैनिकाः सहसोत्थिताः ॥ १८ ॥
सुधृतिप्रमुखाश्चापि मूर्च्छामुक्ताः समन्ततः ।
तन्वः प्राणमवाप्येव राज्ञा सर्वेऽभिसङ्गताः ॥ १९ ॥
प्रणेमुः सर्वे एवैते शत्रुजयमुखा नृपम् ।
युध्यमानो नृपः प्राह सुधृते शृणु मद्वचः ॥ २० ॥
कामेन युद्ध्वाऽतिचिरं खिन्नाः श्रान्ताश्च सम्प्रति ।
इन्द्रादीन् रक्षत भृशं सुरेभ्यः सर्वतो दिशम् ॥ २१ ॥
योद्धाऽस्म्यहं मन्मथेन भवन्तः प्रेक्षका मम ।
इत्युक्त्वा युयुधेऽत्यन्तं राजा कामेन संयतः ॥ २२ ॥
तयोर्युद्धं समभवत् विष्णुकैटभयोरिव ।
उच्चावचैरस्त्रगणैः शस्त्रैरपि सुतेजनैः ॥ २३ ॥

अस्त्राण्यस्त्रेण शस्त्राणि शस्त्रेण विनिवार्य्य च ।
चक्रतुर्युद्धमत्यन्तं परस्परजयैषिणौ ॥ २४ ॥
अभेद्यकवचौ तद्वदच्छेद्यदृढकार्मुकौ ।
अक्षय्यतूणयुगलौ धनुर्विद्याविशारदौ ॥ २५ ॥
लाघवेन च वीर्येण बभूवतुरतिक्रियौ ।
एवं तयोर्विक्रमतोरतिक्रान्तं दिनत्रयम् ॥ २६ ॥
युध्यतोस्तुर्यदिवसे युद्धमासीन्महत्तरम् ।
अस्त्राऽग्निभिः सर्वलोका व्याप्ताः समभवन् तदा ॥ २७ ॥
राजा तदा हीयते यच्छ्रान्त्या कामोऽभिवर्धत ।
ज्ञात्वा राजा हीयमानमात्मानं शङ्करं तदा ॥ २८ ॥
सस्मार मनसा शीघ्रं तदा देवस्त्रिलोचनः ।
त्रिशूलं प्रेषयामास तद्राज्ञस्तु शरासने ॥ २९ ॥
सन्निविष्टं सायकवत्तद्राजा पाणिनाऽऽददे ।
तं शरं सारभूतं स मेने गुरुतरं यतः ॥ ३० ॥
नन्वेष सायकोऽत्यन्तं भारभूतोऽशनिप्रभः ।
कुत एवं निषङ्गे मे नाऽऽसीत् पूर्वं कदाचन ॥ ३१ ॥
अथवाऽहं श्रान्त इति स्यादेवमपि वा शिवः ।
कुलेशः कामविजये सन्निधानं गतो भवेत् ॥ ३२ ॥
चिन्तयन् चिन्तितं बाणं कार्मुके समयोजयत् ।
तदाऽर्चिषः समुत्पेतुः शरादशनिसन्निभात् ॥ ३३ ॥
तदाऽपसव्यं कामस्य चक्रुः शकुनयो मृगाः ।
दिशः प्रजज्वलुर्भूमिश्चकम्पे रज आततम् ॥ ३४ ॥
तद्दृष्ट्वा विपरीतं स कामः सस्मार मातरम् ।
लक्ष्मीं साऽप्रेषयत् दूतान् रक्षणार्थं मनोभुवः ॥ ३५ ॥
तावच्चिक्षेप राजा तं शरमग्निशिखोपमम् ।
पश्यतां सर्वलोकानां शरः कालाऽग्निसन्निभः ॥ ३६ ॥

दहन्निव त्रिलोकीं स पपात मदनोपरि ।
हा हेति चुक्रुशुर्देवा दृष्ट्वा शरनिपातनम् ॥ ३७ ॥
सम्प्राप्य स शरः कामं ददाहाऽनलवच्चूर्णम् ।
धनुस्तूणयुगं शस्त्रं सर्वं भस्मीभवत् क्षणात् ॥ ३८ ॥
कामोऽपि विगतप्राणो दग्धाङ्गारसमाऽङ्गकः ।
निपपात क्षितितले क्षीणपुण्यो यथाऽम्बरात् ॥ ३९ ॥
तदन्तरे ते दूता लक्ष्म्या ये प्रेषिताः पुरा ।
आगता ददृशुः कामं भूमौ निपतितं व्यसुम् ॥ ४० ॥
ते गृहीत्वा विसंज्ञं तं जग्मुः पद्मासमीपतः ।
अथ राज्ञा हतं कामं दृष्ट्वा सुधृतिमुख्यकाः ॥ ४१ ॥
अत्यन्तं जहृषुः सर्वे महारिपुनिपातनात् ।
सैनिका जयभेर्यादीन्यभिजघ्नुः समन्ततः ॥ ४२ ॥
हर्षव्याकुलिताः सर्वे प्रोत्सिक्ता अब्धिवज्जनाः ।
राजानमभिसंगम्य वर्धयामासुरुच्चकैः ॥ ४३ ॥
प्रणेमुरपरे तत्र परिरम्भन्ति चाऽपरे ।
पश्यन्ति सप्रणयतोऽप्यन्ये भाषन्ति केचन ॥ ४४ ॥
एवं प्रवृत्ते सेनायां संमर्दे हर्षसम्भवे ।
सुधृतिं प्राह नृपतिः कालोचितवचस्तदा ॥ ४५ ॥
सुधृते सत्वरं सेनां सन्नह्य चतुरङ्गिणाम् ।
प्रयाणं नगरायाऽऽदौ कृत्वा पश्चाच्च सैनिकाः ॥ ४६ ॥
ये क्षताः शस्त्रघातेन तान् भैषज्येन योजय ।
साम्परायेण कृत्येन मृतानग्रक्षतेन तु ॥ ४७ ॥
पृष्ठक्षतान्निखातेषु सह पश्वादिभिः कुरु ।
इत्याज्ञाप्य क्षितिपतिः समारोहत स्यन्दनम् ॥ ४८ ॥
तावद्भटाः सैनिकाश्च नायका नायकाऽधिपाः ।
वाहनानि विचित्राणि संरुह्य हेतिपाणयः ॥ ४९ ॥

इन्द्रादिविबुधेशानान् बद्धानादाय सर्वतः ।
परिवार्य महीपालं नगरायाऽभिचक्रमुः ॥ ५० ॥
बन्दिवृन्दैस्तूयमानः शस्यमानस्तथा भटैः ।
प्रयातो नगरायाऽऽशु महीपालः श्रिया ज्वलन् ॥ ५१ ॥
भूपतेर्विजयं श्रुत्वा मन्त्रिणो नगरं द्रुतम् ।
अलञ्चक्रुश्च विजयं घोषयामासुरुच्चकैः ॥ ५२ ॥
वर्धनो मन्त्रिराट् तत्र दूतान् शीघ्रगमान् बहून् ॥
आख्यातुं विजयं राज्ञो बन्धुप्रियजनेषु च ॥ ५३ ॥
प्रस्थाप्य राजामार्गेषु साकं तोरणबन्धनैः ।
कदलीपूगवृक्षैश्च दीपपाञ्चालिकागणैः ॥ ५४ ॥
समादिशदलङ्कर्त्तुं तथा देवाऽऽलयेषु च ।
पूजनाय कुलगुरोश्चन्द्रमौलीश्वरस्य तु ॥ ५५ ॥
विशेषेण बहुविधानुपचारान् प्रकल्पयत् ।
कन्याः सुरूपा भूषाढ्याः श्वेतकौशेयवासिनीः ॥ ५६ ॥
दध्यक्षतकराश्चान्याः पूर्णकुम्भफलग्रहाः ।
अन्या विविधपात्रेषु विचित्रा इति दीपकान् ॥ ५७ ॥
आददानाः सङ्घशस्ता समादिशत वै द्रुतम् ।
विद्यापतिः कुलगुरुर्विप्रैर्विद्याविशारदैः ॥ ५८ ॥
जयाऽभिषेकसामग्रीं कल्पयद्विधिदृष्टतः ।
प्रकल्प्यैवं मन्त्रिगणैर्वर्धनप्रमुखैर्युतः ॥ ५९ ॥
विद्यापतिः स्यन्दनं स्वं समारुह्य पुराद्बहिः
जगाम सहितो विप्रैर्वर्धनो हयमारुहत् ॥ ६० ॥
गजं रथं समारूढाश्चाऽन्ये मन्त्रिमुखा ययुः ।
क्रमेण निर्गताः सर्वे नगरद्वारतो बहिः ॥ ६१ ॥
तदन्तरे भूमिपतिः कुलरत्नाऽभिधं गजम् ।
चतुर्दन्तं श्वेतवर्णमैरावतकुलोद्भवम् ॥ ६२ ॥

अलङ्कृतं समारुह्य नगराऽभिमुखो ययौ ।
शत्रुञ्जयाद्यास्तनुजास्तत्पुत्राश्च पृथक् पृथक् ॥ ६३ ॥
हस्तिश्रेष्ठान् समारुह्य राजानमनुसंययुः ।
रणधीरो रथाऽऽरूढो राज्ञ आसीत् पुरःसरः ॥ ६४ ॥
निवर्त्य नृपतेराज्ञां सेनया सह पृष्ठतः ।
प्रययौ देवराजादीन् बद्धानादाय संयतः ॥ ६५ ॥
सुधृतिर्गजमारूढो गदापाणिः प्रतापनः ।
अविदूरे पुरद्वाराद्राजा गुरुमवैक्षत ॥ ६६ ॥
ततोऽवरुह्य करिणो विद्यापतिमुपाऽऽययौ ।
रणधीरो राजपुत्राश्चाऽन्ये सर्वे निशम्य तु ॥ ६७ ॥
राजानमवरूढं स्वाद्वाहनाद्गुरुदर्शनात् ।
अवतेरुः स्ववाहेभ्यो राजानमनुसंययुः ॥ ६८ ॥
राजा गुरुं समासाद्य पस्पर्श शिरसा पदम् ।
शत्रुञ्जयाद्यास्तदनु प्रणेमुर्गुरुपुङ्गवम् ॥ ६९ ॥
विद्यापतिश्चापि नृपमाशीर्भिरनुयोज्य तु ।
राजानमवदत् पश्चात् सर्वविद्याविशारदः ॥ ७० ॥
राजन्निमं मुहूर्त्तं वै प्रवेशे ह्यवरं विदुः ।
विश्राम्याऽग्रिममौहूर्त्ते प्रशस्ते नगरे विश ॥ ७१ ॥
तच्छ्रुत्वा प्राह नृपतिर्नमस्कृत्य तथाऽस्त्विति ।
ततोऽवतीर्य स गुरुः स्यन्दनादविदूरतः ॥ ७२ ॥
तरुच्छायां समाश्रित्य निषसादाऽऽसने शुभे ।
तदाज्ञया क्षितिपतिर्निषण्णो नाऽतिदूरतः ॥ ७३ ॥
शत्रुञ्जयाद्याः सर्वेऽपि निषेदुर्गुर्वनुज्ञया ।
विद्यापतिस्ततोऽपश्यद्रथसंस्थान् दिवौकसः ॥ ७४ ॥
दृष्ट्वा पप्रच्छ नृपतिं क इमे बन्धनं गताः ।
इति वाक्यं गुरोः श्रुत्वा प्राञ्जलिः प्राह भूमिपः ॥ ७५ ॥

एते शक्रादयो देवाः शत्रुपक्षसमाश्रयाः ।
सुधृतिप्रमुखैर्युद्धे निर्जिता बन्धनं गताः ॥ ७६ ॥
तच्छ्रुत्वा वचनं राज्ञो विद्यापतिरुदारधीः ।
असम्यगिव तन्मत्वा वचनं प्राह भूमिपम् ॥ ७७ ॥
हे राजन् शृणु मत्प्रोक्तं नैतदौपयिकं तव ।
एते हि देवाः पूज्या नो मर्त्यादिष्टैकहेतवः ॥ ७८ ॥
कारणेन हि सम्बद्धास्त्वजेया मानवैः सदा ।
मोचयेमान् प्रार्थयस्व शीघ्रं पूजय पूजनैः ॥ ७९ ॥
इति श्रुत्वा गुरोर्वाक्यं राजा सुधृतिमैक्षत ।
नृपतेरिङ्गितं ज्ञात्वा सुधृतिः सत्वरं सुरान् ॥ ८० ॥
विमुच्य राजसन्निधमानयन्मानपूर्वकम् ।
इन्द्रादीनागतान् दृष्ट्वा प्रोत्थितो नृपतिर्द्रुतम् ॥ ८१ ॥
क्रमेण नत्वा शक्रादीनासनाद्यैः सभाजयत् ।
क्रमेण सम्पूज्य सुरान् राज्यं कोशञ्च वाहनम् ॥ ८२ ॥
पुत्रदारादिकं सर्वं स्वञ्चाऽपि विनिवेद्य वै ।
अज्ञानकृतमेतन्मे क्षमध्वमिति सोऽब्रवीत् ॥ ८३ ॥
तद्दृष्ट्वेन्द्रमुखा देवा राज्ञो दाक्षिण्यमुत्तमम् ।
प्रोचुः शुभतरां वाचं तत्कालसदृशीं तदा ॥ ८४ ॥
धन्योऽसि नृपतिश्रेष्ठ यस्य ते भक्तिरीदृशी ।
श्रीगुरौ दुर्लभा लोके कथं हास्यति ते प्रियम् ॥ ८५ ॥
अनयैव हि भक्त्या ते सर्वं सिध्येत् समीहितम् ।
राजन्निष्टं साधयस्व साधयामो वयं दिवम् ॥ ८६ ॥
इत्युक्त्वाऽन्तर्हिता देवाः शक्रमुख्यास्ततः परम् ।
राजा प्रयातो नगरं गुरुणा सम्प्रचोदितः ॥ ८७ ॥

इति त्रिपुरारहस्ये माहात्म्यखण्डे विंशतितमोऽध्यायः ॥१७११॥

---

# अथैकविंशोऽध्यायः ।

काममादाय ते दूताः कमलासविधं गताः ।
न्यवेदयन् युद्धवृत्तं देवानाञ्च पराभवम् ॥ १ ॥
श्रुत्वा लक्ष्मीर्जगन्माता दृष्ट्वा कामं गताऽऽयुषम् ।
ईषच्छोकसमाक्रान्ता धैर्यमालम्ब्य वै पुनः ॥ २ ॥
त्रिपुरां परमेशानीं ध्यात्वा निश्चलमानसा ।
निमील्य नेत्रयुगलं तन्मयी संस्थिता क्षणम् ॥ ३ ॥
उन्मील्य नेत्रयुगलममृतांशुप्रवर्षणम् ।
अपश्यन्मन्मथं लक्ष्मीस्तत्क्षणादेव मन्मथः ॥ ४ ॥
उत्तस्थौ निद्रित इव युद्धोत्सुकितमानसः ।
सम्प्रेक्ष्य परितः स्वञ्च निरायुधमवेत्य सः ॥ ५ ॥
लज्जितः प्रेक्ष्य जननीं ववन्दे तत्पदाम्बुजम् ।
वन्दित्वाऽतिविषण्णाऽऽस्यो लक्ष्मीं प्राह तदा वचः ॥ ६ ॥
मातः कुतो मे समरे मर्त्यैरासीत् पराभवः ।
अहं ते मानससुतो विष्णुपत्न्याः समुद्गतः ॥ ७ ॥
देवताविजयार्थं ते संकल्पादभवं शिवे ।
मोघः कथं ते सङ्कल्पो देवानाञ्चाऽपि बन्धनम् ॥ ८ ॥
वद मातर्द्रुतं ह्येतच्छोको मां दहतीश्वरि ।
फल्गुभूतो मृतो युद्धे किमर्थं जीवितस्त्वया ॥ ९ ॥
अल्पीयसैः पराभूतो मनसस्ते सुतोऽप्यहम् ।
मम नौपयिकं लोके जीवनं सर्वनिन्दितम् ॥ १० ॥
श्रुत्वाऽत्र कारणं मातर्हास्यामि खलु जीवितम् ।
श्रुत्वैवं कामवचनं शोकोद्गारसमन्वितम् ॥ ११ ॥

प्रोवाच पद्मा पद्माऽऽस्या तत्कालप्रतिमं वचः ।
वत्स काम शोकमेतं जहि कापुरुषाऽऽश्रितम् ॥ १२ ॥
पुरुषा न हि शोचन्ति धीराः क्वाऽपि महाशयाः ।
आपदम्भोधिनिर्मग्ना अपि धैर्यमहाप्लवम् ॥ १३ ॥
समासाद्य प्रयान्त्येव तीर्त्वा सम्पत्तटं द्रुतम् ।
आपत्सु ग्लानिमायान्ति जनाः फल्गुस्वभावजाः ॥ १४ ॥
शृण्वत्र कारणं वक्ष्ये येन त्वं निर्जितो रणे ।
न मर्त्यवीर्यात्त्वं युद्धे केवलं निर्जितः खलु ॥ १५ ॥
राजा वीरव्रतः साक्षान्महादेवमुपाश्रितः ।
तत्प्रसादेन युद्धे त्वं निर्जितोऽसि महीपते ॥ १६ ॥
तद्गच्छाऽऽराधय शिवं महादेवमधीश्वरम् ।
जेताऽसि समरे सर्वान् प्रसादात्तस्य शूलिनः ॥ १७ ॥
तच्छ्रुत्वा श्रीवचः कामो जगाद क्रोधमूर्च्छितः ।
मा वदैवं महादेवि शत्रुपक्षसमाश्रयम् ॥ १८ ॥
देवं वा मनुजं वाऽपि मादृशो जगतीतले ।
कथं नु शरणीकुर्याद्धीनः सन् जगदीश्वरि ॥ १९ ॥
ततोऽन्यं वद देवेशं यत्प्रसादादहं द्रुतम् ।
जेता भवेयं सर्वेषां देवानामपि वै रणे ॥ २० ॥
महादेवं विजेष्यामि प्रथमं तदनन्तरम् ।
देवान् मर्त्यान् दानवादीन् सर्वानेव क्रमेण तु ॥ २१ ॥
तच्छ्रुत्वा कामवचनं प्राह पद्मालया तदा ।
वत्स देवं न जानीषे महादेवं त्रिलोचनम् ॥ २२ ॥
सर्वदेवाऽधिदेवेशं हित्वा कोऽन्यो महांस्ततः ।
यथा जलानां जलधिर्ज्योतिषाञ्च नभोमणिः ॥ २३ ॥
पर्वतानां सुमेरुश्च तथा देवेषु शङ्करः ।
प्राणिनां जङ्गमा श्रेष्ठास्तेषु मर्त्यास्ततः सुराः ॥ २४ ॥

तेभ्यो ब्रह्मा चतुर्वक्त्रः स्रष्टा लोकस्य चोत्तमः ।
ततो विष्णुः पालयिता यन्नाभिकमलाद्विधिः ॥ २५ ॥
सञ्जातः प्रलयस्यान्ते स भवेत् पुरुषोत्तमः ।
ततोऽपि त्र्यम्बकः श्रेष्ठः सर्वदेवाऽधिदेवराट् ॥ २६ ॥
यस्य संहरणं कृत्यमंशभूता महेश्वराः ।
रुद्राः कुर्वन्ति सर्वेशा मन्युरूपाः सुभीषणाः ॥ २७ ॥
स देवः सर्वदेवेशः सदाशिव इति स्मृतः ।
यल्लिङ्गस्य पुरा विष्णुरन्तं नाऽपश्यदच्युतः ॥ २८ ॥
यदंशेन विधेर्मानं भङ्क्त्वा छिन्नं शिरो महत् ।
नाऽस्ति तस्माच्छ्रेष्ठतरस्तस्मात्तं शरणं व्रज ॥ २९ ॥
निशम्य जननीवाक्यं पुनः प्राह स मन्मथः ।
मातः सर्वोत्तममपि शिवं त्रिभुवनेश्वरम् ॥ ३० ॥
नाऽऽराधयाम्यहं यस्माच्छत्रुसंश्रयणो हि सः ।
वद मातः शिवो यस्मान्महिमानमवाऽऽप्तवान् ॥ ३१ ॥
तं समाराध्य जेताऽस्मि महादेवमपीश्वरि ।
नैसर्गिको वा महिमा तस्य देवस्य मे वद ॥ ३२ ॥
आकर्ण्य कामवचनं तदा लक्ष्मीर्महेश्वरी ।
ध्याननिष्ठा समभवान्निमील्य नयनद्वयम् ॥ ३३ ॥
क्षणं ध्यात्वा महादेवीं त्रिपुरां परमेश्वरीम् ।
प्रार्थयामास कामस्य सौभाग्यप्राप्तये तदा ॥ ३४ ॥
विज्ञाय प्रार्थनं देवी लक्ष्म्याः कामस्य सिद्धये ।
गौरीं नियोजयामास सा तत्राऽविर्बभूव ह ॥ ३५ ॥
दृष्ट्वा गौरीं महालक्ष्मीः सहसोत्थाय सन्नता ।
भूत्वा गौरीं समादाय करेण विनिवेशयत् ॥ ३६ ॥
रत्नाऽऽसने ततः पूजां विधाय कमलोद्भवा ।
स्तुत्वा मधुरया वाचा प्राह गौरीं महेश्वरी ॥ ३७ ॥

देवि धन्याऽस्मि यत्तेऽहं कृपया ह्यवलोकिता ।
त्वं साक्षाद्देवदेवस्य महादेवस्य प्रेयसी ॥ ३८ ॥
त्वद्दर्शनं न सुलभं ब्रह्मादीनामपीश्वरि ।
अद्य मे त्रिपुरा प्रीता यत्त्वां द्रक्ष्यामि चक्षुषा ॥ ३९ ॥
अनुजां वासुदेवस्य पत्नीं पशुपतेः प्रियाम् ।
इति तद्वचनं श्रुत्वा गौरी प्रोवाच सस्मितम् ॥ ४० ॥
किं पद्मे नेत्रयुगलं निमील्य ध्यानमास्थिता ।
किं चिन्तयसि मे ब्रूहि द्रुतं कमलवासिनि ॥ ४१ ॥
निशम्य गौरीवचनं प्राह साऽमृतपेशलम् ।
गौरि ते वच्मि वृत्तान्तं शृणु यच्चिन्तयाम्यहम् ॥ ४२ ॥
अयं कुमारः कामाख्यः सुतो मे मानसः शिवे ।
देवानामिष्टसिध्यर्थमुद्भावितं इहेश्वरि ॥ ४३ ॥
स निर्जितो रणे वीरव्रतेन धरणीतले ।
स राजा परमेशस्य तव पत्युः प्रसादतः ॥ ४४ ॥
अजेयमपि मे पुत्रं जितवान् संयुगे शिवे ।
विषण्णो निर्जितस्तेन सर्वान् जेतुमिहेच्छति ॥ ४५ ॥
शिवमाराधयेत्युक्तो न शृणोति वचो मम ।
इति श्रुत्वा रमावाक्यं ददर्श काममन्तिके ॥ ४६ ॥
स्मितपूर्वं वत्स काम एहीति प्राह शङ्करी ।
श्रुत्वा गौरीवचः काम उपसृत्य शिवां तदा ॥ ४७ ॥
दण्डवत् प्रणिपत्याऽथ बद्धाञ्जलिपुटस्थितः ।
प्राह गौरी वत्स किं ते कर्तुं व्यवसितं वद ॥ ४८ ॥
कामः प्राह ततो मातः शृणु मे यच्चिकीर्षितम् ।
युद्धे सर्वान् विजेष्यामि तपस्तप्त्वा सुदुष्करम् ॥ ४९ ॥
तत्र देवं न जानामि यस्तुष्टो वाञ्छितप्रदः ।
इति श्रुत्वा गिरं तस्य प्रोवाच शिववल्लभा ॥ ५० ॥

व्यवसायो महानेष न शिवाऽऽराधनं विना ।
भविष्यति ततः काम शिवमाराधय द्रुतम् ॥ ५१ ॥
न कश्चिन्मत्प्रियाल्लोके शिवादन्यो हि विद्यते ।
दुर्लभार्थप्रदानाय तस्माद्व्रज महेश्वरम् ॥ ५२ ॥
इत्युक्त्वा मदनं गौरी प्राह लक्ष्मीं ततो वचः ।
प्रेषिताऽस्मि महादेव्या त्वच्छ्रियै त्रिपुराऽऽख्यया ॥ ५३ ॥
चिन्तां परित्यज तव पुत्रः प्राप्नोति वाञ्छितम् ।
इति तस्या निगदितुं स्वन्देशमहमागता ॥ ५४ ॥
प्रसादयतु देवेशं शिवं कामार्थलब्धये ।
एवं वदन्त्यां गौर्यां स कामः प्राह रुषाऽन्वितः ॥ ५५ ॥
शृणु शर्वाणि मद्वाक्यं शत्रुपक्षसमाश्रयम् ।
शिवं कदाऽप्यहं नैव शरणं यामि शङ्करि ॥ ५६ ॥
शिवादप्यधिकं देवं प्रसाद्य प्राप्य चेहितम् ।
शिवं तदाश्रितांश्चाऽपि विजेष्याम्यहमोजसा ॥ ५७ ॥
त्यजामि वा देहमिमं न शिवं संश्रये क्वचित् ।
श्रुत्वैवं कामवचनं क्रुद्धा प्राह महेश्वरी ॥ ५८ ॥
यस्मान्मद्वचनं पथ्यमपि त्वं न शृणोष्यतः ।
शिवं युद्धे समासाद्य भस्मशेषत्वमृच्छसि ॥ ५९ ॥
शशापैवं तदा लक्ष्मीः श्रुत्वा शापं सुतस्य तम् ।
क्रुद्धा शशाप गौरीं सा रोषाऽऽरुणितलोचना ॥ ६० ॥
यस्मात् कुमारे मे शापो दत्तस्तस्मात्त्वयाऽधुना ।
भर्तृनिन्दाश्रुतिवशात् भस्मशेषी भविष्यसि ॥ ६१ ॥
ततोऽतिक्रोधसंयुक्ता गौरी प्राह हरेः प्रियाम् ।
कुमारे प्रेमभावेन विचाररहिता यतः ॥ ६२ ॥
ततस्त्वं भर्तृवियुता शोकं प्राप्स्यसि वै चिरम् ।
सपत्नीभिरपि क्लिष्टा भविष्यसि हरिप्रिये ॥ ६३ ॥

इति शप्ता पुनर्लक्ष्मीः क्रुद्धा योद्धुं समुत्थिता ।
रुद्राण्यपि मृगेन्द्रं स्वं वाहनं समुपस्थिता ॥ ६४ ॥
धनुर्दिव्यं समादाय शरवर्षाणि चक्रतुः ।
विविधानि च शस्त्राणि तथाऽस्त्राणि च भार्गव ॥ ६५ ॥
एवं तयोः समभवत् युद्धमत्यन्तदारुणम् ।
गौर्य्या समागतास्तत्र प्रमथा युयुधुर्भृशम् ॥ ६६ ॥
लक्ष्मीस्तान् प्रमथानस्त्रैर्विव्याध बलवत्तरैः ।
हतास्तदा महाऽस्त्रेण प्रमथा भृशपीडिताः ॥ ६७ ॥
पलायिताः शिवं प्रोचुर्युद्धं देव्याश्च पद्मया ।
श्रुत्वा शिवो वृषाऽऽरूढः प्रययौ यत्र सङ्गरः ॥ ६८ ॥
तदन्तरे युद्धवृत्तं श्रुत्वा विष्णुः समागतः ।
ब्रह्माऽपि युद्धसन्देशं प्राप्य देवैः समावृतः ॥ ६९ ॥
आजगाम सरस्वत्या समेतो युद्धमीक्षितुम् ।
सिद्धगन्धर्वविद्याध्राः सकिन्नरमहोरगाः ॥ ७० ॥
आजग्मुर्युद्धमभवद्यत्र तत्र समीक्षकाः ।
अभवत्तुमुलं युद्धं लक्ष्मीगौर्योः परस्परम् ॥ ७१ ॥
सृजतो विविधाऽस्त्राणि परस्परजयेच्छया ।
निवारयितुमायातौ शिवाविष्णू समीपतः ॥ ७२ ॥
अस्त्राऽग्निना विनिर्दग्धौ मूर्च्छितौ सम्बभूवतुः ।
अथ लक्ष्मीर्धनुर्दिव्यं गौर्याश्चिच्छेद सायकैः ॥ ७३ ॥
हृदि विव्याध निशितशरेणाऽऽनतपर्वणा ।
हृदयाच्छरसंविद्धाद्रुधिरं बहु निर्ययौ ॥ ७४ ॥
गाढविद्धा मूर्च्छिताऽभूद्गौरी तस्मिन्महारणे ।
शोणितं हृदयात्तस्या निर्गतं यद्रणाऽजिरे ॥ ७५ ॥
प्रलयाग्निरिवाऽत्यन्तं प्रजज्वाल समन्ततः ।
तज्ज्वालाभिः समाकीर्णं जगन्नाशोन्मुखं बभौ ॥ ७६ ॥

तदा ब्रह्मा रमां स्तोतुमुपाऽक्रमत् कृताञ्जलिः ।
भीतो जगन्निधनतस्तां क्षमापयितुं विधिः ॥ ७७ ॥
जय लक्ष्मि महादेवि जय सम्पदधीश्वरि ।
जय पद्मालये मातर्जय नारायणप्रिये ॥ ७८ ॥
त्वं गतिः सर्वजगतां भीतानां भयहारिणी ।
प्रणतार्त्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ७९ ॥
सकृत् सन्नतिमात्रेण भक्त्या दारिद्र्यनाशिनि ।
जगतो हर भीतिं त्वं नारायणि नमोऽस्तु ते ॥ ८० ॥
जगतां जनयित्री त्वं पालयित्री हरिप्रिया ।
संहारिणी रुद्ररूपा नारायणि नमोऽस्तु ते ॥ ८१ ॥
पद्माऽऽस्ये पद्मनिलये पद्मकिञ्जल्कवर्णिनि ।
पद्मप्रिये पद्मपदे नारायणि नमोऽस्तु ते ॥ ८२ ॥
त्राहि त्राहि कृपामूर्ते जगद्विध्वंसनादितः ।
कृपया रक्ष जगतीं नारायणि नमोऽस्तु ते ॥ ८३ ॥
इति स्तुत्वा चतुर्वक्त्रो दण्डवत् पतितो भुवि ।
इन्द्राद्या निखिला देवाः सिद्धविद्याधरादिकाः ॥ ८४ ॥
त्राहि देवि महालक्ष्मीत्येवमुच्चुक्रुशुर्भृशम् ।
महाग्नेर्विबुधान् दृष्ट्वा वित्रस्तान् शरणागतान् ॥ ८५ ॥
विधिस्तुत्या च तरसा प्रसन्ना चाऽभवत् क्षणात् ।
मा बिभ्यथेति तान् देवानुक्त्वा सा परमेश्वरी ॥८६॥
तमग्निं रुधिरोद्भूतं भक्षयामास वै क्षणात् ।
अग्निज्वालाविनिर्दग्धान् देवान्मर्त्यानपीतरान् ॥ ८७ ॥
दृष्ट्या पीयूषवर्षिण्या जीवयामास च क्षणात् ।
अथ विष्णुशिवौ चाऽपि मूर्च्छामुक्तौ समुत्थितौ ॥ ८८ ॥
ते सर्वे ददृशुर्लक्ष्मीं रुधिरोत्थाऽग्निभक्षणात् ।
ज्वालामालां विमुञ्चन्तीं रोमकूपेभ्य आतताम् ॥८९॥

विमुक्ता मूर्च्छया साऽपि गौरी शङ्करवल्लभा ।
क्रोधादग्निं महाज्वालं वमन्तीं पर्युपस्थिता ॥ ९० ॥
दृष्ट्वा लक्ष्मीं रमाञ्चापि क्रोधव्याकुलितेक्षणाम् ।
तयोः समाधानहेतोर्ब्रह्मविष्णुशिवास्तदा ॥ ९१ ॥
भारतीं प्रेषयामासुः प्रसाद्य विधिवल्लभाम् ।
सा समागत्य तरसा भवानीञ्च हरिप्रियाम् ॥ ९२ ॥
समादाय स्वपाणिभ्यामकरोन्मेलनं तयोः ।
हे रमे हे भवानि त्वं शृणु मद्वचनं शुभम् ॥ ९३ ॥
अनर्हमेतद्युवयोः क्रोधं लोकस्य नाशनम् ।
समाधानं विधास्येऽहं शापानाञ्च परस्परम् ॥ ९४ ॥
गौर्याः शापादेष कामः शिवाद्भस्मीभविष्यति ।
पुनरुज्जीवनं प्राप्य गौर्याः प्रियनिमित्ततः ॥ ९५ ॥
शिवं जेष्यति हे गौरि तव देहान्तरे पुनः ।
भर्तृनिन्दाश्रवणतो भस्मीभावो भविष्यति ॥ ९६ ॥
रमे तवाऽपि सापत्नदुःखाच्छीघ्रं कलेवरम् ।
विनष्टं सत् पुनश्चारुतरं स्याच्च कलेवरम् ॥ ९७ ॥
अंशाऽवतारे च तव भर्त्रा स्याच्च वियुक्तता ।
मोहं परित्यज्य परं स्वरूपं परिचिन्तय ॥ ९८ ॥
इति वाणीवचः श्रुत्वा गौरी च हरिवल्लभा ।
प्रकृतिस्था तमोभावं त्यक्त्वा शान्तिं परां ययौ ॥ ९९ ॥
इति ते रामसम्प्रोक्तं रमाऽऽख्यानं शुभोदयम् ।
य एतच्छृणुयात्तस्य रमा स्याद्वाञ्छिताऽर्थदा ॥ १०० ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे एकविंशतितमोऽध्यायः ॥ ११ ॥

# अथ द्वाविंशोऽध्यायः ।

इति श्रुत्वा महाऽऽख्यानं जामदग्न्यो महाशयः ।
दत्तात्रेयं पुनः प्राह विस्मितोऽत्यद्भुतश्रुतेः ॥ १ ॥
श्रीगुरो भवता प्रोक्तमाख्यानमतिशोभनम् ।
रमायाश्चरितं सर्वविस्मापनकरं तथा ॥ २ ॥
कथं लक्ष्मीर्भर्तृरता वियोगाद्दुःखिताऽभवत् ।
सपत्नीकृतदुःखं वा देहान्तकरणं महत् ॥ ३ ॥
गौर्याश्च भर्तृनिन्दातो भस्मताऽभूत् कथं वद ।
कृपया नाथ मयि तत् सर्वं वक्तुमिहाऽर्हसि ॥ ४ ॥
इत्यर्थितो भार्गवेण प्रीतः प्राह दयानिधिः ।
शृणु राम पुरावृत्तमाख्यास्ये संयतो भव ॥ ५ ॥
पुरा विष्णुर्महालक्ष्म्या वैकुण्ठे संस्थितोऽभवत् ।
वृन्दां भूमिश्च सन्तुष्टः स्वीचकाराऽतिभक्तितः ॥ ६ ॥
ताभ्यां चिरं पूजितो वै लक्ष्म्याः कोपेन शङ्कितः ।
परोक्षं रमते ताभ्यामेवं चिरतरं ह्यभूत् ॥ ७ ॥
लक्ष्म्याऽपि विदितश्चैतत् पृष्ट आच्छादयद्धरिः ।
अथ कालेन महता कदाचित् पार्षदैर्युता ॥ ८ ॥
लक्ष्मीवाण्या समाहूता विष्णुना ज्ञापिता ययौ ।
तदा लक्ष्मीविहीनः स भूवृन्दाभ्यां च सम्भ्रमौ ॥ ९ ॥
क्रीडन् समास्थितस्ताभ्यां लालितोऽतितरां हरिः ।
तदा कस्माद्रमा देवी सम्प्राप्ता सत्यलोकतः॥ १० ॥
भूवृन्दाभ्यां समालक्ष्य क्रीडन्तमतिकामुकम् ।
क्रोधाग्निना प्रजज्वाल हरिरालक्ष्य शङ्कितः ॥ ११ ॥

निर्गता वैकुण्ठधाम्नो ययौ द्रुततरं रमा ।
अनुव्रज्य हरिः शीघ्रं हिमाद्रौ तां पराऽमृशत् ॥ १२ ॥
जग्राह दक्षहस्ते तां सान्त्वयामास वै तदा ।
क्रोधेन सा प्रज्वलन्ती वह्निना घृतपिण्डवत् ॥ १३ ॥
द्रवीभूता जलमयी सञ्जाता कमलाऽऽलया ।
अक्षयं सलिलं तच्च नदीरूपेण चाऽवहत् ॥ १४ ॥
सैवं पद्माऽभिधा जाता नदी परमपावनी ।
नारदस्य तु शापेन शुष्कतोयाऽभवद्धि सा ॥ १५ ॥
भगीरथोऽपि राजर्षिस्तपस्तप्त्वा सुदुष्करम् ।
गङ्गां रथानुगां चक्रे रथस्तन्मार्गजो ययौ ॥ १६ ॥
गङ्गया सङ्गता पद्मा शापान्मुक्ता यदा बभौ ।
तदा पद्मा गङ्गया तु मिलिता प्रवहाच्चिरम् ॥ १७ ॥
कालान्तरे विभक्ता च प्राक् समुद्रेण सङ्गता ।
पद्मागङ्गाविभेदे तु स्नानात् स्वर्गमवाप्नुयात् ॥ १८ ॥
इति श्रुत्वा गुरोर्वाक्यं रामः पप्रच्छ सादरम् ।
भगवन् नारदोऽत्यन्तशान्तचित्तो दयानिधिः ॥ १९ ॥
कस्मात्तेन नदी शप्ता विमुक्ता शापतः कथम् ।
एतन्मे शंस भगवन् संभिन्ना गङ्गाया कुतः ॥ २० ॥
एवं पृष्टो भार्गवेण प्राह दत्तो महामुनिः ।
शृणु राम पुरावृत्तं नारदस्याऽतिचित्रितम् ॥ २१ ॥
कदाचिन्नारदो ब्रह्मलोके ब्रह्मसभागतः ।
तत्र प्रसङ्गो गान्धर्ववेदस्य समजायत ॥ २२ ॥
तत्र गन्धर्वमुख्याश्च देवा यक्षाश्च किन्नराः ।
गान्धर्वं समुपाऽक्रामत् प्रशस्तं चोत्तरोत्तरम् ॥ २३ ॥
वीणायां मूर्च्छयद्रागं नारदश्चापि तं तदा ।
तद्रागस्य मूर्च्छनया सर्वे ब्रह्मसभासदः ॥ २४ ॥

नादब्रह्मणि संलीनाः प्रापुर्निर्वाणवत् सुखम् ।
प्रशंसुर्नारदं सर्वे साधु साध्विति वै तदा ॥ २५ ॥
अथ वाणी कच्छपीं स्वां रागमूर्च्छनकोविदा ।
अवादयत्तद्गतिं तु नारदाद्याश्च नो विदुः ॥२६॥
अन्ते सभा विसृष्टाऽभून्नारदो निर्गतस्ततः ।
सरस्वत्या गतिं तां तु चिन्तयन् पथि संययौ ॥ २७ ॥
नारदेन न विदिता सा गतिः सर्वतोत्तमा ।
पद्मातीरे समागत्य नारदो निर्जने वने ॥ २८ ॥
तां गतिं मूर्च्छयामास सरस्वत्या सुमूर्च्छिताम् ।
अपश्रुतिं तत्र श्रुत्वा जहासोच्चैस्तदा नदी ॥ २९ ॥
नारदः स्त्रोपहासेन लज्जितो मन्युना वृतः ।
शशाप पद्मां सरितं यतोऽहं हसितस्त्वया ॥ ३० ॥
ततो नष्टजला त्वं वै भविष्यासि सरिद्वरे ।
इति शापं सुभीमं सा श्रुत्वा तं दण्डवन्नता ॥ ३१ ॥
प्रार्थयामास बहुधा शापस्याऽन्तं तदा नदी ।
प्रार्थितो नारदः शापस्याऽन्तमाह नदीं प्रति ॥ ३२ ॥
गङ्गया श्रीब्रह्ममय्या भविष्यासि यदा सह ।
तदा त्वं शापतो मुक्ता भविष्यसि महानदि ॥ ३३ ॥
अथ पद्मा नारदं तं पप्रच्छ प्रणता सती ।
देवर्षे का हि सा गङ्गा कथं भूमिं प्रयास्यति ॥ ३४ ॥
कथं ब्रह्ममयी सा च वद मे कृपयाऽखिलम् ।
इति पद्मावचः श्रुत्वा हृष्टो देवर्षिसत्तमः ॥ ३५ ॥
प्राह गङ्गासुचरितं पद्मां प्रति महानृषिः ।
शृणु पद्मे कथां पुण्यां महापातकनाशिनीम् ॥ ३६ ॥
परस्य जगतः कर्त्तुर्ब्रह्मणः शिवरूपिणः ।
शक्तिः सर्वमयी तस्य सारभूता हृदात्मिका ॥ ३७ ॥

महाकाशमयी यस्यां प्राप्तान्यणुविधिं नदि ।
असंख्यातान्यण्डकानि यत्राऽण्डे भुवनावलिः ॥ ३८ ॥
एवं स्थिता महाशक्तिर्ब्रह्माद्यास्तुष्टुवुश्च ताम् ।
महता तपसा युक्ता प्रसन्ना साऽभवत्तदा ॥ ३९ ॥
वरं वृणीध्वं भो देवा इत्यभून्नाभसं वचः ।
तच्छ्रुत्वा प्राऽवदन् देवा ब्रह्मविष्णुपुरःसराः ॥ ४० ॥
देवी त्वं वरदात्री चेन्मूढजीवा अपि द्रुतम् ।
अनायासेन परमां प्राप्नुयुर्येन सद्गतिम् ॥ ४१ ॥
तथा व्यक्तस्वरूपा त्वं भूत्वा तिष्ठेह सर्वतः ।
निशम्यैवं विधिमुखवचनं प्रत्यभाषत ॥ ४२ ॥
देवाः शृणुध्वं वः प्रीत्यै व्यक्तरूपा भवाम्यहम् ।
यदा तु बाष्कलिर्नाम दानवेशो महाबलः ॥ ४३ ॥
त्रिलोकीं स्ववशे कुर्याज्जित्वेन्द्रादीन् स्वतेजसा ।
तदैष विष्णुरिन्द्रार्थं वटुरूपेण दानवम् ॥ ४४ ॥
भिक्षित्वा त्रिपदं स्थानं त्रिलोकीमाहरिष्यति ।
विष्णोरुत्क्षिप्तपादेन भिन्नोर्ध्वाण्डकटाहतः ॥ ४५ ॥
तोयरूपाऽमृतमयी निर्गच्छामि महानदी ।
तां मां दृष्ट्वा च स्पृष्ट्वा च पीत्वा वा सद्गतिं व्रजेत् ॥४६॥
गङ्गा त्रिपथगा चेति तदा सिद्धा वदन्ति माम् ।
इत्युक्त्वा विररामाऽथ नभोरूपा महेश्वरी ॥ ४७ ॥
एवं सा विधिमुख्यानां वरं दत्त्वा महानदी ।
भविष्यति हि सा गङ्गा तत्सङ्गात्ते शुभोदयः ॥ ४८ ॥
श्रुत्वैवं नारदवचः पुनः पप्रच्छ सा नदी ।
देवर्षे तद्वद मम कथं विष्णुपदक्षतात् ॥ ४९ ॥
गङ्गाऽवतीर्णा तत्पश्चाद्भुवश्च कथमेष्यति ।
श्रोतुमिच्छामि तत् सर्वं भविष्यमपि सुस्फुटम् ॥ ५० ॥

पश्चयैवं पुनः पृष्टः प्राह देवर्षिसत्तमः।
शृणु पद्मे कथां पुण्यां गङ्गावतरणाऽभिधाम् ॥ ५१ ॥
इतस्त्रयोविंशतिमे पर्याये दानवेश्वरः।
त्रेतायां वाष्कलिर्नाम विष्णुभक्तोऽतिधर्मवित् ॥ ५२ ॥
तपसा तोषयित्वा तं ब्रह्माणं कमलासनम्।
वरं लब्ध्वा स विपुलं युधि निर्जित्य वासवम् ॥ ५३ ॥
भविष्यति त्रिलोकेशः सदा धर्मपरायणः।
अथेन्द्राद्यैः सुरैर्विष्णुः प्रार्थितो माययाऽभवत् ॥ ५४ ॥
विप्रभक्तं वाष्कलिं तं वञ्चितुं विप्रवेषतः।
वटुः खर्वतरोऽगच्छाद्भिक्षितुं दानवाधिपम् ॥ ५५ ॥
योगदृष्ट्या भार्गवस्तं गुरुः प्राह विदन् हरिम्।
दानवेश न विप्रोऽयं विष्णुरिन्द्रार्थमागतः ॥ ५६ ॥
वञ्चितुं त्वां विजानीहि नास्मै त्वं दातुमर्हसि।
अथ दृष्ट्वा समायान्तं विष्णुं वटुकरूपिणम् ॥ ५७ ॥
मुमोदाऽतितरां साक्षाद्विष्णुदर्शनतो हि सः।
उत्थाय शीघ्रं प्रणतः स्वाऽऽसने सन्निवेशयत् ॥ ५८ ॥
प्रक्षाल्य पादौ तोयेन तीर्थं मूर्ध्नि विधारयत्।
सम्पूज्य भक्तिभावेन कृताञ्जलिरभाषत ॥ ५९ ॥
भगवन् किं प्रियं तेऽद्य यदस्मत्तोऽभिवाञ्छितम्।
तत्प्रतीच्छ मया दत्तं जानीह्येवाऽविशङ्कितम् ॥ ६० ॥
वटुराह दानवेशं राजंस्त्वं ब्रह्मचारिणे।
मह्यं भूमिं प्रयच्छाऽऽशु पादत्रितयसम्मिताम् ॥ ६१ ॥
तच्छ्रुत्वा वाष्कलिः प्राह भगवन् गुरुणाऽह्यहम्।
प्रतिषिद्धोऽपि ते दद्यां कथं सर्वान्तरात्मने ॥ ६२ ॥
ईश्वराय भगवते न दद्यां याचितं किल।
तां क्षमस्व गुरोर्वाक्यविहतिं पुरुषोत्तम ॥ ६३ ॥

इत्युक्त्वा तत्करतले पानीयं समवाऽसृजत् ।
प्रतिगृह्यतामिति वदन् बाष्कलिर्दृढभावनः ॥ ६४ ॥
विष्णुस्तदेश्वरीशक्तिमाविष्टो ऽवर्धत क्षणात् ।
सव्येन भुवमाक्रम्य पादमन्यमथोत्क्षिपत् ॥ ६५ ॥
पादाङ्गुष्ठनखोद्भिन्नब्रह्माण्डोर्ध्वतलात् स्रुता ।
ब्रह्मद्रवा तदा गङ्गा सुधाविशदभासुरा ॥ ६६ ॥
तृतीयपादं निक्षेप्तुं स्थलं याचत दानवम् ।
एकेन भूमिः सङ्क्राता द्वितीयेन नभस्तलम् ॥ ६७ ॥
तृतीयपादविन्यासस्थानं वद नृपोत्तम ।
श्रुत्वा विष्णुवचः प्राह बाष्कलिर्दानवेश्वरः ॥ ६८ ॥
भगवन्न स्ति मूर्धा मे स्थानं तत्ते दिशाम्यहम् ।
इति श्रुत्वा पदं मूर्ध्नि न्यस्यत भूतलेन यत् ॥ ६९ ॥
प्रसन्नो दानवेशाय सायुज्यं दिशदुत्तमम् ।
भिन्नोर्ध्वाण्डमहाभित्तेर्निर्गतां ब्रह्मरूपिणीम् ॥ ७० ॥
गङ्गां कमण्डलौ ब्रह्मा ग्रहिष्यति महौजसा ।
अथ कालेन महता देवेन्द्रः सुमहत्तपः ॥ ७१ ॥
तप्त्वा प्रसाद्य ब्रह्माणं समानेष्यति वै दिवम् ।
ततः कालान्तरे सूर्यवंशे राजा भविष्यति ॥ ७२ ॥
सगराख्यो वाजिमेधसहस्रं स विधास्यति ।
हरिष्यति च तत्राऽश्वमिन्द्रः कपिलसन्निधिम् ॥ ७३ ॥
षष्टिसहस्रसंख्याताः सगरस्य तु ये सुताः ।
अश्वं मृगयमाणास्ते भेत्स्यन्ति त्वरितो भुवम् ॥ ७४ ॥
तत्र तेजः समासाद्य कापिलं भस्मतां गताः ।
सागरा अथ तत्पौत्रो भगीरथ इतीरितः ॥ ७५ ॥
भविष्यति स धर्मात्मा गतिं पैतामहीमथ ।
विचिन्त्य तप आतिष्ठदत्युग्रञ्च महत्तरम् ॥ ७६ ॥

तप्त्वा स्वर्गाद्द्रुतं गङ्गां पतन्तीं शिवमूर्धनि ।
पुनर्महत्तपस्तप्त्वा ततो भूमिं भगीरथः ॥ ७७ ॥
अवतारयिष्यति वै रथं साऽनुगमिष्यति ।
भगीरथो रथे स्थित्वा त्वन्मार्गेणाऽनुयास्यति ॥ ७८ ॥
तदा त्वं शापतो मुक्ता भविष्यसि सरिद्वरे ।
एवं रमा सपत्नीजं दुःखं प्राप्ता महत्तरम् ॥ ७९ ॥
पुनः कालान्तरे राम रावणं राक्षसाधिपम् ।
रावणं सर्वलोकानां हन्तुं विष्णुरभून्नरः ॥ ८० ॥
सूर्यवंशं समासाद्य चतुर्धा स्वं विभज्य तु ।
तस्य पत्नी महालक्ष्मीर्जानकी भूसमुद्भवा ॥ ८१ ॥
भूत्वा भर्तृवियोगं सा प्राप्ता गौर्यास्तु शापतः ।
गौरी चाऽपि पुरा राम महादेवेन कारणात् ॥ ८२ ॥
वियुक्ताऽभूद्दक्षकन्या तद्यज्ञे शिवनिन्दनम् ।
श्रुत्वा भस्मीभवत्क्रोधाल्लक्ष्मीशापेन भार्गव ॥ ८३ ॥
इति श्रुत्वा दत्तगुरोर्वाक्यं पश्चात् भृगूद्वहः ।
पुनः पप्रच्छ स गुरुं विस्तरेण कथां हि ताम् ॥ ८४ ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे द्वाविंशतितमोऽध्यायः॥१८९५॥

---

# अथ त्रयोविंशोऽध्यायः ।



श्रीगुरो श्रोतुमिच्छामि विस्तरेण कथामिमाम् ।
गौरी केन निमित्तेन वियुक्ता शङ्करेण वै ॥ १ ॥
कुतो दक्षात् समुत्पन्ना निन्दा केन कृता तदा ।
कुतो देवाऽधिदेवस्य निन्दा वै समजायत ॥ २ ॥
एतन्मे भगवन् शंस कृपया तव सेवके ।
सुपृष्टो भार्गवेणैवं प्राह प्रवदतां वरः ॥ ३ ॥
राम भार्गव वक्ष्यामि गौर्याः शापकथां शृणु ।
पुरा भस्मासुरो लोके तपस्तप्त्वा महत्तरम् ॥ ४ ॥
शिवं सुतोषयामास वरं प्राप ततोऽद्भुतम् ।
करं न्यसेद्यस्य मूर्ध्नि स यायाद्भस्मतां क्षणात् ॥ ५ ॥
एवं लब्ध्वा वरं दैत्यः मत्येतुं शिवमूर्धनि ।
निक्षेप्तुं करमारब्धस्ततो देवः पलायितः ॥ ६ ॥
दैत्येनाऽनुद्रुतो भूयो भीत्याऽन्तर्द्धिं समाययौ ।
अथ गौरी महादेवं मृगयित्वा तु सर्वतः ॥ ७ ॥
वियुक्ता देवदेवेन दुःखेनाऽत्यन्तभूयसा ।
देहं विलोपितवती ततो विष्णुरुपायतः ॥ ८ ॥
जघान तं महादैत्यमथ कालान्तरे भुवि ।
दक्षप्रजापतिर्देवीं तपसाऽतोषयच्छिवाम् ॥ ९ ॥
तदा गौरी देहहीना गगनैकस्वरूपिणी ।
तुष्टा तं छन्दयामास वरेण वरदा सती ॥ १० ॥
स वव्रे तनया भूत्वा गृहे मे वस शङ्करि ।
इति दत्त्वा समुत्पन्ना तनयोमाऽभिधानतः ॥ ११ ॥

दाक्षायणी तां शिवाय ददौ दक्षः प्रजापतिः ।
अथाऽऽत्मानं महादेवश्वशुरत्वेन वै गुरुम् ॥ १२ ॥
मानयामास कस्मिंश्चित्काले ब्रह्मा शिवेन वै ।
सङ्गतः कार्यवशतः सहितो विष्णुमुख्यकैः ॥ १३ ॥
तत्राऽऽजग्मुर्बुधगणाः प्रजापतिगणा अपि ।
अपि दक्षः समाजगामाऽथ तं दृष्ट्वा देवतागणाः ॥ १४ ॥
प्रत्युत्थिता ऋषिगणाश्चाऽन्ये ये तत्र संस्थिताः ।
ब्रह्मविष्णुहरेभ्योऽन्ये सर्वे तं प्रत्युपस्थिताः ॥ १५ ॥
अथ दक्षो मन्युयुतो महामानी शिवं प्रति ।
ज्वलन् क्रोधाग्निनैवाऽसौ प्रोवाच परुषं वचः ॥ १६ ॥
एष शम्भुर्मम गुरोः प्रत्युत्थानविवर्जितः ।
मानस्तम्भसमारूढः शिष्यभूतोऽतिमूढधीः ॥ १७ ॥
सच्चारित्रविहीनोऽयं नाऽत्र संस्थातुमर्हति ।
निशम्य दक्षवचनं पद्मभूर्जगदीश्वरः ॥ १८ ॥
मैवमज्ञ इव ब्रूहीत्येवं तं विनिवारयत् ।
दक्षस्तदा प्रभृति वै शिवं सर्वत्र निन्दति ॥ १९ ॥
कदाचिद्दक्ष ईजानः सार्वान् देवानृषीन् मुनीन् ।
निमन्त्रयच्छिवमृते पूर्वविद्वेषहेतुतः ॥ २० ॥
दाक्षायणीमप्यात्मभवां शिवे रोषान्न चाऽऽह्वयत् ।
प्रवृत्ते तु महायज्ञे वैमानिकगणात् सती ॥ २१ ॥
शुश्राव यज्ञं सुश्रेष्ठं पितुः सर्वसमर्हणम् ।
शङ्करं प्रार्थयामास पितृयज्ञदिदृक्षया ॥ २२ ॥
शिवेन प्रतिषिद्धाऽपि दर्शनोत्काण्ठिता सती ।
जगाम यज्ञसदनं दीक्षितो यत्र वै पिता ॥ २३ ॥
अथाऽवलोक्य पितरं प्रणयादब्रवीत्तदा ।
तात किं ते विस्मृताऽहं यज्ञे सर्वसमर्हणे ॥ २४ ॥

इमास्ते तनुजाः सर्वा जामातृसहिताः कुतः ।
निमन्त्रिताः शिवः कस्मान्नाऽऽहूतः सहितो मया ॥ २५ ॥
इत्याकर्ण्य मृडान्योक्तं दक्षो रोषाऽरुणेक्षणः ।
शृणु वत्से न यज्ञेऽस्मिन् शिवः पूजां समर्हति ॥ २६ ॥
इति नाऽऽकारितस्त्वं तु न पूज्या तस्य योगतः ।
निशम्यैवं पितुर्वाक्यं सती प्राहाऽपमानिता ॥ २७ ॥
तात ते चित्तविभ्रंशो महानेषोऽशुभोदयः ।
म्रियमाणस्येव जन्तोर्विपरीताऽर्थदर्शनम् ॥ २८ ॥
शिवः परमकल्याणमयः सर्वसुपूजितः ।
पूज्यते यत्र नो यज्ञे न स यज्ञो भवेत् क्वचित् ॥ २९ ॥
यज्ञस्तेऽयं सुसम्पन्नोऽप्येष नैवेह शोभते ।
विभूषिताऽपि युवतिर्व्यंशुका सुन्दरी यथा ॥ ३० ॥
विद्याहीनो यथा विप्रो भर्तृहीना यथाऽबला ।
शौर्यहीनो यथा राजा कर्णहीनः पुत्रो यथा ॥ ३१ ॥
चन्द्रहीना यथा रात्रिः सूर्यहीनं दिनं यथा ।
तथा क्रतुरयं तात शिवहीनो न राजते ॥ ३२ ॥
श्रुत्वैवं वचनं सत्याः प्राह दक्षोऽतिमर्षितः ।
धिगनार्ये वृथाजल्पे किं न पश्यसि वै पतिम् ॥ ३३ ॥
अशिवं शिवनामानं श्मशानाऽऽवासतत्परम् ।
नृकरोटधरं चर्मवाससं सर्पभूषणम् ॥ ३४ ॥
भूतप्रेताऽनुगं त्वस्थिमालिनं जटिलं नटम् ।
एवंविधः कथं पूज्यः क्रतुषु स्याद्विनिन्दितः ॥ ३५ ॥
गच्छ त्वं तत्र यत्राऽस्ति पतिस्ते ह्यशिवङ्करः ।
इति श्रुत्वा पितुर्वाक्यं सती पतिविनिन्दनम् ॥ ३६ ॥
पिधाय कर्णौ हस्ताभ्यां मन्युना ज्वलिता सती ।
असाम्प्रतं वचस्तेऽद्य देवदेवं विनिन्दसि ॥ ३७ ॥

व्यर्थं तेऽतः क्रतुरयं विहतोऽस्तु पितस्तथा ।
भर्तुर्महेश्वरस्येत्थं निन्दकादेष देहकः ॥ ३८
सम्भूतो धारणाऽनर्हः संश्रुतं पतिनिन्दनम् ।
इत्युक्त्वाऽतिरुषा संवर्त्ताऽग्निधारणमास्थिता ॥ ३९ ॥
क्षणं प्रजज्वाल ततो देहस्तस्या महाग्निना ।
ज्वालया सहितो देहो भस्मशेषीभवत् क्षणात् ॥ ४० ॥
एवं सा भस्मतां प्राप्ता लक्ष्म्याः शापेन भार्गव ।
भर्तृनिन्दाश्रुतिवशात् क्रोधाग्नौ भस्मतां गता ॥ ४१ ॥
इति श्रुत्वाऽथ पप्रच्छ रामो भृगुकुलोद्वहः ।
कथारससमास्वादहर्षनिर्भरिताऽन्तरः ॥ ४२ ॥
भगवन् भवता प्रोक्ता गङ्गा शक्तिस्वरूपिणी ।
का सा शक्तिर्ब्रह्ममयी लोकानुद्धर्तुमिच्छया ॥ ४३ ॥
ब्रह्माद्यैः प्रार्थिता गङ्गारूपिणी समजायत ।
श्रोतुं मे तदतीवेच्छा वद मेऽनुग्रहाद्गुरो ॥ ४४ ॥
इति पृष्टो भार्गवेण दत्तात्रेयः समब्रवीत् ।
शृणु राम शक्तिर्या तथा गङ्गारूपिणी स्मृता ॥ ४५ ॥
सा पुरोक्तैव त्रिपुरा कुमारी च त्रिरूपिका ।
या सम्भूता सैव शक्तिर्गङ्गा भूलोकपावनी ॥ ४६ ॥
यां ब्रह्मप्रमुखाश्चाऽपि पूजयन्त्यतिभक्तितः ।
सा परब्रह्ममहिषी गङ्गा मोक्षात्मरूपिणी ॥ ४७ ॥
या दृष्टा चाऽथ संस्पृष्टा पीताऽपि कणमात्रतः ।
पुनाति सर्वदुष्कृत्यं गङ्गा सर्वोत्तमोत्तमा ॥ ४८
त्रिपुरा च त्रिमार्गस्था त्रिपथेति श्रुता पुनः ।
स्थूला त्रिपथगा जाता स्थूलदृष्ट्यनुकम्पया ॥ ४९ ॥
तस्माद्गङ्गा रसमयी त्रिपुरैव समीरिता ।
एतत्ते सर्वमाख्यातं यत्पृष्टं भार्गव त्वया ॥ ५० ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे त्रयोविंशतितमोऽध्यायः १९४५

# अथ चतुर्विंशोऽध्यायः ।

इति श्रुत्वा जामदग्न्यः कथामृतरसाऽऽप्लुतः ।
पुनर्गुरुपूर्वकथां प्रष्टुं समुपचक्रमे ॥ १ ॥
श्रीगुरो करुणासिन्धो त्वत्प्रोक्तरससेवनात् ।
शोकमोहभयाः सर्वे निःशेषेण लयं गताः ॥ २ ॥
न तृप्यामि मनाक् क्वाऽपि कथासंश्रवणात्तव ।
एवं परास्ते मदने मनुष्येषु महीतले ॥ ३ ॥
देवानां प्रियकृद्यागः किं निमित्तमवर्त्तत ।
कामेनाऽपि कथं देवः शङ्करः खलु निर्जितः ॥ ४ ॥
भस्मीभूतः कथं भूयो जीवितो वद कृत्स्नशः ।
एवं रामेणाऽनुयुक्तो दत्तात्रेयो गुरूत्तमः ॥ ५ ॥
उपामन्त्र्य जामदग्न्यं प्राह प्रवदतां वरः ।
जामदग्न्य महाबुद्धे शृणु प्रश्नान् यथाक्रमात् ॥ ६ ॥
इतिहासः पूर्वतनश्चित्रितोऽयं सुखोदयः ।
एवं विनिर्जिते कामे बन्धान्मुक्तो दिवस्पतिः ॥ ७ ॥
निर्जरोभिः समेतोऽगात्त्रिविष्टपपुरं प्रति ।
उवास तत्र देवेन्द्रः पूर्ववद्देवतादिभिः ॥ ८ ॥
यावद्वीरव्रतो राजा पृथिवीमधिसंस्थितः ।
तावद्देवपतिर्वीरव्रतेन कृतसंख्यकः ॥ ९ ॥
ततः कालान्तरे शक्रः प्रायाद्देवगणैर्वृतः ।
सत्यलोकं तत्र विधिं दण्डवत्प्रणतो बुधैः ॥ १० ॥
तदालोक्य विधिः शक्रं संनतं सह दैवतैः ।
प्रोवाच कृपयाऽऽविष्टः स्निग्धगम्भीरया गिरा ॥ ११ ॥

विबुधेश समुत्तिष्ठ किं ते समभिवाञ्छितम् ।
वद द्रुतं तद्दिशामि येन त्वं सुखमाप्स्यसि ॥ १२ ॥
इति श्रुत्वा विधिवचो विबुधेश्वर उत्थितः ।
बद्ध्वाऽञ्जलिं निगदितुं प्राक्रमद्विबुधैर्वृतः ॥ १३ ॥
पितामह पुराऽस्माभिर्भवता प्रेरितैः किल ।
प्रसादिता महालक्ष्मीस्तया कामो महाबली ॥ १४ ॥
अस्मदर्थस्य संसिद्ध्यै प्रेरितस्तेन वै सह ।
वीरव्रतात् पराभूतो बद्धो देवगणैः सह ॥ १५ ॥
कथञ्चिद्गुरुवाक्येन मुक्तो धर्मं विजानता ।
अथ तत्सखिभावेन कालोऽयमतिवाहितः ॥ १६ ॥
नाऽद्यापि मर्त्या भूलोके यजन्ति विबुधान् क्वचित् ।
इति विज्ञापनार्थाय देवैरत्र समागतः ॥ १७ ॥
अग्रे यथा भवानाह तथा कर्त्रे सुरैः सह ।
इति श्रुत्वा शक्रवचः स्रष्टा ध्यात्वा क्षणं ततः ॥ १८ ॥
प्राह ब्रह्मा शतमखं देवेश श्रृण्वितीरयन् ।
न सम्प्रति मनुष्या वो यष्टुमर्हन्ति सर्वथा ॥ १९ ॥
निष्कामत्वात्तथाप्येकमुपायं शृणु वच्मि ते ।
पर्जन्यानामधिपतिं त्वां करोम्यथ देवप ॥ २० ॥
यस्त्वां यजेत भूलोके तत्र त्वमभिवर्षय ।
अद्य यावत्स्वतन्त्रास्ते मेघाः पर्जन्यकारकाः ॥ २१ ॥
मदाज्ञयैव कालेषु वर्षन्तः सर्वतो दिशम् ।
ते सर्वे त्वदधीनाः स्युरद्यप्रभृति देवप ॥ २२ ॥
एवं पर्जन्यराजाऽभूदिन्द्रस्तेन च हेतुना ।
जनाः पर्जन्यकामा ये तेषां याज्य अभूद्वृषा ॥ २३ ॥
एवं देवान् यजन्ति स्म क्वचिन्मर्त्याः कृषीवलाः ।
एवं तदा भूमिलोके यागः प्रावर्तताऽग्रतः ॥ २४ ॥

कामो यथा महादेवमजयत्तद्वदामि ते ।
एवं लक्ष्मीभवान्योश्च समाधाने तदुत्तरम् ॥ २५ ॥
कामो मातरमाचष्ट कृताञ्जलिपुटः स्थितः ।
मातर्मे ब्रूहि येनाऽहं शिवं जेताऽस्मि संयुगे ॥ २६ ॥
तमुपायं न चेदेहं विन्यसे तव सम्मुखे ।
मानिनां मानहानिर्वै मरणादतिरिच्यते ॥ २७ ॥
अद्य यावद्विजानन्ति लोका युद्धेऽमृतं हि माम् ।
प्रायस्तथैवाऽस्तु तच्च न मे जीवनमुत्तमम् ॥ २८ ॥
निशम्यैवं कामवचो ध्यात्वा लक्ष्मीः क्षणं ततः ।
त्रिपुरायै नमस्कृत्य कामं प्रेक्ष्याऽब्रवीत्तदा ॥ २९ ॥
काम तेऽहं ब्रवीम्यद्य रहस्यं सर्वतोऽधिकम् ।
येन सिद्धिस्तव भवेद्युद्धे सर्वांश्च जेष्यसि ॥ ३० ॥
नैतत्त्वया क्वचिद्वाच्यं प्रमादेनाऽन्यथाऽपि वा ।
शिवादीनामपि ननु माहात्म्यं यद्वशादभूत् ॥ ३१ ॥
तस्याः श्रीत्रिपुरादेव्याः शीघ्रप्रीतिकरं महत् ।
यन्मयाऽऽसादितं पूर्वं कामेश्वर्याः सुसेवनात् ॥ ३२ ॥
तत्ते ब्रवीमि श्रीदेव्या नामाऽष्टशतमुत्तमम् ।
संस्पृश्य विरजां शीघ्रमेहि मन्मथ मा चिरम् ॥ ३३ ॥
इति श्रुत्वा रमावाक्यं हर्षसंफुल्ललोचनः ।
संस्पृश्य विरजातोयं शुचिर्नत्वा ह्युपस्थितः ॥ ३४ ॥
तावल्लक्ष्मीं महादेवीं क्रमेणाऽभ्यर्च्य भक्तितः ।
संस्थापिते रत्नपीठे कामद्रव्योपचारकैः ॥ ३५ ॥
अथ कामं समाहूय दापयित्वाऽञ्जलिं क्रमात् ।
त्रिपुरायाः प्रसादश्च संयोज्य तदनन्तरम् ॥ ३६ ॥
नाम्नामष्टोत्तरशतं प्रोवाचाऽस्मै रमा तदा ।
श्रीदेव्याः प्राह यत्र स्थूलं वपुस्तदपि सुन्दरम् ॥ ३७ ॥

एवं सम्प्राप्य कामोऽपि मातरं दण्डवन्नतः ।
आशीर्भिर्योजितो मात्रा प्रबद्धकरसम्पुटः ॥ ३८ ॥
मातरं प्राह मदनः स्वं जानन् कृतकृत्यकम् ।
मातर्ममाऽऽज्ञां वितर व्रजेऽहं तां प्रसादितुम् ॥ ३९ ॥
त्रिपुरां परमेशानीं त्रिमूर्त्तीनाञ्च संश्रयाम् ।
इति प्रार्थ्य तयाऽऽज्ञप्तो नमस्कृत्य च मातरम् ॥ ४० ॥
ध्यायन् श्रीत्रिपुरापादपद्मं हृदि सुभक्तितः ।
जगाम मन्दरगिरिकन्दरे सुरमन्दिरे ॥ ४१ ॥
तत्र निर्मलसुस्वादुसलिलाऽऽस्रावकूलके ।
कदम्बतरुमूले वै निषसाद शुभे स्थले ॥ ४२ ॥
स्नात्वा तत्र समासीनो ध्यायन्मूर्तिं हृदम्बुजे ।
रमाप्रोक्तक्रमेणैव मानसैरुपचारकैः ॥ ४३ ॥
अभ्यर्च्य त्रिपुरामम्बां महाविभवविस्तरैः ।
अष्टोतरशतं नाम्नां जजाप परभक्तितः ॥ ४४ ॥
नामाऽष्टशतकाऽऽवृत्तिं प्रत्यहं तस्य कुर्वतः ।
ध्यानतत्परचित्तस्य प्रसन्ना श्रीः पराम्बिका ॥ ४५ ॥
अथ स्वप्ने मन्मथस्य रमारूपेण सा परा ।
आगत्य प्राह मदनं मधुनिष्यन्दया गिरा ॥ ४६ ॥
वत्स काम किं बहुधा नाममात्रप्रपाठतः ।
अनवाप्यैव विद्यां मे कथं ते स्यात् समीहितम् ॥ ४७ ॥
इति श्रुत्वा प्रणम्याऽथ कामः प्राह कृताञ्जलिः ।
मातर्विद्यां न जानामि भवत्या न पुरोदिता ॥ ४८ ॥
कृपया तां ब्रूहि मह्यं प्रपन्नाय कृपामयि ।
अथ सा परमेशानी प्राह कामं दयाऽन्विता ॥ ४९ ॥
वत्स नाऽद्यापि विदिता सा त्वयाऽन्धइवोडुपम् ।
नामस्तोत्रे सुनिहिता गुप्ता पञ्चदशात्मिका ॥ ५० ॥

नवधा संस्थिता तत्र द्विषद्नामसमाश्रया ।
आद्यमाद्येव सौम्यके पञ्चमं वेद दिङ्नगौ ॥ ५१ ॥
षष्ठं रसाङ्कयोरन्त्यमश्वे सूर्ये च संस्थितम् ।
द्वितीययुक्तमेतावत्तृतीयञ्च चतुर्थकम् ॥ ५२ ॥
द्वितीये तत्परे स्थाने भूतरुद्रतिथौ स्थितम् ।
षष्ठसप्तमतुर्याणां योगमष्टमसंयुतम् ॥ ५३ ॥
एतन्महाकारणं वै त्रिपुरारूपमद्भुतम् ।
इत्युक्त्वाऽन्तर्हिता देवी क्षणेन परमेश्वरी ॥ ५४ ॥
अथ कामो नेत्रयुगमुन्मील्य समचेष्टत ।
न तां तत्र बहिर्दृष्ट्वा विमनाः समपद्यत ॥ ५५ ॥
नूनं मया स्वप्न एष दृष्टः परमशोभनः ।
न मे निद्रा समायाति ध्यायतो जगदम्बिकाम् ॥ ५६ ॥
एष मे याति षष्ठो वै मासः साधयतोऽन्वहम् ।
न कदाचिदगान्निद्रा रात्रावपि समाहितः ॥ ५७ ॥
इति सञ्चिन्त्य भूयोऽपि स्वप्नदृष्टं विभावयत् ।
विभाव्यमानस्य तदा नाम स्तोत्रादुपस्थिता ॥ ५८ ॥
विद्या पञ्चदशार्णा या तस्यां संशयितोऽभवत् ।
स्वप्नत्वेन भ्रमं मत्वा तदा प्राहाऽशरीरिणी ॥ ५९ ॥
काम नाऽत्र संशयितुमर्हसीति स्फुटं वचः ।
नाभसं काम आकर्ण्य विमृश्याऽथ पुनः पुनः ॥ ६० ॥
नाऽन्तं समाययौ तेन सस्मार जननीं रमाम् ।
अथ कामस्मृता लक्ष्मीः सन्निधानं समेत्य सा ॥ ६१ ॥
काम किं ते संस्मृताऽस्मीत्येवमाह पुरःस्थिता ।
दृष्ट्वा मातां रमां कामः प्रणम्याऽऽरचिताञ्जलिः ॥ ६२ ॥
स्वप्नवृत्तं नभोवाणीं प्राह मातुर्यथातथम् ।
श्रुत्वाऽथवा चिरं ध्यात्वा प्रसन्नवदनाऽब्रवीत् ॥ ६३ ॥

वत्स काम धन्यतमस्त्वं ते सिद्धमभीप्सितम् ।
त्रिपुरैव हि ते स्वप्ने प्रसन्ना प्राह सा परा ॥ ६४ ॥
सन्देहं जहि तत्र त्वं यत्तयोक्तं हि तत्तथा ।
भूयस्तां साधयेत्युक्त्वा साऽन्तर्धानं ययौ क्षणात् ॥ ६५ ॥
अथ कामश्च तां विद्यां जजापैकाग्रमानसः ।
दिव्यं वर्षत्रयं पश्चादाविर्भूता महेश्वरी ॥ ६६ ॥
अपश्यन्मन्मथं तत्र संहृताऽक्षगणं दृढम् ।
निश्चेष्टं निर्विकारश्च समानप्राणनिर्गमम् ॥ ६७ ॥
तेजोराशिं समालोक्य कृपयाऽऽसाद्य वै तनुम् ।
रमोपदिष्टध्यानाऽनुरूपमूर्तिसमुज्ज्वला ॥ ६८ ॥
प्राह वत्स काम किं ते वाञ्छितं तत्प्रतीच्छ मे ।
इति वाक्यं समाकर्ण्य चक्षुरुन्मील्य चाऽग्रतः ॥ ६९ ॥
ददर्श देवीं त्रिपुरां ध्यातरूपां मनोहराम् ।
महातेजोमयीञ्चाऽथ हर्षाब्धौ स न्यमज्जत ॥ ७० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये कामोपाख्याने
चतुर्विंशतितमोऽध्यायः ॥ २०१५ ॥

# अथ पञ्चविंशोऽध्यायः ।

दृष्ट्वैवं त्रिपुरां देवीं कुरुविन्दसमप्रभाम् ।
मणिप्रवेकप्रत्युप्तचारुकोटीरशोभिताम् ॥ १ ॥
कोटीरप्रान्तविलसद्बालपीयूषदीधितिम् ।
ललन्तिकारत्नकान्तिसिन्दुराद्द्विगुणारुणाम् ॥ २ ॥
विकसन्नीलकुमुदप्रहृन्नेत्रत्रयोज्ज्वलाम् ।
मणिताटङ्कयुगलसङ्क्रान्ताऽपाङ्गसम्पदम् ॥ ३ ॥
नासामुक्ताफलोष्ठाभापाटलीभूतदिक्तटाम् ।
दन्तपङ्क्तिपराभूतकुन्दकोरकडम्बराम् ॥ ४ ॥
ग्रीवाब्जशिखरोद्भूतमुखाम्बुजविचित्रिताम् ।
मृदुबाहुलताप्रान्तकोरकाभाङ्गुलावलिम् ॥ ५ ॥
नखेन्दुकान्तिशबलकङ्कणोर्मिमणीगणाम् ।
मुक्ताहारमृणालोद्यत्कुचकञ्जमुकुड्मलाम् ॥ ६ ॥
नाभीह्रदकूलक्लृप्तसोपानाभवलित्रयाम् ।
हीरहारविसाऽऽसक्तलोमपङ्क्त्यात्मशैवलाम् ॥ ७ ॥
कौसुम्भांशुककूर्पासाऽन्तरसंशोभिभूषणाम् ।
कटिव्योमप्रध्यमासद्रशनामणितारकाम् ॥ ८ ॥
पाशाङ्कुशपुष्पबाणपुण्ड्रचापाऽऽयुधाऽन्विताम् ।
गुल्फाऽऽसक्तांशुकप्रान्तप्रोतरत्नगणोज्ज्वलाम् ॥ ९ ॥
रत्ननूपुरहंसादिपादभूषणभूषिताम् ।
काश्मीरशशिकस्तूरीसमालेपसुवासिताम् ॥ १० ॥
कर्णोत्तंसितकादम्बप्रसूनाऽऽमोदमिश्रिताम् ।
विकसत्पद्मवकुलमालतीहारधारिणीम् ॥ ११ ॥

रमावाणीवीक्ष्यमानबालव्यजनशोभिनीम् ।
आनन्दसान्द्राऽन्तराऽङ्गो हर्षाऽश्रुभरितेक्षणः ॥ १२ ॥
रोमाञ्चपीवरतनुर्दण्डवत्प्रणतो भुवि ।
आनन्दसिन्धुनिमग्नो नेक्षितुं न च भाषितुम् ॥ १३ ॥
उत्थातुं वा समर्थोऽभूत्तदा वीक्ष्य पराम्बिकाम् ।
एवंविधं मन्मथं तं दृष्ट्वा श्रीत्रिपुराऽम्बिकाम् ॥ १४ ॥
उत्तिष्ठ काम सम्पश्य प्राप्तां मां तव भावतः ।
प्रसन्नां वरदां ब्रूहि वाञ्छितं किं ददामि ते ॥ १५ ॥
श्रुत्वा तत्र त्रिपुरावाक्यमुत्थाय प्राञ्जलिः स्थितः ।
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे ॥ १६ ॥
कलये करुणापाङ्गीं कारणमूर्त्यैककारणीभूताम् ।
कामेश्वरीं न हीतरदेवं कञ्चित् कदाचिदभियाचे ॥ १७ ॥
अभियाचे परमां तामङ्कुशपाशप्रसूनचापकराम् ।
अलमलमनुत्तराम्बाचरणादन्येन देवताऽऽख्येन ॥ १८ ॥
गृह्यन्ते त्रिपुरायाः करुणकल्लोलवासितकटाक्षाः ।
सर्वोपरि लोकेऽस्मिन् पश्याम्यम्बामिहैकरूपां ताम् ॥ १९ ॥
ईप्सितमनीप्सितं वा ममाऽस्तु सततं त्रिमूर्तिजनयित्र्याः ।
ईहाशून्याया नो करोमि शरणं ततोऽन्यदेवगणम् ॥ २० ॥
ललतु हृदि सैव देवी मम नित्यं या महेशसंसेव्या ।
ललिता राज्ञी मान्या कदापि सेव्याऽस्तु देवता माऽन्या॥२१॥
हर्षयतु मामजस्रं हरिहरमुख्यैः समाश्रिताऽङ्घ्रियुगा ।
या च हयारूढाख्या सेनानेत्री नमामि तां ब्रूयाम् ॥२२॥
रक्षतु मामिक्षुधनुःपुष्पशराढ्यकृपेक्षया सततम् ।
कामेश्वराऽभिरामा नाऽन्या ममेश्वरी भवति ॥ २३ ॥
अङ्कुरयतु हृदि भक्तिं निजपदयुगले सदा महेशानी ।
अम्बा कामाक्षी नैवाऽन्यस्यां ममाऽस्तु तल्लेशः ॥ २४ ॥

सम्मनुते मम हृदयं वस्तुं तस्याः पदाब्जयोः सततम् ।
सर्वज्ञाया देव्या घटयतु तन्मे महेश्वरी मनसः ॥ २५ ॥
इति संस्तुत्य मदनो देवीं तां त्रिपुराम्बिकाम् ।
ननाम दण्डवद्भूयो भक्तिनिर्भरमानसः ॥ २६ ॥
अथ सा त्रिपुरेशानी प्राह मञ्जुलया गिरा ।
वत्सोत्तिष्ठ प्रसन्नाऽस्मि वरं ब्रूह्यभिवाञ्छितम् ॥ २७ ॥
ददामि दुर्लभमपि नाऽलभ्यं तव विद्यते ।
श्रुत्वैवं लोकजननीवाक्यमुत्थाय मन्मथः ॥ २८ ॥
श्रीदेवीदर्शनादेव नष्टाऽविद्यातमोगणः ।
उपलभ्य स्वात्मशक्तिमयीं त्रिपुरसुन्दरीम् ॥ २९ ॥
आप्तकामः प्रसन्नाऽऽत्मा प्राह देवीं कृताञ्जलिः ।
त्रिपुराऽम्ब त्वत्पदाब्जदर्शनाऽमृतसेवनात् ॥ ३० ॥
शान्ततृष्णोऽस्मि किं याचे नाऽलब्धमिह किञ्चन ।
पीताऽमृतस्य क्षारोदपानवद्वरयाचनम् ॥ ३१ ॥
पश्यतस्त्वां मम भवेदुपहासाय केवलम् ।
मातर्यदाज्ञापयसि तन्मूर्ध्नाऽभिवहाम्यहम् ॥ ३२ ॥
इति श्रुत्वा परा प्रोचे दयमाना स्मिताऽऽनना ।
वत्स काम न ते किञ्चित् प्राप्तव्यमवशिष्यते ॥ ३३ ॥
विज्ञातमत्स्वरूपस्य ब्रह्मत्वमपि वै तृणम् ।
तथापि साभिप्रायेण यतस्त्वं मामुपस्थितः ॥ ३४ ॥
न तन्मोघं भवेज्जातु न कृतं हीयते यतः ।
तवाऽजेयो न भूम्यां वा पाताले दिवि वा भवेत् ॥ ३५ ॥
गृहाण चापं बाणांश्चेत्युक्त्वा सा जगदम्बिका ।
स्वीयाच्चापाच्छरेभ्यश्च चापं बाणांश्च तत्समान् ॥ ३६ ॥
ददौ कामाय भूयस्तं प्राह तुष्टा महेश्वरी ।
सौभाग्यमुत्तमं लोके सर्वतोऽस्तु रमात्मज ॥ ३७ ॥

त्वया दृष्ट्वा जनाः सर्वे धैर्यमभ्युत्सृजन्तु वै ।
लोकेषु सुभगा ये स्युः सर्वसौभाग्यसम्पदः ॥ ३८ ॥
दृष्टान्तभूतस्त्वं भूया मद्भक्तेष्वग्रगस्तथा ।
स्वप्ने मया समादिष्टा या विद्या साऽपि मन्मथ ॥ ३९ ॥
त्वन्नाम्नैवाऽस्तु विख्याता सर्वविद्योत्तमोत्तमा ।
यतस्त्वमाद्यः सर्वेषामस्या भूत उपासकः ॥ ४० ॥
यत्तुभ्यं रमया प्रोक्तं नाम्नामष्टोत्तरं शतम् ।
यच्च त्वया संस्तुताऽहं श्लोकैर्नवभिरुत्तमैः ॥ ४१ ॥
विद्यावर्णनामयुतैर्भक्त्युद्गारसमन्वितैः ।
तदेतत् स्तोत्रयुगलं विद्या साऽपि च मन्मथ ॥ ४२ ॥
तव सौभाग्यजननात् सौभाग्यप्रदमस्तु वै ।
सौभाग्यविद्या सा ख्याता सौभाग्याऽष्टोत्तरश्च तत् ॥४३॥
सौभाग्यनवरत्नाऽऽख्यं स्तोत्रं स्याद्भुवि विश्रुतम् ।
एतत् स्तोत्रं प्रपठतां प्रीता शीघ्रं भवाम्यहम् ॥ ४४ ॥
विद्यार्थिनां भवेद्विद्या धनं स्याच्च धनार्थिनाम् ।
पुत्रार्थिनां पुत्रलाभः पत्नी भार्यार्थिनां नृणाम् ॥ ४५ ॥
एतत्स्तोत्रं पठद्भिस्तु यद्यत् स्याच्चिन्तितं भुवि ।
तत्सर्वं प्राप्यते सत्यं न तेषां हीयते क्वचित् ॥ ४६ ॥
एतत्स्तोत्रं सर्वपूर्तिकरं प्रपठतां नृणाम् ।
प्रसन्नाऽहं शीघ्रतरं भवामि शृणु मन्मथ ॥ ४७ ॥
इत्युक्त्वा त्रिपुरादेवी नामाऽष्टशतकस्य च ।
विद्यायाश्चाऽपि माहात्म्यं तत्राऽन्तर्धानमागता ॥ ४८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे कामोपाख्याने पञ्चविंशतितमोऽध्यायः ॥ २०६३ ॥

---

# अथ षड्विंशोऽध्यायः ।

निशम्यैतज्जामदग्न्यो माहात्म्यं सर्वतोऽधिकम् ।
स्तोत्रस्य भूयः पप्रच्छ दत्तात्रेयं गुरूत्तमम् ॥ १ ॥
भगवन् त्वन्मुखाम्भोजनिर्गमद्वाक्सुधारसम् ।
पिबतः श्रोत्रमुखतो वर्धते ऽनुक्षणं तृषा ॥ २ ॥
अष्टोत्तरशतं नाम्नां श्रीदेव्या यत्प्रसादतः ।
कामः सम्प्राप्तवान् लोके सौभाग्यं सर्वमोहनम् ॥ ३ ॥
सौभाग्यविद्यावर्णानामुद्धारो यत्र संस्थितः ।
तत्समाचक्ष्व भगवन् कृपया मयि सेवके ॥ ४ ॥
निशम्यैवं भार्गवोक्तिं दत्तात्रेयो दयानिधिः ।
प्रोवाच भार्गवं रामं मधुराऽक्षरपूर्वकम् ॥ ५ ॥
शृणु भार्गव यत् पृष्टं नाम्नामष्टोत्तरं शतम् ।
श्रीविद्यावर्णरत्नानां निधानमिव संस्थितम् ॥ ६ ॥
श्रीदेव्या बहुधा सन्ति नामानि शृणु भार्गव ।
सहस्रशतसंख्यानि पुराणेष्वागमेषु च ॥ ७ ॥
तेषु सारतमं ह्येतत्सौभाग्याऽष्टोत्तराऽऽत्मकम् ।
यदुवाच शिवः पूर्वं भवान्यै बहुधाऽर्थितः ॥ ८ ॥
सौभाग्याऽष्टोत्तरशतनामस्तोत्रस्य भार्गव ।
ऋषिरुक्तः शिवश्छन्दोऽनुष्टुप् श्रीललिताऽम्बिका ॥ ९ ॥
देवता विन्यसेत्त्कूटत्रयेणाऽऽवर्त्य सर्वतः ।
ध्यात्वा सम्पूज्य मनसा स्तोत्रमेतदुदीरयेत् ॥ १० ॥
कामेश्वरी कामशक्तिः कामसौभाग्यदायिनी ।
कामरूपा कामकला कामिनी कमलाऽऽसना ॥ ॥ ११ ॥

कमला कल्पनाहीना कमनीयकलावती ।
कमला(?) भारतीसेव्या कल्पिताऽशेषसंसृतिः ॥ १२ ॥
अनुत्तराऽनघाऽनन्ताऽद्भुतरूपाऽनलोद्भवा ।
अतिलोकचरित्राऽतिसुन्दर्यतिशुभप्रदा ॥ १३ ॥
अघहन्त्र्यतिविस्ताराऽर्चनतुष्टाऽमितप्रभा ।
एकरूपैकवीरैकनाथैकान्ताऽर्चनप्रिया ॥ १४ ॥
एकैकभावतुष्टैकरसैकान्तजनप्रिया ।
एधमानप्रभावैधद्भक्तपातकनाशिनी ॥ १५ ॥
एलामोदमुखैनोऽद्रिशक्रायुधसमस्थितिः ।
ईहाशून्येप्सितेशादिसेव्येशानवराङ्गना ॥ १६ ॥
ईश्वराऽऽज्ञापिकेकारभाव्येप्सितफलप्रदा ।
ईशानेतिहरेक्षेपदरुणाक्षीश्वरेश्वरी ॥ १७ ॥
ललिता ललनारूपा लयहीना लसत्तनुः ।
लयसर्वा लयक्षोणिर्लयकर्णी लयात्मिका ॥ १८ ॥
लघिमा लघुमध्याऽऽढ्या ललमाना लघुद्रुता ।
हयाऽऽरूढा हताऽमित्रा हरकान्ता हरिस्तुता ॥ १९ ॥
हयग्रीवेष्टदा हालाप्रिया हर्षसमुद्धता ।
हर्षणा हल्लकाभाङ्गी हस्त्यन्तैश्वर्यदायिनी ॥ २० ॥
हलहस्ताऽर्चितपदा हविर्दानप्रसादिनी ।
रामरामाऽर्चिता राज्ञी रम्या रवमयी रतिः ॥ २१ ॥
रक्षिणीरमणीराका रमणीमण्डलप्रिया ।
रक्षिताऽखिललोकेशा रक्षोगणनिषूदिनी ॥ २२ ॥
अम्बान्तकारिण्यम्भोजप्रियाऽन्तकभयङ्करी ।
अम्बुरूपाऽम्बुजकराऽम्बुजजातवरप्रदा ॥ २३ ॥
अन्तःपूजाप्रियाऽन्तःस्वरूपिण्यन्तर्वचोमयी ।
अन्तकाऽरातिवामाङ्कस्थिताऽन्तःसुखरूपिणी ॥ २४ ॥

सर्वज्ञा सर्वगा सारा समा समसुखा सती ।
सन्ततिः सन्तता सोमा सर्वा साङ्ख्या सनातनी ॥२५॥
एतत्ते कथितं राम नाम्नामष्टोत्तरं शतम् ।
अतिगोप्यमिदं नाम्नः सर्वतः सारमुद्धृतम् ॥ २६ ॥
एतस्य सदृशं स्तोत्रं त्रिषु लोकेषु दुर्लभम् ।
अप्रकाश्यमभक्तानां पुरतो देवताद्विषाम् ॥ २७ ॥
एतत् सदाशिवो नित्यं पठन्त्यन्ये हरादयः ।
एतत्प्रभावात्कन्दर्पस्त्रैलोक्यं जयति क्षणात् ॥ २८ ॥
सौभाग्याऽष्टोत्तरशतनामस्तोत्रं मनोहरम् ।
यस्त्रिसन्ध्यं पठेन्नित्यं न तस्य भुवि दुर्लभम् ॥ २९ ॥
श्रीविद्योपासनवतामेतदावश्यकं मतम् ।
सकृदेतत्प्रपठतां नाऽन्यत्कर्म विलुप्यते ॥ ३० ॥
अपठित्वा स्तोत्रमिदं नित्यं नैमित्तिकं कृतम् ।
व्यर्थीभवति नग्नेन कृतं कर्म यथा तथा ॥ ३१ ॥
सहस्रनामपाठादावशक्तस्त्वेतदीरयेत् ।
सहस्रनामपाठस्य फलं शतगुणं भवेत् ॥ ३२ ॥
सहस्रधा पठित्वा तु वीक्षणान्नाशयेद्रिपून् ।
करवीररक्तपुष्पैर्हुत्वा लोकान् वशं नयेत् ॥ ३३ ॥
स्तम्भयेत् श्वेतकुसुमैर्नीलैरुच्चाटयेद्रिपून् ।
मरिचैर्विद्वेषणाय लवङ्गैर्व्याधिनाशने ॥ ३४ ॥
सुवासिनीर्ब्राह्मणान् वा भोजयेद्यस्तु नामभिः ।
यश्च पुष्पैः फलैर्वापि पूजयेत् प्रतिनामभिः ॥ ३५ ॥
चक्रराजेऽथवाऽन्यत्र स वसेच्छ्रीपुरे चिरम् ।
यः सदा वर्तयन्नास्ते नामाऽष्टशतमुत्तमम् ॥ ३६ ॥
तस्य श्रीललिता राज्ञी प्रसन्ना वाञ्छितप्रदा ।
एतत्ते कथितं राम श्रृणु त्वं प्रकृतं ब्रुवे ॥ ३७ ॥

अथैवं मदनः प्राप्य वरं देव्या महत्तरम्।
मर्त्यानमर्त्यानसुरान् यातुधानांश्च किन्नरान्॥ ३८॥
यक्षान् किंपुरुषादींश्च चकार स्ववशे द्रुतम्।
अथ कालान्तरे कामो महादेवजिगीषया॥ ३९॥
गत्वा क्रोधाग्निमासाद्य भस्मीभूतः पतङ्गवत्।
तत्कथां तेऽभिधास्यामि शृणु राम समाहितः॥ ४०॥
गौरी दाक्षायणी भूत्वा पितुर्दक्षस्य बर्हिषि।
श्रुत्वा निन्दां महेशस्य पत्युर्भस्मत्वमागता॥ ४१॥
आकाशमात्ररूपा सा गौरी जगति संस्थिता।
अथ काले चिरतरे समतीते नगेश्वरः॥ ४२॥
हिमवान् ब्रह्मपुत्रेण नारदेनाऽभिसङ्गतः।
प्रत्युत्थाय देवमुनिं सभाजयत भक्तितः॥ ४३॥
पाद्यार्घ्यमाल्यहाराद्यैरालेपैर्वस्त्रभूषणैः।
पूजयित्वा स्वादुतरैरभोजयत भोजनैः॥ ४४॥
एवं सम्पूजितं देवमुनिं परमशोभनम्।
समासीनं सभामध्ये प्राह पर्वतभूपतिः॥ ४५॥
देवर्षे त्वत्समालोकाद्धन्योऽहं सम्प्रति क्षितौ।
यत्त्वया ब्रह्मपुत्रेण दीनोऽहं सेवकीकृतः॥ ४६॥
भगवन् ब्रूहि भुवनात् कस्मात्त्वं समुपागतः।
दुर्लभं दर्शनं तेऽद्य गमनेच्छाऽपि कुत्र ते॥ ४७॥
एवं पृष्टो नारदोऽथ मधुप्रस्यन्दनं वचः।
बभाषे पर्वतश्रेष्ठं स्ववृत्तान्तविवक्षया॥ ४८॥
पर्वतेश समायातः सत्यलोकादहं ननु।
त्वां दिदृक्षुर्धन्यतमं व्रजामि शिवसन्निधिम्॥ ४९॥
श्रुत्वैवं नारदवचो हिमवान् प्राह सन्नतः।
भगवन् वद कस्मात्वे धन्य इत्यहमीरितः॥ ५०॥

अनपत्यत्वशोकेन वराकः कृपणो भृशम् ।
इति श्रुत्वा गिरिवचो नारदः प्राह सान्त्वयन् ॥ ५१ ॥
शृणु भूभृद्राज यतो धन्यस्तत्ते वदाम्यहम् ।
त्वं सम्प्रति पराशक्तिपदभक्तियुतो यतः ॥ ५२ ॥
अतः प्रोक्तो मया धन्य इति त्वं प्रीतिहेतुतः ।
नह्यल्पपुण्यैर्लोकेऽस्मिन् पराभक्तिः प्रजायते ॥ ५३ ॥
यां ब्रह्मविष्णुरुद्राद्याः पूजयन्ति दिवानिशम् ।
सा शक्तिः परमा लोके यस्यां सर्वं प्रतिष्ठितम् ॥ ५४ ॥
यत्ते प्रपूर्वदिवसे वामदेवो मुनीश्वरः ।
अनुजग्राह तदहं वेद्मि वै योगचक्षुषा ॥ ५५ ॥
स मुनिः शाक्तमूर्धन्यस्तेन त्वमनुदेशितः ।
अतस्त्वत्तो धन्यतमो भवेत् क इह तद्वद ॥ ५६ ॥
श्रुत्वैवं नारदेनोक्तं हिमवान् पुनरब्रवीत् ।
ब्रह्मंस्त्वं योगनेत्रेण भूतं भव्यञ्च पश्यसि ॥ ५७ ॥
न तेऽस्त्यविदितं किञ्चित् कालत्रितयगर्भितं ।
पृच्छामि किञ्चिदाचक्ष्व कृपया मयि सेवके ॥ ५८ ॥
अपत्येन विना ब्रह्मन्न सुखं विद्यते क्वचित् ।
तन्मेऽपत्यं यथा भूयात्तमुपायं विचारय ॥ ५९ ॥
श्रुत्वैवं हिमवद्वाक्यं क्षणं ध्यात्वाऽथ नारदः ।
प्रोवाच गोत्रपतये नारदो दिव्यदर्शनः ॥ ६० ॥
शृणु पर्वतराजन्य तवाऽपत्यं न विद्यते ।
नाऽत्रोपायोऽपि सन्दृष्टः कन्यैका ते भविष्यति ॥ ६१ ॥
शृणु तच्चापि ते वक्ष्ये दुःखायैव हि सन्ततिः ।
न हि लोकेऽपत्ययुताः संदृष्टाः सुखिनः क्वचित् ॥ ६२ ॥
तत्राऽपि कन्या दुःखानां निदानमवधारय ।
यदि सा परमाशक्तिरनुगृह्णाति ते नग ॥ ६३ ॥

तदा सुखाय कन्याऽपि भविष्यति न संशयः ।
श्रुत्वेत्थं नारदवचः प्राह पर्वतराट् पुनः ॥ ६४ ॥
भगवन् सा परा शक्तिर्वामदेवमुखाच्छ्रुता ।
वर्णरूपा ह्यवगता न सा चिन्तयितुं क्षमा ॥ ६५ ॥
अतस्तद्रूपमत्यन्तनिगूढं वागगोचरम् ।
ततः कथं मे भवति तस्याश्चाऽनुग्रहो वद ॥ ६६ ॥
इति श्रुत्वा नारदोऽथ समाचष्टे विचक्षणः ।
शृणु शैलकुलाधीश सा हि सूक्ष्मा परात्परा ॥ ६७ ॥
वागाद्यगम्या महती त्रिपुरा सर्वकारणम् ।
तस्या यत्परमं रूपं सर्वाऽन्तरतया स्थितम् ॥ ६८ ॥
योगिश्रेष्ठा विजानन्ति स्वाऽवष्टिष्ठेन नेतरे ।
तस्या यदपरं रूपं स्थूलं तत्सर्वगोचरम् ॥ ६९ ॥
तदुपास्याऽभिलषितं प्राप्नुह्यचिरमद्रिप ।
तदप्यनन्तं भक्तानां भावनापथि संस्थितम् ॥ ७० ॥
तत्र गौरी मृडानी या विद्यारूपा परात्परा ।
तां भजाऽऽशु महादेवीं वाञ्छितप्राप्तये नग ॥ ७१ ॥
श्रुत्वेत्थं नारदप्रोक्तं पुनः पप्रच्छ पर्वतः ।
भगवन् सा हि का देवी या गौरीति समीरिता ॥ ७२ ॥
किंरूपा किंसमाचारा किंवीर्या शंस मे मुने ।
निशम्य पर्वतवचो निजगाद ततो मुनिः ॥ ७३ ॥
शृणु पर्वतराजन्य गौर्या रूपादिकं शुभम् ।
सा सम्भूता पराशक्तेर्विष्ण्वंशेन महेश्वरी ॥ ७४ ॥
नीलाभा सिंहसंस्थाना त्रिनेत्रा चन्द्रशेखरी ।
खड्गञ्च खेटकं शूलं मुद्गरं पाणिपङ्कजैः ॥ ७५ ॥
दधाना शङ्करसती यस्याः संश्रयणाद्भवः ।
संहृतिं रचयन् कल्पस्याऽन्ते न ग्लायति क्वचित् ॥ ७६ ॥

एवंविधसमाचारा कारणाद्देहनाशतः ।
दक्षात्तनुं समासाद्य पतिनिन्दनसंश्रुतेः ॥ ७७ ॥
स्वं देहं भस्मसात् कृत्वा व्योमरूपतया स्थिता ।
सम्प्रार्थ्यमाना विबुधैर्नदेहमभिवाञ्छति ॥ ७८ ॥
तां विना त्र्यम्बकोऽत्यन्तदुःखितो नगभूपते !
तां समाराध्य परमां याचस्व प्रियमात्मनः ॥ ७९ ॥
कन्या भव ममेत्येवं ततस्त्वं पर्वताऽधिप !
तथा कन्यारूपया त्वं युतः परमशोभनः ॥ ८० ॥
लोके पूज्यतमश्चाऽपि देवैः स्तुत्यो भविष्यसि ।
महादेवस्य श्वशुरस्ततः ख्यातिं गमिष्यसि ॥ ८१ ॥
तनयां च परां शक्तिं गौरीं प्राप्य नगोत्तम ।
सौख्यं यशो महाश्च लोके तव भविष्यति ॥ ८२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे गौर्युपाख्याने षड्त्रिंशतितमोऽध्यायः ॥ २१४९ ॥



# अथ सप्तविंशोऽध्यायः ।

नगराज श्रृणु कथां गौरीचरित्रसंयुताम् ।
पुरा रथन्तरे कल्पे तारकेयो महासुरः ॥ १ ॥
तपसा तोषयामास महादेवं त्रिलोचनम् ।
वरं बहुविधं लब्ध्वा बबाधेऽतितरां जगत् ॥ २ ॥
सृष्टौ स्थितौ संहरणे तस्मै शक्तिमदाद्भवः ।
सम्मुखस्थस्य सामर्थ्यमवकर्षति च क्षणात् ॥ ३ ॥
एवं वरेण सहितो दर्पितः स महासुरः ।
ससर्जाऽण्डान्यनेकानि ब्रह्मविष्णुशिवानपि ॥ ४ ॥
इन्द्रादीनखिलान् देवान् स्वयं सर्वाधिपोऽभवत् ।
तेन सृष्टा ब्रह्ममुखाः पूजयन्ति महासुरम् ॥ ५ ॥
स्वयं यज्ञाऽधिपो जातः स्वसृष्टाण्डेषु सर्वतः ।
वेदा विनिर्मितास्तेन विद्याश्च विविधास्तथा ॥ ६ ॥
अथाऽऽगत्य तारकेयो ब्रह्मादीनाह सोऽसुरः ।
मां यजन्तु सुराः सर्वे मम वेदान् पठन्तु च ॥ ७ ॥
अहं सर्वेश्वरो देवः प्रणमन्तु च मां सदा ।
इति तद्वचनं श्रुत्वा न स्वीचक्रुर्यदा सुराः ॥ ८ ॥
तदा देवान् विनिर्जित्य बद्ध्वा स्वाण्डे विनिक्षिपत् ।
आदित्यांश्च वसून् रुद्रानश्विनौ मरुतस्तथा ॥ ९ ॥
बद्ध्वा निजाण्डे निक्षिप्य ब्रह्मादीन् भेत्तुमाययौ ॥ १० ॥
दृष्ट्वाऽसुरं समायान्तं स्वान्नेतुं विधिमुख्यकाः ।
योद्धुमभ्युद्यतास्ते वै स्वपरीवारसंयुताः ॥ ११ ॥

युद्ध्वा चिरं तेन विधिमुखा दृष्ट्वा महासुरम् ।
अजेयं वरदानेन तिरोभूतास्तदेश्वराः ॥ १२ ॥
अन्तर्धानं प्रयातेषु तेषु पश्चान्महासुरः ।
विधिं हरिं शिवं चाऽन्यं सृष्ट्वा लोके न्यवेशयत् ॥ १३ ॥
सृष्ट्वेन्द्रादीनपि सुरान् स्वर्गादिषु निवेश्य च ।
सर्वैः पूजां समासाद्य बभौ सर्वेश्वरोऽसुरः ॥ १४ ॥
अथ कालान्तरे भूयोऽपश्यन्नण्डान्यनेकशः ।
स्वर्गे शचीं समालोक्य तत्सौन्दर्येण मोहितः ॥ १५ ॥
दूतं निशठनामानमानेतुं तां समादिशत् ।
गत्वा दूतः शचीं प्राह नत्वा स्वस्वामिनेरितम् ॥ १६ ॥
इन्द्राणि तारकेयेन प्रेषितोऽहं समागतः ।
प्राह त्वामसुरेशानः सर्वलोकेश्वरो विभुः ॥ १७ ॥
मम पार्श्वं प्रयाह्याशु प्रणयेन शुचिस्मिते ।
अखिलाऽण्डमहाराज्यं भुंक्ष्व त्वं मत्परिग्रहात् ॥ १८ ॥
एवं सम्मानितश्चाहं भवामि वशगस्तव ।
अन्यथा त्वं बलाऽऽकृष्टा मानहीना भविष्यसि ॥ १९ ॥
इति श्रुत्वा दूतवचः शची चिन्तासमाकुला ।
किं करोमि न चाऽन्यो मे रक्षको विद्यतेऽधुना ॥ २० ॥
इन्द्रो जयन्तो देवाश्च बद्ध्वा नीताः सुदूरतः ।
तेषां वृत्तं न जानामि न कश्चिद्रक्षिता मम ॥ २१ ॥
उपायेन सुरपतिं वारयामि च सम्प्रति ।
आपदि प्रौढधिषणैरशक्तैः सर्वयत्नतः ॥ २२ ॥
क्षणं तदर्धं वाऽपोह्य प्राप्यते सुखमुत्तमम् ।
बलवद्व्यवधानेन स्वात्मानं मोचयाम्यहम् ॥ २३ ॥
इति निश्चित्य मनसा शची दूतमचक्षत ।
शृणु दूत तारकेये मत्सन्देशं च प्रापय ॥ २४ ॥

विष्णुर्देवेषु परमश्रीस्तत्पत्नी मनोहरा ।
वयं तस्याऽनुचर्यस्तां त्वं समानेतुमर्हसि ॥ २५ ॥
ततो वयमनाहूता भवामः परिचारिकाः ।
एवं श्रुत्वा समादिष्टो दैत्यः प्रोवाच सन्नतः ॥ २६ ॥
तच्छ्रुत्वा तारकेयोऽपि तथ्यमित्यनुमन्यत ।
अथ दूतं विष्णुपत्न्ये प्रेषयामास सोऽसुरः ॥ २७ ॥
वैकुण्ठे दूत आगत्य लक्ष्म्यै चाऽसुरभाषितम् ।
न्यवेदयदथ रमा श्रुत्वा दूतस्य भाषितम् ॥ २८ ॥
सावहेलं दूतमाह हे दूत शृणु मद्वचः ।
नाऽहं कामयितुं योग्या तारकेयस्य दुर्मतिः ॥ २९ ॥
प्रार्थयत्यात्मनाशं सः गच्छ शीघ्रमितो बहिः ।
इत्थं निरस्तो दूतोऽथ गत्वोवाचाऽसुराधिपम् ॥ ३० ॥
प्रतिषेधं श्रियः श्रुत्वा समन्युस्तारकेयकः ।
आगत्य सेनया सार्धं रुरोध श्रीनिकेतनम् ॥ ३१ ॥
अथ लक्ष्मीर्युता स्वीयशक्तिभिः शतकोटिभिः ।
निर्गत्याऽसुरसेनां तां नाशयामास सत्वरम् ॥ ३२ ॥
तारकेयः समालोक्य लक्ष्म्या वीर्यं महत्तरम् ।
स्वयं युयोध बलवान् तया शस्त्राऽस्त्रकोविदः ॥ ३३ ॥
तयोः समभवद्युद्धं तारकेयश्रियोस्तदा ।
भयदं सर्वलोकानां विष्णुशङ्करयोरिव ॥ ३४ ॥
युध्यतोश्च तयोरेवमत्यगाद्वर्षपञ्चकम् ।
नाशितं रमया सैन्यं दैत्यः संसृजति क्षणात् ॥ ३५ ॥
एवं पुनः पुनर्नष्टसैन्यं सृष्ट्वा युयोध सः ।
अथ लक्ष्मीः समालक्ष्य चाऽजयं दैत्यपुङ्गवम् ॥ ३६ ॥
सस्मार विष्णुं मनसा भर्तारं पुरुषं परम् ।
अथ नारायणः श्रीमान् वैनतेयं समास्थितः ॥ ३७ ॥

आविर्बभूव समरे पार्षदैः परिवारितः ।
एवं कालोदिताऽनेकचण्डांशुप्रभभास्वरः ॥ ३८ ॥
लक्ष्मीं ददर्श समरश्रान्तां त्रस्यन्मुखाम्बुजाम् ।
क्रुद्धोऽत्यन्तं युयोधाऽऽजौ दैत्यराजेन यत्नतः ॥ ३९ ॥
तदा स दैत्यः स्वं रूपं द्विधा कृत्वा क्षणेन तु ।
प्रत्येकं युयुधे लक्ष्म्या विष्णुना युगपत् बली ॥ ४० ॥
अथ विष्णुः प्रकुपितश्चक्रं यद्वै सुदर्शनम् ।
अमोघं तत् प्रचिक्षेप दैत्यनाशाय तत्क्षणे ॥ ४१ ॥
चक्रं तद्दैत्यमासाद्य ददाहाऽग्निरिवाऽलयम् ।
तदा लक्ष्म्या युध्यमानः ससर्जाऽन्यं महासुरम् ॥ ४२ ॥
पुनः स विष्णुना युद्धं चक्रे घोरं महत्तरम् ।
एवं भूयो हतो दैत्यः ससर्जाऽऽत्मानमात्मना ॥ ४३ ॥
दृष्ट्वा दैत्यमजेयं तं वरदानान्महेशितुः ।
रमया सह देवेशस्तिरोभूतो रणाऽजिरे ॥ ४४ ॥
अथ मत्वा दैत्यपतिः परास्तं रमया हरिम् ।
जगाम स्थानमात्मीयमसुरैः परिवारितः ॥ ४५ ॥
तदन्तरे तु गन्धर्वमुखाच्छ्रुत्वा पराभवम् ।
विष्णोर्लक्ष्मीसमेतस्य शची सस्मार वै गुरुम् ॥ ४६ ॥
स्मृतमात्रो गुरुस्तत्र शचीसविध आगतः ।
तं दृष्ट्वाऽऽङ्गिरसश्चाऽग्रे शची प्रत्युत्थिताऽभवत् ॥ ४७ ॥
अथ तं सा पूजयित्वा प्रणम्य भक्तियोगतः ।
मुञ्चन्त्यश्रूणि नेत्राभ्यां दीना प्रोवाच तं गुरुम् ॥ ४८ ॥
गुरो ऽहमतिखिन्नाऽस्मि दैत्यराजेन पीड़िता ।
महाबलेन बद्धो मे पतिरिन्द्रः सहाऽमरैः ॥ ४९ ॥
परामर्ष्टुं मामधुना समीहत्यसुरेश्वरः ।
दूतं मे प्रेषयामास युक्त्या स च निवारितः ॥ ५० ॥

लक्ष्मीनारायणौ युद्धे निर्जितौ तेन सम्प्रति ।
आयास्यत्यभिनेतुं मामद्य श्वो वा महासुरः ॥ ५१ ॥
किं करोमि क्व गच्छामि नाऽस्ति मे शरणं क्वचित् ।
प्रपन्नां रक्ष दीनां मामाङ्गिरस गुरोऽधुना ॥ ५२ ॥
संश्रुत्यैवं विलपितमिन्द्राण्या धिषणस्तदा ।
समालोक्य ज्ञानदृशा शचीं प्राह दयाऽन्वितः ॥ ५३ ॥
पुलोमजे शृणु मम वचनं कालसम्मितम् ।
एष दैत्यो महादेववरात् सर्वजयी भवत् ॥ ५४ ॥
नास्त्यस्य जेता लोकेऽस्मिन् परलोके च विद्यते ।
स्त्रीभिर्वा न पराजेयः साक्षाद्गौरीसुतेऽसुरः ॥ ५५ ॥
आगमिष्यति दूतस्ते नेतुं शीघ्रं महासुरः ।
त्वं मासं व्यवधिं कृत्वा गौरीमाराधय द्रुतम् ॥ ५६ ॥
इत्युक्त्वा निर्गतो जीवः शची च परमेश्वरीम् ।
गौरीं समाराधयितुं तदैव समुपाऽक्रमत् ॥ ५७ ॥
मूर्तिं पृथ्वीमयीं कृत्वा सिंहसंस्थां चतुर्भुजाम् ।
खड्गं च खेटकं शूलं मुद्गरं दधतीं शुभाम् ॥ ५८ ॥
त्रिनेत्रां चन्द्रचूडालां मेचकाऽऽभां सुभूषिताम् ।
नानोपहारैराराध्य ध्यात्वाऽऽवाह्य यथाविधि ॥ ५९ ॥
गुरूपदिष्टस्तोत्रेण नामाऽष्टशतकात्मना ।
स्तुत्वा तदेकचित्ताऽभूत्तन्मन्त्रजपतत्परा ॥ ६० ॥
अथाऽसुरोऽपि स्मृत्वा तां शचीं कामशराऽऽहतः ।
दूतेन सह निर्गत्य देवलोकं समाययौ ॥ ६१ ॥
संस्थितो नन्दनवने दूतं तं प्रेषयद्द्रुतम् ।
अथ दूतः समागत्य शचीं प्रोवाच सन्नतः ॥ ६२ ॥
देवि दैत्येश्वरः प्राप्तः संस्थितो नन्दने वने ।
वसन्तकुसुमैश्छन्नो वसन्त इव रूपवान् ॥ ६३ ॥

त्वद्दर्शनं समाकाङ्क्षन् तत्र ध्यानैकतत्परः ।
त्वां समानायितुश्चाऽहं प्रेषितोऽस्मि वरानने ॥ ६४ ॥
एहि त्वं चपलाऽपाङ्गि दैत्यराजं भज द्रुतम् ।
ब्रह्माण्डानां शतं यस्य वशे तन्महिषी भव ॥ ६५ ॥
अनेके धातृविष्ण्वाद्यास्त्वां सेवितुं स्त्रिया सह ।
या त्वयोक्ता पुरा लक्ष्मीस्तया युक्तो जनार्दनः ॥ ६६ ॥
निर्जितो युधि स्वं लोकं त्यक्त्वा भीत्या पलायितः ।
प्रबुद्धं ते महाभाग्यं यत्त्वां काङ्क्षति दैत्यराट् ॥ ६७ ॥
इति संश्रुत्य दूतस्य वाक्यं सा सुरराट्प्रिया ।
मनसा गर्हयन्ती तं प्राह वाक्यविशारदा ॥ ६८ ॥
शृणु मे वचनं दूत यन्मामिच्छति दैत्यराट् ।
चिरादेतद्वाञ्छितं मे घटितं कालपाकतः ॥ ६९ ॥
भविता नूतनतया पतिर्मे सुरराट् खलु ।
तत्र मासव्रतपरा स्थित्वा पतिसुखाय वै ॥ ७० ॥
समाप्तव्रतचर्याऽहं भजाम्यसुरभूपतिम् ।
व्रते पूर्णे वियोगो भर्त्रा जातु भविष्यति ॥ ७१ ॥
विहते तु व्रते पत्युर्वियोगः स्याद्द्रुतं मम ।
नाऽहं पतिवियोगार्तिं भजामि व्रतयोगतः ॥ ७२ ॥
तद्गत्वा ब्रूहि दैत्येन्द्रं क्षम्यतां मासमात्रकम् ।
एवं शची वचः श्रुत्वा दैत्यराजे न्यवेदयत् ॥ ७३ ॥
श्रुत्वा सोऽपि प्रसन्नस्तं प्रतीक्षन्समयं स्थितः ।
इन्द्राणी च प्रतिदिनं वायुमात्राऽशना सती ॥ ७४ ॥
यता स्वान्तेन्द्रियाहारविहारवचनाक्रिया ।
ध्यायन्नजस्रं श्रीगौरीपादाब्जं मनसि स्थिरम् ॥ ७५ ॥
दिनानामतियायैवं चतुर्गुणितसप्तकम् ।
ऊनत्रिंशद्दिने रात्रौ चिन्तयामास वै शची ॥ ७६ ॥

नाद्यापि देवी सम्प्रीता दिनमेकमिहाऽन्तरम्।
ततोऽहं दैत्यराजस्य भविष्यामि नियन्त्रणे॥ ७७॥
एतन्मे विषमं भाति किं कृत्वा स्याच्छुभं मम।
नान्यो ह्युपायः प्रकृते महद्भयमुपस्थितम्॥ ७८॥
आत्मदानं नोचितं वै दैत्यराजाय सर्वथा।
तस्मादेकं प्रतीक्षिष्ये दिनं गौरीं समाहिता॥ ७९॥
ततः प्रभातेऽमुं देहं देव्यै वह्नौ समर्पये।
इति निश्चित्य देवेशपत्नी कुण्डं महत्तरम्॥ ८०॥
चकार तत्र भवने यत्र गौरी निवेशिता।
कश्चिद्दैत्यपतेर्दूतः शचीं पप्रच्छ तं विधिम्॥ ८१॥
सा प्राह मासनिर्वर्त्यं व्रतं पूर्णं भविष्यति।
अहं श्वः कल्पसमये दैत्येशं तमनुव्रजे॥ ८२॥
गच्छ दूत दैत्यपतिः सूर्यस्योदयनं प्रति।
आगच्छत्विह मां नेतुं सन्नद्धः समलङ्कृतः॥ ८३॥
श्रुत्वा दूतः शचीवाक्यं तथ्यं मत्वाऽसुरेश्वरे।
निवेदयत् सोऽपि हृष्टः कालं तं प्रसमीक्षत॥ ८४॥
अथेन्द्राणी महापूजां कृत्वा देव्यै समर्हणैः।
एधांसि कुण्डे निक्षिप्य प्रज्वाल्य ज्वलिताऽनले॥ ८५॥
ध्यात्वा गौरीं भक्तियुता स्वदेहं होतुमिच्छया।
सूर्योदयं समालक्ष्य परिक्रम्य च पावकम्॥ ८६॥
वध्वाऽञ्जलिं प्रणम्याऽथ प्रार्थयामास शङ्करीम्।
नमो देव्यै महादेव्यै शिवायै ते समर्पये॥ ८७॥
इमं देहं तेन देवी प्रीताऽस्तु परदेवता।
इति प्रार्थ्य शची यावत्पावके देहपातनम्॥ ८८॥
वाञ्छन्ती तावदाकाशे वज्रनिष्पेषनिष्ठुरम्।
अकस्मादभवद्घोरनिःस्वनोऽतिभयङ्करः॥ ८९॥
तं श्रुत्वा च महाशब्दमपश्यद्गगनाऽङ्गणे।

सिंहं सुवर्णसङ्काशं शैलराजमिवोन्नतम् ॥ ९० ॥
तस्योपरि महादेवीं पूज्यमूर्तिसमाकृतिम् ।
दृष्ट्वा नमस्कृत्य शची हर्षव्याकुलिताऽन्तरा ॥ ९१ ॥
अथ तं शब्दमाकर्ण्य तारकेयो सुरेश्वरः ।
खड्गहस्तस्तं निनदमनुप्राऽद्रवदम्बरे ॥ ९२ ॥
दृष्ट्वा जघान खड्गेन तं सिंहं मूर्ध्नि कोपितः ।
पतितः सिंहमूर्ध्न्याशु पफाल शतधाऽऽयुधम् ॥ ९३ ॥
अथ गौरी समालोक्य दैत्यं रोषारुणेक्षणा ।
जघान हृदि शूलेन भिन्नवक्षाः पपात ह ॥ ९४ ॥
अथ शीघ्रं समुत्थाय दैत्योऽन्तर्धिं समागतः ।
क्षणेनैव महासैन्यं ससर्जाऽऽकाशमण्डले ॥ ९५ ॥
अथाऽभवन्महायुद्धं भवानीदैत्यसेनयोः ।
गौरीनिःश्वाससम्भूता मातृका मन्युदीपिताः ॥ ९६ ॥
कोटिकोटिगणैर्युक्ता युयुधुर्दैत्यसेनया ।
मातृकाभिः स्वीयसेनां प्रनष्टां प्रेक्ष्य दैत्यराट् ॥ ९७ ॥
भूयः ससर्ज परमं दैत्यसैन्यं महत्तरम् ।
निमेषेणैव तदपि मातृकाभिर्विनाशितम् ॥ ९८ ॥
अथ दैत्यपतिर्मत्वा मातृका बलवत्तराः ।
ससर्ज त्र्यम्बकं देवं शिवं चन्द्रावतंसकम् ॥ ९९ ॥
स शिवः शूलमुद्यम्य गौर्या योद्धुं समाययौ ।
तं दृष्ट्वा मातृकाः सर्वा बभूवुर्न्यस्तहेतिकाः ॥ १०० ॥
मत्वा गौरी पतिं शम्भुमथ सा शङ्करी जगौ ।
नायं शिवो मम पतिरेष दैत्यविनिर्मितः ॥ १०१ ॥
असाम्प्रतं हि शस्त्रस्य हानं मायाविना रणे ।
इत्युक्त्वा मातृकामोहनाशनाय महेश्वरी ॥ १०२ ॥
सस्मार शङ्करं देवं सोऽपि स्मरणमात्रतः ।
आविरासीच्छूलपाणिः पार्षदैः परिवारितः ॥ १०३ ॥

दृष्ट्वा पिनाकिनं ता वै युयुधुर्धृतहेतिकाः ।
अथ ब्रह्मादयो देवा यक्षा गन्धर्वकिन्नराः ॥ १०४ ॥
नागा गणाश्चाऽप्सरसः सिद्धाः किंपुरुषा अपि ।
अभ्यागमन् दैत्यराजगौर्योर्युद्धदिदृक्षवः ॥ १०५ ॥
अथाऽभवद्दैत्यपतिगौर्योः परमदारुणम् ।
युद्धं तत्राऽसुरपतिः सेनाश्च बहुधाऽसृजत् ॥ १०६ ॥
सृष्टमात्रं क्षणेनैव मातृकाभिर्विनाश्यते ।
अथ स्वसृष्टाऽण्डगणे प्रविलीयत चाऽसुरः ॥ १०७ ॥
विदित्वाऽण्डे विलीनं तं संक्रुद्धा शङ्करी तदा ।
अथ क्रोधात्समुत्पन्ना महाकाली विभीषणा ॥ १०८ ॥
दिगम्बरा मुक्तकेशी मुण्डमालाविभूषिता ।
करवालकरां तां दृष्ट्वा प्रोवाच शङ्करी ॥ १०९ ॥
कालि शीघ्रं दैत्यसृष्टान्यण्डानि ध्वंसयेति वै ।
श्रुत्वा निर्गत्य सा काली ब्रह्माण्डानि शतं क्षणात् ॥ ११० ॥
विभेद करवालेन भक्षयामास ताः प्रजाः ।
एवं विनष्टेऽण्डगणे दैत्यो धृतमहायुधः ॥ १११ ॥
आजगाम नियुद्धाय सेनां स्रष्टुं मनो दधे ।
तावद्गौरी महादैत्यं पातयित्वा महीतले ॥ ११२ ॥
पादेनाऽऽक्रम्य हृदये शूलेन शिर आच्छिनत् ।
स छिन्नमूर्धा शूलेन विगतासुरभूत्तदा ॥ ११३ ॥
एवं दैत्येश्वरवधं निशम्य विधिमुख्यकाः ।
जयेति शब्दं व्याजह्रुर्ववर्षुः कुसुमैर्वृषा ॥ ११४ ॥
संस्तुत्य विविधैः स्तोत्रैर्ब्रह्मविष्णुपुरोगमाः ।
बद्धाञ्जलिपुटाः प्राहुर्देवास्तां सिंहवाहिनीम् ॥ ११५ ॥
भवानि दैत्यराजोऽयं भवत्या विनिपातितः ।
देवशत्रुः सर्वलोककण्टको बलवत्तरः ॥ ११६ ॥
नेमं हन्तुं हरिर्वापि हरो वा प्रभवेत् क्वचित् ।

कुत इन्द्रादयो देवाः प्रभवः स्युर्महेश्वरि ॥ ११७ ॥
अस्य दुष्टस्य संहृत्या पालितं पुत्रवज्जगत् ।
तस्मात्त्वं जगदम्बेति स्थाने प्रत्यक्पयोनिधेः ॥ ११८ ॥
तीरे ख्याता महादेवि भविष्यसि महीतले ।
पूजिता वाञ्छितानर्थान्मर्त्यानां त्वं प्रयच्छसि ॥ ११९ ॥
इति संस्तुत्य नत्वा ते ययुर्निजमन्दिरम् ।
अथेन्द्राण्यपि तत्रैव यत्र दैत्यो निपातितः ॥ १२० ॥
अभ्यागत्य प्रणम्याऽम्बामाह वाक्यं कृताञ्जलिः ।
गौर्यहं दुःखजलधिनिमग्नाऽभ्युद्धृता त्वया ॥ १२१ ॥
प्रणताऽस्मि जगद्धात्रि गौरि दीनार्तिहारिणि ।
इत्युक्त्वा पादयोरग्रे प्रणता देवराट्प्रिया ॥ १२२ ॥
अथ गौरी शचीं प्राह सन्तुष्टा स्मितपूर्वकम् ।
इन्द्राण्यहं प्रसन्नाऽस्मि वरं ब्रूह्यभिवाञ्छितम् ॥ १२३ ॥
तच्छ्रुत्वा वचनं देव्याः शची प्रोवाच सन्नता ।
देवि तुष्टा यदि मम वरं देहि ममेप्सितम् ॥ १२४ ॥
महाऽऽपत्सु स्तुता येन नामाऽष्टशतकाऽऽत्मना ।
स्तवेन त्वं महाऽऽपद्भ्यः समभ्युद्धर मामिव ॥ १२५ ॥
त्वत्पादपद्मयोर्भक्तिर्भूयान्मम सुनिश्चला ।
अथ गौरी प्राह शचीं प्रसन्ना वचनं शुभम् ॥ १२६ ॥
इन्द्राणि यत्त्वया प्रोक्तं तत्तथैवाऽस्तु सर्वथा ।
व्रज स्वं स्थानमित्युक्त्वा चाऽन्तर्धानं जगाम सा ॥ १२७ ॥
इति ते वीर्यमाख्यातं गौर्याः सर्वोत्तमोत्तमम् ।
शृण्वतां पापशमनं गौरीं तां नग पूजय ॥ १२८ ॥
इत्युक्त्वा हिमशैलाय गौर्या वीर्यकथां शुभाम् ।
ययौ शैलाऽभ्यनुज्ञातो नारदोऽम्बरमार्गतः ॥ १२९ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे गौर्युपाख्याने सप्तविंशतितमोऽध्यायः ॥ २२६४ ॥

# अथाऽष्टाविंशोऽध्यायः ।

इति श्रुत्वा कथां पुण्यां गौरीवीर्यविचित्रिताम् ।
अपृच्छद्भार्गवो भूयो दत्तात्रेयं महामुनिम् ॥ १ ॥
भगवन्नद्भुततमं गौर्या वीर्यमुदाहृतम् ।
शृण्वतो न हि मे तृप्तिः कथां ते मुखनिःसृताम् ॥ २ ॥
गौर्या नामाऽष्टशतकं यच्छच्यै धिषणो जगौ ।
तन्मे कथय यच्छ्रोतुं मनो मेऽत्यन्तमुत्सुकम् ॥ ३ ॥
भार्गवेणेत्थमापृष्टो योगिराडत्रिनन्दनः ।
अष्टोत्तरशतं नाम्नां प्राह गौर्या दयानिधिः ॥ ४ ॥
जामदग्न्य शृणु स्तोत्रं गौरीनामभिरङ्कितम् ।
मनोहरं वाञ्छितदं महाऽऽपद्विनिवारणम् ॥ ५ ॥
स्तोत्रस्याऽस्य ऋषिः प्रोक्त अङ्गिराश्छन्द ईरित ।
अनुष्टप् देवता गौरी आपन्नाशाय यो जपेत् ॥ ६ ॥
ह्रां ह्रीं इत्यादि विन्यस्य ध्यात्वा स्तोत्रमुदीरयेत् ।
सिंहसंस्थां मेचकाऽऽभां कौसुम्भांऽशुकशोभिताम् ॥ ७ ॥
खड्गं खेटं त्रिशूलञ्च मुद्गरं बिभ्रतीं करैः ।
चन्द्रचूडां त्रिनयनां ध्यायेद्गौरीमभीष्टदाम् ॥ ८ ॥
गौरी गोजननी विद्या शिवा देवी महेश्वरी ।
नारायणाऽनुजा नम्रभूषणा नुतवैभवा ॥ ९ ॥
त्रिनेत्रा त्रिशिखा शम्भुसंश्रया शशिभूषणा ।
शूलहस्ता श्रुतधरा शुभदा शुभरूपिणी ॥ १० ॥
उमा भगवती रात्रिः सोमसूर्याऽग्निलोचना ।
सोमसूर्यात्मताटङ्का सोमसूर्यकुचद्वयी ॥ ११ ॥

अम्बाऽम्बिकाऽम्बुजधराऽम्बुरूपा ध्यायिनी स्थिरा ।
शिवप्रिया शिवाऽङ्कस्था शोभना शुम्भनाशिनी ॥ १२ ॥
खड्गहस्ता खगा खेटधरा खाऽच्छनिभाऽऽकृतिः ।
कौसुम्भचेला कौसुम्भप्रिया कुन्दनिभद्विजा ॥ १३ ॥
काली कपालिनी क्रूरा करवालकरा क्रिया ।
काम्या कुमारी कुटिला कुमाराऽम्बा कुलेश्वरी ॥ १४ ॥
मृडानी मृगशावाक्षी मृदुदेहा मृगप्रिया ।
मृकुण्डुपूजिता माध्वीप्रिया मातृगणेडिता ॥ १५ ॥
मातृका माधवी माद्यन्मानसा मदिरेक्षणा ।
मोदरूपा मोदकरी मुनिध्येया मनोन्मनी ॥ १६ ॥
पर्वतस्था पर्वपूज्या परमा परमाऽर्थदा ।
परात्परा परामर्शमयी परिणताऽखिला ॥ १७ ॥
पाशिसेव्या पशुपतिप्रिया पशुवृषस्तुता ।
पश्यन्ती परचिद्रूपा परीवादहरा परा ॥ १८ ॥
सर्वज्ञा सर्वरूपा सा सम्पत्तिः सम्पदुन्नता ।
आपन्निवारिणी भक्तसुलभा करुणामयी ॥ १९ ॥
कलावती कलामूला कलाकलितविग्रहा ।
गणसेव्या गणेशाना गतिर्गमनवर्जिता ॥ २० ॥
ईश्वरीशानदयिता शक्तिः शमितपातका ।
पीठगा पीठिकारूपा पृषत्पूज्या प्रभामयी ॥ २१ ॥
महामाया मतङ्गेष्टा लोकाऽलोका शिवाऽङ्गना ।
एतत्तेऽभिहितं राम स्तोत्रमत्यन्तदुर्लभम् ॥ २२ ॥
गौर्या अष्टोत्तरशतनामभिः सुमनोहरम् ।
आपदम्भोधितरणे सुदृढप्लवरूपकम् ॥ २३ ॥
एतत् प्रपठतां नित्यमापदो यान्ति दूरतः ।
गौरीप्रसादजननमात्मज्ञानप्रदं नृणाम् ॥ २४ ॥

भक्त्या प्रपठतां पुंसां सिध्यत्यखिलमीहितम् ।
अन्ते कैवल्यमाप्नोति सत्यं ते भार्गवेरितम् ॥ २५ ॥
श्रुत्वेत्थं नारदवचः प्रालेयाद्रिर्महामतिः ।
गौरीमुद्दिश्य तपसि निश्चलं मन आदधे ॥ २६ ॥
अथ पुण्यनदीतीरे सभार्यः पर्वताऽधिपः ।
स्नात्वा सुखाऽऽसनाऽऽसीनो देवर्षिप्रोदितक्रमात् ॥ २७ ॥
ध्यात्वा मूर्तिं महागौर्याः सिंहसंस्थां विभूषिताम् ।
अभ्यर्च्य विविधाऽऽकारैरुपहारैः सुभक्तितः ॥ २८ ॥
ध्यानैकतत्परो नित्यमभूत् प्रालेयपर्वतः ।
ध्यानादुपरतः स्तोत्रं पठत्येतत् पुनः पुनः ॥ २९ ॥
पक्वपर्णाऽशनो दान्तो मौनी स्थण्डिलसंश्रयः ।
तपस्तेपे पर्वतेन्द्रो वर्षद्वादशकं ततः ॥ ३० ॥
गौरी प्रसन्ना तस्याऽग्रे ध्यानरूपं समास्थिता ।
प्रोवाच तं पर्वतेन्द्रं मेघगम्भीरया गिरा ॥ ३१ ॥
नगेन्द्र त्वं किमुद्दिश्य तपश्चरसि तद्वद ।
अलं ते घोरतपसा ददामि वरमुत्तमम् ॥ ३२ ॥
तच्छ्रुत्वा पर्वताऽधीशः प्रणम्य भुवि दण्डवत् ।
बद्धाऽञ्जलिपुटः स्तुत्वा स्तोत्रैर्नामसमन्वितैः ॥ ३३ ॥
शिरस्यञ्जलिमाधाय तां गौरीमभियाचत ।
देवि गौरि नमस्तुभ्यं शङ्करप्रियदर्शने ॥ ३४ ॥
अनपत्यत्वदोषाऽग्निदग्धं मामनुजीवय ।
इति श्रुत्वा नगवचः प्राह गौरी नगेश्वरम् ॥ ३५ ॥
पर्वतेश न तेऽपत्यं पुरुषं जातु विद्यते ।
कन्यैका मत्प्रसादेन भविष्यति न संशयः ॥ ३६ ॥
अथाऽब्रवीद्धिमगिरिः प्रणम्य रचिताऽञ्जलिः ।
देवि कन्यापितृत्वन्तु दुःखायेति बुधा जगुः ॥ ३७ ॥

यदि कन्यैव मे भूयात्तन्मे त्वं तनुजा भव ।
न ह्यन्यथा प्रतीच्छामि वरं त्वद्दत्तमच्युत ॥ ३८ ॥
श्रुत्वा हिमवता प्रोक्तं प्राह गौरी महेश्वरी ।
नगाधिराज न तनुं धारयामि कदाचन ॥ ३९ ॥
कन्या चैका प्रादिष्टा मे न ततस्तेऽधिकं भवेत् ।
इत्युक्त्वाऽन्तर्हिता सद्यो मनोरथशरीरिवत् ॥ ४० ॥
अथाऽद्रिराजस्तपसि पुनर्निश्चितमानसः ।
आतिष्ठदत्युग्रतरं तपस्तापससम्मतम् ॥ ४१ ॥
अब्भक्षो वर्षशतकं वायुभक्षस्तथा शतम् ।
एवं शतद्वयेऽतीते वन्हिकुण्डं महत्तरम् ॥ ४२ ॥
कृत्वोर्ध्वे रज्जुशतकं विटपे वटशाखिनः ।
बध्वा तत् सन्निवेश्य स्वपादयोर्हिमवांस्ततः ॥ ४३ ॥
अवाक्शिरा निरालम्बी निरुच्छ्वासो निराशकः ।
एकाग्रं तप आतिष्ठदधस्तस्य प्रिया सती ॥ ४४ ॥
एधांसि कुण्डे निक्षिप्य समेधयति पावकम् ।
एवं प्रतपतस्तस्य समाप्ते वत्सरे पुनः ॥ ४५ ॥
छित्त्वैकां रज्जुमगराडातिष्ठत्तप उत्तरम् ।
एवं तपस्यतस्तस्य वर्षाणां शतकं यदा ॥ ४६ ॥
एकन्यूनमतिक्रान्तं तस्य मूर्ध्नस्तदा महान् ।
तपोऽग्नेर्धूम उदभूत्तेन व्याप्तं त्रिविष्टपम् ॥ ४७ ॥
धूमव्याप्त्या व्याकुलिता देवा इन्द्रादयो यदा ।
तदा भीतिं समापन्नाश्चाऽऽजग्मुरगसन्निधिम् ॥ ४८ ॥
कुण्डाऽग्निना समृद्धस्य तपोऽग्नेर्ज्वालया ततः ।
दूरादेव परावृत्ताः सत्यलोकमुपाऽऽययुः ॥ ४९ ॥
आगत्य धातृसदनं सभायां ददृशुर्विधिम् ।
दृष्ट्वा तं दूरतो देवा इन्द्राद्या दण्डवन्नताः ॥ ५० ॥

प्रणतानमरान् दृष्ट्वा ब्रह्मा लोकपितामहः ।
प्राह गम्भीरया वाचा सम्बोध्य विबुधाऽधिपम् ॥ ५१ ॥
देवेन्द्रोत्तिष्ठ देवैस्त्वं किमागमनकारणम् ।
वद शीघ्रं भयं त्यक्त्वा विधास्ये ते यदीप्सितम् ॥ ५२ ॥
श्रुत्वैवं ब्रह्मवचनमुत्तस्थुः सेश्वराऽमराः ।
बद्धाञ्जलिपुटस्तत्र प्राहेन्द्रो मन्थरं वचः ॥ ५३ ॥
जगदीश्वर भीताःस्मो भयहेतुं ब्रवीमि ते ।
पृथिव्यां शैलराजो वै हिमवानिति विश्रुतः ॥ ५४ ॥
स इदानीं तपः श्रेष्ठमातिष्ठति चिरं खलु ।
तदीहितज्ञा न वयं किं वा वाञ्छति सम्प्रति ॥ ५५ ॥
तस्य मूर्ध्नो महान् धूमो निर्गतः स्वर्गवासिनाम् ।
भयं सुतीव्रं तेनेत्थमभूत् परमदारुणम् ॥ ५६ ॥
सर्वत्र तेन धूमेन व्याप्तं स्वर्गपुरं ननु ।
अमराणां शरीराणि दहत्यग्निरिवोल्बणः ॥ ५७ ॥
प्रचलत्यासनं भूयः सुधर्मायां मयि स्थिते ।
अत्यस्वस्था देवगणा विन्दन्ति न सुखं क्वचित् ॥ ५८ ॥
त्वमेव शरणं लोके विपन्नानां सदा हि नः ।
एवं निशम्येन्द्रवचो विश्वसृड् ध्यानमास्थितः ॥ ५९ ॥
क्षणेनोन्मील्य नयने माभैरिति शतक्रतुम् ।
प्रवदन्निर्जगामाऽथ देवैः सह विधिस्तदा ॥ ६० ॥
आगत्य क्षीरपाथोधेः शयानमुपकूलके ।
संस्थिता ददृशुर्देवं शङ्खचक्रगदाधरम् ॥ ६१ ॥
प्रणम्य दण्डवद्विष्णुं बद्धाऽञ्जलिपुटा बुधाः ।
अस्तुवन् संस्तवैस्तस्य वैदिकैः कीर्तिवर्धनैः ॥ ६२ ॥
अथ प्रणम्याऽब्जयोनिरुपसृत्य बुधेरितम् ।
हिमवत्तपसो वृत्तमवदल्लोकसृड् तदा ॥ ६३ ॥

श्रुत्वा विष्णुर्विधिमुखैः सह तत्र द्रुतं ययौ ।
यत्र पर्वतराजन्यस्तपो दारुणमास्थितः ॥ ६४ ॥
दृष्ट्वा तं तद्विधं विष्णुरेकरज्ज्ववलम्बिनम् ।
ज्वलदग्निकुण्डमूर्ध्नि लम्बमानं तपस्विनम् ॥ ६५ ॥
तपस्तेजोराशिमयं भासन्तमिव भास्करम् ।
निशामयत पत्नीञ्च परिचर्यारतां तदा ॥ ६६ ॥
विष्णुस्तामुपसङ्क्रम्य पर्यपृच्छद्विनीतवत् ।
का त्वमत्र महाऽरण्ये शुश्रूषसि कुतस्त्विमम् ॥ ६७ ॥
क एष किमभिप्रेत्य तप उग्रमुपास्थितः ।
श्रुत्वा सा विष्णुवचनं प्राह मञ्जुलया गिरा ॥ ६८ ॥
पर्वतानामधिपतिर्हिमवानेष मे पतिः ।
अपत्यत्वे समानेतुं भवानीमभिवाञ्छति ॥ ६९ ॥
प्रतिषिद्धस्तया देव्या शतपाशाऽवलम्बनः ।
संकल्प्य वर्षशतकं लम्बन्नग्निशिखोर्ध्वतः ॥ ७० ॥
प्रतिवर्षं ह्येकपाशं छिनत्ति नगभूपतिः ।
एकोनवर्षशतकमतीतमधुना पुनः ॥ ७१ ॥
वर्षे शततमे चैकं दिनन्तु परिशेषितम् ।
यदि गौरी न प्रसन्ना श्वः कल्पे शेषपाशकम् ॥ ७२ ॥
छित्त्वा कुण्डे स्वकं देहं भस्मसात्कर्तुमुद्यतः ।
तदन्वस्मिन्नहमपि कुण्डे देहमिमं स्वकम् ॥ ७३ ॥
त्यजामि भर्तृलोकायेत्युवाच पर्वतप्रिया ।
अथ विष्णुर्विधात्राद्यैर्विचार्य कृत्यमुत्तरम् ॥ ७४ ॥
उपतस्थे शिवां गौरीमस्तौपीद्भक्तिनिर्भरः ।
नमस्ते गौरि शर्वाणि नमो मङ्गलरूपिणि ॥ ७५ ॥
नमः सर्वजगद्धात्रि शरणागतवत्सले ।
इत्यादि बहुशः स्तुत्वा प्रणतो दण्डवत् पराम् ॥ ७६ ॥

एवं हरेः प्रार्थनया प्रसन्ना सा परेश्वरी ।
आकाशरूपिणी प्राह स्निग्धगम्भीरया गिरा ॥ ७७ ॥
नारायण किमर्थं ते संस्तुताऽहं वदस्व तत् ।
त्वं मेऽग्रज इति पुरा प्राह श्रीत्रिपुरेश्वरी ॥ ७८ ॥
तत्ते स्मृता ह्यवरजा किमर्थमिह तद्वद ।
श्रुत्वा गौरीवचो विष्णुः प्राह सस्मितपूर्वकम् ॥ ७९ ॥
शृणु मद्वचनं गौरि पश्य लोके महद्भयम् ।
उपस्थितं पर्वतस्य तपसाऽतिगरीयसा ॥ ८० ॥
पूरयित्वा पर्वतस्य वाञ्छितं शिववल्लभे ।
रक्ष लोकान् सभुवनान् तपोऽग्निशलभायितान् ॥ ८१ ॥
एतेन लोकाः सेन्द्राद्या भवामः पालिता वयम् ।
पश्य त्वन्मूर्तिरहितं शङ्करं तपसि स्थितम् ॥ ८२ ॥
पुराऽस्माकं जगत्कृत्ये सृष्ट्यादौ विश्रमाय वै ।
ससर्जैव त्रिमूर्तिं सा त्रिपुरा परमेश्वरी ॥ ८३ ॥
यदि त्वमशरीरैव भविष्यसि ममाऽनुजे ।
तदा श्रीत्रिपुरेशान्या शासनाऽलङ्घनं भवेत् ॥ ८४ ॥
इत्येतत्ते प्रकथितं स्मृतिकारणमम्बिके ।
अग्रे यथा त्वं जानासि तथा रक्ष चराऽचरम् ॥ ८५ ॥
श्रुत्वैवं विष्णुवचनं दृष्ट्वा लोके तपोभयम् ।
श्रुत्वाऽऽज्ञां त्रिपुरायाश्च प्रोवाचोमिति वै हरिम् ॥ ८६ ॥
अथ देवा हरिमुखा नत्वा गौरीं महेश्वरीम् ।
आज्ञामादाय स्वं स्थानमभिजग्मुर्गतत्रसाः ॥ ८७ ॥
अथाऽऽकाशवपुर्गौरी महागम्भीरया गिरा ।
प्राह तं शैलकुलपं तपोऽग्निज्वालया वृतम् ॥ ८८ ॥
भो भो शैलकुलेशान प्रसन्नाऽस्मि निरीक्ष माम् ।
यत्तेऽभिलषितं तत्ते दिशामि द्रुतमीरय ॥ ८९ ॥

एवं वचः पर्वतेशः श्रुत्वेषद्ध्यानसंस्थितः ।
किं स्वप्न उत सत्यो वेत्येवं सञ्चिन्त्य च क्षणम् ॥ ९० ॥
उन्मील्य नयनेऽपश्यत् परितः पर्वतेश्वरः ।
दृष्ट्वा न किञ्चित्तत्राऽगः स्वप्नं यावदमन्यत ॥ ९१ ॥
तावद्गौरी पुनः प्राह वचनं प्राङ्निरूपितम् ।
संश्रुत्य गौर्या वचनं स्वरूपायाः शुभोदयम् ॥ ९२ ॥
स हर्षमधिकं प्राप्तो ववन्दे तद्दिशामुखः ।
अथ स्तुत्वा बहुतरं भक्तिनिर्भरिताऽन्तरः ॥ ९३ ॥
हिमाद्रिः स्वं ह्यभिमतं वरं वव्रे महेश्वरीम् ।
गौरि मे सुप्रसन्नाऽसि यदि मे तपसः फलम् ॥ ९४ ॥
अस्ति चेन्मम पुत्रीत्वं क्षेत्रसम्भवतोऽस्तु ते ।
अभिलाषो महानत्र त्वां देवीं शिशुरूपिणीम् ॥ ९५ ॥
वत्सलो लालयिष्यामि मुग्धलीलाऽवलोककः ।
जामातरं महादेवं प्राप्य सम्पूज्य वां ततः ॥ ९६ ॥
सञ्चिन्त्य लोकहितयं सम्भवाम्यतिनिर्वृतः ।
इति मे प्रार्थनां देवि पूरय प्रतियाचिता ॥ ९७ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे कामोपाख्याने ऽष्टाविंशतितमोऽध्यायः ॥ २३६१ ॥



# अथैकोनत्रिंशोऽध्यायः ।

श्रुत्वैवं गिरिवर्यस्य प्रार्थनां सा महेश्वरी ।
प्रोवाचाऽतिशुभां वाचं नभोमात्रस्वरूपिणी ॥ १ ॥
शृणु पर्वतराजन्य यस्त्वया याचितो वरः ।
भविष्यति द्रुतं सर्वं तनुजाऽहं भवामि ते ॥ २ ॥
यन्मया त्वं निषिद्धोऽपि तपस्येवाऽभिसंरतः ।
अनीहन्त्या मम वपुस्तपसा ते सुसाधितम् ॥ ३ ॥
तेन मां तनुजारूपां विस्मृत्य परमां शिवाम् ।
बुद्ध्या प्राकृतया युक्तो भविष्यसि नगाधिप ॥ ४ ॥
इत्युक्त्वा सा महादेवी अन्तर्धानं समागमत् ।
अथाऽद्रिराट् प्रणम्याऽम्बामाजगाम स्वमालयम् ॥ ५ ॥
मेनया प्रियया युक्तः प्राप्येष्टं मुदितोऽभवत् ।
ततः स्वल्पेन कालेन प्रशस्ततरसम्मते ॥ ६ ॥
मेनका हिमशैलस्य सती गर्भमधारयत् ।
निविष्टा सा परा तत्र महायोगमयी शिवा ॥ ७ ॥
विष्ण्वादिदेवकार्यार्थं परायाश्च निदेशतः ।
अथ सा मेनका तत्र गिरिराजगृहोत्तमे ॥ ८ ॥
पराशक्त्यंशयोगेन बभ्राजाऽतितरां तदा ।
ददर्श हिमवान् कान्तां देवतामिव रूपिणीम् ॥ ९॥
उपलक्ष्य स्वाभिमतं मुमोदाऽत्यन्ततो गिरिः ।
सम्पूर्णसर्वाऽवयवां देहगौरवयोगिनीम् ॥ १० ॥
कपोलयोः पाण्डुराऽऽभां स्वेदबिन्दुलसन्मुखाम् ।
श्रान्तामकाण्डतः श्यामस्निग्धचूचुकसुस्तनीम् ॥ ११ ॥

उद्गच्छद्रोमलतिकां विलीनवलिकोदराम् ।
सुगूढजघनां लीलाविलासेष्वलसप्रियाम् ॥ १२ ॥
समालोक्य जहौ तापं मानसं पर्वतेश्वरः ।
यदा गौरी मेनकाया गर्भभूता बभौ शिवा ॥ १३ ॥
तदा प्रभृति शैलेन्द्रविषयेषु शुभोदयः ।
वृक्षाः पुष्पफलाऽऽक्रान्ताः पुष्पाणि च फलानि च ॥ १४ ॥
निविडानि रसैर्गन्धैः पक्षिणः शिववाशिताः ।
मारुतो मन्दगमनो हितस्पर्शश्च प्राणिनाम् ॥ १५ ॥
द्यौः शुभ्राऽभ्रसमाकीर्णा मेघाः सौरभवर्षिणः ।
दिनेशो निर्मलकरो दिशो विमलदर्शनाः ॥ १६ ॥
रात्रिस्तारेन्दुशोभाढ्या जनाः संहृष्टमानसाः ।
एवंविधानि चिह्नानि सम्भूतान्यभितस्तदा ॥ १७ ॥
एवं चिह्नानि संवीक्ष्य गौर्याविर्भावमद्रिराट् ।
मेनेऽतिहर्षसंयुक्तस्तं कालमांबिकाङ्कितम् ॥ १८ ॥
अथ पर्वतराजन्यकान्ता सर्वशुभोदये ।
सुषुवे कन्यकां काले गौरीं शङ्करवल्लभाम् ॥ १९ ॥
तां त्रिनेत्रां चन्द्रचूडां चतुर्बाहुविराजिताम् ।
खड्गं खेटं मुद्गरञ्च दधानां तीक्ष्णशूलकम् ॥ २० ॥
मेचकाऽऽभां रक्तवस्त्रां सर्वाऽऽभरणभूषिताम् ।
विलोक्यैवंविधां देवीं भीता शैलेन्द्रवल्लभा ॥ २१ ॥
प्रियं पर्वतराजन्यमाह यन्मेनका भृशम् ।
आगत्य हिमशैलेन्द्रो दृष्ट्वा कन्याञ्च तादृशीम् ॥ २२ ॥
मत्वा गौरीं महेशानीं ननाम भुवि दण्डवत् ।
अथोत्थाय भक्तिभराऽऽक्रान्तः संस्तवमारभत् ॥ २३ ॥
नमो देवि देवेशलोकेशपूज्ये नमो गौरि भक्ताऽऽर्तिसंहारकर्त्रि ।
नमो लोकजालैकहेतुस्वरूपे नमस्ते नमस्ते नमस्ते भवानि ।२४।

पराशक्तिरूपा शिवस्य त्वमेका जगज्जालसूत्रात्मिका सर्वसंस्था ।
त्वमेकाऽक्षराऽर्थैकरूपा विरूपा नमस्ते नमस्ते नमस्ते भवानि ॥२५॥
नतानां भवाब्धौ गभीरेऽतिभीमे स्थितानां समुद्धारणे का त्वदन्या ।
समर्था ततो मां समभ्युद्धराऽऽर्ते नमस्ते नमस्ते नमस्ते भवानि ॥२६॥
अविद्यामहाग्राहवक्त्रे निविष्टं हृषीकाऽर्थवाञ्छामहासर्पदष्टम् ।
विदित्वा विलम्बं न युक्तं कृपार्द्रे नमस्ते नमस्ते नमस्ते भवानि ॥२७॥
चिरात्त्वत्पदं मोचकं दुःखपाशाच्च चाऽन्यन्ममाऽस्तीह दुःखप्रशान्त्यै ।
इति स्वाऽन्तरे निश्चितार्थः सदाऽऽह नमस्ते नमस्ते नमस्ते भवानि ॥२८

स्तुत्वेत्थं हिमशैलेशो नत्वा भूयः कृताञ्जलिः ।
भक्त्युद्रेकघनस्वान्तो गौरीं प्रोवाच शङ्करीम् ॥ २९ ॥
देवीदानीं मयि महारचितोऽनुग्रहस्त्वया ।
कल्पद्रुमाऽऽश्रितानां किं वाञ्छिताऽऽप्तिर्विचित्रिता ॥३०॥
न हि धन्यो मदन्योऽत्र यद्देवी मदपत्यताम् ।
स्वीचक्रे न ममैतस्मादन्यद्भाग्यं सुदुर्लभम् ॥ ३१ ॥
अहं जडात्मा दीनोऽपि लोके देव्यनुकम्पितः ।
महाभाग्यवतां मूर्ध्नि न्यस्तवान् पदमम्बिके ॥ ३२ ॥
अहो भाग्यमहो भाग्यं मदन्यो भाग्यवान्न हि ।
यद्देवीं तनुजारूपां पश्याम्यथ स्वचक्षुषा ॥ ३३ ॥
देवि मे मानसं किञ्चिदस्ति तत्प्रार्थयामि ते ।
बिभेमि देहि देव्याज्ञां शरण्ये भक्तवत्सले ॥ ३४ ॥
श्रुत्वा हिमगिरेर्वाक्यं मधुरं प्राह सा तदा ।
जहि भीतिं शैलराज वद यद्वाञ्छितं तव ॥ ३५ ॥
मद्भक्तेन हि न प्राप्यमिति किञ्चिन्न विद्यते ।
श्रुत्वा प्रणम्य शैलेशो वाक्यमाह कृताञ्जलिः ॥ ३६ ॥
देवि त्वां प्राकृतशिशुरूपां द्रष्टुं समीहितम् ।
शिशुलीलाविलोकेन तुष्यन्ति पितरो भुवि ॥ ३७ ॥

देवतारूपिणीं दृष्ट्वा सा मे प्रीतिर्न वर्धते ।
या पित्रोर्विद्यतेऽपत्ये प्रजालोकप्रपूर्तिदा ॥ ३८ ॥
एषा मे प्रेयसी मेना शिशुं त्वां द्रष्टुमीप्सति ।
कालिका त्वं करालाऽऽभा न ह्येवं रूपमीप्सितम् ॥ ३९ ॥
भव गौरी वर्णतोऽपि भवेन्नामाऽपि सार्थकम् ।
अथ त्वया च यो दत्तः शापस्त्वद्रूपवीक्षणे ॥ ४० ॥
कुरु तत्राऽनुग्रहं मे प्रार्थिताऽसि महेश्वरि ।
एवं हिमाद्रिवचनं श्रुत्वोवाच शिवप्रिया ॥ ४१ ॥
अद्रिराज मया दत्तः शापस्ते प्रीतिकारणम् ।
मद्रूपाऽविस्मृतौ न स्यादपत्यप्रीतिरीप्सिता ॥ ४२ ॥
किन्तु कालेनाऽऽत्मरूपं दर्शयामि महोदयम् ।
इत्युक्त्वा निजरूपं तत् सञ्जहार महेश्वरी ॥ ४३ ॥
कृत्वा रूपं शिशुरिव रुरोद पर्वताऽऽत्मजा ।
श्रुत्वा तद्रुदितं देव्या पर्वतः प्रियया सह ॥ ४४ ॥
विसस्माराऽखिलं तच्च कन्यां जातामामन्यत ।
प्रसूतिपीडितेवाऽऽसीन्मेनका मोहिता सती ॥ ४५ ॥
अथ तत्र जनाः श्रुत्वा रुदितं राजवेश्मनि ।
अभ्याऽऽजग्मुर्हृष्टतरं पृच्छन्तः किमभूदिति ॥ ४६ ॥
कन्याप्रसूतिं संश्रुत्य स्त्रियः सर्वाः समागताः ।
ददृशुः सूतिकाऽऽगारे कोटिसूर्यसमद्युतिम् ॥ ४७ ॥
नूतनस्वर्णवर्णाभां पद्मपत्राऽऽयतेक्षणाम् ।
पूर्णचन्द्राननां रक्तपाणिपादतलान्विताम् ॥ ४८ ॥
समानदेहविन्यासां चित्राऽऽलिखितसुन्दरीम् ।
कन्यामद्भुतरूपां तां जहर्षुः सर्वतो जनाः ॥ ४९ ॥
तदन्तरे समागत्य धात्री कन्यां समाददे ।
पर्वतेन्द्रस्तदा तीर्थं संस्पृश्य विप्रवद्धुतम् ॥ ५० ॥

धेनूनामयुतं तद्वद्दशाऽयुतसुवर्णकम् ।
प्राऽयच्छद्विप्रमुख्येभ्यो जातकञ्चाऽकरोत्तदा ॥ ५१ ॥
उत्सवश्च महानासीद्धिमशैलपुरे तदा ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खात् पतत् ॥ ५२ ॥
तदाऽगराजस्य गृहे सम्मर्दः सुमहानभूत् ।
ब्राह्मणानां गायकानां नर्तकानाञ्च वन्दिनाम् ॥ ५३ ॥
याचकानां शिल्पिनाञ्च जल्पघोषश्च सम्बभौ ।
अथ काले विप्रमुख्यैरगेशः स्वतनूद्भवाम् ॥ ५४ ॥
नाम कृत्वा संस्कुरुत नाम चक्रे पुरोहितः ।
स्वर्णवद्गौरवर्णेयं यस्मात् कन्या तवाऽचल ॥ ५५ ॥
ततो गौरीति विख्याता भवत्विह महीतले ।
एवं हिमाचलः कन्यां प्राप्य गौरीं महेश्वरीम् ॥ ५६ ॥
मुमोद सर्वर्द्धियुतः कन्यालीलां विलोकयन् ।
एवं शैलेन्द्रभवने वव्धे लीलयाऽन्विता ॥ ५७ ॥
आरूढयौवना गौरी बभूव स्वल्पकालतः ।
हिमाद्रिस्तां विलोक्य स्वां कन्यामारूढयौवनाम् ॥ ५८ ॥
अचिन्तयत् पतिं तस्या अनुरूपगुणाऽन्वितम् ।
गर्गं मुनीन्द्रं सङ्गम्य नत्वा पप्रच्छ पर्वतः ॥ ५९ ॥
महर्षे मम कन्येयं पतिं कं समुपैष्यति ।
वद ते न ह्यविदितं भविष्यं भूतमप्युत ॥ ६० ॥
श्रुत्वेत्थं हिमशैलस्य वाक्यं गर्गो महामुनिः ।
ध्यात्वा क्षणं विदित्वा तत् प्राह संहृष्टमानसः ॥ ६१ ॥
नत्वा तां परमां गौरीं सम्बोध्याऽगकुलेश्वरम् ।
शृणु शैलेश कन्यायास्तव वृत्तं महाऽद्भुतम् ॥ ६२ ॥
भवानी तव कन्येयं तपसा तेऽभिराधिता ।
अस्याः पतिः शिवो नाऽन्यः सर्वदेवप्रपूजितः ॥ ६३ ॥

त्वमेनां न विजानासि तस्याः शापेन मोहितः ।
सस्मार गौरीं परमां गर्गवाक्येन शैलराट् ॥ ६४ ॥
कदाचिदथ देवर्षिर्नारदो भक्तशेखरः ।
तन्माहात्म्यं विजिज्ञासुः पर्वतेन्द्रगृहं ययौ ॥ ६५ ॥
दृष्ट्वा देवर्षिमायान्तं हिमाद्रिः सहसोत्थितः ।
अभिगम्य मुनीन्द्रं तमामनाद्यैरपूजयत् ॥ ६६ ॥
पूजितः प्राह देवर्षिर्हिमाङ्कं स्मितपूर्वकम् ।
पर्वतेन्द्र तनूजा ते सम्प्राप्तोऽहमवेक्षितुम् ॥ ६७ ॥
तां मे प्रदर्शय क्षिप्रं ततो यास्यामि वै दिवम् ।
श्रुत्वेत्थं नारदवचः कन्यामानीय सत्वरम् ॥ ६८ ॥
वत्से नमस्कुरु मुनिमित्युवाच कुमारिकाम् ।
अथ गौरी यथाऽऽगत्य नमश्चक्रे मुनीश्वरम् ॥ ६९ ॥
प्रणमन्तीं परां गौरीं दृष्ट्वा देवर्षिसत्तमः ।
सञ्ज्ञापयन् देवगुह्यं मनसा प्रणनाम ताम् ॥ ७० ॥
दृष्ट्वा तां यौवनाऽऽरूढामुवाच विधिनन्दनः ।
अगेश दिष्ट्या तेऽपत्यं सम्प्राप्तं चिरकालतः ॥ ७१ ॥
नन्वियं करपीडायाः कालमालम्ब्य संस्थिता ।
काले कन्यां सुपात्रे यो न प्रयच्छति दुर्मतिः ॥ ७२ ॥
तस्य पूर्वतराः सर्वे गच्छेयुर्दुर्गतिं गतिम् ।
वद पर्वतराजन्य कस्मै त्वं दातुमुद्यतः ॥ ७३ ॥
कन्या पात्रे नियुक्ता तु महासौख्यप्रदायिनी ।
श्रुत्वर्षिवाक्यमगराट् नत्वा प्राह कृताञ्जलिः ॥ ७४ ॥
देवर्षे त्वं समस्तस्य लोकस्य प्रसमीक्षकः ।
न हि त्वया ह्यविदितं शुभमन्यद्भवेत् क्वचित् ॥ ७५ ॥
अहं गर्गस्य वचसा वरं मन्ये त्रिलोचनम् ।
त्वं कथं मन्यसे तन्मे शंस शिष्यस्य पृच्छतः ॥ ७६ ॥

निशम्य पर्वतवचो जगाद सुरतापसः ।
शृणु पर्वतराजन्य शिवो यस्ते वरो मतः ॥ ७७ ॥
नाऽहं मन्ये कुमार्यास्ते तुल्यं तं पाणिपीडने ।
इयं सर्वेषु लोकेषु रत्नभूता कुमारिका ॥ ७८ ॥
समस्तगुणशोभाऽऽढ्यं पतिमर्हति तादृशम् ।
शिवे सर्वेऽशिवगुणाः सदोन्मत्तविचेष्टितः ॥ ७९ ॥
श्मशानानिलयो भूतसङ्घसेव्योऽहिभूषणः ।
चर्मवासा विरूपाक्षो विषाऽऽहारो भयङ्करः ॥ ८० ॥
पुरा देवी तस्य पत्नी गौरी तमनवस्थितम् ।
दृष्ट्वा लोपं गतवती पुनर्दाक्षायणी तथा ॥ ८१ ॥
सद्भिर्विनिन्दितं वीक्ष्य भस्मीभूता महाऽध्वरे ।
तस्मादेनां शिवो नाऽर्हः पत्नीं सर्वगुणाऽऽलयाम् ॥ ८२ ॥
शृणु प्रालेयशैलेश कन्यायाः सदृशं पतिम् ।
माधवः पुण्डरीकाक्षो वैकुण्ठनिलयः पुमान् ॥ ८३ ॥
एनामर्हति पत्नीत्वे समानेतुं सदृग्गुणैः ।
इयञ्चाऽपि पतिं विष्णुं गुणैरर्हति सम्मतैः ॥ ८४ ॥
अहो पर्वत ते भाग्यं विष्णुर्जामातृतां व्रजेत् ।
यं गुणैर्मोहिता लक्ष्मीर्दासीवत् सेवतेऽन्वहम् ॥ ८५ ॥
मन्यसे यदि मद्वाक्यं वृणोमि हरिमीश्वरम् ।
इत्याकर्ण्य नारदोक्तिं पर्वतेशोऽतिविस्मृतः ॥ ८६ ॥
शापाद्गौर्याः प्रियां शम्भोस्तपसा ऽऽराधितां पुरा ।
प्राह देवमुनिं शैलो वरं निश्चित्य माधवम् ॥ ८७ ॥
धन्योऽहं यत्त्वया कन्या मम पात्रे नियोजिता ।
सत्यं शिवो नाऽर्हति मे कन्यामशिवलक्षणः ॥ ८८ ॥
व्रजाऽद्यैव यथा कन्यां समियान्माधवो द्रुतम् ।
तथा विधेहि सन्धानं माभूत् कालस्य पर्ययः ॥ ८९ ॥

समुत्पतन्ति प्रत्यूहाः शुभोदर्केषु कर्मसु ।
तस्मादविहतं यद्वद्भवेत्तद्वद्व समाचर ॥ ९० ॥
श्रुत्वेत्थं पर्वतवचो नारदः प्रहसन् गिरिम् ।
साधयामि तवाऽभीष्टमित्युक्त्वा प्रययौ दिवम् ॥ ९१ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने एकोनत्रिंशत्तमो-
ऽध्यायः ॥ २४५२ ॥



# अथ त्रिंशोऽध्यायः ।

अधिगत्य पितुर्गौरी व्यवसायमसम्मतम् ।
स्वरूपगोपनोद्युक्ता लीलाश्वाऽपि वितन्वती ॥ १ ॥
जगाम सखिभिः सार्धं वनं चतसृभिः शुभम् ।
हिमशैलतटप्रान्तसंस्थितं घोरसन्निभम् ॥ २ ॥
झिल्लीझङ्कारभरितं निकुञ्जततिमण्डितम् ।
नानातरुलताचित्रं विहगैश्च सुशोभितम् ॥ ३ ॥
दिवाकरकरैर्हीनं शीतलोद्देशसुन्दरम् ।
क्वचिद्धिमैर्निपतितैः पाण्डुरं तृणवर्जितम् ॥ ४ ॥
रजताऽद्रिनिभं शृङ्गं दूरतः प्रविराजते ।
क्वचिन्निर्झरतो नीरं योगिमानसनिर्मलम् ॥ ५ ॥
वहत्यत्यच्छपाषाणफलकाऽवलिभूमिषु ।
अत्युच्चविटपाऽऽसक्तघनराजिविराजितम् ॥ ६ ॥
नृत्यद्बर्हिगणाऽऽकीर्णं परभृत्पञ्चमोदयम् ।
तत्र देवनदीं दिव्यामासाद्य गिरिकन्यका ॥ ७ ॥
वयस्याभिः परिवृता निषसादोपकूलके ।
श्रान्तां तां समुपालक्ष्य गौरीं काचित् सखी तदा ॥ ८ ॥
द्रुतं गङ्गाम्बुना पादौ सम्यक् समवनेजत ।
कृतसख्यूरूपधानां सुप्तां तां पर्वताऽऽत्मजाम् ॥ ९ ॥
तृणराजोरुवृन्तेन संवीजयत काचन ।
अन्या निजोरुयुगले कौशेयस्तोमकोमले ॥ १० ॥
आरोप्य तत्पादयुगं संवाहनपराऽभवत् ।
एवं मुहूर्तं विश्रम्य समुत्थायाऽऽलिभिः सह ॥ ११ ॥

स्नात्वा सुरसरित्तोये कन्दरं तीरसंश्रयम् ।
समासाद्य तत्र रात्रौ सैकतीं त्रिपुरातनुम् ॥ १२ ॥
कामेश्वराऽङ्कनिलयां गन्धपुष्पफलादिभिः ।
समाराध्य विधानेन महद्भिरुपचारकैः ॥ १३ ॥
स्तुत्वा स्तुतिगणैर्देवीं वैदिकैस्तान्त्रिकैरपि ।
वार्क्षैर्विशेषतोऽभ्यर्च्य गानैर्नृत्यैः परिक्रमैः ॥ १४ ॥
एवं तस्याः पूजयन्त्याश्चाऽत्यगात् सा निशीथिनी ।
कल्पे कालेऽभिसंवृत्ते चक्रे गौरी शुभं स्तवम् ॥ १५ ॥
परापदाम्बुजप्रीतिरसमाद्यच्छुभाऽन्तरा ।
अद्भुतं ज्ञानकलिकास्तोत्रं समुपचक्रमे ॥ १६ ॥
शिवे देवि संवित्सुधासागराऽऽत्म-
स्वरूपाऽसि सर्वान्तराऽऽत्मैकरूपा ।
न किञ्चिद्विना त्वत्कलामस्ति लोके
ततः सत्स्वरूपाऽसि सत्येऽप्यसत्ये ॥ १७ ॥
असत्यं पुनः सत्यमन्ये द्विरूपं
द्वयाऽतीतमेके जगुः सर्वमेतत् ।
न ते तां विदुर्मायया मोहितास्ते
चिदानन्दरूपा त्वमेवाऽसि सर्वम् ॥ १८ ॥
क्षणानां क्रमैर्भिन्नरूपां धराद्यै-
र्मितामाहुरेके तमोमात्ररूपाम् ।
तमोदीप्तिसंभिन्नरूपाश्च शान्त-
स्वरूपां महेशीं विदुस्त्वां न तेऽज्ञाः ॥ १९ ॥
शिवादिक्षितिप्रान्ततत्त्वावलिर्या
विचित्रा यदीये शरीरे विभाति ।
पटे चित्रकल्पा जले सेन्दुतारा-
नभोवत्परा सा त्वमेवाऽसि सर्वा ॥ २० ॥

अभिन्नं विभिन्नं बहिर्वाऽन्तरे वा
विभाति प्रकाशस्तमो वाऽपि सर्वम् ।
ऋते त्वां चितिं येन नो भाति किञ्चि-
त्ततस्त्वं समस्तं न किञ्चित्त्वदन्यत् ॥ २१ ॥
निरुध्याऽन्तरङ्गं विलयाऽक्षसङ्गं
परित्यज्य सर्वत्र कामादिभावम् ।
स्थितानां महायोगिनां चित्तभूमौ
चिदानन्दरूपा त्वमेका विभासि ॥ २२ ॥
तथाऽन्ये मनः सेन्द्रियं सञ्चरच्चा-
ऽप्यसंयम्य तन्मार्गके जागरूकाः ।
स्वसंवित्सुधाऽऽदर्शदेहे स्फुरन्तं
महायोगिनाथाः प्रपश्यन्ति सर्वम् ॥ २३ ॥
निरुक्ते महासारमार्गेऽतिसूक्ष्मे
गतिं ये न विन्दन्ति मूढस्वभावाः ।
जनान् तान् समुद्धर्तुमक्षाऽन्नगम्यं
बहिःस्थूलरूपं विभिन्नं विभर्षि ॥ २४ ॥
तदाराधनेऽनेकमार्गान् विचित्रान्
विधायाऽथ मार्गेण केनाऽपि यान्तम् ।
नदीवारि सिन्धुर्यथा स्वीकरोति
प्रदाय स्वभावं स्वात्मीकरोपि ॥ २५ ॥
तथा तासु मूर्तिष्वनेकासु मुख्या
धनुर्बाणपाशाऽङ्कुशाऽऽढ्यैव मूर्तिः ।
शरीरेषु मूर्धेव ये तां भजेयु-
र्जनास्त्रैपुरीं मूर्तिमत्युत्तमास्ते ॥ २६ ॥
जनान् दुःखसिन्धोः समुद्धर्तुकामा
पथस्ताननेकान् प्रदिश्य प्रकृष्टान् ।

दयार्द्रस्वभावेति विख्यातकीर्ति-
स्त्वमेकैव पूज्या पराशक्तिरूपा ॥ २७ ॥
सदा ते पदाब्जे मनःषट्पदो मे
पिबन् तद्रसं निर्वृतः संस्थितोऽस्तु ।
इति प्रार्थनां मे निशम्याऽऽशु मात-
र्विधेहि स्वदृष्टिं दयार्द्रामपीषत् ॥ २८ ॥
इति संस्तुत्य सा गौरी त्रिपुरां परमेश्वरीम् ।
स्तोत्रेण ज्ञानकलिकाऽऽख्येन ध्यानं समास्थिता ॥ २९ ॥
अथ सा ध्येयमात्राऽऽत्मरूपिणी समजायत ।
यदा तदा सा त्रिपुरा प्रत्यक्षीभवदम्बिका ॥ ३० ॥
चक्रराजरथाऽऽरूढा सर्वाऽऽभरणभूषिता ।
सा चाऽमररमावाणीसव्यदक्षिणसेविता ॥ ३१ ॥
पाशाऽङ्कुशधनुर्बाणलसद्बाहुचतुष्टया ।
बन्धूककुसुमाऽऽभा सा चन्द्रचूडा त्रिलोचना ॥३२॥
कामेश्वराऽङ्कनिलया रत्नकौशेयवासिनी ।
ददर्श गौरीं ध्यायन्तीं ध्येयमात्राऽवशेषिणीम् ॥ ३३ ॥
परिवारस्वानुचरकोलाहलशतैरपि ।
अप्रबुद्धां समालोक्य गौरीं तां त्रिपुराऽम्बिका ॥ ३४ ॥
चित्ताऽऽकर्षिणिकां शक्तिमवलोकयदम्बिका ।
अथ सा परमेशान्या विदित्वा वीक्षणाऽशयम् ॥ ३५ ॥
चकर्ष गौरी चित्तं तद्यद्ध्येये लीनमास्थितम् ।
ध्येयनिर्गतचित्ता सा किमेतदिति विस्मिता ॥ ३६ ॥
प्रेक्षाञ्चक्रे बहिर्दृष्टिमुन्मील्य नगकन्यका ।
दृष्ट्वा पराम्बिकां गौरी प्रणनामाऽतिहर्षिता ॥ ३७ ॥
बद्धाञ्जलिपुटा देवीं प्रवक्तुमुपचक्रमे ।
देवि संशाधि मां भृत्यां किं विधास्यामि साम्प्रतम् ॥३८॥

अग्रजः कमलाक्षो मां देहेन समयोजयत्।
तत् त्वदाज्ञामहं मूर्ध्नाऽऽवहन्ती देहमास्थिता ॥ ३९ ॥
त्वद्वितीर्णश्च मे भर्ता तपस्येवाऽभिसंरतः।
तदाज्ञापय यत् कार्यं मया तत् परमेश्वरि ॥ ४० ॥
निशम्य प्रार्थनां गौर्याः प्राह सा परमेश्वरी।
शृणु पार्वति यत्किञ्चिन्नाऽस्ति तेऽविदितं क्वचित् ॥४१॥
मदंशभूता यस्मात्त्वं न हास्यति तवेप्सितम्।
तपसा निरतो देवः शिवस्त्वां परिणेष्यति ॥ ४२ ॥
कुमारो भविता शीघ्रं सर्वलोकैकनन्दनः।
त्वयाऽहं संस्तुता येन स्तोत्रेण नगनन्दिनि ॥ ४३ ॥
यस्मात्तच्छाक्तविज्ञानगर्भितं पठतां नृणाम्।
ज्ञानदं ज्ञानकलिकास्तोत्रमित्यभिविश्रुतम् ॥ ४४ ॥
तस्मादस्तु मत्प्रसादात् प्रीता स्यां पठतां नृणाम्।
इति गौरीं समाभाष्य जगामाऽन्तर्द्धिमम्बिका ॥ ४५ ॥
अथ गौरी प्रणम्याऽम्बां स्नात्वा सुरसरिद्वरे।
पुनः सम्पूज्य तां मूर्तिं विसृज्य सलिले ततः ॥ ४६ ॥
भुक्त्वा प्रसादं सखिभिः सह पर्वतनन्दिनी।
वनस्य शोभां प्रेक्षन्ती सुशीतलशिलातले ॥ ४७ ॥
शयाना पर्णशयने शृण्वन्ती सखिभाषितम्।
तत्र काचित् सखी प्राह गौरीं प्रति तदा वचः ॥ ४८ ॥
शृणु गौरि त्वया चैतदविमृश्य कृतं ननु।
पितरौ सम्परित्यज्य वृद्धौ त्वद्विरहाऽऽतुरौ ॥ ४९ ॥
वनेऽस्माभिर्महाघोरे समायाताऽसि तन्न सत्।
त्वां विना तौ महादुःखदावाग्निमभिसङ्गतौ ॥ ५० ॥
जीवितं जहीतः सत्यं शलभाविव पावकम्।
श्रुत्वैवं सखिवाक्यं सा गूहन्ती स्वस्य वैभवम् ॥ ५१ ॥

पित्रोर्वियोगतो दीना रुदन्ती प्राह तां सखीम् ।
अवेहि सखि मद्वाक्यमहं पूर्वं पतिं शिवम् ॥ ५२ ॥
वृताऽस्मि मनसा तन्मे पित्रा मोघं कृतं ततः ।
युष्माभिरागता साकं वनमेतद्भयङ्करम् ॥ ५३ ॥
तौ रक्षतु परादेवी या मया पूजिता शिवा ।
एवमादिबहूक्त्वा सा निद्रामभिसमागता ॥ ५४ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने त्रिंशत्तमोऽध्यायः ॥ २५०६ ॥



# अथैकत्रिंशोऽध्यायः ।

यदा गौरी वनं याता ततः पश्चान्महीधरः ।
वनाद्गृहान्तरं प्राप्तस्तनूजादर्शनोत्सुकः ॥ १ ॥
आयान्तं सम्मुखे याति प्रत्यहं तं तनूद्भवा ।
अनागतां तद्दिने तां चिन्तयामास भूधरः ॥ २ ॥
नूनं नाऽऽयाति सा कस्मात्सम्मुखेऽद्य ममाऽऽत्मजा ।
गता क्वचिद्वा शारीरपीडिता वा भवेत् क्वचित् ॥ ३ ॥
अथ वा मयि रुष्टा स्यान्न रुष्टा मयि सा क्वचित् ।
किञ्चिदत्र निमित्तं स्यादिति चिन्ताऽऽकुलो नगः ॥ ४ ॥
प्रविश्याऽन्तर्गृहं मेनां प्रियां स समपृच्छत ।
कुत्राऽऽत्मजेति सा पृष्टा प्रब्रवीत् पतिमद्रिपम् ॥ ५ ॥
सखीभिः सहिता याता क्वचित् क्रीडापराऽऽत्मजा ।
स्यात् सखीनां गृहे वाऽपि वाटिकायामथाऽपि वा ॥ ६ ॥
तामानेतुं प्रेषयामि धात्रीमित्यब्रवीत् प्रिया ।
प्रेषिताऽपि तया धात्री विचित्याऽऽलिगृहाणि च ॥ ७ ॥
वाटिकां पुनरभ्येत्य न क्वचित् सेति साऽब्रवीत् ।
नगः श्रुत्वा वचो धात्र्याः शोकसंविग्नमानसः ॥ ८ ॥
हा हतोऽस्मीति निश्वस्य तां विचेतुं बहिर्ययौ ।
अनुजीविभिः सार्धं विचिन्वन् तत्र तत्र हा ॥ ९ ॥
शोकाऽन्धः प्रस्खलन् भूयो मार्गयाणः समन्ततः ।
मृगयित्वा पुरे तस्मिन् गृहाणि च वनानि च ॥ १० ॥
समागता गृहे स्यादित्येवं भूयो गृहं ययौ ।
तत्राऽप्यनुपलभ्यैनां विललाप महीधरः ॥ ११ ॥

हा कन्ये कुत्र याता त्वं संहृता वाऽपि केनचित् ।
हृता वा भक्षिता वा त्वं रक्षोभिर्वा वृकादिभिः ॥ १२ ॥
न मां वृद्धं प्रियं तातं गता हित्वा कदाऽपि सा ।
कश्चिन्न हन्ता तस्या वै गुणैः स्वीयैः शुभोदयैः ॥ १३ ॥
वशीकृत्य स्थिता सा हि सद्रिपूनपि सर्वतः ।
तां विनाऽहं क्षणमपि जीवितुं नोत्सहे क्वचित् ॥ १४ ॥
शस्त्रेण कालकूटेन तथोद्बन्धेन केन वा ।
अग्निना वाऽपि हास्यामि प्राणान्नाऽस्त्यत्र संशयः ॥ १५ ॥
अहो मृषोक्तं भवति दैवतानामपि क्वचित् ।
यदेनां प्राह दैवज्ञो मम मानप्रवर्द्धिनीम् ॥ १६ ॥
अस्या भर्ता सर्वसेव्यः सर्वज्ञः पुरुषोत्तमः ।
स ते कीर्तिं सर्वलोके प्रकृष्टां प्रविधास्यति ॥ १७ ॥
इत्यादिवचसां तेषां मृषात्वं न कथं भवेत् ।
इत्येवं विलपन् शैलः पपात भुवि मूर्च्छितः ॥ १८ ॥
अथ तं तादृशं वीक्ष्य नृपं मन्त्रिपुरोगमाः ।
उत्थाप्याऽश्वासयाञ्चक्रुस्समाधानवचोगणैः ॥ १९ ॥
नृपते मा त्यज धृतिमापत्सु धृतिमुत्तमाम् ।
न त्यजन्ति महात्मानो धृतिराप×× मतः ॥ २० ॥
आपत्सु धैर्यत्यागं वै प्राहुः कापुरुषव्रतम् ।
तस्माद्धैर्यं समालम्ब्य यत बुद्ध्यनुसारतः ॥ २१ ॥
एवं प्रबोधितोऽमात्यैरुत्थाय मन्त्रिभिः सह ।
यावदन्वेषणोद्युक्तस्तावच्चारः समाययौ ॥ २२ ॥
वर्द्धयित्वा शैलराजं प्रणतः प्राह वै वचः ।
महाराज वयं दिक्षु तां मार्गितुमभिद्रुताः ॥ २३ ॥
तत्र प्रागुत्तरस्यां वै महारण्यप्रवेशिनी ।
अस्त्येकपदिका याता तयाऽरण्यं कुमारिका ॥ २४ ॥

तत्पदाऽङ्कमुपालक्ष्य जानीमो वयमद्रिप।
अन्यासाञ्च चतसृणां लक्षितानि पदान्यपि ॥ २५ ॥
नगरोपचतस्त्रस्ताः कन्या न सन्ति कुत्रचित्।
दारिकायास्तव विभो प्रेयस्योऽतितरां हिताः ॥ २६ ॥
तथैकपद्यया वनं गताश्चाराः सहस्रशः।
मार्गितुं राजपुत्रीं तां सर्वतो मार्गकोविदाः ॥ २७ ॥
तत्सन्देशहरश्चाहं सम्प्राप्तस्त्वत्पदाऽन्तिकम्।
प्राप्यैवं चारवचनं मुमूर्षुरिव सद्रसम् ॥ २८ ॥
हारं मणिमयं तस्मै सम्प्रहृष्टो ददौ द्रुतम्।
अथ द्रुततरं शैलः प्रययौ तेन वर्त्मना ॥ २९ ॥
चारप्रदिष्टेन वनं गहनं भीमसन्निभम्।
वृक्षैर्गुल्मैर्लताभिश्च महासालैर्भयानकैः ॥ ३० ॥
निचितं झिल्लिकारावैर्झङ्कृतं भीतिवर्धनम्।
समालोक्य शैलराजः पर्यतप्यत दुःखितः ॥ ३१ ॥
अहो कष्टमिदं दुर्गं वनं सा मम कन्यका।
भीरुः कथं प्रविष्टा स्यात् सुकुमारशरीरिणी ॥ ३२ ॥
अयस्कल्पैः सुनिशितैः कण्टकैर्वर्त्म सञ्चितम्।
कथं सा मृदुपादाभ्यां संयाता सखिभिः सह ॥ ३३ ॥
मया कदाचिदपि नो रोषिता क्काऽपि तत् कुतः।
वनं प्रविष्टा सखिभिः केन वा हेतुना भवेत् ॥ ३४ ॥
एवम्भूते घोरतमे श्वापदैर्मांसभोजनैः।
समाकीर्णे कथं जीवेद्भयेनैव मृता भवेत् ॥ ३५ ॥
श्वापदैर्भक्षिता वा स्यात् दष्टा स्याद्वाऽपि पन्नगैः।
व्यापादिता वा भल्लूकैर्हृता वा वनचारिभिः ॥ ३६ ॥
नष्टा सा सर्वथैवाऽद्य न तां पश्याम्यहं पुनः।
इत्येवं विलपन् भूयः स्खलंश्चाऽपि पदे पदे ॥ ३७ ॥

आतपैरभितप्ताऽङ्गः पतितोऽभून्महीतले ।
अथाऽनुयायिभिः शीघ्रमुत्थाप्य तरुमूलतः ॥ ३८ ॥
निवेशितः शीततोयैरभिषिक्तश्च जीवितः ।
उपलभ्य ततः सञ्ज्ञामुन्मील्य नयने गिरिः ॥ ३९ ॥
शोकसंविग्नहृदयः कन्यामेवाऽनुशोचत ।
ततः क्षणेन सम्प्राप्तश्चारः पर्वतसन्निधिम् ॥ ४० ॥
वर्धयित्वा प्रणम्याऽह हर्षयन् पर्वताऽधिपम् ।
पर्वतेश्वर कन्या ते इतः क्रोशचतुष्टये ॥ ४१ ॥
चारैरासादिता देवनदीतीरे सखीवृता ।
प्रसुप्ता तत्र तां सर्वे चारा रक्षन्ति सर्वतः ॥ ४२ ॥
अहं विज्ञप्तुमायातः स्वामिपादसमीपतः ।
द्रष्टुमर्हसि तां शीघ्रं गौरीं हृदयनन्दिनीम् ॥ ४३ ॥
श्रुत्वा चारस्य वचनममृतस्यन्दिपेशलम् ।
उत्थितः सहसा देहः प्राणानिव प्रसङ्गतः ॥ ४४ ॥
ययौ द्रुतं वनं चारदर्शितेनैव वर्त्मना ।
स गत्वा ददृशे कन्यां सुप्तां सखिगणैः सह ॥ ४५ ॥
उत्थाप्याङ्कं समारोप्य मूर्ध्न्युपाघ्राय शैलराट् ।
आनन्दाऽश्रूणि मुञ्चानः कन्यां स्वां पर्यपृच्छत ॥ ४६ ॥
वत्से केन निमित्तेन वनमेतत् समागता ।
नाऽपराद्धं मया क्वाऽपि त्यक्तोऽहं केन हेतुना ॥ ४७ ॥
माता ते त्वां विना सद्यो जीविता स्यात् कथञ्चन ।
वद त्वमिह सम्प्राप्ता हेतुना केन तद्द्रुतम् ॥ ४८ ॥
एवं पितुः समाकर्ण्य शोकोद्गारयुतं वचः ।
प्राकृतं भावमाश्रित्य मोहयन्ती समागतान् ॥ ४९ ॥
तात सत्यं शृणु वचः प्रब्रवीमि तवाऽग्रतः ।
मया त्रिलोचनः शम्भुर्मनसा संवृतः पतिः ॥ ५० ॥

त्वया तदन्यथयितं देवर्षेर्वचनान्ननु ।
तस्माद्वनं सङ्गताऽस्मि प्राणानुत्स्रष्टुमुद्यता ॥ ५१ ॥
न हि पतिं वृणे कृष्णं भ्रातरं भगिनी इव ।
यदि दास्यसि मां तात शम्भवे सत्यतो वद ॥ ५२ ॥
तदागच्छामि नगरे वने नो चेद्वसाम्यहम् ।
इत्युक्त्वा समुपाश्लिष्य पितरं सा रुरोद ह ॥ ५३ ॥
अयं शैलपतिः कन्यां रुदन्तीं दीनमानसः ।
समाश्वास्य तदा प्राह चाऽश्रूणि परिवर्तयन् ॥ ५४ ॥
वत्से त्वं न विजानासि शिवं नाम्ना शिवं ननु ।
अशिवाऽऽकारचारित्रः श्मशानस्थोऽहिभूषणः ॥ ५५ ॥
चर्मवासाः कपालस्रग्भूषितो भूतसेवितः ।
श्वित्रवत्पाण्डुरतनुः क्रोधनश्चाऽव्यवस्थितः ॥ ५६ ॥
पुरा दाक्षायणी तस्य भर्तुर्दुश्चरितैः सती ।
शोकोपहतचित्ता सा भस्मीभूता पितुर्गृहे ॥ ५७ ॥
विष्णुः सर्वगुणोपेतः पीताऽम्बरसुशोभितः ।
वनमालाकौस्तुभाद्यैरलङ्कृततनुः शुभः ॥ ५८ ॥
निसर्गसुगुणैर्लक्ष्मीर्यं वव्रे पतिमुत्तमा ।
स ते योग्यः पतिः वत्से न शिवस्ते सदृग्गुणः ॥ ५९ ॥
श्रुत्वा पितुर्वचः प्राह गौरी रोषाऽरुणेक्षणा ।
तात मे सैव(?) भर्ताऽस्तु शुभो वाऽप्यशुभोऽपि वा ॥ ६० ॥
नाऽन्यं वृणे शिवात् कञ्चिद्भर्तारमपि सद्गुणम् ।
निदानमत्र दिष्टं मे नाऽन्यद्वक्तुं त्वमर्हसि ॥ ६१ ॥
श्रुत्वेत्थं तनुजावाक्यं तद्विश्लेषसुकातरः ।
ओमित्युक्त्वा समादाय कन्यां स्वनगरं ययौ ॥ ६२ ॥
अथ तां पुत्रिकां दातुं शिवायाऽचिन्तयद्गिरिः ।
सस्मार नारदं भूयः पर्वतेन्द्रः सभास्थितः ॥ ६३ ॥

विदित्वा नारदस्तत्र तेजोराशिः समाययौ ।
गिरिस्तं पूजयामास शास्त्रदृष्टेन वर्त्मना ॥ ६४ ॥
स्वीकृत्य तत्सपर्यां स प्राह पर्वतभूपतिम् ।
पर्वतेश स्मृतः किन्ते कारणं तत् प्रचक्ष्व मे ॥ ६५ ॥
मया ते वाञ्छितं यत्तत् साधितं शुभमूर्जितम् ।
जामातृत्वे रमाकान्तः पुरुषः प्रार्थितो मया ॥ ६६ ॥
अङ्गीचकार भगवांस्तव भाग्यवशाच्च नु ।
श्रुत्वेत्थं नारदवचो हिमाद्रिर्भीतमानसः ॥ ६७ ॥
बद्धाञ्जलिः क्षमस्वेति प्रार्थयामास तं मुनिम् ।
मुने हि ते प्रतिश्रुत्य कन्यां दास्यामि विष्णवे ॥ ६८ ॥
इत्यहं वितथीभूतो निजभाग्यविपर्ययात् ।
यदा ते विष्णवे कन्यां दास्यामीति प्रतिश्रुतम् ॥ ६९ ॥
ततः परदिने कन्या मम रुष्टा सखीगणैः ।
प्रविष्टा विपिनं घोरं मृत्युवक्त्रमिव स्थितम् ॥ ७० ॥
आसादिता कथञ्चित् सा समानीता च यत्नतः ।
रमापतिं पतिं नैव सर्वथा साऽभिवाञ्छति ॥ ७१ ॥
प्रमथेशं तु भर्तारं दौर्भाग्यादीहति स्वयम् ।
मया किं तत्र कर्तव्यं दुर्भाग्येन मुनीश्वर ॥ ७२ ॥
अगाधे घोरविपदि मग्नोऽहं सागरे ननु ।
अत्र त्वमेव मां शीघ्रं समुद्धर्तुमितोऽर्हसि ॥ ७३ ॥
पर्वतस्य निगदितं श्रुत्वेत्थं देवतापसः ।
द्रष्टुं गौर्यास्तु माहात्म्यं चुक्रोधाऽतितरां तदा ॥ ७४ ॥
सस्मार पार्षदान् विष्णोर्विजयादींस्तदा मुनिः ।
स्मृतमात्रा तु ते तत्र सम्प्राप्ता विष्णुपार्षदाः ॥ ७५ ॥
प्रोवाच विजयं तत्र नारदो मन्युना ज्वलन् ।
एष शैलकुलाऽङ्गारः स्वामिने मे निजात्मजाम् ॥ ७६ ॥

ददामीति प्रतिश्रुत्य परिभावयितुं हि नः ।
समीहत्यधमस्तस्माद्धध्वैनं तत्तनूद्भवाम् ॥ ७७ ॥
नय शीघ्रं मुररिपुः पाणिमस्याः प्रतीच्छतु ।
श्रुत्वैवं नारदवचो विजयः पार्षदेश्वरः ॥ ७८ ॥
जित्वा पर्वतराजन्यं समरे बन्धयदृढम् ।
अथ सर्वे पर्वतस्य पौरा भीता विचुक्रुशुः ॥ ७९ ॥
हा हेति धावमानाश्च सस्त्रीबालाः सहस्रशः ।
तावत् कन्यां समानेतुं विविशुर्हरिपार्षदाः ॥ ८० ॥
मेना पुत्रीं समादाय पुरोहितमुपागमत् ।
काश्यपः पर्वतगुरुर्दृष्ट्वा नगपतिप्रियाम् ॥ ८१ ॥
हस्ते गृहीत्वा तनुजां त्रातारमभिवाञ्छतीम् ।
रुदन्तीं रक्ष रक्षेति ब्रुवाणां भयविह्वलाम् ॥ ८२ ॥
माभैर्वत्से समायाहीत्युक्त्वा स्वस्य गृहाऽन्तरम् ।
प्रवेश्यतां समाश्वास्य पार्वतीं प्राह काश्यपः ॥ ८३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने एकत्रिंशोऽध्यायः ॥ २५८८ ॥



# अथ द्वात्रिंशोऽध्यायः ।



लीलयाऽलं महादेवि किं रोदिषि भयार्तवत् ।
जानेऽहं न च ते भीतिरस्मान्मोहयितुं हि तत् ॥ १ ॥
ततो मेनां भयार्तां तां प्राह पर्वतराट् प्रियाम् ।
शृणु मेने मोहिताऽसि देव्या संस्मर पूर्वजम् ॥ २ ॥
वृत्तं यत्तपसाऽऽराध्य देवीं प्राप्ताऽसि नन्दिनीम् ।
तामेव शरणं याहि मया सह नगप्रिये ॥ ३ ॥
श्रुत्वा पुरोहितवचः स्मृत्वा कन्यां पराम्बिकाम् ।
प्रणम्य दण्डवद्भूमौ तुष्टाव विविधैः स्तवैः ॥ ४ ॥
लोकानां जनयित्री त्वं सर्वलोकमहश्वरी ।
मत्तनूद्भवत्वं यत्ते नटानां वेषवत्तु तत् ॥ ५ ॥
अहो धन्यतमा लोके मत्तो नाऽन्यो हि विद्यते ।
अनन्तपुण्यैश्चाऽदृश्या सा मे यस्मात्तनूद्भवा ॥ ६ ॥
अथ संस्तुत्य वहुधा काश्यपः प्राह शङ्करीम् ।
मातर्न ते स्तुतिं कर्तुं समर्थोऽह्यहिराडपि ॥ ७ ॥
तस्मात्त्वां किमहं स्तोष्ये प्रसीद परमेश्वरि ।
मातरं त्राहि संत्रस्तां दीनां पर्वतराट्प्रियाम् ॥ ८ ॥
प्रार्थितेत्थं तदा गौरी निजं रूपं समास्थिता ।
कालमेघनिभा सिंहवाहना भूषणोज्ज्वला ॥ ९ ॥
आयुधैर्ज्वलितैर्ज्वालामालापरिवृतैर्युता ।
त्रिनेत्रा स्वर्णवसना वालचन्द्राऽवतंसिनी ॥ १० ॥
निर्जगाम गृहात्तस्मात्समुद्राद्भानुमानिव ।
अथ तां नारदो दृष्ट्वा प्रणम्य विविधैः स्तवैः ॥ ११ ॥

अस्तूयत परां देवीं गौरीं शङ्करवल्लभाम् ।
एतस्मिन्नन्तरे विष्णुपार्षदाः पर्वतेश्वरम् ॥ १२ ॥
बद्ध्वा तस्याऽऽत्मजां गौरीं ग्रहीतुं तत्र चाऽगमन् ।
तान् दृष्ट्वा पार्वती क्रुद्धान् पितरञ्च पराजितम् ॥ १३ ॥
आक्रन्दतश्च तद्भृत्यानीषत्क्रोधारुणाऽभवत् ।
तद्देहादरुणा देवी निर्जगाम भयङ्करी ॥ १४ ॥
ज्वालामुखी कालरात्रिस्त्रिशीर्षा च त्रिलोचना ।
त्रिशूलं करवालञ्च बिभ्रती घोररा विणी ॥ १५ ॥
सा प्रणम्य प्राह गौरीं किं करोमीति सम्मुखे ।
आज्ञापयद्विष्णुगणान् जहीति गिरिजा तदा ॥ १६ ॥
ततो विष्णुगणान् विष्णुसमाकारबलाऽऽयुधान् ।
शलभान् पावक इव नाशयामास साऽरुणा ॥ १७ ॥
करवालत्रिशूलोद्यद्वह्निना भस्मतां गताः ।
अथ तद्वृत्तमाकर्ण्य विष्णुर्मन्युवशङ्गतः ॥ १८ ॥
सुपर्णमधिरुह्याऽऽशु चक्रहस्तोऽभिसंययौ ।
तां ददर्शाऽरुणां देवीं ज्वालावक्त्रां भयङ्करीम् ॥ १९ ॥
सहस्रारं प्रचिक्षेप ज्वालामालापरीवृतम् ।
अथाऽऽयान्तं सहस्रारं कोटिसूर्यसमप्रभम् ॥ २० ॥
कल्पान्ताऽग्निरिवाऽशेषं भस्मीकुर्वाणमम्बरे ।
दृष्ट्वा शूलं प्रचिक्षेप सहस्रारं प्रतीश्वरी ॥ २१ ॥
तच्छूलमरुणाहस्तान्मुक्तं खे क्षणमात्रतः ।
भस्मी चकाराऽग्निरिव तृणं चक्रं सुदर्शनम् ॥ २२ ॥
अथ क्रुद्धो हरिर्भीमां गदामादाय वेगतः ।
अभ्यधावत तां देवीं गत्वा मूर्ध्न्यभिताडयत् ॥ २३ ॥
ताडिता फूत्कृतिं चक्रे ज्वालावक्त्रा हरेः पुरः ।
तन्मुखज्वालया दग्धः सुपर्णः पतगेश्वरः ॥ २४ ॥

विष्णुं समादाय वक्त्रे चिक्षेप ज्वलितेऽरुणा ।
विष्णुं ग्रसन्तीं तां दृष्ट्वा ज्वालावक्त्रां सुरा नराः ॥ २५ ॥
हा हेत्युच्चुक्रुशुस्तत्र यावत् सा श्रीपतिं रुषा ।
देवी निगिरणोद्युक्ता तावज्ज्वालामुखीं द्रुतम् ॥ २६ ॥
गले जग्राह गौरी तां प्रोवाचेषत्स्मयाऽन्विता ।
अलं वत्से साहसेन भ्रातरं मे समुद्गिर ॥ २७ ॥
पालकं जगतो नोचेदुत्सीदेत्त्रिजगद्द्रुतम् ।
तदोद्गीर्णस्तया विष्णुर्मूर्च्छितो ह्यपतत् क्षितौ ॥ २८ ॥
ज्वालाराशिश्च हरिणा सहोद्गीर्णोऽरुणाऽऽख्यया ।
गौरी ज्वालाकुलाऽन्तस्थं हरिं निःसारयद्द्रुतम् ॥ २९ ॥
ववृधे चाऽथ सा ज्वाला तिर्यगूर्ध्वश्च सर्वतः ।
तां दृष्ट्वा लोकसंहर्त्रीं ज्वालामतिभयानकाम् ॥ ३० ॥
ब्रह्मेशाद्याः सुरगणा गौरीं भीताः प्रतुष्टुवुः ।
वेपमाना जगुस्त्राहि त्राहीत्युच्चैर्महेश्वरीम् ॥ ३१ ॥
संस्तुता सा प्रपन्नान् तान् प्राह गम्भीरया गिरा ।
मा बिभ्यत सुरा यूयमभयं वः प्रयाच्छितम् ॥ ३२ ॥
ब्रुवन्तु को वरो मत्तो भवद्भिः प्रार्थितो द्रुतम् ।
इति श्रुत्वा विधिमुखा देवाः प्रोचुर्नगात्मजाम् ॥ ३३ ॥
देवि ज्वालामिमां कालाऽनलज्वालासमां द्रुतम् ।
एधमानां प्रशमय लोकान् रक्ष चराऽचरान् ॥ ३४ ॥
प्रार्थितैवं सुरगणैः सञ्जहार क्षणेन ताम् ।
प्राह देवान् प्रति शिवा देवाः शृणुत मद्वचः ॥ ३५ ॥
एषा ज्वालामुखी देवी मत्क्रोधप्रभवा ननु ।
जगद्भक्षयितुं सद्यः प्रवृत्ता सर्वथा शमम् ॥ ३६ ॥
न शक्या नेतुमधुना तिष्ठत्वत्र नगोत्तमे ।
पूजिता देवमनुजैः प्रीतेष्टान् सम्प्रयच्छतु ॥ ३७ ॥

कल्पान्ते सर्वजगतां भक्षणात्तुष्टिमेष्यति ।
इयं रुद्रस्य संहारशक्तिरस्यास्तु योगतः ॥ ३८ ॥
शिवः सर्वस्य लोकस्य संहारं रचयेत् परम् ।
इत्युक्त्वाऽमृतवर्षिण्या दृष्ट्या विष्णवादिकान् सुरान् ॥३९॥
गणानपि मृतान् विष्णोर्जीवयामास चाऽम्बिका ।
विष्णवादिभिः स्तुता पश्चात् कन्यारूपं समास्थिता ॥४०॥
पितरं मोचयामास पार्षदैर्बन्धनं गतम् ।
दृष्ट्वाऽपि गौर्यास्तद्रूपं महिमानमवेत्य च ॥ ४१ ॥
मायया मोहितो गौर्या विस्मृतस्तत्क्षणेन हि ।
मुक्तं कथञ्चिदात्मानं मत्वा स्वामात्मजां द्रुतम् ॥ ४२ ॥
परिष्वज्य समाघ्राय प्रणम्य विबुधेश्वरान् ।
प्राह बद्धाञ्जलिर्दीनो विष्णुं तं त्रिजगत्पतिम् ॥ ४३ ॥
रमापते मेऽपचितिं क्षमस्व प्रार्थितो मया ।
अहं तुभ्यं ददाम्येव तनुजां नाऽत्र संशयः ॥ ४४ ॥
सा सर्वथा पतिं भर्गं वव्रे तस्मान्मृपोदितम् ।
ममाऽभूदत एतन्मे सर्वथा क्षन्तुमर्हसि ॥ ४५ ॥
एष ते तनुजो ब्रह्मा देवाश्चेमे सुसङ्गताः ।
यदत्र युज्यते तन्मां शाधि ते शरणागतम् ॥ ४६ ॥
श्रुत्वैवं पर्वतवचो विधिः प्रोवाच सस्मयः ।
धन्यस्त्वं पर्वतेशोऽसि यत्ते कन्येयमीदृशी ॥ ४७ ॥
भर्तारं शिवमेवाऽत्र समर्हति महेश्वरम् ।
सोऽप्येनामर्हति शिवः पत्नीं सर्वगुणाऽऽश्रयाम् ॥ ४८ ॥
कथं विष्णुर्भवेद्भर्ता तस्या भ्रातेव संस्थितः ।
योजयामि शिवं सद्यः पतित्वेऽस्या नगोत्तम ॥ ४९ ॥
इत्युक्त्वा समभिव्रज्य शिवं प्राह विधिस्तदा ।
स्तुत्वा प्रणम्य देवेशं शङ्करं लोकशङ्करम् ॥ ५० ॥

महादेवं प्रार्थयामो वयं पर्वतनन्दिनीम् ।
प्रतीच्छ भार्यामात्मीयां कालेऽस्मिन्नेव शोभने ॥ ५१ ॥
नैतद्वचो निषेधाऽर्हं पूर्ववृत्तञ्च संस्मर ।
इति प्रोक्तो जगद्धात्रा ओमित्येवाऽह वै शिवः ॥ ५२ ॥
अथ पर्वतराजन्यं प्राह ब्रह्मा चतुर्मुखः ।
साधितस्ते महेशानः कन्यापाणिग्रहाय वै ॥ ५३ ॥
अस्मिन्नेव शुभे काले कन्यां दातुं त्वमर्हसि ।
वाक्यं विधेः समाकर्ण्य चैतत् प्राह नगेश्वरः ॥ ५४ ॥
ब्रह्मन् न साधितं किञ्चिद्वैवाहिकमनुत्तमम् ।
असम्भृत्य च सम्भारान् अनिमन्त्र्य कुलेश्वरान् ॥ ५५ ॥
कथं विवाह आरभ्यो न किञ्चित् प्रतिभाति मे ।
समाकर्ण्य नगोक्तं तद्विधिस्त्वष्टारमाह्वयत् ॥ ५६ ॥
आहूयाऽऽज्ञापयत्तत्र तं सामग्रीप्रसाधने ।
आज्ञप्तो विधिना त्वष्टा ससृजेऽर्धमुहूर्ततः ॥ ५७ ॥
विवाहशालां वेदींश्च पात्राण्यग्नींश्च सर्वतः ।
वस्त्रभूषणमाल्यानि प्रस्तराऽऽस्तरणानि च ॥ ५८ ॥
अन्नपानादिकं सर्वमहीनं समकल्पयत् ।
प्राह सिद्धं सर्वमिति देवशिल्पिर्विधिं तदा ॥ ५९ ॥
दृष्ट्वा तद्दर्शयामास नगराजाय विश्वसृट् ।
निशम्य हृष्टो हिमवान् प्रणनाम पितामहम् ॥ ६० ॥
अब्रवीद्देवदूतांश्च विमानैः सहितान् द्रुतम् ।
भूभृतान् भूपतीनन्यान्नगवंश्यान् विशेषतः ॥ ६१ ॥
समानयन्त्विति तदा देवदूताः सहस्रशः ।
आदाय सर्वानाजग्मुर्मुहूर्तार्धेन ते द्रुतम् ॥ ६२ ॥
दृष्ट्वा समागतान् सर्वान् पर्वतं प्राह विश्वसृट् ।
नगेश्वराऽऽगताः सर्वे साधितं सर्वसाधनम् ॥ ६३ ॥

सज्जीभव विवाहाय तनुजाञ्च समानय ।
आज्ञप्त एवं शैलेशो गत्वा स्वभवनं द्रुतम् ॥ ६४ ॥
कन्याया मङ्गलस्नानं कारयित्वा यथाविधि ।
काश्यपेन स्वगुरुणा सर्वं वैवाहिकं विधिम् ॥ ६५ ॥
कृत्वा कन्यां समादाय प्रियया सहितो नगः ।
ज्ञातिभिर्ज्ञातिपत्नीभिः संवृतो निर्ययौ गृहात् ॥ ६६ ॥
विवाहशालामाविश्य तस्थौ स सपरिच्छदः ।
अथ ब्रह्मा शिवं तत्र विवाहविधिना तदा ॥ ६७ ॥
योजयामास तत्पश्चात् स्वगणैः परिवारितः ।
विवेश शालां भूतेशः सर्वमङ्गलसंयुताम् ॥ ६८ ॥
तं ददर्श महादेवं विकटं जटिलं कृशम् ।
व्याघ्रचर्माऽशुकधरं नागचर्मोत्तरीयकम् ॥ ६९ ॥
कपालमालाविलसद्गलं पन्नगकुण्डलम् ।
कालसर्पोपवीतञ्च विरूपाक्षं त्रिलोचनम् ॥ ७० ॥
भूतसङ्घैर्विरूपास्यैरुन्मत्ताऽऽचारसङ्कुलैः ।
श्मशाननिलयैर्घोरैर्गणैश्च परितो वृतम् ॥ ७१ ॥
दृष्ट्वा पर्वतराजन्यो विमनाः समजायत ।
दृष्ट्वा विधिर्नगं म्लानमुखं शोकपरिप्लुतम् ॥ ७२ ॥
विज्ञाय मानसं तस्य प्रोवाचाऽगं विधिस्तदा ।
किं नगेश्वर शोकेन सम्प्लुतोऽसि शुभाऽऽगमे ॥ ७३ ॥
जानासि नमहेशानमाश्चर्यचरितं शिवम् ।
इत्युक्त्वा विधिरीशानं प्रार्थयामास सन्नतः ॥ ७४ ॥
देव त्वामीदृशं दृष्ट्वा नगः खिन्नो महेश्वर ।
तद्दर्शय स्वमात्मानं सर्वलोकैकसुन्दरम् ॥ ७५ ॥
एवं सम्प्रार्थितः शम्भुर्योगैश्वर्यबलाऽन्वितः ।
आत्मानं दर्शयामास कोटिमन्मथसुन्दरम् ॥ ७६ ॥

तप्तहेमसमाऽऽभासं नीलेन्दीवरलोचनम् ।
नानारत्नौघविलसन्मुकुटेन विराजितम् ॥ ७७ ॥
रक्तमाल्याऽम्बरधरं नानारत्नविभूषणम् ।
तादृशैः प्रमथैश्चित्रभूषणाऽम्बरशोभितैः ॥ ७८ ॥
सेव्यमानं समालोक्य पर्वतः प्रीतमानसः ।
अहो धन्या मम सुता यस्या भर्ताऽयमीदृशः ॥ ७९ ॥
सर्वलोकमहेशानः सर्वलोकमनोहरः ।
इत्युक्त्वा तं महादेवं प्रणनाम नगेश्वरः ॥ ८० ॥
न जानामि महादेव तव माहात्म्यमद्भुतम् ।
जडः स्थाणुस्वभावोऽहं तन्मेऽगः क्षन्तुमर्हसि ॥ ८१ ॥
इति क्षमाप्य भूतेशं विधिं प्रोवाच शैलराट् ।
ब्रह्मन्नियं मे तनुजा पाणिं गृह्णातु शङ्करः ॥ ८२ ॥
मन्यसे यदि तच्छीघ्रं न कालोऽतिगतो भवेत् ।
ओमित्युक्त्वा विधिः शीघ्रं शिवं प्राह स्मयन्निव ॥ ८३ ॥
पाणिं शिव गृहाणाऽस्याः पार्वत्या मा विलम्ब्यताम् ।
अत्येति कालः सगुणः सर्वदोषविवर्जितः ॥ ८४ ॥
निशम्य शम्भुर्विध्युक्तं पाणिं गौर्याः समाददे ।
शैलः समुत्सृजत्तोयं मेनया समनुर्जितम् ॥ ८५ ॥
अथ घोषो महानासीत् मङ्गलध्वनिमिश्रितः ।
उच्चावचान्यवाद्यन्त वाद्यानि परितस्तदा ॥ ८६ ॥
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।
अस्तुवन् वन्दिनस्तत्र पुष्पवृष्टिरभूद्दिवः ॥ ८७ ॥
ववौ गन्धवहो मन्दं चक्रे सुरभिला दिशः ।
जेपुर्वशिष्ठप्रमुखाः शैत्रोपनिषदां गणम् ॥ ८८ ॥
विधिर्विवाहविधिना योजयामास शङ्करम् ।
तत्र पर्वतराजन्यः सर्वान् विप्रमुखान् जनान् ॥ ८९ ॥

रत्नाऽऽभरणवासोभिरसंख्येयधनैरपि।
सम्भावयामास तथा देवान् विधिमुखानपि ॥ ९० ॥
पूजयामास विधिना सम्भृतैः सुसमर्हणैः।
भोजयामास नगराद् सर्वांस्तत्र समागतान् ॥ ९१ ॥
विविधैरन्नपानाद्यैः षड्रसाढ्यैर्मनोहरैः।
भुक्त्वा विप्रमुखास्तत्र यथेष्टं तर्पिता धनैः ॥ ९२ ॥
आशिषस्ते प्रयुञ्जाना निर्ययुः सर्वतो दिशम्।
एवं विवाहे संवृत्ते हिमवान् प्रददौ धनम् ॥ ९३ ॥
असंख्यातं रत्नगणं वासांस्याभरणानि च।
हस्त्यश्वरथदासीनां गणानपि च कोटिशः ॥ ९४ ॥
पार्वत्यै स्वतनूजायै प्रियायै प्रीतमानसः।
अथ तत्सर्वमादाय पार्वतीसहितः शिवः ॥ ९५ ॥
गन्तुं निजालयं शीघ्रं मनो दधे महेश्वरः।
विधिविष्णुमुखैर्देवैः स्तूयमानापदाऽऽनकः ॥ ९६ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे कामोपाख्याने द्वात्रिंशोऽध्यायः ॥ २६८४ ॥

---

# अथ त्रयस्त्रिंशोऽध्यायः।

अथ देवैः स्तूयमानो महेशः पार्वतीयुतः।
हिमाद्रिणाऽभ्यनुज्ञातो निर्ययौ हिमवद्वनात् ॥ १ ॥
किञ्चिद्दूरमनुययौ पर्वतः प्रेमकातरः।
ततोऽनुजज्ञे श्वशुरमनुयान्तं महेश्वरः ॥ २ ॥
प्रतियातुमनीशं तं दुहितृप्रेमभारतः।
अपश्यत् पार्वतीं देवः कटाक्षेण स्मिताऽऽननः ॥ ३ ॥
ज्ञात्वोङ्गितं महेशस्य देवी पर्वतनन्दिनी।
पितरं बोधयामास स्वशापभ्रष्टसंस्मृतिम् ॥ ४ ॥
दर्शयामास विभवं स्वस्याः परममद्भुतम्।
अथ दृष्ट्वा नगपतिस्तनूजां परमेश्वरीम् ॥ ५ ॥
ज्ञात्वा स्वरूपं तस्याश्च जगत्तत्त्वञ्च सर्वशः।
निवृत्तमोहः सम्प्राप्तनिजवैभवनिर्भरः ॥ ६ ॥
अनुज्ञातः शिवाभ्यां स प्रययौ स्वं निवेशनम्।
महादेवोऽपि पार्वत्या सहितो धातृमुख्यकान् ॥ ७ ॥
अनुज्ञाप्य स्वस्वदेशं प्रमथैरभिसंवृतः।
रजताऽद्रिं समासाद्य तपस्येव मनो दधे ॥ ८ ॥
अथ देवनदीतीरे संश्रयं गुणवत्तरम्।
समासाद्य महादेवो न्यग्रोधतरुमाश्रितः ॥ ९ ॥
तपश्चचार परमं दिव्यवर्षसहस्रकम्।
तत्र विघ्नकरं काममनयद्भस्मशेषताम् ॥ १० ॥
भार्गवैवं मन्मथोऽपि भस्मत्वं प्राप्तवान् शिवात्।
एवं श्रुत्वाऽद्भुतकथां भार्गवः पर्यपृच्छत ॥ ११ ॥

दयानिधे ऽवधूतेश कथामधुझरी तव ।
मुखपद्मस्रुताऽतीव तृषां पीताऽपि यच्छति ॥ १२ ॥
तत्र माद्यत्स्वभावोऽहं न तृप्यामि द्विरेफवत् ।
तदहं श्रुतिवक्त्रेण पातुमिच्छामि वै पुनः ॥ १३ ॥
कथं शिवेन निर्दग्धः कामो विघ्नं तपस्यतः ।
किमर्थमाचरत् सर्वं शंसैतत् परिपृच्छतः ॥ १४ ॥
अथाऽपि विष्णोर्निर्दग्धं ज्वालामुख्या सुदर्शनम् ।
प्राप्तं पुनः कथं तेन वदैतदपि मे गुरो ॥ १५ ॥
एवं सुपृष्टो मुनिराट् दत्तात्रेयो जगौ कथाम् ।
कथयामि शृणु कथां भृगुवंशाऽवतंसक ॥ १६ ॥
तथा सुदर्शने नष्टे विष्णुस्त्रिजगतीपतिः ।
कालाऽन्तरे सुररिपुर्मुराऽऽख्यो दैत्यपुङ्गवः ॥ १७ ॥
योद्धुमभ्याययौ विष्णुं महाबलपराक्रमः ।
युध्यमानस्तेन हरिरभवद्धीनवर्चसः ॥ १८ ॥
सुदर्शनेन रहितो विश्रृङ्गः पुङ्गवो यथा ।
अथ ब्रह्मा प्राह हरिं हरे शृणु वचो मम ॥ १९ ॥
सुदर्शनेन रहितो नेमं जेतुं विभुर्भवान् ।
उपतिष्ठ परां ज्वालामुखीं देवीं समाहितः ॥ २० ॥
प्राप्य चक्रं तया दत्तं जेतुमेनं समर्हसि ।
श्रुत्वैवं ब्रह्मगदितं युध्यमानो रमापतिः ॥ २१ ॥
अन्तर्द्धिमाययौ तत्र ततो दृष्ट्वा मुराऽसुरः ।
पराजितो हरिरिति ज्ञात्वा स्वभवनं ययौ ॥ २२ ॥
अथ विष्णुरुपव्रज्य शैलराजं पराऽऽश्रयम् ।
यत्र सा ऽहर्निशं ज्वालामुखी प्रज्वलिताऽऽनना ॥ २३ ॥
स्नात्वा संयतवाक्कायमानसस्तामुपस्थितः ।
निराहारो निराधारस्तपस्तेपे महत्तरम् ॥ २४ ॥

ऊर्ध्वबाहुर्मीलिताक्षः सहस्रं परिवत्सरान् ।
अथ सा सुप्रसन्नाऽभूज्ज्वालावक्त्रा महेश्वरी ॥ २५ ॥
आविर्भूता हरिपुरश्चिकीर्षन्त्यभिवाञ्छितम् ।
सूर्यकोटिप्रतीकाशा तरुणाऽरुणसद्वपुः ॥ २६ ॥
मस्तकत्रयसंराजत्किरीटत्रयशोभिनी ।
खड्गं त्रिशूलं बिभ्राणा मुण्डमालाविभूषिता ॥ २७ ॥
नेत्रेभ्यो वदनेभ्यश्च श्रोत्रेभ्यो घ्राणमार्गतः ।
समस्तरोमकूपेभ्यो महाज्वालां क्षणे क्षणे ॥ २८ ॥
मुञ्चन्ती भीषणाकारा गौरीक्रोधसमुद्भवा ।
स्तूयमाना सुरवरैर्गन्धर्वैरप्सरोगणैः ॥ २९ ॥
नृत्यद्भिर्गायमानैश्च संवृता स्वगणैरपि ।
निशाम्य विष्णुस्तां ज्वालामुखीं सन्निधिमागताम् ॥ ३० ॥
प्रणम्य दण्डवद्भक्त्या बद्धाञ्जलिपुटः स्थितः ।
स्तुतिं चक्रे गुह्यवाग्भिर्विचित्राभिर्भृगूद्वह ॥ ३१ ॥
अथ तुष्टा स्तुतिगणैर्ज्वालावक्त्रा महेश्वरी ।
प्राह विष्णुं लोकपतिं गम्भीरवचसा तदा ॥ ३१ ॥
विष्णो लोकेश तुष्टोऽस्मि वरं वृण्वभिवाञ्छितम् ।
ददामि तुभ्यमखिलमनर्हं ते न विद्यते ॥ ३३ ॥
मम देव्या यतो भ्राता पूजितः सर्वतस्ततः ।
श्रुत्वेत्थं तद्वचो विष्णुः प्राह बद्धाञ्जलिस्तदा ॥ ३४ ॥
शृणु मद्वचनं देवि पुराऽहं जगतीमिमाम् ।
रक्षितुं श्रीमहेशान्या सृष्टस्त्रिपुरया ननु ॥ ३५ ॥
तदाज्ञया लोकरक्षाविधौ सततमुद्यतः ।
तत्राऽद्य दैत्यराट् कश्चिन्मुर इत्यभिविश्रुतः ॥ ३६ ॥
जगतीनाशनोद्युक्तो बाधतेऽखिलदेवताः ।
तं जेतुं प्रार्थितो देवैरहं स्वबलसंवृतः ॥ ३७ ॥

युध्यमानस्तेन युद्धे हीनवीर्योऽभवं ननु ।
चक्रेण रहितस्तेन तदर्थं त्वामुपस्थितः ॥ ३८ ॥
चक्रदानेन जगतीं रक्षाऽद्य सचराऽचरीम् ।
अथ वा जहि दैत्येशं त्वमेव बलवत्तरा ॥ ३९ ॥
श्रुत्वेत्थं प्रार्थितं विष्णोर्देवी ज्वालामुखी तदा ।
आह सस्मितया वाचा सम्बोध्य कमलापतिम् ॥ ४० ॥
नारायण त्वं दयिता भ्राता गौर्यास्त्रिविक्रमः ।
अहमाज्ञाकरी तस्यास्त्वं तस्मान्मान्य एव हि ॥ ४१ ॥
निग्रहे दैत्यराजस्य शक्ताऽहमपि साम्प्रतम् ।
आज्ञा श्रीत्रिपुरेशान्याः सर्वेषां मूर्ध्नि तिष्ठति ॥ ४२ ॥
वायुर्वाति सदा सूर्य उदेतीन्दुः सतारकः ।
धरा लोकं धारयति वारिधिर्नातिवर्तते ॥ ४३ ॥
यद्भयात्तदहं कस्मान्न बिभेमि निरर्गला ।
सन्तुष्टा च त्वत्तपसा गृहाण निजमायुधम् ॥ ४४ ॥
इत्युक्त्वा स्वायुधाच्चक्रं सहस्रारं सुदर्शनम् ।
सहस्रज्वालया युक्तं सर्वशक्तिसमन्वितम् ॥ ४५ ॥
निस्सार्य प्रददौ तस्मै विष्णवे प्रीतमानसा ।
इदं सुदर्शनं चक्रं महासारं ततोऽधिकम् ॥ ४६ ॥
अमोघमप्रतीकार्यं मानसं ते भविष्यति ।
अनेन जेता लोकानां नाऽजेयस्तव विद्यते ॥ ४७ ॥
गच्छ दैत्यं जहि क्षिप्रं लोकं श्रेयोयुतं कुरु ।
इत्युक्त्वाऽन्तर्हिता सद्यः स्वप्नदृष्टेव सा शिवा ॥ ४८ ॥
अथ चक्रं समासाद्य मुरं समरआह्वयत् ।
दैत्यसेनापरिवृतं तत्क्षणेनैव श्रीधरः ॥ ४९ ॥
सुदर्शनेन भस्मत्वमनयच्छलभं यथा ।
इति ते कथितं राम विष्णोश्चक्राऽऽप्तिकारणम् ॥ ५० ॥

अथ कामो यथा भस्मीभूतस्तच्छृणु भार्गव ।
प्रणीय पार्वतीं देवस्तप आतिष्ठदुत्तमम् ॥ ५१ ॥
अथ कालेन महता तारको नाम दैत्यराट् ।
शूरपद्माऽभिधानोऽपि तपस्तप्त्वा सुदुष्करम् ॥ ५२ ॥
अष्टादशाऽण्डाऽऽधिपत्यं चक्रतुर्बलदर्पितौ ।
अथ ताभ्यां पराभूतो युधीन्द्रः सुरनायकः ॥ ५३ ॥
उपतस्थौ विधातारं दीनो देवगणैर्वृतः ।
स दृष्ट्वैवंविधं शक्रं नष्टत्रिभुवनाश्रियम् ॥ ५४ ॥
विचार्य प्राह देवेशं प्रश्रयाऽवनतं स्थितम् ।
शृणु शक्र महानेष दैत्यराजो बलैर्युतः ॥ ५५ ॥
तारकः शूरपद्मश्च मयाऽग्रतः समीहितौ ।
न त्वया वा तथाऽन्येन जेतुं शक्यौ कथञ्चन ॥ ५६ ॥
विना महादेवसुतं स्वामिनं दिष्टमीदृशम् ।
तद्गच्छ प्रार्थय शिवं पुत्रोत्पादनकर्मणि ॥ ५७ ॥
तत्सुतस्तव सेनायाः पतिर्भूत्वा सुरेश्वरम् ।
पराजित्य त्रिभुवनाश्रियं दास्यति पूर्ववत् ॥ ५८ ॥
श्रुत्वा विधिवचो देवपतिर्देवगणैर्वृतः ।
ययौ त्रिलोचनं देवं प्रार्थितुं जवतस्तदा ॥ ५९ ॥
तत्र गत्वा देवदेवं नीलकण्ठमुमापतिम् ।
अपश्यद्विबुधाऽधीशः शान्तसर्वाश्रयं तदा ॥ ६० ॥
सनकाद्यैर्मुनिगणैः सत्त्वोर्जितमहाऽऽशयैः ।
शारदाऽम्बुनिभस्वच्छशान्तचित्तैर्निरञ्जनैः ॥ ६१ ॥
परिवृतं मीलिताक्षं ज्वलितं तपसां गणैः ।
न तत्र कश्चिच्चलति न निःश्वसिति नेक्षते ॥ ६२ ॥
परस्परं न पश्यन्ति न वदन्त्यपि कर्हिचित् ।
न पक्षिणोऽपि वाशन्ति न वायुर्वाति वेगतः ॥ ६३ ॥

सूर्यो नैव प्रतपति न स्पन्दन्ते च शाखिनः ।
चित्राऽऽलिखितवत्तत्र निष्क्रियं प्रत्यचेष्टत ॥ ६४ ॥
तत्र दूरेऽपि संस्थातुं नाऽशकद्देवभूपतिः ।
तपस्तेजः × × × ×
चिन्तयित्वा चिरं तत्र नाऽन्तं प्राप कथञ्चन ॥ ६५ ॥
अथ सस्मार वचसां पतिं गुरुमनन्यधीः ।
नाऽन्योऽत्राऽलं मम त्राण इति मत्वा शतक्रतुः ॥ ६६ ॥
स्मृतमात्रो योगिराजः समायातः शतक्रतुम् ।
प्राप्तं गुरुं समालोक्य देवेशः सुखितो बभौ ॥ ६७ ॥
अथेन्द्रस्तस्य चरणौ प्रपीड्य शिरसा नतः ।
बद्धाञ्जलिः प्रत्युवाच दीनोऽत्यन्तसुदुःखितः ॥ ६८ ॥
मामेवं पश्यसि गुरो हृतराज्यं सुदुःखितम् ।
आपद्वारिधिनिर्मग्नमनन्यशरणं चिरम् ॥ ६९ ॥
आज्ञप्तो लोकपतिना प्रार्थितुं नीलकन्धरम् ।
उत्पादनाय पुत्रस्य तदेवमुपसर्पितुम् ॥ ७० ॥
असमर्थः किं करोमि कथं मे स्यात् समीहितम् ।
आचक्ष्वाऽत्रोचितां युक्तिं यथा मे स्यात् समीहितम् ॥७१॥
श्रुत्वेन्द्रवचनं जीवश्चिन्तयित्वाऽखिलाऽऽगमम् ।
प्राहेन्द्रकार्यसंसिद्ध्यै हर्षयन्निव वज्रिणम् ॥ ७२ ॥
शतक्रतो शृणु वचो गौरीं तोषय भक्तितः ।
सा ते विधास्यति श्रेयो नाऽन्यदत्र पराऽयणम् ॥ ७३ ॥
इत्युक्त्वाऽन्तर्हितो जीवो वायुनुन्नाऽभ्रलेशवत् ।
अथ देवेश आतिष्ठद्गौरीं तोषयितुं तपः ॥ ७४ ॥
वर्षमेकं ततस्तुष्टा गौरी सन्निहिताऽभवत् ।
शतक्रतो ब्रूहि यत्ते मनसि ह्यभिवाञ्छितम् ॥ ७५ ॥
इति प्राह तदा देवपतिर्देवीमवैक्षत ।

प्रणम्य दण्डवत् स्तुत्वा विविधैः स्तुतिभिस्तदा ॥ ७६ ॥
प्राह गौरीं देवपतिः कृताञ्जलिपुटस्तदा ।
देव्यहं हृतराज्यश्रीरसुरेण किलाऽभवम् ॥ ७७ ॥
तत्र प्राह विधाता मां महादेवसुताच्चन ।
भवेदीप्सितमित्येवं नाऽन्यस्ते कार्यसाधकः ॥ ७८ ॥
तदहं स्वार्थसंसिद्ध्यै समायातस्त्विहाऽधुना ।
दृष्ट्वा तपस्यभिरतं महादेवं त्रिलोचनम् ॥ ७२ ॥
सर्वथा नष्टसर्वाऽऽशो गुरुणा प्रेरितस्ततः ।
त्वामेव शरणं प्राप्तः संरक्षाऽऽपन्महार्णवात् ।
इत्युक्त्वा दण्डवद्भूयः पपात तत्पदाऽन्तिके ॥ ८० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥ २७६४ ॥

# अथ चतुस्त्रिंशोऽध्यायः ।

श्रुत्वेत्थमिन्द्रवचनमुवाच तु महेश्वरी ।
शृणु हर्यश्व मद्वाक्यं दुर्घटं प्रतिभाति मे ॥ १ ॥
न मे सन्तानयोगोऽस्ति ऋषिपत्न्यास्तु शापतः ।
महादेवस्य च तथा मदन्यत्र सुतोद्भवः ॥ २ ॥
तत् कथं स्यात्तव हितं सर्वथा भाति दुष्करम् ।
निशम्यैवं वचो गौर्याः शक्रः प्राञ्जलिरब्रवीत् ॥ ३ ॥
देवि नूनं तव कथं शापः केन कृतः कथम् ।
त्वं सर्वलोकसम्पूज्या महादेवेऽपि वा कथम् ॥ ४ ॥
वदैतदिति चित्रं मे भाति शङ्करवल्लभे ।
हरिणा प्रार्थिता सैवं प्रवक्तुमुपचक्रमे ॥ ५ ॥
शृणु शक्र यथा शापो मया प्राप्तः शिवेन च ।
पुराऽहं हिमशैलस्य पितुर्गेहे स्थिता यदा ॥ ६ ॥
तदा कदाचित् सखिभिः संवृता वनमभ्यगाम् ।
शरत्कालेऽरण्यशोभां द्रष्टुमुत्सुकिता सती ॥ ७ ॥
तदा पित्रा समादिष्टाः सहस्रं वनचारिणः ।
मद्रक्षणायाऽनुगताः वनान्येवमहङ्गता ॥ ८ ॥
अथ तत्र कदाचिद्वै मया मृगी दृष्टा शुभा ।
अदृष्टपूर्वा रुचिरा मृगेण सह सङ्गता ॥ ९ ॥
क्रीडार्थं तां समानेतुमादिष्टा वनचारिणः ।
मिथुनं मृगयोः सर्वे परिवव्रुः समन्ततः ॥ १० ॥
मिथुनं तत् समानीय ददुर्मह्यं वनेचराः ।
अथ तत्र निःश्वसन्ती रुदन्तीं हरिणी पुरः ॥ ११ ॥

अहं देवि सुहोत्राऽऽख्यः काश्यपस्तपसि स्थितः ।
पत्न्याऽनया भरद्वाजसुतयाऽस्मिन् महावने ॥ १२ ॥
कुरङ्गमिथुनं दृष्ट्वा तद्रतिर्मेऽभियाचता ।
तत्कुरङ्गशरीरेण स्थिता स्वरतिकारणात् ॥ १३ ॥
तत्र क्षमस्वाऽपवृत्तमनया कृतमज्ञया ।
इति सम्प्रार्थिता तेन शाप एवंविधो मम ॥ १४ ॥
महादेवस्याऽपि शृणु शापहेतुं पुरातनम् ।
पुरा त्रेतामुखे विप्राः कर्मणेन्द्रादिकान् सुरान् ॥ १५ ॥
अत्यवर्तन्त तपसा महता सुसमेधिताः ।
चक्रुर्देवान् वशे सेन्द्रान् ससिद्धाऽसुरराक्षसान् ॥ १६ ॥
आज्ञाप्रतीक्षका देवा विप्राणामभवन् तदा ।
एवं त्रिलोकीं विप्राणां वशगां वीक्ष्य सर्वथा ॥ १७ ॥
हृतप्रभात्र इन्द्रोऽभूद्विप्राज्ञापालकः स्वतः ।
अथ शक्रो देवगणवृतो ब्रह्माणमभ्ययौ ॥ १८ ॥
निवेदयच्च दीनात्मा विप्राऽधीनत्वमात्मनः ।
श्रुत्वा विधिः प्राह हरिं नैतत् प्रतिविधावहम् ॥ १९ ॥
समर्थोऽस्मि यतस्तेषां बिभेमि तपसां बलात् ।
इत्युक्त्वा देवसहितो विष्णुमभ्यागमद्विधिः ॥ २० ॥
निवेदयद्देववृत्तं यथावच्चतुराननः ।
श्रुत्वा नारायणः प्राह ब्राह्मणानां तपोबलम् ॥ २१ ॥
निशाम्य विधिमामन्त्र्य शृणु ब्रह्मन् वचो मम ।
अद्य विप्रैर्जितं सर्वं दारुकावनवासिभिः ॥ २२ ॥
तपसां राशिभिस्तस्मादुपायो न हि दृश्यते ।
तेषां निरोधे क्षणतो भस्मीकुर्युर्जगत्त्रयम् ॥ २३ ॥
ब्रह्माण्डानां शतस्याऽपि स्रष्टुमर्हाः पुनः क्षणात् ।
व्यवसायो नाऽत्र कश्चित् सफलो दृश्यते मम ॥ २४ ॥

तद्गच्छामो महादेवं स श्रेयो नो विधास्यति ।
इत्युक्त्वा सहितो ब्रह्ममुखैः कैलासमागमत् ॥ २५ ॥
नत्वा शिवं बद्धकरास्तस्थुर्विष्णुमुखास्तदा ।
दृष्ट्वा विष्णुं सुरैर्युक्तं विधिश्च प्राह शङ्करः ॥ २६ ॥
शृण्वन्तु विबुधाः सर्वे वाक्यमत्र यथाविधम् ।
जानामि भवतामत्र समागमनकारणम् ॥ २७ ॥
अद्य विप्रास्तपोराशिज्वालामालापरीवृताः ।
भस्मीकुर्युः प्राप्तमात्रं वह्निज्वालास्तृणं यथा ॥ २८ ॥
तदत्र कृत्यं निश्चेतुं मन्त्रयामः सुमन्त्रिभिः ।
इत्युक्त्वाऽन्यान् विसृज्याऽथ प्रधानसुरनायकैः ॥ २९ ॥
मन्त्रयामास सुचिरमुपन्यस्य पृथक् पृथक् ।
अथाऽह पुण्डरीकाक्ष उपायोऽन्यो न रोचते ॥ ३० ॥
अन्यत्र छद्मना जेतुमशक्यास्ते महीसुराः ।
तद्गच्छतु भवस्तत्र मनोहरवपुर्भृशम् ॥ ३१ ॥
विप्रदारान्मोहयित्वा धर्माच्च्यावयतु द्रुतम् ।
धर्मच्युता यदा विप्रा जेतुं शक्यास्तु सर्वथा ॥ ३२ ॥
एष मेऽभिमतः पक्षः सर्वथा ह्यभिरोचते ।
श्रुत्वेत्थं केशववचस्तुष्टा विधिमुखाः सुराः ॥ ३३ ॥
समीड्य शङ्करं देवं चोदयामासुराशिषे ।
शिवोऽपि देवकार्यार्थं वृषाऽऽरूढः सपार्षदः ॥ ३४ ॥
जगाम तत्र विप्रास्ते वने यत्र तपःपराः ।
अथ तान् भूसुरान् सर्वानभिलक्ष्य विनिर्गतान् ॥ ३५ ॥
समित्पुष्पाद्याहृतये प्रविवेश तदाश्रमान् ।
कृत्वा रूपं सुरुचिरं कोटिमन्मथसुन्दरम् ॥ ३६ ॥
दर्शयामास दारेषु चाऽऽत्मानं तादृशं शिवः ।
तं तादृशं समालोक्य विप्राणां ताः सुयोषितः ॥ ३७ ॥

कामबाणाऽऽहताः सर्वाः शिवमेवाऽन्वयुस्तदा ।
निरुध्यमानाः पुत्राद्यैर्विस्मृतप्रियबान्धवाः ॥ ३८ ॥
अन्वगुस्त्यक्तसर्वस्वाः शिवेनाऽत्यन्तमोहिताः ।
अथ ताभिः परिवृतः शिवोऽगच्छद्वनान्तरम् ॥ ३९ ॥
कामाचारविनोदैस्ता मोहयामास शङ्करः ।
सङ्गताः शिवेनैवं सर्वा गर्भं दधुस्तदा ॥ ४० ॥
उपभुज्य विप्रसतीः आह देवः पिनाकभृत् ।
यात स्वभवनान्याशु भर्तारो यत्सुकोपनाः ॥ ४१ ॥
पुनः काले नु गच्छामः पुरः सन्ध्याऽतिवर्तते ।
एवं ता मुनिपत्न्यस्तु श्रुत्वा शङ्करभाषितम् ॥ ४२ ॥
जग्मुर्गेहाऽभिमुखतो भीता भर्त्रपचारतः ।
तदन्तरे मुनिगणाः फलपुष्पसमिद्ग्रहाः ॥ ४३ ॥
प्राप्ता गृहांस्तत्र दारान् वीक्ष्याऽतिविकृताऽऽकृतीन् ।
अभिलक्ष्य गर्भयुताः पत्नीः स्वाः सर्व एव ते ॥ ४४ ॥
शङ्किता अभवन् तत्र ज्ञात्वा तत्तपसो बलात् ।
महादेवाऽपचरितं चुक्रुधुर्मुनिपुङ्गवाः ॥ ४५ ॥
जग्मुर्यत्र महादेवो भस्मीकुर्म इति क्रुधा ।
आगच्छतो मुनीन् दृष्ट्वा महादेवेति कोपनान् ॥ ४६ ॥
पलायनपरः शीघ्रमभवद्वृषकेतनः ।
पलायनपरं देवं नभोमार्गसमाश्रयम् ॥ ४७ ॥
दृष्ट्वा मुनिगणाः क्रुद्धाः शापं तस्मिन्नवाऽसृजुः ।
परक्षेत्रष्वयं यस्मात् कामी बीजं स्वमुत्सृजत् ॥ ४८ ॥
तस्मादितः परश्चाऽन्यस्त्रीषु पण्डत्वमेष्यति ।
येन लिङ्गेन चाऽस्माकं पत्न्य एताः मदूषिताः ॥ ४९ ॥
पतत्वस्मत्समक्षं तल्लिङ्गं जारस्य सर्वथा ।
एवं विप्रैः शिवः शप्तस्तस्मात्ते कथमीप्सितम् ॥ ५० ॥

भवेदमरराजन्य न ह्यपत्यस्य सम्भवः।
श्रुत्वेत्थं पार्वतीवाक्यमिन्द्रः पप्रच्छ सादरम् ॥ ५१ ॥
देव्यहं श्रोतुमिच्छामि शिव किमकरोत्ततः।
कथं छिन्नं तस्य लिङ्गं किं भूतं तत्ततः परम् ॥ ५२ ॥
पृष्टैवं देवराजेन प्राह गौरी दिवस्पतिम्।
एवं शापोत्तरं तस्य शिवस्याऽऽकाशगामिनः ॥ ५३ ॥
पपात लिङ्गं संछिन्नं दूरादाकाशमार्गतः।
पतल्लिङ्गं समालोक्य ब्रह्मा विष्णुमचोदयत् ॥ ५४ ॥
एतल्लिङ्गं यदि पतेच्छूलिनः पृथिवीतले।
शतधा पृथिवी शीर्णा भविष्यति न संशयः ॥ ५५ ॥
नाऽस्त्यन्यो धारको लोके विद्यते त्वामृते हरे।
योन्याकृत्या धारयैतत् क्षोभशान्त्यै न चाऽन्यथा ॥ ५६ ॥
त्वामहं धारयिष्यामि योनिरूपेण संस्थितम्।
इत्युक्त्वा पीठरूपेण स्थितो ब्रह्मा प्रजापतिः ॥ ५७ ॥
योनिरूपेण तस्योर्द्ध्वे संस्थितः कमलेक्षणः।
अथ लिङ्गं योनिमध्ये पपात क्षणतस्तदा ॥ ५८ ॥
पततस्तस्य वेगेन योनिस्तु निरभिद्यत।
भित्त्वा योनिं पीठमध्ये प्राविशल्लिङ्गमद्भुतम् ॥ ५९ ॥
विष्णुर्ब्रह्माऽपि तल्लिङ्गं धारयामासतुर्बलात्।
तद्धारेण धरां भूयो निविशन्तीं रसातलम् ॥ ६० ॥
कम्पमानां हरिः शेषरूपी दृढमधारयत्।
एतस्मिन्नन्तरे देवः शम्भुः प्रकुपितोऽभवत् ॥ ६१ ॥
तस्य क्रोधसमुद्भूतः पावको नेत्रनिःसृतः।
जगद्दग्धुं समारेभे तदद्भुतमिवाऽभवत् ॥ ६२ ॥
दह्यमाने सर्वलोके हा हा कारो महानभूत्।
अथ देवाः सगन्धर्वा विद्याधरमहोरगाः ॥ ६३ ॥
सिद्धाः पितृगणाः देवमुनयोऽन्येऽपि सर्वतः।

अस्तुवन्नीलकण्ठं तं क्रुद्धं कालाऽन्तकं शिवम् ॥ ६४ ॥
यदा न क्षमते देवः शिवो लिङ्गस्य छेदनात् ।
तदा ब्रह्मा शिवोपस्थलिङ्गात्मा समजायत ॥ ६५ ॥
दृष्ट्वा लिङ्गोद्गमं तस्य शान्तमीषन्महेश्वरम् ।
विष्णुः कृताऽञ्जलिः प्राह स्तुत्वा नत्वा पुनः पुनः ॥ ६६ ॥
महादेव जगन्नाथ त्राहि लोकांश्चराऽचरान् ।
नश्यमानांस्तव क्रोधाऽग्निना तमुपसंहर ॥ ६७ ॥
तव यत् पतितं लिङ्गं पूजयामो वयं सदा ।
इत्युक्त्वा पुण्डरीकाक्षो लिङ्गे पूजामकल्पयत् ॥ ६८ ॥
विविधैरुपचाराऽऽद्यैः पूजयित्वा यथाविधि ।
परिक्रम्य नमस्कृत्य स्तुतिश्चक्रे विचित्रिताम् ॥ ६९ ॥
अथ लिङ्गपूजनेन शान्तः सन्निहितो भवः ।
जगाद विष्णुं सम्बोध्य विष्णो मद्वचनं शृणु ॥ ७० ॥
अद्य त्वया पूजितोऽहं लिङ्गेऽस्मिन्नाऽऽदितस्ततः ।
अलौकिकी क्रिया चेयं कृता मत्प्रीतिहेतवे ॥ ७१ ॥
अद्य प्रभृत्यहं तस्माल्लिङ्ग एव प्रपूजनात् ।
भवामि नाऽन्यथा विष्णो सन्तुष्टः सर्वथा जनैः ॥ ७२ ॥
स्थापयन्तु च मां लिङ्गरूपिणं सर्वदेवताः ।
मर्त्याऽऽद्या अपि सर्वत्र तत्र सन्निधिमेम्यहम् ॥ ७३ ॥
ब्रह्मा पीठात्मको योनिर्विष्णुर्लिङ्गमहं त्रयम् ।
समष्ट्या परमेशस्य रूपं स्यात्तुर्यसंज्ञितम् ॥ ७४ ॥
इत्युक्त्वा पूजयामास स्वयं शम्भुस्त्रिलोचनः ।
ब्रह्मा देवपतिर्देवाः सर्वे चक्रुस्तदर्चनम् ॥ ७५ ॥
एतद्देवेश ते प्रोक्तं शिवस्य चरितं महत् ।
शापस्य च मया प्रोक्तं कारणं सर्वमादितः ॥ ७६ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ २८४० ॥

# अथ पञ्चत्रिंशोऽध्यायः ।

अथ देवपतिर्गौरीं पुनः पप्रच्छ सादरम् ।
भूमिलोके लिङ्गपूजा कथं मर्त्यैः कृताऽभवत् ॥ १ ॥
एतदाख्याहि मे श्रोतुर्यदि श्रोतव्यमस्ति वै ।
अथ प्राह सुरेशं सा गिरिजा हृष्टमानसा ॥ २ ॥
शृणु देवेश वक्ष्यामि कथां पापप्रणाशिनीम् ।
अथ भूमौ जनाः श्रुत्वा देवेभ्यो लिङ्गपूजनम् ॥ ३ ॥
न श्रद्दधुर्वचः प्रायो लोकविद्विष्टमित्युत ।
अथ लिङ्गाऽर्चनं लोके लुप्तं मत्वा त्रिलोचनः ॥ ४ ॥
आस्थितस्तप अत्युग्रं त्रिपुराप्रीतिहेतवे ।
दशवर्षसहस्राणि ततः सा जगदीश्वरी ॥ ५ ॥
प्रसन्ना दर्शयामास स्वात्मानं मूर्तिमत्तया ।
दृष्ट्वा मूर्तिं जगन्मातुः स्तुत्वा नत्वा पुनः पुनः ॥६॥
प्रणतो दण्डवद्भूमौ भक्तिनिर्भरिताऽन्तरम् ।
अथ सा त्रिपुरेशानी लीलाविग्रहधारिणी ॥ ७ ॥
आह शम्भुं शिवेत्येवमामन्त्र्य जगदीश्वरी ॥ ८ ॥
शृणु शङ्कर मद्वाक्यं लोकविद्विष्टमेव तत् ।
यल्लिङ्गपूजनं प्रोक्तं न वाञ्छन्ति जनास्ततः ॥ ९ ॥
तथाऽप्यहं ते तपसा तुष्टा दास्यामि वाञ्छितम् ।
अद्यप्रभृति लोकेषु तव मूर्तिस्तु सर्वतः ॥ १० ॥
लिङ्गात्मतां समायातु लिङ्गे पूजनमात्रतः ।
तुष्टास्त्रिमूर्तयः सन्तु तथा तुर्यो महेश्वरः ॥ ११ ॥
ब्रह्मणा विष्णुना चाऽपि त्वया तुर्येण शम्भुना ।
सदाशिवेन चाऽऽराध्यं लिङ्गं सर्वैरपीश्वरैः ॥ १२ ॥
यो लिङ्गं नाऽर्चयेद्भक्त्या तस्य त्वं वा हरिस्तथा ।

अन्येऽपि देवा विमुखा भवन्तु मम शासनात् ॥ १३ ॥
मद्भक्तस्याऽपि लिङ्गाऽर्चा नित्यमावश्यकी भवेत् ।
अनभ्यर्च्य लिङ्गमैशं मदुपाऽस्तिं करोति यः ॥ १४ ॥
तस्य निष्फलमेवाऽस्तु सर्वं कर्म कृतं शिव ।
लिङ्गपूजनमात्रेण प्रीताऽहं वाञ्छिताऽर्थदा ॥ १५ ॥
विधिना पूजिता लिङ्गे येनाऽहं भक्तिभावतः ।
तस्मै ददामि सालोक्यमलभ्यमन्यथा जनैः ॥ १६ ॥
यस्तु लिङ्गे यन्त्रराजं विलिख्य पूजयेच्च माम् ।
तत्फलं चक्रराजाऽर्चाकोटिकोटिगुणं भवेत् ॥ १७ ॥
लिङ्गमूर्ध्नि कृतं यन्त्रं सर्वयन्त्रोत्तमोत्तमम् ।
तत्र पूजनमात्रेण पूजिताः सर्वदेवताः ॥ १८ ॥
यस्मात्त्रिमूर्तिरूपं तद्देवा मूर्तित्रयोद्भवाः ।
अन्यच्च ते संप्रवक्ष्यामि रहस्यं शृणु शङ्कर ॥ १९ ॥
लीनार्थगमकं यस्माल्लिङ्गं साक्षात् परः शिवः ।
मद्रूपमपरं लिङ्गं सर्वकारणभावतः ॥ २० ॥
इत्युक्त्वा विधिमुख्यांश्च प्रशास्य लिङ्गपूजने ।
पश्यतां सर्वदेवानां तत्रैवाऽन्तरधीयत ॥ २१ ॥
ततः प्रभृति लोकेषु प्रसृतं लिङ्गपूजनम् ।
एतत्तेऽभिहितं शक्र तस्मान्नाऽपत्यसम्भवः ॥ २२ ॥
तथापि पश्यसि शिवं तपः परममास्थितम् ।
निरुच्छ्वासं निरुन्मेषं कथं तेन समागमः ॥ २३ ॥
गच्छेन्द्र काममत्रार्थे नियोजय रमासुतम् ।
स जेष्यति शिवं देवं कालेन तत्र सम्मतम् ॥ २४ ॥
भवेदिति समादिश्य जगामाऽन्तर्धिमम्बिका ।
अथ देवपतिः शीघ्रमागत्य स्वनिवेशनम् ॥ २५ ॥
सस्मार मन्मथं देवं स्वकार्यवशतो द्रुतम् ।
अथ संस्मृतमात्रस्तु मन्मथो रतिसंयुतः ॥ २६ ॥

आविर्भूतः शक्रसभामध्ये निमेषमात्रतः।
तरुणो लावण्यनिधिः पुष्पबाणेक्षुकार्मुकः ॥ २७ ॥
ततोऽतिमात्रसौन्दर्ययुतां संश्लिष्य वै रतिम्।
आच्छिन्दन् स्वर्निवासानां चक्षूंषि च मनांसि च ॥ २८ ॥
दृष्ट्वा प्राप्तं मन्मथं तं प्रत्युद्गम्य दिवस्पतिः।
समानयत् करे धृत्वा स्वाऽऽसने सन्निवेशयत् ॥ २९ ॥
अथाऽभ्यर्हणमादाय पूजयामास मन्मथम्।
तथा सुपूजितः कामो देवैः सम्मानितो भृशम् ॥ ३० ॥
सन्तुष्टः प्राह देवेशं शृण्वताञ्च दिवौकसाम्।
ब्रूहीन्द्र संस्मृतः कस्मात् किं ते कृत्यं मया स्थितम् ॥ ३१ ॥
यास्यामि तत्ते सम्पाद्य सर्वथा ते प्रपूजितः।
साधयिष्याम्यसाध्यञ्च त्वदर्थं संशयं जहि ॥ ३२ ॥
इति ब्रुवाणं देवेशः प्राह हृष्टः कृताऽञ्जलिः।
नैतच्चित्रं रमापुत्र सदृशं वचनं तव ॥ ३३ ॥
लोकमात्रा मदर्थे त्वं सृष्टोऽजेयोऽखिलैरपि।
यस्ते शत्रुः शिवो देवः सद्यः स तप आस्थितः ॥ ३४ ॥
तं जित्वा सत्वरं शैलजातायां सन्नियोजय।
श्रुत्वेत्थं शक्रवचनं मदनो विमना अभूत् ॥ ३५ ॥
स्मृत्वा प्राक् गिरिजाशापं शिवादात्मप्रणाशनम्।
स्थितस्तूष्णीं क्षणं तादृग्विधमालक्ष्य वज्रभृत् ॥ ३६ ॥
आह किं काम विमना लक्ष्यसेऽत्र विशेषतः।
इति शक्राऽनुयुक्तः स निश्वसन्नाह स्वाऽन्तरम् ॥ ३७ ॥
वद शक्र कस्य नाम प्रियं स्यादात्मनाशनम्।
शप्तोऽस्मि गौर्या भस्मत्वं यास्यसि त्र्यम्बकादिति ॥ ३८ ॥
स कालः प्राप्त इत्येवं मन्ये कालो दुरत्ययः।
तथाऽप्युक्त्वा करोमीति न कुर्यान्मादृशः कथम् ॥ ३९ ॥
गच्छामि ते प्रियं कर्तुमग्रे दैवं पराऽयणम्।

इत्युक्त्वा निर्ययौ स्वर्गाद्रथं जैत्रं समास्थितः ॥ ४० ॥
अथ कण्ठे समाश्लिष्य रतिरत्यन्तदुःखिता ।
पतिं निवारयामास रुदन्ती सर्वयत्नतः ॥ ४१ ॥
नाथ त्वयि समापन्ने कीर्तिशेषमहं कथम् ।
जीविष्याम्यलमेतेन आत्मनाशव्रतेन ते ॥ ४२ ॥
गच्छावो नगरं स्वीयं जीवन् भद्राणि पश्यति ।
सत्यं तपस्तथा वीर्यं सर्वं जीवनहेतवे ॥ ४३ ॥
जीवनाद्विच्युतौ किं स्यात्तपःसत्यपराक्रमैः ।
मदुक्तं मन्यसे नो चेदहं त्वत्पुरतोऽधुना ॥ ४४ ॥
त्यजामि जीवितञ्चैतत्ततो गच्छ यथेच्छतः ।
त्वया विना कृता चाऽहं क्षणाऽर्धमपि नोत्सहे ॥ ४५॥
प्राणान् धारयितुं नाथ सत्यमेतद्ब्रवीमि ते ।
निशम्य स्वप्रियावाक्यं कण्ठे सक्तां रतिं तदा ॥ ४६ ॥
धैर्यवान् प्राह कन्दर्पः प्रिये शृणु वचो मम ।
शोचन्त्यापत्सु नो धीराः शोकः सर्वाऽर्थनाशनः ॥ ४७ ॥
भाव्यन्यथयितुं नैव शक्ता ब्रह्ममुखा अपि ।
पुनस्त्वया समेष्यामि कालेन प्राणनायिके ॥ ४८ ॥
तावत्त्वं त्रिपुरेशानीमाराधय शुभान्तरा ।
सा ते महेश्वरी सर्वं वाञ्छितं प्रविधास्यति ॥ ४९ ॥
इत्थं ब्रुवत्यपि निजकान्ते कामे रतिः प्रिया ।
शोकसंविग्नहृदया मूर्च्छिता न्यपतत् क्षितौ ॥ ५० ॥
मूलकृत्तेव कदली हैमी क्षितितलं गता ।
दृष्ट्वा तादृग्विधां प्राणप्रेयसीं शोककातरः ॥ ५१ ॥
उत्थाप्याङ्कं समारोप्य मदनः पर्यदेवयत् ।
अथ सस्मार जननीं रमां नारायणप्रियाम् ॥ ५२ ॥
साऽपि तत्स्मृतिमात्रेण सान्निध्यं समुपागता ।
दृष्ट्वा तां जननीं कामो भुवि न्यस्य प्रियां रतिम् ॥ ५३ ॥

प्रणाममकरोन्मातुः स्ववृत्तञ्च न्यवेदयत् ।
मातर्मया प्रतिश्रुत्य करोमीति प्रियं हरौ ॥ ५४ ॥
कथं स्यां विमुखस्तस्माद्यथा कापुरुषो भुवि ।
तदहं जेतुकामोऽद्य मातः शिवमुपव्रजे ॥ ५५ ॥
एनां प्रियां समाश्वास्य सान्निध्यं नेतुमर्हसि ।
इत्युक्तवन्तं मदनं परिष्वज्य रमा तदा ॥ ५६ ॥
शोकभारपरिम्लानमुखी तं प्राह धैर्यतः ।
वत्स गच्छ महेशानं कालेनैव विजेष्यति ॥ ५७ ॥
शापो गौर्या निराकर्तुमशक्यो विधिनाऽपि वै ।
तद्गच्छ श्रीमहादेवीं स्मरन् विद्यामयीं जपन् ॥ ५८ ॥
सा ते विधास्यति शुभं गच्छ श्रेयः समाप्नुहि ।
इत्युक्तो मदनो नत्वा मातरं लोकमातरम् ॥ ५९ ॥
प्रयातस्त्रिपुरां ध्यायन् भक्तिभावसुनिर्भरः ।
अथ तत्र रतिं पद्मा अपाङ्गैरमृतस्रवैः ॥ ६० ॥
प्रेक्षाञ्चक्रे ततः साऽपि निद्रितेव समुत्थिता ।
अदृष्ट्वा प्रियमात्मीयं शोकार्ता करुणं वचः ॥ ६१ ॥
आचचक्षे रमां देवीं दृष्ट्वा स्वाभिमुखे स्थिताम् ।
आर्ये क्व मे प्रियतमो ब्रूहि तेन विना कृता ॥ ६२ ॥
न जीवितुं समीहामि क्षणाऽर्धमपि निश्चितम् ।
नाथाऽहं किं परित्यक्ता सर्वथा त्वामनुव्रता ॥ ६३ ॥
त्वां विना शून्यमेवाऽहं पश्यामि सचराऽचरम् ।
इत्यादि प्रलपन्तीं तां समाश्वास्य प्रबोध्य च ॥ ६४ ॥
भवनं स्वं समानीय पार्षदैरन्वरक्षयत् ।
आश्वस्ता पार्षदैः साऽपि निवसद्विष्णुधामनि ॥ ६५ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने पञ्चत्रिंशोऽध्यायः ॥ ३९०५ ॥

# अथ षट्त्रिंशोऽध्यायः ।

अथ कामो जैत्ररथं समास्थाय द्रुतं ययौ ।
चिन्तयंस्त्रिपुराऽम्बायाः पादपद्मं शुभोदयम् ॥ १ ॥
अथ मार्गे सुरनदीतीरमासाद्य सुन्दरम् ।
स्नात्वा तत्र परां देवीमुपतस्थे यताऽन्तरः ॥ २ ॥
यदा स संहृताऽशेषकरणस्त्रिपुरापदम् ।
समालम्ब्य निश्चलत्वं प्राप तन्मात्ररूपतः ॥ ३ ॥
तदा सन्निहिता देवी त्रिपुरा परमेश्वरी ।
अरुणाऽरुणकल्पाढ्या चन्द्रचूडा त्रिलोचना ॥ ४ ॥
पाशाऽङ्कुशधनुर्बाणान् दधाना पाणिपङ्कजैः ।
नवरत्नपरिक्षिप्तकिरीटप्रांशुमण्डिता ॥ ५ ॥
तारुण्यपूर्णलावण्यवरेण्याऽऽकारमास्थिता ।
देवाऽधिदेवनिकरस्तुता त्रिपुरसुन्दरी ॥ ६ ॥
तां दृष्ट्वा दण्डवत् कामो ननाम पदसन्निधौ ।
नतस्य तस्य मूर्ध्न्यम्बा करपद्मं न्यधारयत् ॥ ७ ॥
स्पृष्टः कराऽम्बुजेनैषः कृतार्थं स्वममन्यत ।
आनन्दाऽश्रुपरीताऽक्षः पुलकाऽङ्कुरुहैः श्रितः ॥ ८ ॥
उत्थितो देवता वीक्ष्याऽऽऽनन्दभाराऽतिमन्थरः ।
तुष्टाव गद्गदरवः तत्प्रीत्याऽपगतस्मृतिः ॥ ९ ॥
तं तथाभूतमालोक्य प्रसन्ना परमेश्वरी ।
विदित्वैतत् समायाता तत्र पद्मा हरिप्रिया ॥ १० ॥
नत्वा स्तुत्वा प्राह परां त्रिपुरां परमेश्वरीम् ।
मातस्ते भक्तमूर्धन्यः कामो मे प्रीतिवर्धनः ॥ ११ ॥

गौरीशापभराक्रान्तो नाऽतो भवितुमर्हति ॥
नैवमेतत् समुचितं यत्स्वजनपराभवः ॥ १२ ॥
एनं विना कथं लोकव्यवहारः सुनिर्वहेत् ।
प्रवृत्तिर्न स्थितेर्भूयात् शाधि त्वं पादसन्नतम् ॥ १३ ॥
श्रुत्वा रमोक्तं त्रिपुरा प्राह गम्भीरया गिरा ।
पद्मे शृणु न मे भक्तो नाशमर्हति कुत्रचित् ॥ १४ ॥
तावत् स्थातुमदीक्षायां यावद्देहपुनर्भवः ।
गौरीशापेन देहोऽयं भस्मीभवतु शङ्करात् ॥ १५ ॥
पुनः कालेन देहं स्वं नवं प्राप्याऽतिसुन्दरम् ।
नन्दयिष्यत्येष रतिं त्वाञ्च नाऽस्त्यत्र संशयः ॥ १६ ॥
इत्युक्त्वा मन्मथं वीक्ष्य दृशि स्वस्यां समाहरत् ।
ततः सा त्रिपुरा लोके कामाक्षीत्यभिविश्रुता ॥ १७ ॥
विलीनो मदनस्तस्याः सुषुप्त इव सम्बभौ ।
अथाऽपतत् कामदेहस्तयोः सम्मुखतो भुवि ॥ १८ ॥
पतितस्य तस्य रोमकूपेभ्यस्तादृशास्ततः ।
विनिर्ययुः कोटिकोटिसंख्याः कामाः समन्ततः ॥ १९ ॥
तान् समादिश्य लोकेषु प्राणिनां कामनाविधौ ।
उत्थापयत्तच्छरीरं महामाया स्वमायया ॥ २० ॥
स उत्तस्थौ कामदेहः सुप्तो मर्त्य इव द्रुतम् ।
तमाह्वयत् काम इति सा परा जगदीश्वरी ॥ २१ ॥
मायामयान् पुष्पबाणानिक्षुचापञ्च तादृशम् ।
जहि शीघ्रं महादेवं तपस्यन्तं त्वमित्यदात् ॥ २२ ॥
अथ कामो रथाऽऽरूढः पुष्पबाणेक्षुकार्मुकः ।
जगाम तत्र श्रीकण्ठो यत्र शम्भुस्तपोमयः ॥ २३ ॥
अनुवव्राज देवेशः कामं स्वार्थस्य सिद्धये ।
तपस्यत्येष देवेश इत्यालक्ष्य दिवस्पतिः ॥ २४ ॥

देवैः परिवृतो दूरे पश्यंस्तद्विजयं स्थितः ।
अथ कामः समालक्ष्य तपस्यन्तं त्रिलोचनम् ॥ २५ ॥
ताडयत् पुष्पबाणेन हृदि सन्धाय कार्मुके ।
अथ देवः समाधिस्थः स्वभावं लक्ष्य चञ्चलम् ॥ २६ ॥
किमिदञ्चेति चोन्मील्य नेत्रेऽपश्यदगात्मजाम् ।
विकृतिं स्वात्मनो ज्ञात्वा क्रुद्धश्चन्द्रार्धशेखरः ॥ २७ ॥
पार्श्वे ऽपश्यदात्तचापं पुष्पबाणकरं तदा ।
क्रोधेन दृष्टमात्रोऽथ नेत्राऽग्निज्वालया ऽऽप्लुतः ॥ २८ ॥
संवर्तवह्निना तूलराशिवत् क्षणमात्रतः ।
भस्मीभूतः शक्रमुखसुराणां तत्र पश्यताम् ॥ २९ ॥
अथ क्रोधाऽग्निना तेन दह्यमानं चराऽचरम् ।
ज्ञात्वा चतुर्मुखः प्राप्तः सिद्धर्षिगणसंस्तुतः ॥ ३० ॥
क्षमापयद्देवदेवं शम्भुं त्रिजगतां गुरुम् ।
इति ते सर्वमाख्यातं भार्गवाऽतिसुविस्तृतम् ॥ ३१ ॥
गौर्याः पर्वतराजेन सम्भवादिकमुत्तमम् ।
कामस्य भस्मीभावश्चाऽप्यतीतं सुमहाऽद्भुतम् ॥ ३२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोपाख्याने षट्त्रिंशोऽध्यायः ॥ २९३७ ॥

# अथ सप्तत्रिंशोऽध्यायः ॥

भगवन्नद्भुततमं श्रुतमेतन्मनोहरम् ।
गौर्याविर्भावमहिमा कामभस्मत्वमेव च ॥ १ ॥
इदानीं श्रोतुमिच्छामि शिवगौरीसमागमात् ।
यथा कुमार उत्पन्नः कथं दैत्यान् स चाऽजयत् ॥ २ ॥
कथं सा त्रिपुरेशान्या नेत्रे लीनोऽपि मन्मथः ।
उत्पन्नो रतिशोकान्तः पद्माहृदयनन्दनः ॥ ३ ॥
ब्रूहि मह्यं प्रपन्नाय शिष्याय कृपया गुरो ।
कस्तृप्येत्तव वक्त्रेन्दुपीयूषप्रस्रवाऽऽत्मकम् ॥ ४ ॥
श्रीमातुर्जनतापौघहरं शुभकथाऽभिधम् ।
पिबन् रसायनं लोके मूढोऽपि स्थावरादृते ॥ ५ ॥
वदैतन्मे पुरावृत्तं याचते प्रणताय मे ।
एवं पृष्टो जामदग्न्यरामेणाऽत्रिसुतो गुरुः ॥ ६ ॥
शृणु रामेति चाऽऽमन्त्र्य प्रवक्तुमुपचक्रमे ।
एवं भस्मत्वमानीते कामे सुरपतिर्वृषा ॥ ७ ॥
दुःखितोऽभूदभिमताऽलाभेनाऽत्यन्ततस्तदा ।
ब्रह्माणं प्रार्थयामास स्वाऽभिप्रेतस्य सिद्धये ॥ ८ ॥
ततो विधाता कामारिं स्तुत्वा संशाम्य मन्युतः ।
इन्द्रादिभिः परिवृतो भूयस्तुष्टाव शङ्करम् ॥ ९ ॥
गुह्यैः प्रसिद्धैश्चरितैः स्तुतो देवस्त्रिलोचनः ।
सन्तुष्टः प्राह देवेन्द्रादीन् विधातृमुखांस्तदा ॥ १० ॥
भो विधातृमुखा देवा यदस्मत्तोऽभिवाञ्छितम् ।
तद्ब्रूत मा चिरं वस्तत् प्रदिशामि न संशयः ॥ ११ ॥

श्रुत्वेत्थं शङ्करवचः प्राह वेधाः प्रजापतिः ।
त्रिलोचनेमे देवाद्यास्तारकेण सुराऽरिणा ॥ १२ ॥
क्लेशिता निर्जिताः सर्वे विना स्वाऽनीकनायकम् ।
तत्त्वं सङ्गच्छ पार्वत्या भविता ते ततः सुतः ॥ १३ ॥
स देवसेनां नीत्वा तान् विजेष्यति न संशयः ।
नो चेदसुरसन्तप्तं भस्मीभूतं जगद्भवेत् ॥ १४ ॥
श्रुत्वा विधातृप्रमुखप्रार्थितं चन्द्रशेखरः ।
अङ्गीचकार तद्दृष्ट्वा नियत्या नियतं तदा ॥ १५ ॥
अथ पर्वतराजन्यकन्यया सङ्गतिं ययौ ।
पार्वत्या सङ्गतस्यैवं सहस्रं वत्सरा ययुः ॥ १६ ॥
अथ देवान् विधिः प्राह शक्रादीन् सम्मुखस्थितान् ।
शृणुध्वं मे सुरा वाक्यं पार्वत्या सङ्गतः शिवः ॥ १७ ॥
अद्याऽपि नो मुञ्चति स्वं वीर्यं वर्षसहस्रतः ।
तपसा चिरकालेन सम्भृतं तन्निबोधत ॥ १८ ॥
समग्रं यदि मुञ्चेत् स सत्त्वं जातं ततो भुवि ।
भस्मीकुर्यादशेषं वै महत्तेजो यतो हि तत् ॥ १९ ॥
कारणेनाऽपि गच्छामः पुनस्तत्र शिवाऽन्तिके ।
इत्युक्त्वा प्रययौ धाता शक्राद्यैः परिवारितः ॥ २० ॥
प्रार्थयामास तं देवं तत्र गत्वा सुरैः सह ।
विरम त्वं महादेव मैथुनाच्चिरकालिकात् ॥ २१ ॥
साकल्यवीर्यसम्भूतं कस्ते धारयितुं क्षमः ।
रक्ष सर्वानिमान् लोकानन्यथा नाशमेष्यति ॥ २२ ॥
इत्यर्थितो महादेवो विररामाऽतिमैथुनात् ।
ततो देवस्य यत् क्षुब्धं वीर्यं तत् स्खलितं भुवि ॥ २३ ॥
रसपर्वततुल्यं तद्भूमिर्धारयितुं तदा ।
न शक्ता तेजसा तस्य दह्यमाना विधिं ययौ ॥ २४ ॥

ब्रह्मन्नाऽहं समर्थाऽस्मि महादेवस्य तेजसाम् ।
धारणे दह्यमानाऽहं रक्ष मां शरणागताम् ॥ २५ ॥
आकर्ण्य भूमिवचनं पावकं सम्मुखस्थितम् ।
प्राह वह्ने धारयैतच्छिववीर्यं भुवि स्थितम् ॥ २६ ॥
परिपाकात् कुमारः स्याद्यावत्तावन्मयेरितः ।
श्रुत्वा प्राह विधेर्वाक्यं वीतिहोत्रः समीहितम् ॥ २७ ॥
भगवन् धारयाम्येतद्यदि मे स सुतो भवेत् ।
नो चेदहं क्लेशभागी व्यर्थं स्यां तत् कथं भवेत् ॥ २८ ॥
श्रुत्वाऽन्यभिमतं वेधाः प्राह तेऽस्तु समीहितम् ।
ततोऽग्निः पृथिवीसंस्थं हरवीर्यं समाददे ॥ २९ ॥
धारयामास तद्वह्निरसह्यमपि तेजसा ।
नाऽशकत्तद्धारयितुं यदाऽग्निः सर्वथा तदा ॥ ३० ॥
विधातारमुपव्रज्य लज्जितः प्राह पावकः ।
ब्रह्मन्नाऽहं समर्थोऽस्मि धारणेऽस्य हरौजसः ॥ ३१ ॥
तद्रक्ष मां दह्यमानं मयैतत् क्व विसृज्यताम् ।
विचार्य विधिराहाऽग्निमेषा त्रिपथगा नदी ॥ ३२ ॥
त्यजाऽस्यां तन्महावीर्यं शाङ्करं सा वहिष्यति ।
श्रुत्वा विधिवचो गङ्गा प्राञ्जलिः प्राह सा विधिम् ॥३३॥
देवेश नाऽफला जातु परवीर्यं विधारये ।
पुत्रः सपदि मे भूयाद्धारयामि न चाऽन्यथा ॥ ३४ ॥
अस्त्वित्युक्ता विधात्रा सा दधाराऽग्निविसर्जितम् ।
वीर्यं शैवं ततो गङ्गा कालेनाऽल्पीयसैव सा ॥ ३५ ॥
तत्तेजसा दह्यमाना कथिताऽपांवहाऽभवत् ।
बाष्पधूमसमाक्रान्ता हृतयादोगणा ततः ॥ ३६ ॥
विधातारं समभ्येत्य प्राह लज्जानताऽऽनना ।
ब्रह्मन्नेतद्धारयितुमुत्सहे न कथञ्चन ॥ ३७ ॥

क्वथ्यमानतोयवहा कृशीभूताऽस्मि साम्प्रतम् ।
विक्लिन्नो यादसां सङ्घः सरितः सागरोऽपि च ॥ ३८ ॥
नाऽनुमोदति मत्सङ्गं निस्तोया च भवाम्यहम् ।
तद्ब्रूहि विसृजामि क्व तातर्मयि कृपां कुरु ॥ ३९ ॥
श्रुत्वा पितामहो गङ्गावाक्यं क्षणमचिन्तयत् ।
ततः प्राह त्रिपथगां गङ्गे शृणु वचो मम ॥ ४० ॥
कैलासपर्वताऽधो यच्छराणां सुमहद्वनम् ।
तत्र वीर्यं शाङ्करं तदुत्स्रष्टुं त्वं समर्हसि ॥ ४१ ॥
श्रुत्वैवं धातृवचनं गङ्गा पप्रच्छ सादरम् ।
अत्याश्चर्यमिदं प्रोक्तं कथं तत्रोत्सृजाम्यहम् ॥ ४२ ॥
सर्वसहा चाऽऽश्रयाशो गङ्गा चाऽहं सरिद्वरा ।
न शेकुर्धारणे यस्य तच्छराणां वनं कथम् ॥ ४३ ॥
धारयेदत्र नो हेतुरल्पः स्यात् सर्वथा विधे ।
यदैतच्छ्रोतुमिच्छामि श्रवणाऽर्हं भवेद्यदि ॥ ४४ ॥
पृष्टो धाता गङ्गयैवं प्राह सर्वं जगद्विधिः ।
शृणु गङ्गे शरवणवृत्तं यत्तत्पुरातनम् ॥ ४५ ॥
पुरा भस्माऽसुरकृते वियुक्ता पतिना शिवा ।
तदा दुःखेन महता शीर्णं तस्याः कलेवरम् ॥ ४६ ॥
पपात तत्र शोचन्त्याः शतधा च सहस्रधा ।
तस्या विशीर्णदेहोत्थमासीच्छरवणन्त्विदम् ॥ ४७ ॥
यस्माद्वीर्यंशभूतं तत्ततो वीर्यविधारणे ।
समर्थमिति सम्प्रोक्तं त्यज तत्राऽविशङ्किता ॥ ४८ ॥
श्रुत्वैवं गङ्गया वीर्यमुत्सृष्टं शरकानने ।
प्राप्य तद्वीर्यमचिराद्ववृधे शरकाननम् ॥ ४९ ॥
अथ कालेन तद्वीर्यं कुमारात्मकमुत्तमम् ।
तमपश्यद्विधिः पूर्वं ततोऽन्येऽपि समाययुः ॥ ५० ॥

दद्दृशुस्तत्र ते सर्वे तं कुमारं महाऽद्भुतम् ।
स्वर्णाभं कोटिसूर्याणां तेजसां परिभावकम् ॥ ५१ ॥
विशालनेत्रं विपुलदीर्घवक्षःकराऽम्बुजम् ।
कोटिकन्दर्पलावण्यसमाक्षेपाऽतिसुन्दरम् ॥ ५२ ॥
दृष्ट्वा वैश्वानरः प्राह मत्पुत्र इति भार्गव ।
अथ प्रोक्तं गङ्गयाऽपि ममाऽयं तनुजस्त्विति ॥ ५३ ॥
शिवः पर्वतजायुक्तस्तमपश्यत् कुमारकम् ।
मत्वाऽऽत्मजं सुसन्तुष्टौ पार्वतीपरमेश्वरौ ॥ ५४ ॥
चक्रे विधाता नामानि कुमारस्याऽस्य हेतुतः ।
अग्निभूरेप गाङ्गेयः पार्वतीनन्दनोऽपि च ॥ ५५ ॥
स्कन्दवीर्यसमुद्भूतो यस्मात् स्कन्दस्ततो भवेत् ।
कृत्वैवं तस्य नामानि धात्री काऽस्य भविष्यति ॥ ५६ ॥
विचार्य कृत्तिकास्तत्र जगद्धाता न्ययोजयत् ।
पुत्रं स्नानान्तु तं कृत्वा स्तन्यं पाययितुं यदा ॥ ५७ ॥
अहम्पूर्विकयाऽन्योन्यमुपतस्थुः कुमारकम् ।
कुमारः कृत्तिका दृष्ट्वा स्पर्धमानाः परस्परम् ॥ ५८ ॥
युगपत् षण्मुखो भूत्वा स्तन्यं तासां पपौ द्रुतम् ।
तेन षण्मुखतां यातः कार्त्तिकेयस्त्वमच्युत ॥ ५९ ॥
पीत्वा स्तन्यं कृत्तिकानां ववृधे निमेषाऽर्धतः ।
पर्वतः षट्शृङ्ग इव तं दृष्ट्वा देवतादयः ॥ ६० ॥
विस्मयं परमं प्राप्तास्ततः सर्वान्निशाम्य सः ।
स्कन्दः प्राह बलिं सर्वे मे अर्पयन्तु स्वशक्तितः ॥ ६१ ॥
अथ ब्रह्माऽर्पयत्तस्मै स्वीयामक्षस्रजं तथा ।
शिवः शूलं शक्तिमग्निश्चक्रं विष्णुस्तथाऽङ्कुशम् ॥ ६२ ॥
मारुतो वरुणः पाशं यमो दण्डं धनेश्वरः ।
गदां समुद्रो रत्नानां भूषणानि समन्ततः ॥ ६३ ॥

छत्रं त्वष्टा पादुके च चामरेऽतिसुनिर्मले ।
ददौ पूजां सर्वदेवाश्चक्रुस्तस्य नतास्तदा ॥ ६४ ॥
शक्रं दृष्ट्वा स्तब्धधियमनम्रं मन्युना वृतः ।
स्कन्दः समाह्वयद्योद्धुं धृष्टं दृष्ट्वा पुरन्दरम् ॥ ६५ ॥
अथाऽभवन्महायुद्धं स्कन्दवासवयोस्तदा ।
शिवपार्षदसंयुक्तः स्कन्दः शक्रः सुरैर्वृतः ॥ ६६ ॥
महासत्त्वं तमालक्ष्य युद्धे तेन प्रपीडितः ।
शक्रः पलायनपरः क्रौञ्चाऽभ्यन्तरमाययौ ॥ ६७ ॥
दृष्ट्वा पुरस्थितं क्रौञ्चगिरिं परमकोपनः ।
शरैर्विदारयामास पर्वतं सर्वतो दिशम् ॥ ६८ ॥
अथ स्कन्दशरैर्नुन्नः क्रौञ्चः शिथिलबन्धनः ।
भग्नाऽसंख्यातशिखरो ब्रह्माणं शरणं ययौ ॥ ६९ ॥
ब्रह्मणा संस्तुत्य तदा शमितः शङ्करात्मजः ।
प्रपन्नमिन्द्रं सङ्गम्य हृतां त्रिभुवनश्रियम् ॥ ७० ॥
प्रत्यर्पयत्तेन वृतः सेनापत्यमविन्दत ।
देवसेनापतिर्भूत्वा शक्राद्यैरभिसंवृतः ॥ ७१ ॥
युयोध तारकाख्येन शूरपद्माऽसुरेण च ।
अष्टादशाऽण्डाधिपत्यलक्ष्म्या प्रख्यातकीर्तिना ॥ ७२ ॥
अनेकाऽसुरसङ्घानां कोटिकोटिमहाऽर्बुदैः ।
युतेन युद्ध्वा सुचिरं प्रदर्श्याऽऽत्मपराक्रमम् ॥ ७३ ॥
जघान समरे स स्कन्दः शूरपद्मञ्च तारकम् ।
तत्तदण्डेषु शक्रादींस्त्रैलोक्यैश्वर्यसंयुतान् ॥ ७४ ॥
कृत्वाऽसुराणां नाशेन त्रैलोक्यज्वरनाशनः ।
लोकानानन्दितांश्चक्रे स्कन्दः स्वामी षडाननः ॥ ७५ ॥
एवं श्रुत्वा ऽवधूतेशमुखात् स्कन्दकथां शुभाम् ।
पप्रच्छ भार्गवो रामः पुनः कुतुकिताऽन्तरः ॥ ७६ ॥

भगवन्नद्भुतमिदं श्रुतमेतत्कथाऽमृतम् ।
सन्देहो मे महान् जातः पृच्छामि ब्रूहि तन्मम ॥ ७७ ॥
कथमेष महाभागः स्कन्दस्तमसुरेश्वरम् ।
जितवान् शिवविष्णिवन्द्रदुर्जेयमपि संयुगे ॥ ७८ ॥
एतन्मे वद सम्प्रश्नं श्रोतुमुत्कण्ठितोऽस्म्यहम् ।
अथ प्राह दत्तगुरुर्भार्गवं प्रति प्रीतितः ॥ ७९ ॥
शृणु भार्गव यत् पृष्टं गुह्यमेतत् पुरातनम् ।
सनत्कुमारो भगवान् सर्वसत्त्वात्मकः शुभः ॥ ८० ॥
पराऽवरज्ञः सर्वस्य स्वात्मभूतः शमाश्रयः ।
पर्वते ऋषभाऽऽख्याने निवसत् स्वात्मनन्दनः ॥ ८१ ॥
अथ तत्र लोकधाता प्राप्तो द्रष्टुं स्वमात्मजम् ।
दृष्ट्वा प्राप्तं स्वजनकं प्रत्युत्थायाऽऽसनादिभिः ॥ ८२ ॥
सम्पूज्य प्रह्वभावेन प्राह किञ्चिन्मनोगतम् ।
ब्रह्मन् मे हृदये किञ्चित् प्रष्टुं विपरिवर्तते ॥ ८३ ॥
पृच्छाम्यनुज्ञां तत् प्रष्टुमित्युक्त्वा तेन प्रेरितः ।
प्राह ब्रह्मन् मया पूर्वरात्रौ दृष्टं महाऽद्भुतम् ॥ ८४ ॥
युद्धमासीन्महाभीममसुराणां तथाऽमरैः ।
तत्र सर्वे मया युद्धे निहता बलवत्तराः ॥ ८५ ॥
असुरास्तत् कथमिदं निर्हेतुकमभूद्वद ।
सनत्कुमारेण पृष्टः प्राह ब्रह्मा प्रजापतिः ॥ ८६ ॥
शृणु पुत्र पुरा विप्रस्त्वं जन्माऽन्तरगोचरः ।
ब्रह्मविद्याऽभ्यासपरः श्रुतवानसुरैः सह ॥ ८७ ॥
देवानां युद्धवृत्तान्तं तत्र सङ्कल्पितं त्वया ।
अहं जित्वाऽसुरान् सर्वान् देवताभ्यः श्रियं पुनः ॥ ८८ ॥
दास्यामीति ततो वैश्वानरोपासनतत्परः ।
कालधर्ममनुप्राप्तस्तेन ब्रह्मत्वमेव ते ॥ ८९ ॥

भवितव्यं तथाऽपि त्वं खण्डोपासनकारणात् ।
मत्पुत्रत्वमनुप्राप्तः सा जन्मान्तरवासना ॥ ९० ॥
स्वप्नात्मना त्वया दृष्टा भविष्यति च तत्तथा ।
श्रुत्वेत्थं ब्रह्मवचनं पुनः पप्रच्छ सादरात् ॥ ९१ ॥
भगवन् तत् कथं भाविजन्म मे नाऽस्ति सर्वथा ।
पराऽवरज्ञस्य कुतो भवेत्तद्ब्रूहि पृच्छते ॥ ९२ ॥
अथ ब्रह्मा प्राह पुत्रं शृण्वित्यामन्त्र्य तं प्रति ।
स्वेच्छयैव हि ते जन्मद्वारा सर्वमिदं भवेत् ॥ ९३ ॥
इत्युक्त्वा पूजितस्तेन ययौ स्वं भवनं विधिः ।
अथ कालाऽन्तरे शम्भुर्वृषाऽऽरूढः शिवायुतः ॥ ९४ ॥
पश्यन् जगद्विलासं स प्राप्तस्तस्याऽऽश्रमं प्रति ।
ददर्श तत्र गिरिजा निषण्णं विधिनन्दनम् ॥ ९५ ॥
प्रसन्नवदनं शान्तं सुखं सर्वाऽङ्गशीतलम् ।
उपलक्ष्य मुनिं तादृग्विधं पप्रच्छ शङ्करम् ॥ ९६ ॥
महेश सर्वलोकेषु नैवं कश्चन लक्षितः ।
निश्चिन्तः सर्वतः शीतः कोऽयमद्भुतदर्शनः ॥ ९७ ॥
एवं पृष्टो गिरिजया प्राह देवो वृषध्वजः ।
सनत्कुमारः ख्यातोऽयं ब्रह्मपुत्रः सुशान्तधीः ॥ ९८ ॥
ब्रह्मभूतः परानन्दमग्नो नित्यसुनिर्वृतः ।
कृतकृत्यस्ततो नाऽस्ति क्लेशलेशोऽप्रवृत्तितः ॥ ९९ ॥
प्रवृत्तिरेव क्लेशस्य मूलं सर्वत्र पार्वति ।
इति श्रुत्वा ततः प्राह गौरी शङ्करमम्बिका ॥ १०० ॥
एवञ्चेत्तत्र गच्छावस्तेन संभाष्य वै ततः ।
व्रजावोऽन्यत्र देवेश ममाऽत्र प्रीतिरुत्तमा ॥ १०१ ॥
पार्वतीं प्राह तत्पश्चाच्छिवस्तत्कालसम्मितम् ।
प्रिये शृणु न गन्तव्यमकार्ये न विना फलम् ॥ १०२ ॥

अकृत्येषु तथा गच्छन् सर्वथा परिभूयते ।
इत्युक्त्वाऽपि तत्र गन्तुमौत्सुक्यं वीक्ष्य शङ्करः १०३ ॥
जगाम तत्सन्निधानं पार्वतीसहितः शिवः ।
अवतीर्य वृषात्तत्र जग्मतुर्योगिराट्पुरः ॥ १०४ ॥
ज्ञात्वाऽऽशयं न तौ तत्र प्रेक्षाञ्चक्रेनभीप्सितः ।
पार्वतीशङ्करौ तस्य सम्मुखे चिरमास्थितौ ॥ १०५ ॥
अप्रेक्षणाद्येश्चाऽवज्ञां प्राप्य देवः पिनाकभृत् ।
परीक्षितुं तद्धृदयपरिपाकं महेश्वरः ॥ १०६ ॥
क्रुद्धः प्राह विधेः सूनुमाहूय प्रतिबोध्य च ।
अनार्याणामिदं वृत्तं प्राप्तवानसि दुर्मते ॥ १०७ ॥
अवज्ञानं सतां लोके सद्यो हन्ति स्ववैभवम् ।
ब्रह्मपुत्रोऽसीति मया सकृत् क्षान्तस्तवाऽनयः ॥ १०८ ॥
मादृशे त्वमवज्ञां नो भूयः कर्तुमिहाऽर्हसि ।
श्रुत्वेत्थं शम्भुवचनं प्रोवाच ब्रह्मणः सुतः ॥ १०९ ॥
न विभीषयितुं शक्यः शिवोऽहमकुतोभयः ।
भयहेतुं भक्षयित्वा स्वं स्वकीयाऽभिसम्मतौ ॥ ११० ॥
स्थितोऽस्मि गतसन्देहः कृते विन्यस्य दृश्यकम् ।
शापानां कोटिभिर्नो मे वराणां वाऽपि कोटिभिः ॥ १११ ॥
विशेषो वाऽविशेषो वा कदाचित् कुत्रचिद्भवेत् ।
अशेषाणां विशेषाणामाश्रयो न ह्युपाश्रयः ॥ ११२ ॥
एधस्यां पावक इव विशेषानुपशेषकः ।
शापे न वाऽनुग्रहे वा स्यात्तुष्टिर्येन ते भव ॥ ११३ ॥
अशङ्कितस्तन्मयि त्वं प्रतिक्षिप सुसत्वरम् ।
अहो महानुग्रहोऽयं मयि ते प्रकटीकृतः ॥ ११४ ॥
अयत्नेनैव सन्तुष्टः सन्तोष्यो बहुसाधनैः ।
सनत्कुमार उक्त्वैवं विरराम वचो विधेः ॥ ११५ ॥

श्रुत्वैवं तस्य वचनं दृष्ट्वा चाऽविकृताऽऽत्मताम् ।
प्रसन्नः प्राह भूतेशो ब्रह्मपुत्र नमोऽस्तु ते ॥ ११६ ॥
तुष्टोऽस्मि निष्ठया चाऽतिदृढया तव सुव्रत ।
याचस्वाऽभिमतं यत्ते दास्याम्यप्राप्यमप्युत ॥ ११७ ॥
श्रुत्वा विहस्य विधिजः प्राह शम्भुमशङ्कितः ।
साधयस्व महादेव एष मे काङ्क्षितो वरः ॥ ११८ ॥
मायाविनां महेशान नाऽहं वेपयितुं क्षमः ।
महावातैरिवाऽऽकाशो ब्रूहि ते यदि वाञ्छितम् ॥ ११९ ॥
तथाप्यकम्प्यं मत्वा तमोमित्याह महेश्वरः ।
यदि दास्यसि मे कामं प्रतीच्छ मम पुत्रताम् ॥ १२० ॥
तथेत्युक्त्वा पुनः प्राह नन्वल्पं तव याचितम् ।
पुत्रोऽहमेव सर्वेषां तिरश्चामपि शङ्कर ॥ १२१ ॥
किमत्र दुष्करं यत्ते पुत्रः स्यामिति शंस मे ।
तवैव पुत्रो भविता न पार्वत्याः कथञ्चन ॥ १२२ ॥
त्वयैवाऽहं वृतोऽत्राऽर्थे तन्निसृष्टो वरो मया ।
अथ सा पार्वती देवी प्राह तं मुनिपुङ्गवम् ॥ १२३ ॥
ब्रह्मपुत्र प्रार्थितोऽसि मयाऽपि ननु सर्वथा ।
समाङ्गौ दम्पती यस्मात्तन्मे पुत्रत्वमर्हसि ॥ १२४ ॥
अभ्यागतानां साम्येन पूजनं हि सतां व्रतम् ।
तत्र देवः प्राप्तवरो रिक्तोऽहं तत् कथं व्रजे ॥ १२५ ॥
वैषम्यं न तु सद्धर्म इति आहुर्मनीषिणः ।
श्रुत्वेत्थं पार्वतीवाक्यं पुनराह विधातृजः ॥ १२६ ॥
देवि ते पुत्रतां यामि प्रसिद्ध्या न ते देहजः ।
एतन्मम व्रतं गुह्यमयोनौ भवनं क्वचित् ॥ १२७ ॥
इति श्रुत्वा पुनः प्राह पार्वती मुनिपुङ्गवम् ।
न स्त्रीणां देहसम्बन्धमृते पुत्रसुखं भवेत् ॥ १२८ ॥

तस्माद्देहेन सम्बन्धं काङ्क्षामि तव सर्वथा ।
इत्युक्तः स मुनिः किञ्चिद्विमृश्योवाच शङ्करीम् ॥ १२९ ॥
देवि किं मोहयस्येवं वचनैः प्राकृतैरिव ।
त्वं सर्वलोकजननी प्राप्तकामाऽपि सर्वथा ॥ १३० ॥
शृणु तथ्यं वदाम्यम्ब व्रतमेतन्ममेहितम् ।
तस्मात् पूर्वतनो देहो विशीर्णः पर्वताऽन्तरे ॥ १३१ ॥
शरात्मना स्वर्णमयं वनं तत्र महेश्वरि ।
भवामि पूर्वदेहेन सम्बन्धात्ते सुखञ्च तत् ॥ १३२ ॥
इत्युक्तौ प्रणतौ देवौ जग्मतुः स्वमभीप्सितम् ।
सनत्कुमारोऽपि मुनिर्ज्ञाननिष्ठामाहित्वतः ॥ १३३ ॥
ब्रह्माद्यखिलदेवानां दैत्यादीनाञ्च सर्वतः ।
प्राप्ताऽऽत्मभावः सर्वेषां बलेन परिबृंहितः ॥ १३४ ॥
अजयत्तारकादींस्तानसुरान् सर्वतोऽधिकान् ।
एतत्तेऽभिहितं वृत्तं कुमारप्रभवाऽऽश्रयम् ॥ १३५ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कुमारसम्भवे सप्तत्रिंशोऽध्यायः ॥ ३०७२ ॥

# अथ अष्टत्रिंशोऽध्यायः ॥

शृणु तं सम्प्रवक्ष्यामि भृगुवंशविभूषण ।
भारत्याः सत्प्रभावं वै महाश्चर्यकरं परम् ॥ १ ॥
भारती या पुरा प्रोक्ता शङ्कराऽवरजा शिवा ।
वर्णत्रयं त्राति सूक्ष्मा सावित्री तत ईरिता ॥ २ ॥
सा धातृपत्नी प्रागेव विवाहः सुनिरूपितः ।
कदाचित् सत्यलोके सा ब्रह्मणः सविधे स्थिता ॥ ३ ॥
सभायां सिद्धदेवर्षिसमेतायां भृगूद्वह ।
संस्तुता सिद्धऋषिभिर्विविधैः संस्तवैः पृथक् ॥ ४ ॥
अनादरपरो धाता तत्स्तवेष्वहसन् स्थितः ।
दृष्ट्वा सा ब्रह्मणः स्वस्मिन्नवज्ञानं चुकोप हि ॥ ५ ॥
उवाच लोकधातारं रोषाऽरूणितलोचना ।
न ते युक्तमवज्ञानं मयि सर्वात्मना यतः ॥ ६ ॥
अपारयन् सृष्टिकृत्ये यत्नेनाऽऽसादिता त्वया ।
स्मर तत्प्राक्तनं वृत्तं यदा नाऽहं स्थिता तव ॥ ७ ॥
दीनः सामर्थ्यविकलः शरणं जननीं गतः ।
श्रुत्वा प्रोक्तन्तु सावित्र्या विधिः प्राह ज्वलन् क्रुधा ॥८॥
नैवं त्वं वक्तुमर्हा मां स्त्रीणां भर्ता हि दैवतम् ।
भर्तुरग्रे पूज्यभावः पत्नीनां प्रविदूषितः ॥ ९ ॥
अजानती सतीवृत्तमाधिक्षिपासि मां वृथा ।
न मे पत्नीत्वयोग्याऽसि सच्चारित्रविदूषिणी ॥ १० ॥
न त्वं क्रतुविधानेषु मया सह भविष्यसि ।
इति शप्ता तु सावित्री पुनरत्यन्तकोपिता ॥ ११ ॥

प्रतिशापं ददौ धात्रे ज्वलन्तीव सुमन्युना।
यदि नाऽर्हा यज्ञविधौ भवामि शृणु तर्हि ते॥ १२॥
भविष्यभीरकुलजा पत्नी यज्ञविधौ तव।
प्रतिशापं निशम्याऽजः पुनः प्रकुपितोऽभवत्॥ १३॥
अथ देवादयः सर्वे दृष्ट्वा क्रुद्धं पितामहम्।
सावित्रीमपि संक्रुद्धां तुष्टुवुः परिवारिताः॥ १४॥
तयोः क्रोधेन जगती चकम्पेऽतीव सर्वथा।
ततो नारायणशिवौ तत्राऽऽजग्मतुरञ्जसा॥ १५॥
श्रुत्वा विधिञ्च सावित्रीं क्षामयामासतुस्तदा।
विधे नैवं समुचितं त्रिपुरायाः कलोद्भवा॥ १६॥
या तेऽपमानिता देवी सावित्री तन्न शोभनम्।
शृणु देवि त्वयाप्येतच्छापदानमचिन्तितम्॥ १७॥
न तद्योग्यं प्रतिकृतिरावाभ्यामुच्यते यथा।
यज्ञाऽनर्हेति यत्प्रोक्तं धात्रा रुष्टेन यत्त्वया॥ १८॥
अभीरजा भवेत् पत्नी चेति तत्र विनिश्चितम्।
त्वमेव स्वांऽशतोऽभीरकुलजा यज्ञकर्मणि॥ १९॥
उपयोक्ष्यसि नाऽनेन देहेन यज्ञभागिनी।
श्रुत्वैवं विष्णुशिवयोरुक्तं धाता च भारती॥ २०॥
शेपतुः कोपशेषेण पुनस्तत्रेतरेतरम्।
विधिराहाऽभीरजैषा भूयात् पत्नी सवे मम॥ २१॥
यतोऽविचारपरमा मां शशाप रुषाऽन्विता।
ततोऽस्याऽपि सञ्जातां स्मृतिरेनां प्रहास्यति॥ २२॥
श्रुत्वा शापं पुनर्दत्तं भारती चाऽतिकोपिता।
विधिं प्रति शशापाऽऽशु यतस्तेन विमर्शनम्॥ २३॥
ततोऽविमृश्य चाऽकाम्या कामुकस्त्वं भविष्यसि।
पुनर्विसृष्टशापौ तौ दृष्ट्वा क्रुद्धौ हरीश्वरौ॥ २४॥

चक्रतुः संस्तवं तत्र बहुधा प्रार्थ्य क्षामितौ ।
अथ कालेन महता ब्रह्मा लोकपितामहः ॥ २५ ॥
पुष्कराख्ये महातीर्थे यष्टुं व्यवसितोऽभवत् ।
आज्ञापद्यज्ञशालानिर्माणे देवशिल्पिनम् ॥ २६ ॥
स चकार यज्ञशालां सर्वतः समलङ्कृताम् ।
क्लृप्तसम्भारसर्वस्वां वेदीं कुण्डादिमण्डिताम् ॥ २७ ॥
नवरत्नसमाकीर्णां सर्वर्तुगुणशोभिताम् ।
सौवर्णभाण्डनिचयामन्नपानसमाकुलाम् ॥ २८ ॥
तत्र विप्रा याजकाग्र्या भृगुकश्यपकर्दमाः ।
वसिष्ठपुलहाऽगस्त्यपुलस्त्यक्रतुमुख्यकाः ॥ २९ ॥
आजग्मुः सर्वतः श्रेष्ठाश्चाऽन्येऽपि मुनिपुङ्गवाः ।
श्रौतविद्यासु कुशलाः सर्वविद्याविशारदाः ॥ ३० ॥
वासवप्रमुखा देवा गन्धर्वाश्चाऽप्सरोगणाः ।
विद्याधराः किंपुरुषाः सकिन्नरमहोरगाः ॥ ३१ ॥
यातुधानाऽसुरगणाः मनुष्याश्च समन्ततः ।
अभ्यागमन् यज्ञवाटं पुष्करे सर्वतो दिशम् ॥ ३२ ॥
जगुर्गन्धर्वपतयो ननन्दुश्चाप्सरोगणाः ।
वन्दिनो विधिमुख्यानामपठन् विविधाः स्तुतीः ॥ ३३ ॥
अथ कालेऽतिकल्याणे सुनक्षत्रग्रहैर्युते ।
यक्ष्यमाणः प्रियां पत्नीमाह्वयज्जगतीपतिः ॥ ३४ ॥
इन्द्रादिभिः समाहूता देवि देवश्चतुर्मुखः ।
यक्ष्यमाणः शुभे काले चिरात्त्वां सम्प्रतीक्षते ॥ ३५ ॥
व्रज तत्राऽचिरं देवि कालोऽयं वीक्षितः शुभः ।
नाऽतियायात् सर्वथैव प्रोक्ताप्येवं विधेः प्रिया ॥ ३६ ॥
अवश्यम्भाविभावेन सावित्री न समागता ।
विलम्बयन्ती तां ज्ञात्वा मुहूर्तः समतिक्रमेत् ॥ ३७ ॥

इति क्रुद्धो विधिर्विष्णुं प्रोवाच पुरतः स्थितम् ।
हरे प्रयाहि पत्नीं मे सरूपामपरां द्रुतम् ॥ ३८ ॥
समानय मुहूर्तोऽयं यथा नाऽतिव्रजेत्तथा ।
समादिष्टो विधात्रैवं हरिरन्विष्य भूतले ॥ ३९ ॥
ब्राह्मणादिष्वलब्ध्वा तत्सरूपां गोपकन्यकाम् ।
दृष्ट्वा सरूपां सावित्र्या समानयत वै हरिः ॥ ४० ॥
तामानीतां विलोक्याऽऽहुः शुभरूपगुणाऽन्विताम् ।
महान् शब्दः समभवत् साधु साध्विति सर्वतः ॥ ४१ ॥
परिणीय च तां पत्नीं यक्ष्यमाणो विधिस्तदा ।
सङ्कल्प्य क्रतुराजं तं प्रावर्तयत लोकपः ॥ ४२ ॥
अथाऽऽजगाम सावित्री यज्ञशालां सखीवृता ।
ददर्श ब्रह्मणः पार्श्वे गायत्रीं लोकसुन्दरीम् ॥ ४३ ॥
तच्छोभाऽऽक्षिप्तसौन्दर्या तारा राकेन्दुना यथा ।
आत्मानं जानती सर्वैर्हसितेव विलज्जिता ॥ ४४ ॥
प्रालेयदर्शनात् पद्ममिव शुष्यन्मुखाऽम्बुजा ।
प्रविशन्तीव स्वाऽङ्गेषु लज्जाशैलभराऽऽवृता ॥ ४५ ॥
क्षणं विसंज्ञेव तत्र लेख्यकर्मगतेव सा ।
स्थिता स्थाणुसमाऽऽचारा ततः सर्वं निशाम्य तत् ॥ ४६ ॥
विधेर्विचेष्टितश्चाऽतितरां मन्युपरीवृता ।
प्रजज्वाल त्रिलोकीं सा कुर्वन्ती भस्मसादिव ॥ ४७ ॥
प्राह प्रस्फुरमाणोष्ठी समाचीर्णं त्वया विधे ।
इत्युक्त्वा निर्ययौ तस्मात् सावित्री यज्ञदेशतः ॥ ४८ ॥
संस्थिता शैलशृङ्गस्य मध्ये तस्याऽविदूरतः ।
अथ तस्याः क्रोधवह्निर्ज्वालामालापरीवृतः ॥ ४९ ॥
प्रादुरासीद्यज्ञशालां सऋत्विक्सभासदाम् ।
सयज्वपत्नीसम्भारां दिधक्षन्निव सर्वतः ॥ ५० ॥

वायुनाऽप्येधितो वह्निर्यदा दग्धुमुपाऽक्रमत् ।
तदा पलायिताः सर्वे सदस्या ऋत्विजस्तथा ॥ ५१ ॥
देवा गन्धर्वमुनयः सिद्धचारणकिन्नराः ।
अविचार्यैव चाऽन्योन्यं त्यक्तसर्वपरिग्रहाः ॥ ५२ ॥
दिशो दशाऽभिपेतुस्ते क्रोशन्तो भयकम्पिताः ।
भूश्चकम्पे महावायुवेपिताऽऽश्वत्थपर्णवत् ॥ ५३ ॥
अन्धकारैर्दिशः क्रान्ता उद्वेलाः सर्वसागराः ।
राहुनेव दिवानाथस्तमसा ग्रसितोऽभवत् ॥ ५४ ॥
पर्वताश्च विशीर्यन्त कल्पान्तसमये इव ।
एवम्भूतेषु लोकेषु चोर्द्ध्वाऽधोभागवर्तिषु ॥ ५५ ॥
भीता ब्रह्मादयः सर्वे कर्तव्येष्वविनिश्चयाः ।
सावित्रीमनुसञ्जग्मुः प्रार्थितुं क्रमशस्तदा ॥ ५६ ॥
आदाविन्द्रो देवगणैर्युतस्तत्र जगाम ह ।
सावित्रीं प्रार्थितुं यत्र शैलशृङ्गे स्थिता हि सा ॥ ५७ ॥
तत्र गच्छन्नेव मार्गे तस्याः क्रोधसमुद्भवाः ।
शक्तयः कोटिशः क्रूरकरवालधरास्तदा ॥ ५८ ॥
सर्वान्नाशयितुं दिक्षु निर्गतास्ताभिरेव सः ।
गृहीतः पाशनिर्बद्धो निक्षिप्तः शैलकन्दरे ॥ ५९ ॥
एवं यमोऽग्निर्वरुणः कुबेरो नैर्ऋतो मरुत् ।
रुद्राश्च वसवो विश्वेदेवाद्या बन्धनं गताः ॥ ६० ॥
एवं बद्धेषु देवेषु शक्तिसङ्घैः समन्ततः ।
विष्णुर्विचारयामास शिवेन विधिसन्निधौ ॥ ६१ ॥
सावित्र्याः क्रोधदावाग्निनिर्दग्धं स्याज्जगत्त्रयम् ।
देवा बद्धाः सर्व एव किं कृत्वा नः शुभं भवेत् ॥ ६२ ॥
इति दीर्घं विचिन्त्याऽथ पार्वतीञ्च रमामपि ।
प्रेषयामास सावित्र्याः संशमाय हरिस्तदा ॥ ६३ ॥

ते गत्वा क्रोधशक्तीस्ताः सन्निवर्त्य समन्ततः ।
भारतीं प्राप्य मधुरवाक्यं प्रोचतुरञ्जसा ॥ ६४ ॥
ताभ्यां बहु प्रार्थिताऽपि न शान्तिमगमद्यदा ।
तदा विधिहरीशाना जग्मुर्यत्राऽस्ति भारती ॥ ६५ ॥
सा ददर्श विधातारं सावित्री सम्मुखाऽऽगतम् ।
ईषच्छान्ताऽपि च पुनः प्रजज्वाल सुमन्युना ॥ ६६ ॥
प्रज्वलन्त्याः क्रोधवशाद्रूपं तस्या महाऽद्भुतम् ।
भीमं समभवत्तस्या नेत्राभ्यां वह्निरुद्गतः ॥ ६७ ॥
तेन कल्पाग्निकल्पेन ब्रह्मविष्णुमहेश्वराः ।
समाक्रान्ता दाववह्निनेव मत्तेभयूथपाः ॥ ६८ ॥
दह्यमानांस्तु तान् दृष्ट्वा हरिकान्ता च पार्वती ।
तुष्टाव त्रिपुरामाद्यां नाऽन्यस्त्रातेति निश्चयात् ॥ ६९ ॥
अथ स्तुता महादेवी तत्राऽऽविरभवत् परा ।
कामकोट्यधिलावण्यसन्दोहाऽऽनन्दसुन्दरी ॥ ७० ॥
रत्नचित्राऽम्बरा कल्पधरा मुकुटशोभिनीम् ।
चतुर्भुजाऽऽत्तसहजाऽऽयुधसम्बन्धुबन्धुराम् ॥ ७१ ॥
दृष्ट्वा प्रणमनं चक्रुर्गौर्याद्या भक्तिनिर्भराः ।
तस्याः सन्निधिमात्रेण तमोराशिरिवाऽरुणे ॥ ७२ ॥
विलयं प्रोदिते ऽगच्छत् क्रोधाग्निः सर्वतः स्थितः ।
अथ तां भारतीं प्राह त्रिपुरा हसिताऽऽनना ॥ ७३ ॥
अलं वत्सेति क्रोधेन लोकनाशनहेतुना ।
उपसंहर शक्तीस्ता यास्ते क्रोधसमुद्भवाः ॥ ७४ ॥
भवन्तु विज्वरा लोकाः पश्येमान् शान्तया दृशा ।
इत्युक्ता भारती देव्या लज्जिता क्रोधसम्भवाः ॥ ७५ ॥
विलापिताः स्वके देहे शान्तिं प्राप्ता च भारती ।
अथ तां त्रिपुरां देवीं सावित्री प्रणता सती ॥ ७६ ॥

विविधैः संस्तवैश्चित्रैस्तुष्टाव परभक्तितः ।
क्षमस्व मे ऽनयाद्देवि त्रिपुरे क्रोधसम्भवात् ॥ ७७ ॥
स्थिताऽस्मि शासने मातस्तव शाधि स्वकिङ्करीम् ।
अथ श्रीमातृकरुणाऽऽलोकतः सहसोत्थिताः ॥ ७८ ॥
धातृविष्णुशिवास्तद्वन्मुक्ता देवाश्च बन्धतः ।
सावित्रीं पुनरप्याह शान्तिं वत्से समाप्नुहि ॥ ७९ ॥
प्रवर्तयतु भूतेशो यज्ञं भूयस्त्वया युतः ।
इति श्रुत्वा वचो देव्याः सावित्री प्रणता सती ॥ ८० ॥
बद्धाऽञ्जलिपुटा प्राह मातर्नाऽहं स्वयम्भुवा ।
इच्छामि सङ्गतिं भूयः स्थास्याम्यत्रैव सर्वदा ॥ ८१ ॥
तव पादाम्बुजध्यानपरमाऽऽनन्दसम्प्लुता ।
नाऽत्र मामम्ब भूयस्त्वं सन्निरोद्धुं समर्हसि ॥ ८२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
भारत्युपाख्याने अष्टत्रिंशोऽध्यायः ॥ ३१५४ ॥



# अथैकोनचत्वारिंशोऽध्यायः ।

ततः प्राह विधिर्देवीं स्तुत्वा नत्वा पुनः पुनः ।
महेश्वरि तवाऽऽज्ञायां स्थितोऽस्मि निखिलात्मना ॥ १ ॥
तवाज्ञामन्तरा लोके कः समर्थो विचेष्टितुम् ।
विज्ञापयामि किञ्चित्त्वां मातस्तत् कृपया शृणु ॥ २ ॥
सावित्री यदि न शान्ता भविष्यति तदा कथम् ।
भवेत् क्रतुर्मम शिवे लोकं वा नीरुजं तथा ॥ ३ ॥
पुराऽनया महादेव्या शप्तः क्रोधेन हेतुना ।
अकाम्यां कामयेत्येवमथैषा यज्ञकर्मणि ॥ ४ ॥
पत्नीत्वेन कृता या सा हीनजातिसमुद्भवा ।
तत्रर्षिवर्यैर्ब्रह्मोष्ठैर्वाच्यो जातोऽस्मि तत्कथम् ॥ ५ ॥
प्रसीद श्रीमहाराज्ञि सर्वमेतत् समं कुरु ।
प्रार्थिता लोकधात्रैवं श्रीपरा त्रिपुरेश्वरी ॥ ६ ॥
प्राह देवा मद्वचनं देव्यः शृणुत सादरम् ।
येयं विधातुर्यज्ञस्य पत्नी सर्वमनोहरा ॥ ७ ॥
तस्योत्पत्तिं प्रवक्ष्यामि महात्रिभवविस्तराम् ।
कश्चित् पुरा ब्राह्मणाऽग्र्यः कौशिको लोकविश्रुतः ॥ ८ ॥
तपसा विद्यया चैव हर्यक्षाऽऽख्यो महाशयः ।
तपस्तेपे सुपार्श्वाख्यपर्वते लोकपूजिते ॥ ९ ॥
अत्युग्रतपसा देवीं सावित्रीं समतोषयत् ।
प्रसन्ना तस्य सावित्री तद्दर्शनपथं गता ॥ १० ॥
ब्रूहि ब्राह्मण तुष्टाऽस्मि तपसा महता तव ।
ईप्सितं ते साधयामि नाऽदेयं तव विद्यते ॥ ११ ॥

किमिन्द्रत्वमुतेन्दुत्वं घनेशत्वं त्वमिच्छसि ।
तपसा ते जितं सर्वं प्राजापत्याऽऽचरस्थितम् ॥ १२ ॥
सावित्र्या वचनं श्रुत्वा हर्यक्षः पुनराह यत् ।
तच्छृणुध्वं विधात्राद्याः प्रणम्य सुकृताञ्जलिः ॥ १३ ॥
देवि नाऽहं वृणेन्द्रत्वं चन्द्रत्वं वा घनेशताम् ।
पुराऽहं स्वाश्रमे स्थाने कदाचित्तपसि स्थितः ॥ १४ ॥
काचिद्गोपवधूस्तत्र चारयन्ती गवाङ्गणम् ।
मदक्षिपथमापन्ना तस्याः सौन्दर्यविभ्रमात् ॥ १५ ॥
मोहितस्तामन्वगममनङ्गशरपीडितः ।
प्रार्थिता सा मया भूयो नाऽभ्यमन्यत मद्वचः ॥ १६ ॥
तदा बलात्परामृष्टा क्रोशन्ती गोपकन्यका ।
समानीयाऽऽश्रमवरे स्वाङ्गैराक्रम्य तां बलात् ॥ १७ ॥
द्वन्द्वधर्ममनुप्राप्तो मन्मथेन प्रपीडितः ।
अथ तत्राऽभ्याजगाम नारदो मुनिपुङ्गवः ॥ १८ ॥
निशाम्य तां गोपवधूं मयाऽक्रान्तां बलीयसा ।
क्रोशन्तीं मुञ्च मुञ्चेति प्राह मां प्रति रोषितः ॥ १९ ॥
अहं कामेन मूढात्मा नामुञ्चं मैथुने रतः ।
तदा क्रुद्धो नारदो मां शशाप शृण्वतो मम ॥ २० ॥
ब्राह्मणाऽधम दुर्बुद्धे नैषा काम्या तु कामिनी ।
यतः कामविमूढात्मा बलादेनां समाविशः ॥ २१ ॥
नीचेन कर्मणाऽनेन नीचत्वं प्राप्स्यसि द्रुतम् ।
यतो गोपवधूसक्तस्ततो गोपः भविष्यसि ॥ २२ ॥
ततोऽहं शापभयतः शापान्तं नारदं प्रति ।
जिज्ञासुर्बहुधा नत्वा समपृच्छं पुनः पुनः ॥ २३ ॥
नोवाच क्रोधवशतस्ततः सम्प्रार्थितो दृढम् ।
सावित्री शापतस्त्वां वै मोचयिष्यति तोषिता ॥ २४ ॥

उपतिष्ठ महादेवीमित्युक्त्वाऽन्तर्हितो बभौ ।
तदहं त्वां महादेवीमुपसंस्थो महेश्वरि ॥ २५ ॥
शापाऽब्धिमग्नं मां शीघ्रमभ्युद्धर महेश्वरि ।
इत्युक्ता सा ब्राह्मणेन शापाऽन्तं प्राह तं प्रति ॥ २६ ॥
हर्यक्ष शृणु मद्वाक्यं शापाऽन्तं प्रब्रवीमि ते ।
गोपयोनिषु ते जन्म भविष्यति न संशयः ॥ २७ ॥
तत्रैकजन्मानि शृणु भविष्याम्यहमंशतः ।
कन्या तव ततो विष्णोः प्राप्य श्रेष्ठं वरं पुनः ॥ २८ ॥
प्राप्य नारायणं पुत्रं प्रयास्यासि परं पदम् ।
उक्त्वैवमन्तर्धानं सा जगामेयं तव प्रिया ॥ २९ ॥
सेयं तदंशसम्भूता तव शापादयोनिजा ।
अनिन्द्येयं सर्वजनैरग्रजैः समुपासिता ॥ ३० ॥
छन्दःप्रसूतिर्गायत्री गायन्तं त्राति सर्वतः ।
वेदसारमयी ब्रह्मविद्याख्यातिं गमिष्यति ॥ ३१ ॥
सावित्रि पश्य वत्से त्वं निजांशप्रभवामिमाम् ।
शापेन नैषा विज्ञाता त्वमेवैषा द्विधा स्थिता ॥ ३२ ॥
श्रुत्वेत्थं त्रिपुरावाक्यं गायत्री स्वात्मरूपिणी ।
प्रत्यचेष्टत सावित्री प्रतिबिम्बं यथाऽऽत्मनः ॥ ३३ ॥
अनुग्रहेण श्रीदेव्या लब्ध्वा शापहतां स्मृतिम् ।
सन्तुष्टा ऽभवदत्यन्तं शान्तां भक्तिमास्थिता ॥ ३४ ॥
अथोवाच महादेवी त्रिपुरा विधिमुख्यकान् ।
गायत्रीयं मदुद्भूता मद्वाग्रूपा परा यतः ॥ ३५ ॥
एनां वर्णमयीं सर्वे मुखबाहूरुजा जनाः ।
प्राप्य जाताः पुनस्तेन भूयासुर्द्विजसंज्ञया ॥ ३६ ॥
अथाऽह लोकधातारं शृणु ब्रह्मन्मयेरितम् ।
अकाम्याकामुकत्वं यत् सावित्रीशापतः स्थितम् ॥ ३७ ॥

तत्राऽपीयं वेदमयी तव वाचा विनिर्गता।
आत्मजा तत्र ते कामो भविष्यत्यपदे ततः ॥ ३८ ॥
वाणीरूपा च सावित्री सर्वाऽऽराध्या भविष्यति।
श्रोतव्यं मद्वचः सर्वैर्गायत्रीयं मदात्मजा ॥ ३९ ॥
अहमेव न सन्देहो निशाम्येनां ममाऽऽत्मजाम्।
चक्षुष्मन्तः प्रपश्यन्तु प्राणिगद्यैवमम्बिका ॥ ४० ॥
समाविवेश गायत्र्यां स्वर्धुनीव यमाऽनुजाम्।
तदद्भुतं तत्र विधिमुखा दृष्ट्वा समक्षतः ॥ ४१ ॥
विस्मिता जयशब्देन वर्धयामासुरम्बिकाम्।
अथाऽपश्यन् तत्र सर्वे गायत्रीं त्रिपुरात्मिकाम् ॥ ४२ ॥
चतुर्भुजां चन्द्रचूडां त्रिनेत्रां कुङ्कुमप्रभाम्।
पाशाऽङ्कुशधनुर्बाणप्रसूनशरसंयुताम् ॥ ४३ ॥
त्रैलोक्यसुन्दरीं तुर्यां सर्वभूषणभूषिताम्।
प्रणेमुर्विधिमुख्यास्ते जयशब्दप्रपूर्वकम् ॥ ४४ ॥
तदा प्राह पुनर्देवी सर्वे शृण्वन्तु मद्वचः।
अहमेव हि गायत्री न मत्तोऽन्या कथञ्चन ॥ ४५ ॥
वाक्समष्टिमयी चाऽहं सर्वे पश्यन्तु मां तथा।
दर्शनं दिव्यमासाद्य प्रसन्ना वो दिशामि तत् ॥ ४६ ॥
इत्युक्त्वा प्रादिशत्तेषां दिव्यं लोचनमम्बिका।
ददृशुः सर्व एवैते गायत्रीं त्रिपुराम्बिकाम् ॥ ४७ ॥
आकाशरूपिणीं यत्र व्याप्य सर्वं समास्थिताम्।
मातृकार्णक्लृप्तदेहां परामाद्यां सुधामयीम् ॥ ४८ ॥
स्वरवक्त्रां पञ्चवर्गक्लृप्तबाहुपदोदराम्।
अन्तःस्थाऽऽत्मतदूर्ध्वाङ्गह्रन्मूलपरिशेषिकाम् ॥ ४९ ॥
पश्यन्तीमध्यमानाभिहृदयां वक्त्रवैखरीम्।
मध्यमाबुद्धिसाहितां पश्यन्तीहृदयान्विताम् ॥ ५० ॥

वैखरीवचनां वर्णवक्त्रां पदहृदात्मिकाम् ।
वाक्योदरां घोषसूक्ष्मां वर्णस्थूलस्वरूपिणीम् ॥ ५१ ॥
अशेषाऽऽगममूर्धाढ्यां ज्योतिर्नेत्रां महेश्वरीम् ।
वक्त्रव्याकरणां छन्दोवाणीं शिक्षादिकन्धराम् ॥ ५२ ॥
कल्पकर्णां सामहृदं ऋग्यजूरूपसुस्तनीम् ।
अथ वर्णोदरां सांख्ययोगपार्श्वयुतां शुभाम् ॥ ५३ ॥
कर्माऽऽगमकरां तर्कजघन्याऽङ्गीं परात्पराम् ।
उपवेदपृष्ठदेशां पुराणाऽऽलोकशोभिनीम् ॥ ५४ ॥
काव्याऽलङ्कारहसितामात्मविद्यात्मकाऽऽशयाम् ।
बौद्धजैनाऽऽद्यागमाऽऽत्मनखलोमविराजिताम् ॥ ५५ ॥
दृष्ट्वैवं त्रिदशाद्यास्ते प्रणेमुर्दण्डवद्भुवि ।
अथ बद्धाञ्जलिपुटास्तुष्टुवुः परमेश्वरीम् ॥ ५६ ॥
अथ तुष्टा जगन्माता पूजिता सुरमुख्यकैः ।
एतस्मिन्नन्तरे तत्र समाजग्मुः सहस्रशः ॥ ५७ ॥
आभीरा धृतदण्डास्ते नत्वा प्रोचुर्विधिं तदा ।
ब्रह्मन्नः शृणु वाक्यानि लोका ब्रह्मविनिर्मिताः ॥ ५८ ॥
नियत्या नियतास्तत्र तत्र वाग्रूपया ननु ।
तत्र स्त्री न स्वतन्त्राऽस्ति त्रिषु स्थानेष्वपीश्वरी ॥ ५९ ॥
कन्याऽसौ जनको द्वारमथवा भ्रातृमुख्यकाः ।
न स्वतन्त्रस्ततो भोक्ता चैवं सर्गात् प्रवर्तितम् ॥ ६० ॥
तदेष सेतुर्भग्नोऽद्य वली तां भजते यदि ।
परस्परं नाशमीयुः सामिषश्येनपक्षिवत् ॥ ६१ ॥
तद्ब्रूह्यत्र समाधानं नश्येदत्र जगत्त्रयम् ।
श्रुत्वेत्थं गोपभूपालवचनं प्राह लोकसृट् ॥ ६२ ॥
नियतिर्न विलङ्घ्याऽस्ति दैवी सर्वोपरिस्थिता ।
दृष्ट एवं विधिरपि तस्मात्त्वं शान्तिमाप्नुहि ॥ ६३ ॥
पश्याऽऽत्मजां तव पराशक्तिरूपामिमां पुरः ।
दृष्ट्वा विधिवचो गोपपतिस्तां समवैक्षत ॥ ६४ ॥

आत्मजामेव तां दृष्ट्वा सर्वदेवप्रपूजिताम् ।
पराशक्तिं विदित्वाऽथ नत्वा सम्प्रार्थयत्तदा ॥ ६५ ॥
देव्यहं वञ्चितो मूढो मायया तव शङ्करि ।
नाऽविदं त्वां मद्गृहस्थां पराशक्तिं महेश्वरीम् ॥ ६६ ॥
तव कृपां कुरु देवेशि पुनर्मद्गृहमाविश ।
प्रार्थितैवं पराशक्तिः प्रोवाचाऽऽभीरभूपतिम् ॥ ६७ ॥
शृणु गोपकुलाऽधीश मां पराऽऽकाशरूपिणीम् ।
जानीहि त्रिविधाऽऽकारां सावित्र्याद्यात्मना स्थिताम् ६८॥
तत्राऽहं भारतीरूपा तोषिता तव वेश्मनि ।
सम्भूताऽस्मि पुनश्चाऽपि गौर्यंशेन समुद्भवा ॥ ६९ ॥
सृष्ट्यन्तरे भविष्यामि सह भ्रात्रा च विष्णुना ।
नन्दगोपस्त्वं भविता सर्वोत्तममहीपतिः ॥ ७० ॥
तत्राऽहं भविता कन्या कात्यायन्याभिविश्रुता ।
एषोऽनुजो मम भवेत् साक्षान्नारायणः परः ॥ ७१ ॥
आहरिष्यति ते कीर्तिं त्रिलोकविततां शिवाम् ।
अहं विन्ध्याऽद्रिनिलया भूत्वा कलियुगे ततः ॥ ७२ ॥
जनान् दुःखपरान् सर्वानुद्धरामि पुनः पुनः ।
गोपीभिः पूजिता तत्र मासं ते विषये शिवा ॥ ७३ ॥
अभीष्टं सर्वलोकानां दुर्लभं प्रदिशाम्यहम् ।
इति प्राप्य वरं तस्यास्तुष्टा गोपा अशेषतः ॥ ७४ ॥
जग्मुः स्वानिलयानेव नत्वा देवीं सुरानपि ।
अथ सा परमेशानी जगामाऽन्तर्द्धिमम्बिका ॥ ७५ ॥
सावित्री पर्वतस्थाना गायत्र्या सहितो विधिः ।
समाहरत् क्रतुं भूयः पुष्करे तीर्थशेखरे ॥ ७६ ॥
इत्येतत्ते समाख्यातं सावित्र्याख्यानमद्भुतम् ।
शृण्वतां पापशमनं भूयः किं श्रोतुमिच्छति ॥ ७७ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे सावित्र्युपाख्याने एकोनचत्वारिंशोऽध्यायः ॥ ३२३० ॥

# अथ चत्वारिंशोऽध्यायः ।

एवं दत्तात्रेयगीतां कथामाकर्ण्य भार्गवः ।
उत्सुकः श्रवणे भूयः कथां पप्रच्छ सादरम् ॥ १ ॥
न तृप्तिर्लेशतोऽप्यत्र कथारसनिषेवणात् ।
पानात् काम्यरसस्येव भूयस्तत् पातुमुत्सहे ॥ २ ॥
गायत्रीसङ्गतां देवीं वीजाऽवयवशोभिनीम् ।
अभिष्टुवन् विधिमुखा यथा तन्मे समीरय ॥ ३ ॥
अथाऽपि सा जगन्माता पुनर्गोपगृहे कथम् ।
नारायणेन सहिता भविष्यति कदा कुतः ॥ ४ ॥
कथं वा नन्दगोपालो विततां कीर्तिमाप्तवान् ।
कथं कात्यायनी साऽऽसीद्गोप्यः किं प्रापुरीप्सितम् ॥ ५ ॥
एतन्मे ब्रूहि विततं शिष्याय श्रोतुमिच्छते ।
इति पृष्टो दत्तगुरुः प्रसन्नः प्राह भार्गवम् ॥ ६ ॥
कथाप्रसङ्गयोग्योऽसि यत्ते तृप्तिर्न विद्यते ।
जामदग्न्य महादेवीशक्तिविद्धोऽसि सर्वथा ॥ ७ ॥
अहो भाग्यमिदं लोके दुर्लभं विषयाऽऽत्मनाम् ।
यच्छ्रीदेव्याः कथासारसमुत्सुकितचित्तता ॥ ८ ॥
शृणु भार्गव वक्ष्यामि यथा सा त्रिपुरेश्वरी ।
संस्तुता वागात्ममयी विधिविष्णुमुखैस्तदा ॥ ९ ॥
दृष्ट्वा तां सर्वविद्यात्ममातृकावर्णरूपिणीम् ।
जयेत्युद्घुष्य प्रणताः स्तवञ्चक्रुरनुत्तमम् ॥ १० ॥

जय जय देवि परापररूपिणि जय जय जगतां जनयित्रि
जय जय लीलाभासितसकले जय जय सर्वाऽऽश्रयरूपे ।

जय जय सर्वप्रलयविभाविनि जय जय सर्वाऽन्तररूपे
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ ११ ॥
निर्गतगुणकृतिजातिविभेदे चित्सुखसान्द्रसुधाजलधे
परिहृतपरिमितिपरवाग्रूपिणि मूलविलासिनि मुक्तिमयि ।
स्वातन्त्र्येण समीहितभावे मणिपुरवासिनि पश्यन्ति
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १२ ॥
तदनु ज्ञानमयाऽऽत्मविभक्तान्मध्यमभावान् कलयन्ती
मध्यमरूपाऽनाहतवासिनि मिश्रितरूपे बुद्धिमयि ।
वसुविधशक्तिवहिष्कृतभावे पीठविभेदे विचित्रकृते
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १३ ॥
अद्वयसंविन्मात्रशरीरं सद्वयभावं कलयन्ती जाता-
ऽनुत्तरसुखशरकिरणैर्मिथुनविभेदादपि दशधा ।
आद्या तत्परपरसंयोगाद्भूयश्चापि चतुर्विधता
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १४ ॥
अन्ते भेदाऽभेदविभेदादपि नृपसंख्यस्वररूपा
पञ्चविधं तत्पञ्चकमाद्यं व्यत्यययोगाद्द्वेदाविधा ।
तदनु चतुर्धा मध्यमहीना मिथुनद्वितयं कलयन्ती
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १५ ॥
एवं भूशरमितभेदाढ्या विद्याराज्ञी माता त्वं
तत्सम्भेदादखिलभिन्नं भावयसि त्वं शब्दमयि ।
त्वत्कलया यदि नो सम्भिन्नं गगनमयं स्यादखिलमिदं
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १६ ॥
स्थानत्रयमपि कलया हीनं तव यदि मातर्नो
किञ्चित् परमञ्चाऽपि पदं विकलं चेच्छपथो योऽयं नेतरथा ।
तत्त्वं प्रत्याहृतकलया तद्रूपं व्याप्य सदा स्फुरसि
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १७ ॥

वयमिह लोके सर्जनमुख्ये कृत्ये युक्तास्त्वद्भीत्या
त्वत्पदपद्मप्रभवाः काले सीदन्तस्त्वामविन्दन्तः ।
काले काले पादप्रणतानन्तु भीतान् मूढानतिदीनान्
जय जय विद्याविलसितदेहे जय जय शङ्करि नः पाहि ॥ १८ ॥

मेधा वाणी भारती त्वं विद्या माता सरस्वती।
ब्राह्मी माया वर्णमयी पराऽऽद्या कृतिरव्यया ॥ १९ ॥
विकल्पा निर्विकल्पाऽजा कला नादमयी क्रिया ।
कालशक्तिः सर्वरूपा शिवा श्रुतिरनुत्तरा ॥ २० ॥
रक्षाऽस्मांस्त्वं महादेवि सर्वलोकमहेश्वरि ।
पतितांस्त्वच्चरणयो रक्ष देवि नमोऽस्तु ते ॥ २१ ॥
इति स्तुता सा परमा मातृका विश्वरूपिणी ।
प्राह देवान् विधिमुखान् प्रसन्ना तत्कृताऽर्चना ॥ २२ ॥
शृणुध्वं विधिमुख्या मे वचोऽभिलपिताऽऽस्पदम् ।
स्तवेनाऽनेन तुष्टाऽस्मि श्रेष्ठेयं मत्स्तुतिः कृता ॥ २३ ॥
गुह्यार्थगर्भिता चेयं मातृकावर्णसम्भवा ।
मातृकास्तुतिरित्येषा विख्याताऽस्तु समन्ततः ॥ २४ ॥
त्रिसन्ध्यं यः पठेदेनां तस्याऽहं वाङ्मयी हृदि ।
प्रादुर्भवामि काव्यादिमयी विद्यास्वरूपिणी ॥ २५ ॥
एनां स्तुतिं प्रपठतो न हि विद्या विहीयते ।
समो वाक्पतिना भूयाद्वादेषु विजयी तथा ॥ २६ ॥
चतुर्विंशतिनामानि भवद्भिः पठितानि तु ।
प्रत्यहं त्रिषु कालेषु पठेद्वेदाऽक्षिवारकम् ॥ २७ ॥
ततो धारयति श्लोकसहस्रमपि प्रत्यहम् ।
बुद्धिः कुशाऽग्रसदृशी सूक्ष्माऽर्थप्रविभेदिनी ॥ २८ ॥
जायते नाऽत्र सन्देहः सत्यमेतन्मयेरितम् ।
विधिविष्णुविरूपाक्षाः शृणुध्वं वचनं मम ॥ २९ ॥

न भूयः शक्तयश्चेमाः परिभाव्याः कथञ्चन ।
क्रुद्धा जगद्भक्षयेयुर्विधिविष्णुशताऽऽवृतम् ॥ ३० ॥
मदंशभूता भवतामाश्रया माननोचिताः ।
इत्युक्त्वा सा महादेवी स्वं रूपं प्रतिपद्यत ॥ ३१ ॥
एतद्भृगुकुलाऽऽराध्य प्रोक्तं स्तोत्रं पुरा कृतम् ।
शृणु वक्ष्यामि सा भूयो यथा गोपकुलोद्भवा ॥ ३२ ॥
युगेऽष्टाविंशतितमे दैत्या मर्त्यस्वरूपिणः ।
भूलोकं पीडयिष्यन्ति हीनचर्यापरायणाः ॥ ३३ ॥
कालिन्द्यास्तटसंस्थाना मथुराख्या तु या पुरी ।
साम्प्रतं लवणाख्येन दैत्येनाऽधिष्ठिता हि सा ॥ ३४ ॥
तस्यां चन्द्राऽन्वयजनिर्भविष्यति नृपोत्तमः ।
उग्रसेन इति ख्यातो भोजवंशविवर्धनः ॥ ३५ ॥
तस्याऽऽत्मजः सर्वभीमः कालनेमिर्महासुरः ।
क्रूरः कंस इति ख्यातः सर्वलोकप्रपीडकः ॥ ३६ ॥
शिशुपालश्चेदिषु च हिरण्यकशिपुः स्वयम् ।
हिरण्याक्षो दन्तवक्रः शाल्वः सौमपतिस्तथा ॥ ३७ ॥
नरकः प्राग्ज्योतिषजो जरासन्धश्च मागधः ।
इत्याद्या मानुषाऽऽत्मानो दैत्या धर्मप्रहिंसकाः ॥ ३८ ॥
अनेककोटिसेनाभिः प्रत्येकं परिवारिताः ।
अप्रधृष्या महासत्त्वाः सर्वशस्त्राऽस्त्रकोविदाः ॥ ३९ ॥
तेष्वग्रगण्यः कंसो वै देवब्राह्मणसज्जनान् ।
प्रहिंसन् सर्वदा भूमावुद्भटः स सम्भाविष्यति ॥ ४० ॥
अथाऽधर्मभराक्रान्ता भूमिर्ब्रह्माणमेष्यति ।
असहन्ती महाभारमधर्मिष्ठजनोद्भवम् ॥ ४१ ॥
विधिर्देवगणोपेतो भूम्या च हरिमेष्यति ।
तत्राऽऽगतः शिवो ध्यातो न तद्रक्ष्येति चोत्तरम् ॥ ४२ ॥

अथ त्रिमूर्तिभिर्ध्याता त्रिपुरा परमेश्वरी ।
आविर्भविष्यति सुरैः प्रणता पूजिता च तैः ॥ ४३ ॥
प्रार्थिता भूभारहत्यै प्रवक्ष्यति बुधेश्वरान् ।
दुरुद्धरो ह्ययं भारः सर्वैरपि सुरेश्वरैः ॥ ४४ ॥
दैत्यास्तपोवीर्ययुता महाबलपराक्रमाः ।
न ते शक्या विजेतुं वो कालवीर्यप्रभावतः ॥ ४५ ॥
तस्माद्भवन्तः सर्वेऽत्र भूमौ मानुषजन्मतः ।
सम्भवन्त्वहमप्यत्र अंशेनाऽवतराम्यनु ॥ ४६ ॥
शापदग्धं करोम्यादौ कंसमेष हरिस्ततः ।
हनिष्यति मयाऽऽविष्टः सर्वानपि तथाऽसुरान् ॥ ४७ ॥
मत्तः प्राप्तवरो गोपो नन्दः परमशोभनः ।
साम्प्रतं भुवि कालिन्दीमनुगोव्रजनायकः ॥ ४८ ॥
तस्याऽहं सम्भविष्यामि पत्न्यामेष हरिः स्वयम् ।
देवक्यां वसुदेवेन भूत्वा नन्दगृहाच्च माम् ॥ ४९ ॥
कंसाऽन्तिकं प्रापयतु ततस्तं नाशयाम्यहम् ।
एवं प्रोक्ता महादेव्या देवाः सर्वे महीतले ॥ ५० ॥
द्विजेषु जाताः स्वस्वांऽशैः भाराऽवतरणोद्यताः ।
नारायणोऽपि देवक्यां भविष्यत्यखिलांऽशतः ॥ ५१ ॥
वसुदेवेन वृष्णीनां कुले परमशोभने ।
निशीथे तमसा वीते भगवान् स्वस्वरूपतः ॥ ५२ ॥
आविर्भविष्यति ततो वसुदेवेन संस्तुतः ।
बालभावं समेत्याऽथ वसुदेवं प्रवक्ष्यति ॥ ५३ ॥
नारदोक्त्या स्वसुर्गर्भाद्विदित्वा स्वात्मनो मृतिम् ।
एष कंसो मातुलो मे जागर्त्यतितरां भिया ॥ ५४ ॥
सम्प्रति श्रीमहादेव्या मोहिन्या मोहितो हि माम् ।
जातं मृत्युं न जानाति यावत्तावद्द्रुतं हि माम् ॥ ५५ ॥

नय नन्दगोपगृहं तत्र सा परमेश्वरी ।
सम्भूताऽस्ति तयाऽऽविष्टोऽहं जेष्यामि समेधितः ॥ ५६ ॥
जेतुं न शक्यः कंसोऽयमधुनाऽतिबली यतः ।
नय मां नन्दसदनं तत्र निक्षिप्यतामनु ॥ ५७ ॥
समाहराऽत्र तत्पश्चात् साऽस्य वीर्यं हरिष्यति ।
स्मर तां सर्वजननीं प्रतिरोधो न ते भवेत् ॥ ५८ ॥
विदित्वा परमां शक्तिं विष्णोर्वाक्यात् स्मृता हि सा ।
प्रभुं करिष्यति गतौ ततस्तं शिशुरूपिणम् ॥ ५९ ॥
समादाय यास्यति स गोकुलं प्रति निर्भयः ।
महादेवीं स्मरन्नेव निशीथेऽतितमोवृते ॥ ६० ॥
प्रकाशितमहामार्गः कालिन्दीमपि सन्तरत् ।
अथ गत्वा नन्दगृहं मोहग्रस्तजनाऽऽकुलम् ॥ ६१ ॥
यशोदा शयनेऽपश्यद्देवीं तां जनितां तदा ।
कोटिसूर्यसमाभासां त्रिनेत्रां चन्द्रशेखराम् ॥ ६२ ॥
शूलाऽसिखड्गपरशुपानपात्रकमण्डलून् ।
चर्मपाशाष्टभुजैर्दधानां भीमरूपिणीम् ॥ ६३ ॥
कालरात्रिं शिशुं न्यस्य प्रणम्याऽऽनकदुन्दुभिः ।
बद्धाञ्जलिपुटस्तावत् प्राप्तो ब्रह्मा च शङ्करः ॥ ६४ ॥
नारायणोऽपि नत्वा तामस्तवीत्त्रिपुरां शिवाम् ।
प्रसन्ना तान् समाधाय वसुदेवं प्रतीश्वरी ॥ ६५ ॥
नय मां त्वद्गृहमिति वदिष्यति ततस्तु ताम् ।
यावन्नीत्वा गृहे न्यस्यत्तावत् पालैश्च सर्वतः ॥ ६६ ॥
विदित्वा तत्र संयास्यत्येवेक्ष्य शिशुरूपिणीम् ।
समादायाऽऽत्ममृत्युं तां स्वस्रा भूयो निवारितः ॥ ६७ ॥
हन्तुमेव मनो यावत्तावद्गुरुतरां तु ताम् ।
मत्वा समर्थस्तां वोढुं प्रक्षेप्स्यति महीतले ॥ ६८ ॥

अथ प्राप्य नभोमार्गं प्राग्रूपा तं प्रवक्ष्यति ।
मूढ कंस न जानासि स्वमृत्युं विपयस्थितम् ॥ ६९ ॥
अचिरेण समेत्य त्वां पातयिष्यति भूतले ।
हृतं ते बलसर्वस्वं मया सद्यो विभावय ॥ ७० ॥
इत्युक्त्वाऽन्तर्हिता देवी भविष्यति महेश्वरी ।
तस्मिन्ननुप्रविष्टा सा भविष्यति सुबृंहणी ॥ ७१ ॥
अथ कृष्णस्तया देव्या च बृंहितोऽतिदुर्हृदान् ।
हत्वा कंसं रङ्गतले हनिष्यति सुलीलया ॥ ७२ ॥
नन्दस्तत्कृपया विष्णुं प्राप्य पुत्रं जगद्गुरुम् ।
त्रिलोकविशदां कीर्तिं प्राप्स्यत्यखिलपूजिताम् ॥ ७३ ॥
अथ तत्र गोपकन्या रूपलावण्यसंश्रयाः ।
नारायणं कृष्णमिति ज्ञात्वा तद्गतमानसाः ॥ ७४ ॥
तत्समागमसम्प्राप्त्यै तपस्यन्तं नदीमनु ।
कात्यायनं मुनिं सर्वास्तोपयिष्यन्ति सेवया ॥ ७५ ॥
स प्रसन्नो विमृश्याऽथ तां वक्ष्यति कुमारिकाः ।
असाध्यं वः प्रेप्सितं यन्नारायणसुसङ्गताः ॥ ७६ ॥
तुष्टोऽहं साधयिष्यामि सर्वथा तन्न संशयः ।
विदित्वा नन्दसदनभवां तां कृष्णसंश्रयाम् ॥ ७७ ॥
उपस्थास्यति सद्भक्त्या स्वोपास्यामेव तन्मयीम् ।
अथ सा कालरात्रिर्वै प्रसन्ना तेन संस्तुता ॥ ७८ ॥
आविर्भविष्यति शिवा भक्तमानसपूरणी ।
सा प्रवक्ष्यति तुष्टा तं विप्रवर्यं समीहितम् ॥ ७९ ॥
किन्ते तद्ब्रूहि मत्तस्त्वं मा चिरं समवाप्नुहि ।
अथ तां वक्ष्यति नत इमा गोपकुमारिकाः ॥ ८० ॥
विष्णुनांऽशावतीर्णेन प्राप्स्यन्त्याचिरसङ्गतम् ।
तत् प्रसाधय देवेशि एतन्मे काङ्क्षितं भवेत् ॥ ८१ ॥

अहं चिरं सेवितः सन् आभिः सर्वाऽऽत्मभावतः ।
दिशाम्यभीप्सितमिति सन्तुष्टोऽब्रुवमञ्जसा ॥ ८२ ॥
तन्मे मृषा न हि भवेत् कृपया तव शङ्करि ।
एवं कात्यायनवचः श्रुत्वा त्रिजगदीश्वरी ॥ ८३ ॥
विप्रं वक्ष्यति पुनरस्तु तत्ते द्विजोत्तम ।
परन्त्वत्र महान् काम एष तासां मनोगतः ॥ ८४ ॥
तन्मे व्रतं चरन्त्वेता मासेऽस्मिन्नाग्रहायणे ।
तव नाम्ना प्रसिद्धायाः कात्यायन्या यथाविधि ॥ ८५ ॥
ततः कामं दिशाम्युक्तमित्युक्त्वाऽन्तर्द्धिमेष्यति ।
ततस्ता वचनात्तस्य व्रतं कृत्वा यथाविधि ॥ ८६ ॥
प्रियं कृष्णं मनःकान्तं प्राप्स्यन्ति पुरुषोत्तमम् ।
इति श्रुत्वा कथां तत्र दत्तात्रेयं भृगूद्वहः ॥ ८७ ॥
पप्रच्छ भूयः सोत्साहो भगवन् करुणानिधे ।
व्रतं तत् किंविधं ब्रूहि आचरिष्यन्ति ताः कथम् ॥ ८८ ॥
कथं कात्यायनी प्रीता तासामिष्टं प्रदास्यति ।
पृष्ट एवं दत्तगुरुर्जामदग्न्येन हर्षितः ॥ ८९ ॥
शृणु वत्सेत्युपाऽऽमन्त्र्य व्रतस्याऽऽह विधिं परम् ।
शृणु भार्गव वक्ष्यामि जानाम्यखिलाऽऽगमम् ॥ ९० ॥
मार्गशीर्षस्याऽद्य तिथिं समारभ्य व्रतञ्चरेत् ।
कात्यायन्याः पूर्णिमान्तं स्त्रीणामत्राऽधिकारिता ॥ ९१ ॥
स्नात्वोषसि नदीतीरे शुक्लवस्त्रादिभूषिताः ।
सैकतीं प्रतिमां कृत्वा कात्यायन्या यथाविधि ॥ ९२ ॥
तत्र ध्यात्वा प्रोक्तवत्तां शुक्लमाल्याऽक्षतादिभिः ।
नवनीतप्रधानं वै नैवेद्यं विविधं भवेत् ॥ ९३ ॥
एवं सम्पूज्य संस्तुत्य गीतनृत्यैश्च तोषयेत् ।
उद्वास्य सैकतीं मूर्तिं नद्यां निक्षिप्य भार्गव ॥ ९४ ॥

# अथैकचत्वारिंशोऽध्यायः ।

भवत्तत्त्वद्भुततमा श्रुता कात्यायनीकथा ।
मनागपि न तृप्यामि कथाऽमृतनिषेवणात् ॥ १ ॥
भूय इच्छाम्यहं श्रोतुं कथं विन्ध्यनिवासिनी ।
जाता कात्यायनी देवी तन्मे वद दयानिधे ॥ २ ॥
रामेणैवं समापृष्टो दत्तात्रेयोऽवदद्गुरुः ।
शृणु राम प्रब्रवीमि भविष्यं परमाऽद्भुतम् ॥ ३ ॥
यदा कृष्णो मातुलं स्वं कंसं हत्वा च तत्पितुः ।
राज्यं निवेद्य पित्रादीन् यादवांस्तोषयिष्यति ॥ ४ ॥
तदा कंसस्य श्वशुरः पुत्रीप्रियचिकीर्षया ।
कालयिष्यति भूयो वै यादवान्मथुरास्थितान् ॥ ५ ॥
तदा मागधसामीप्यान्नाशं मत्वा रमापतिः ।
यादवैः सहितः मत्यकूसागरे द्वारकां विशेत् ॥ ६ ॥
अथ कृष्णं दूरगतं ज्ञात्वाऽघासुरसोदरौ ।
महाबलपरीवारौ निशुम्भशुम्भसंज्ञकौ ॥ ७ ॥
कृष्णशत्रू दैत्यराजौ तत्सम्बन्धेन गोकुलम् ।
समेत्य क्रूरचरितावत्राङ्कं नाशयिष्यतः ॥ ८ ॥
नेष्यतो नन्दनृपतिं बध्वा गोपकुमारिकाः ।
तथा धनानि गावश्च तदा नन्दप्रिया सती ॥ ९ ॥
कृष्णाऽनुरक्तगोपीभिः कात्यायनमुपेष्यति ।
आर्ता प्रपन्नां तां विप्रः कात्यायन्याः समुद्भवम् ॥ १० ॥
प्रवक्ष्यति च सम्बन्धं ज्ञात्वा तां तनुजां स्वकाम् ।
यशोदा विस्मिता देवीमुपस्थास्यति भक्तितः ॥ ११ ॥

ततः प्रसन्नाऽऽविर्भूता तत्र कात्यायनी परा ।
मातरं तां समाश्वास्य सिंहवाहनमास्थिता ।
अनुयास्यति तौ दैत्यनाथौ शुम्भनिशुम्भकौ ॥ १२ ॥

भविष्यति ततो युद्धं सुभीमं दैत्यनाशनम् ।
यमुनाकूलमासाद्य दिनानि त्रीणि पञ्च च ॥ १३ ॥
मोचयित्वा नन्दमुखान् गोपकन्याश्च सर्वतः ।
अनुयास्यति तान् हन्तुं दैत्यान् बलसुदर्पितान् ॥ १४ ॥

देवीवीर्येण सन्त्रस्ताः पलायिष्यन्ति तेऽसुराः ।
तदा देवी प्रार्थिता सा मातरेते महासुराः ॥ १५ ॥
नार्हन्त्युपेक्षां हनने यतः कलियुगे जनाः ।
हीनसत्त्वा भविष्यन्ति तानेकोऽप्येषु नाशयेत् ॥ १६ ॥

ततो हन्तुमिमान् दैत्यान् समर्हासि महेश्वरि ।
एकोऽप्यत्राऽवशेषश्चेत् प्रवृत्तिर्न कलौ भवेत् ॥ १७ ॥
तस्मान्निःशेषतस्त्वेनानविचार्य हनिष्यसि ।
प्रार्थितैवं दैत्यगणान् हन्तुमेव प्रयास्यति ॥ १८ ॥

ततो निशुम्भः स्वं स्थानं विन्ध्यकन्दरसंस्थितम् ।
देवखातं महाभीमं निविशिष्यति वै तथा ॥ १९ ॥

शुम्भो यास्यति जाह्नव्यां दरीमन्यामनीकिनीम् ।
एवं त्रिधा विद्रुतेषु दैत्येष्वथ महेश्वरी ॥ २० ॥
कात्यायनी त्रिधा भूत्वा दैत्याननुद्रविष्यति ।
प्रविश्य देवकी तन्तु निशुम्भं निहनिष्यति ॥ २१ ॥

कालीरूपेण तत्सेनां भक्षयिष्यति चाऽपरा ।
शुम्भं हनिष्यति परा विन्ध्याऽग्रे गाङ्गरोधसि ॥ २२ ॥
एवं दैत्यान् त्रिरूपेण हत्वा कात्यायनी परा ।
त्रिरूपेण स्थिता तत्र लोके रक्षणहेतवे ॥ २३ ॥

अथ देवाः समागत्य स्तोष्यन्ति विविधैः स्तवैः ।
भविष्यति प्रसन्ना सा देवानां वरदा तदा ॥ २४ ॥
महेश्वरि त्रिधैव त्वमेषु स्थानेषु सुस्थिरा ।
तिष्ठ भूयः कलियुगे दैत्यबाधाविमुक्तये ॥ २५ ॥
त्वां दैत्यनाशिनीं दृष्ट्वा प्रभविष्यन्ति नाऽसुराः ।
वयं भुवि समागत्य पूजयामः सुपर्वसु ॥ २६ ॥
कलौ काममया लोका दम्भाऽनृतपरायणाः ।
पिशुनाः पापनिरता नास्तिका धर्मबाधकाः ॥ २७ ॥
कामुकास्तत्र पुरुषा गमिष्यन्त्यपि मातरम् ।
स्नुषां तनूजां भगिनीं कामयिष्यन्ति कामुकाः ॥ २८ ॥
स्त्रियः पतिविरोधिन्यः प्रत्यास्यन्त्यन्त्यजानपि ।
भार्यापजाव्या भर्तारः कन्याजीव्याश्च मातरः ॥ २९ ॥
विक्रयिण्यः स्त्रियो योनेः पण्यस्येव यथाऽऽपणे ।
अन्त्यजाऽध्यापका विप्रा वृथा पशुविहिंसकाः ॥ ३० ॥
धनार्थमविधानेन याजयिष्यन्त्यवैदिकान् ।
धनार्थं मातरं पुत्रं पितरं पतिमेव च ॥ ३१ ॥
गुरुं मित्रञ्च विश्वस्तमपि घ्नन्ति परस्परम् ।
धर्मवार्तां ज्ञानवार्तां वदिष्यन्ति गृहे गृहे ॥ ३२ ॥
आचरिष्यन्त्यविहितं ज्ञाननिष्ठासमीरणाः ।
तान्त्रिकाभासमार्गाणि संश्रित्य द्विजबन्धवः ॥ ३३ ॥
दूषयिष्यन्ति सन्मार्गं वेदागमसमाश्रयम् ।
अविधानेन यास्यन्ति क्रतुभेदेषु ब्राह्मणाः ॥ ३४ ॥
सोमं सुराञ्च मांसानि भक्षयिष्यन्ति तर्षया ।
शास्त्राणि कल्पयिष्यन्ति स्वस्वाऽभिमतसम्मितम् ॥ ३५ ॥
प्रायः सर्वे खलाः स्तब्धा वञ्चकाः सर्वदूषकाः ।
हीनवर्णा उत्तमानां गुरवश्चोपदेशकाः ॥ ३६ ॥

तपःपरायणाः शूद्रा ब्राह्मणाश्च स्ववृत्तयः ।
स्त्रीजीवना नृपतयो वैश्याश्चौर्यपरायणाः ॥ ३७ ॥
शासिष्यन्ति महीमेतामन्त्यजाताश्च भूयशः ।
आगमाभासमाश्रित्य द्विजमुख्या अपीश्वरि ॥ ३८ ॥
पास्यन्ति मदिरां कामाद्गच्छन्त्यखिलयोनिषु ।
वेदागमप्रविहितं हित्वा कामपरायणाः ॥ ३९ ॥
बौद्धाऽऽर्हतम्लेच्छमार्गान् संश्रयिष्यन्ति सर्वशः ।
एवंविधानामत्यन्तकामिनां कामपूर्तितः ॥ ४० ॥
त्वद्दर्शनादेव गतिर्भवेन्नह्यन्यथा क्वचित् ।
एवं सुरैः प्रार्थिता सा त्रिरूपा विन्ध्यवासिनी ॥ ४१ ॥
लोकान् सर्वान् समुद्धर्तुं संस्थास्यति महीतले ।
एतत्तेऽभिहितं देव्या भूयः शुम्भनिषूदनम् ॥ ४२ ॥
श्रुत्वैतत् सर्वपापेभ्यो मुच्यते वाञ्छितं लभेत् ।
इति तेऽभिहितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ ४३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे कात्यायनीचरिते एकचत्वारिंशोऽध्यायः ॥ ३३७८ ॥

मालवी सहदेवा च नन्दा भद्रा सुनन्दिनी ।
पद्मा विशाला गोदाङ्गी श्रीदेवी देवमालवी ॥ ९५ ॥
श्यामा सुपेशा शालाङ्गी मानवी मानदाऽमृता ।
इति गोपकुमारीणां प्रधानाः षोडशेरिताः ॥ ९६ ॥
पूजाऽन्ते संस्मरेदेताः पूजासम्पूर्तिहेतवे ।
गोपीप्रिय नमस्तुभ्यं गोपाल गोत्रजेश्वर ॥ ९७ ॥
गोपीवस्त्राऽपहरण गोगोपालनिषेवित ।
मातः कात्यायनि नमो नन्दगोपकुमारिके ॥ ९८ ॥
कंसवीर्यहरे कृष्णवीर्ये विन्ध्याऽद्रिवासिनि ।
इति देवीं कृष्णमपि नत्वा गां वत्ससंयुताम् ॥ ९९ ॥
प्रदक्षिणीकृत्य दूर्वामुष्टिं तस्यै निवेदयेत् ।
हविष्यान्नं समश्नीयान्मासमात्रं समाहिता ॥ १०० ॥
मासाऽन्ते शक्तितोऽभ्यर्च्य विशेषेण महेश्वरीम् ।
ब्राह्मणान् भोजयेच्छक्त्या नवनीतप्रधानतः ॥ १०१ ॥
एवं व्रताऽऽचरणतो वाञ्छितं प्राप्यतेऽखिलम् ।
कुमारी लभते श्रेष्ठं पतिं सर्वसुखावहम् ॥ १०२ ॥
तरुणी लभते पुत्रं पौत्रं पुत्रवती तथा ।
सौभाग्यं सर्वसौख्यानि लभते नाऽत्र संशयः ॥ १०३ ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे कात्यायनी-
चरिते चत्वारिंशोऽध्यायः ॥ ३३३२ ॥

# अथ द्विचत्वारिंशोऽध्यायः ।

जामदग्न्यः प्राह ततः श्रुत्वा कात्यायनीकथाम् ।
कथारसाऽऽकृष्टचेताः प्रमोदितशुभाऽन्तरः ॥ १ ॥
भगवन्नाथ करुणामूर्ते त्वत्कीर्तितां कथाम् ।
भूयो मे शृण्वतो नाऽस्ति तृप्तिः स्वल्पाऽपि कुत्रचित् ॥२॥
तदहं श्रोतुमिच्छामि वृत्तं शुम्भनिशुम्भयोः ।
अतीतमपि तौ यद्वद्धतौ किंबलपौरुषौ ॥ ३ ॥
कया मूर्त्या कथं युद्धमभूत् सर्वमशेषतः ।
वद मे भगवन्नाऽन्यो वक्ताऽस्य सुलभो भुवि ॥ ४ ॥
अवधूतगुरुस्त्वेवं पृष्टो रामेण तां कथाम् ।
प्राह क्रमेण शिष्याय प्रीतः प्रीत्या कथाश्रुतौ ॥ ५ ॥
जामदग्न्य शृणु कथामेतां परमपावनीम् ।
चण्डिकामहिमायुक्तां सर्वसिद्धिप्रदायिनीम् ॥ ६ ॥
सुमेधसा ब्राह्मणेन सम्प्रोक्तां सुरथाय वै ।
मधुकैटभनामानावादिदैत्यौ महाबलौ ॥ ७ ॥
युयोध याभ्यां श्रीविष्णुर्वर्षसहस्रपञ्चकम् ।
छलेन तेन निहतौ मेदिनीयं यतोऽभवत् ॥ ८ ॥
मेदिनी मेदसा व्याप्ता तयोर्देहस्य वै ततः ।
तयोर्वंशे समभवन्निशुम्भः शुम्भ एव च ॥ ९ ॥
चेरतुस्तप अत्युग्रं वर्षाणामयुताऽष्टकम् ।
ततो विधिः प्रसन्नोऽभूत्तयोर्वरचिकीर्षया ॥ १० ॥
तौ वव्राते वरं स्वेष्टं सर्वलोकभयावहम् ।
सर्वाऽजेयत्वमथ तज्ज्ञात्वा लोकत्रिधिस्तदा ॥ ११ ॥

पुरुषैस्त्वमजेयोऽसीत्युक्त्वा शुम्भं परं तथा ।
अन्तर्धानं ययौ तेन वरेण दैत्यपुङ्गवौ ॥ १२ ॥
अजेयौ सर्वलोकानां दैत्यौ तौ सम्बभूवतुः ।
विजित्य लोकांस्त्रीन् दैत्यौ त्रैलोक्यश्रियमापतुः ॥ १३ ॥
शुम्भोऽभवत् स्वर्गपतिर्निशुम्भो भूपतिर्बभौ ।
कौबेरमथ याम्यञ्च वारुणं नैरृतं पदम् ॥ १४ ॥
आग्नेयं वायवीयञ्च पदं शुम्भो ददौ क्रमात् ।
दैत्यानामेव भ्रातॄणां पुत्राणाञ्च विभागतः ॥ १५ ॥
एवं दैत्यहृतैश्वर्या देवा दैन्यं समागताः ।
दुर्गेषु वनराजीषु चेरुर्भीताः सुरेश्वराः ॥ १६ ॥
एवं ते स्वपदभ्रष्टाः सुरा दैन्यं समाश्रिताः ।
मर्त्यलोकेषु दैत्येभ्यो भीता गुप्तस्वरूपिणः ॥ १७ ॥
मनुष्यवेषैराच्छन्नाः कन्दराऽन्तर्वनेष्वपि ।
तापसं वेषमाश्रित्य जटावल्कलचीरिणः ॥ १८ ॥
इन्द्रादयः समभवंस्तथाऽन्ये पक्षिरूपिणः ।
एवं वर्षाऽयुतशतं देवाः स्वस्वपदच्युताः ॥ १९ ॥
शासन्ति दैत्या जगतीं सर्वतः शुम्भपालिताः ।
हविर्भागानप्सरसो मृतकल्पमहीरुहान् ॥ २० ॥
ऐरावतं नन्दनादीनाच्छिद्य बुभुजुर्बलात् ।
आददुः सर्वरत्नानि लोकत्रयगतान्यपि ॥ २१ ॥
मर्त्यलोके न कुत्रापि देवयज्ञः प्रवर्तते ।
आसुराः क्रतवः सर्वे शुम्भशासनतोऽभवन् ॥ २२ ॥
शुम्भः प्रावर्तयद्वेदान् साङ्गान् विद्यासमन्वितान् ।
पुराणं कल्पसूत्रञ्च धर्मशास्त्रमशेषतः ॥ २३ ॥
तथा तत्फलदान् लोकानुत्तमाऽधममध्यमान् ।
स्वर्गांश्च नरकांश्चैव शासति स्वमतेन सः ॥ २४ ॥

तदाऽतिक्लेशिता देवाः शक्रमुख्याः समेत्य ते ।
ययुः शतधृतेर्लोकमसुरैरविलक्षिताः ॥ २५ ॥
अथ तत्र समासीनं धातारं सिद्धसेवितम् ।
प्रज्वलद्वह्निकूटाभं विश्वक्तेजोभिराततम् ॥ २६ ॥
चतुर्भिर्मुकुटैर्युक्तं चतुःशृङ्गमहीध्रवत् ।
मूर्तिमद्भिः श्रुतिगणैर्विद्याभिः सेवितं विभुम् ॥ २७ ॥
दूराद्देवाऽमराः सर्वे दण्डवत्प्रणतास्तदा ।
उत्थाय मूर्ध्नि विन्यस्याऽञ्जलिबन्धं प्रतुष्टुवुः ॥ २८ ॥
दृष्ट्वाऽमरान् स्तुतिपरान् दीनानपहृतश्रियः ।
प्राह शक्रमभिप्रेक्ष्य विधिः सर्वविभावनः ॥ २९ ॥
देवेश ब्रूहि किं तेऽद्य कारणं समुपागमे ।
इति पृष्टः शतमुखः कृताञ्जलिरुवाच तम् ॥ ३० ॥
धातः शुम्भनिशुम्भाभ्यां बलिभ्यां वरदानतः ।
हृतं त्रिभुवनेशित्वं वयमेव निराकृताः ॥ ३१ ॥
बद्धाः कथञ्चिन्निर्मुक्ताश्छन्नरूपा वनाऽद्रिषु ।
हृतश्रियो हतबलाः कृपणाः प्राकृता इव ॥ ३२ ॥
इन्द्रचन्द्रकुबेरेशवरुणाऽग्निमरुत्पदम् ।
आच्छिद्य दानवैः सर्वं भुज्यते तत्तु नित्यशः ॥ ३३ ॥
तद्ब्रूहि नः कृत्यतमं शुम्भं प्रकृतिदं पुनः ।
दीनानां नो विपत्त्राणे नास्त्यन्यस्त्वदृते क्वचित् ॥३४॥
इति श्रुत्वा शक्रवचो विधिः क्षणमचिन्तयत् ।
ततः प्राह सुरेशं तं ब्रह्मा लोकपितामहः ॥ ३५ ॥
निशम्यतां देवपते यदत्राऽनन्तरं भवेत् ।
नेमौ वध्यौ विष्णुमुखैरपि पुंभिः कदाचन ॥ ३६ ॥
न योषिदपरा काचिदस्त्यस्य प्रतिविक्रमा ।
त्रिपुरां परमेशानीं प्रभवेत विनाऽत्र का ॥ ३७ ॥

तद्वयं हरिणा युक्ता हरेण च सुसंयताः ।
प्रसादयामस्तां देवीं जगद्यात्राप्रसिद्धये । ३८ ॥
इत्युक्त्वा शिवविष्णुभ्यां देवैरपि युतो विधिः ।
गत्वा त्रिपथगातीरं हिमवच्छृङ्गमद्भुतम् ॥ ३९ ॥
प्रणताः परमेशानीं देवास्त्रिभुवनेश्वराः ।
बद्धाञ्जलिपुटा भक्त्या तुष्टुवुर्विश्वभावनीम् ॥ ४० ॥
नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ४१ ॥
इत्यादिविविधैः स्तोत्रैरस्तुवन् भक्तिभावनाः ।
अथ प्रसन्ना परमा त्रिपुरेशी महेश्वरी ॥ ४२ ॥
भवानीं प्राहिणोत्तत्र देवानां सुकृतेच्छया ।
एवं सा प्रहिता देव्या पार्वती सखिभिर्वृता ॥ ४३ ॥
ययौ स्नातुमिवाऽऽरात्तान् देवान् दृष्ट्वाऽऽब्रवीद्वचः ।
अविदन्तीव के यूयं किमर्थमिह सङ्गताः ॥ ४४ ॥
एवं पृष्टाः सुराः प्राहुः शुम्भदैत्यनिराकृताः ।
वयं देवा इह प्राप्ता देवीं तां शरणाऽऽगताः ॥ ४५ ॥
श्रुत्वा पुनः प्राह गौरी भवद्भिः स्तूयतेऽत्र का ।
इति चण्डक्रोधयुता ज्वलदग्निशिखोपमा ॥ ४६ ॥
भिन्ननीलमणिप्रख्या काली क्रोधेन साऽभवत् ।
अथ तस्याः शरीरात्तु निर्गता त्रिपुराऽशतः ॥ ४७ ॥
रूपमत्युत्तमं कृत्वा शक्तिः शुम्भवधेहया ।
प्राह गौरीं सुरगणैः स्तुताऽहं शुम्भपीडितैः ॥ ४८ ॥
नाशयिष्यामि तौ शुम्भनिशुम्भौ दानवेश्वरौ ।
सहिताऽहं त्वया कालि देवानां प्रियकारिणि ॥ ४९ ॥
भाषन्तीमिति तां देवीं विधातृप्रमुखाः सुराः ।
उच्चैर्जयेति शब्देन वर्धयामासुरम्बिकाम् ॥ ५० ॥

अथ ब्रह्मा प्राह परां स्तुत्वा नत्वा पुनः पुनः ।
पार्वत्याः क्रोधयुक्ताया देहाद्यस्मात्समुद्गता ॥ ५१ ॥
चण्डिकेति ततो लोके नाम तेऽस्तु महेश्वरि ।
तन्मध्ये शुम्भदैत्यस्य मन्त्रिणावसुराऽधिपौ ॥ ५२ ॥
चण्डमुण्डाविति ख्यातौ मृगयातत्परौ वने ।
जयशब्दं समाकर्ण्य तद्विज्ञातुं समागतौ ॥ ५३ ॥
दृष्ट्वा तावसुरावुग्रौ भीताः शक्रमुखाः सुराः ।
निलिल्युर्वृक्षखण्डेषु कन्दरेषु जलेषु च ॥ ५४ ॥
अथ चण्डः समालोक्य चण्डिकां लोकमोहिनीम् ।
मुण्डश्च कामसन्तप्तौ ग्रहीतुं तामुपेयतुः ॥ ५५ ॥
का त्वं पद्मपलाशाक्षि वनेऽस्मिन् विजने स्थिता ।
मां वा ममाऽनुजं वाऽपि स्वीकुरुष्व यथेप्सितम् ॥ ५६ ॥
तारुण्यलावण्यपूर्णहृतं मे मानसं त्वया ।
ईक्षामात्रेण सर्वाङ्गसुन्दरि त्वमुपैहि माम् ॥ ५७ ॥
अहं त्रिभुवनेशस्य शुम्भस्याऽमात्य उत्तमः ।
मां भज प्रीतिसंयुक्ता नोचेन्नेष्यामि त्वां बलात् ॥ ५८ ॥
इत्युक्त्वाऽभिससाराऽऽशु ग्रहीतुं तां करे द्रुतम् ।
तावत्काली चण्डिकया दृष्टा तौ जगृहे बलात् ॥ ५९ ॥
शिरो गृहीत्वा हस्ताभ्यां तयोः काली बलीयसी ।
घातयामास चाऽन्योन्यं ततस्तौ मूर्च्छितौ भुवि ॥ ६० ॥
पेततुर्भिन्नमूर्धानौ शोणितोक्षितभूतले ।
प्राह देवी कालिकेमौ न हन्तव्यौ कथञ्चन ॥ ६१ ॥
प्रवृत्तिं प्राप्य चैताभ्यां तावुभावागमिष्यतः ।
अथ तौ मूर्च्छया मुक्तौ लज्जितौ भयकातरौ ॥ ६२ ॥
अपसृत्य ततः शुम्भं समेत्य प्राहतुर्नतौ ।
महाराजाऽसुरपते काऽपि त्रैलोक्यसुन्दरी ॥ ६३ ॥

प्रालेयाद्रिं समाश्रित्य दीपयन्ती दिशः स्थिता ।
मन्यावहे स्त्रीषु रत्नभूतां तां सर्वतोऽधिकाम् ॥ ६४ ॥
उर्वशी पूर्वचित्तिश्च रम्भा चाऽपि तिलोत्तमा ।
मेनका च त्वां भजन्ति सदेमा मिलिता अपि ॥ ६५ ॥
तस्याः पादनखस्याऽपि सौन्दर्यस्य कलासमाः ।
भवेयुर्न भवेयुर्वा इति मे निश्चिता मतिः ॥ ६६ ॥
शचीलक्ष्मीमुखाभिः सा सेव्यमाना मनोहरा ।
तां विना ते त्रिजगतीविभुत्वं व्यर्थतामियात् ॥ ६७ ॥
सर्वलोकपतिस्त्वञ्चेद्रत्नभूतामपीदृशीम् ।
नाऽऽसादयसि तन्नैव जीवितं सफलं भवेत् ॥ ६८ ॥
आवाभ्यां तां समादातुं त्वदर्थे प्रसमीहितम् ।
यावत्तावत्तस्य काचित् काली विकटरूपिणी ॥ ६९ ॥
प्रेष्याऽऽवां जगृहे क्षिप्रं लीलयेव बलीयसी ।?
तस्याः कथञ्चिन्निर्मुक्तौ पश्य भिन्नं शिरो मम ॥ ७० ॥
अद्य ते निहतो दर्पः स्त्रिया प्रतिहतो बत ।
पुनस्तां कालिकां हत्वा प्राप्य तां लोकसुन्दरीम् ॥ ७१ ॥
प्रवर्तय प्रतिहतां कीर्तिमाश्वसुरेश्वर ।
एवं तयोर्वचः श्रुत्वा शुम्भः कामातुरोऽभवत् ॥ ७२ ॥
आहूय दूतं सुग्रीवं प्रेषयामास तां प्रति ।
दूत काचिद्धिमगिरावबला लोकसुन्दरी ॥ ७३ ॥
आस्ते तां सर्वथोपायैरानेतुं त्वमिहाऽर्हसि ।
यद्युपायैस्त्रिभिश्चाऽपि मत्पार्श्वं नोपयास्यति ॥ ७४ ॥
आनयामोऽथ तुर्येण गच्छ शीघ्रं सुसाधय ।
अथ तत्र ययौ दूतस्तां ददर्श च संस्थिताम् ॥ ७५ ॥
प्रणम्य प्राह देवि त्वामाह त्रिजगतीश्वरः ।
शुम्भाऽसुरो रत्नभूतां मत्वा त्वां स्त्रीषु सर्वतः ॥ ७६ ॥

अहं हि सर्वरत्नानां पतिस्तस्माद्भजस्व माम् ।
सारूप्येन नोचेद्वैरूप्यं प्राप्ताऽप्येष्यसि मद्वशम् ॥ ७७ ॥
का त्वं कस्य कुतो भूता किं चिकीर्षसि भामिनि ।
ब्रूहि सर्वमशेषेण जिज्ञासत्यसुरेश्वरः ॥ ७८ ॥
अथाऽऽह देवी तं दूतं सस्मयं मृदुभाषिणी ।
अहं चण्डीति विख्याता नाऽन्यस्याऽद्यावधि क्वचित् ७९॥
निसर्गतोऽत्र सम्प्राप्ता हन्तुं देवद्विषो ननु ।
संग्रामे ह्यजिता न स्यां वशे कस्याऽपि कुत्रचित् ॥ ८० ॥
ब्रूहि गत्वा सुरपतिं जित्वा नयतु मां वशम् ।
दूतस्तयेत्थमादिष्टः शुम्भाय प्रतिवेदयत् ॥ ८१ ॥
श्रुत्वा शुम्भः प्रकुपितः पार्श्वस्थं धूम्रलोचनम् ।
समादिशत् प्रयाहीति गत्वा जित्वा च तां लघु ॥ ८२ ॥
बद्ध्वा समानय क्षिप्रमित्युक्तो धूम्रलोचनः ।
दैत्यसेनापरिवृतः प्रययौ योद्धुमम्बिकाम् ॥ ८३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये चण्डिकामाहात्म्ये
द्विचत्वारिंशोऽध्यायः ॥ ३४५९ ॥

---

# अथ त्रिचत्वारिंशोऽध्यायः ।

आसाद्य तां धूम्रनेत्रो दैत्यसेनासमावृतः ।
ववर्ष शरवर्षेण प्राह देवीं रुषाऽन्वितः ॥ १ ॥
मूढे दैत्येश्वरं याहि देवैः सम्मानिता द्रुतम् ।
नोचेद्बद्धा यास्यसि तं मानहीना मया द्रुतम् ॥ २ ॥
सेनापतेर्वचः श्रुत्वा सस्मयं प्राह चण्डिका ।
नय मामवलां दैत्य जित्वा युद्धेन मा चिरम् ॥ ३ ॥
इत्युक्त्वा शरवर्षेण ववर्षाऽसुरपुङ्गवम् ।
अथ देवाः समालोक्य भूमिष्ठां चण्डिकां पराम् ॥ ४ ॥
रथस्थं धूम्रनेत्रञ्च विषमं बुबुधुस्ततः ।
वाहनार्थे हरिं देवाः प्रार्थयामासुरञ्जसा ॥ ५ ॥
अथ विष्णुर्मृगपतिर्भूत्वा पर्वतसन्निभः ।
अवहच्चण्डिकां युद्धे त्रासयन् दैत्यमण्डलम् ॥ ६ ॥
अथ युद्ध्वाऽचिरं देव्या धूम्राक्षो दैत्यनायकः ।
समुत्पतद्ग्रहीतुं तां करेणं द्रुतमम्बिकाम् ॥ ७ ॥
दृष्ट्वाऽऽयान्तं धूम्रनेत्रं हुङ्कारमकरोत् परा ।
हुङ्कारसहनिर्गच्छद्वक्त्रज्वालापरीवृतः ॥ ८ ॥
पतङ्गवद्भस्मशेषीभवत् स निमेषाऽर्धतः ।
अथ सेनां दैत्यपतेरुद्वेलमिव सागरम् ॥ ९ ॥
शासयामास निमिषाद्धरिर्हरिवपुर्धरः ।
अथ श्रुत्वा हतं सैन्यं शुम्भो धूम्राक्षसंयुतम् ॥ १० ॥
क्रुद्धः प्राह पार्श्वगतौ चण्डमुण्डौ महाऽसुरौ ।
युवाभ्यामविलम्बं सा ससेनाभ्यां विजित्य तु ॥ ११ ॥

समानेया हरिं तश्च बद्ध्वा हत्वाऽपि वा भृशम् ।
आनीयतामिति तदा श्रुत्वा शुम्भस्य भाषितम् ॥ १२ ॥
भीतौ तावाहतुः शुम्भं महाराज वचः शृणु ।
आवाभ्यां न विजेया सा सर्वथाऽसुरभूपते ॥ १३ ॥
यतो हतो धूम्रचक्षुर्निमेषाद्देवतापनः ।
सन्धिर्हि रोचते मेऽत्र बलीयस्यां विशेषतः ॥ १४ ॥
श्रुत्वा तयोरिति वचः क्रुद्धः शुम्भोऽब्रवीत्तु तौ ।
उद्भाव्य विग्रहं भूयो युवां सन्धिं समीहितः ॥ १५ ॥
कातर्यमूलमेतद्वां मतिपण्डस्याऽविनिर्जयम् ।
शङ्के पक्षान्तरगतावित्यपीह मनीषया ॥ १६ ॥
श्रुत्वा शुम्भवचश्चण्डो मुण्डश्चाऽपि विनिर्ययौ ।
विपर्ययाऽवसायं तं ज्ञात्वाऽपचितिमात्मनः ॥ १७ ॥
महत्या सेनया युक्तौ चण्डमुण्डौ समागतौ ।
ददृशतुः सिंहसंस्थां मेरुशृङ्गस्थसूर्यवत् ॥ १८ ॥
तां समादातुमुद्युक्तौ दैत्यसेनासमावृतौ ।
क्षिपन्तौ शस्त्रजालानि ततश्चुक्रोध चण्डिका ॥ १९ ॥
क्रोधभ्रूकुटिकाऽऽज्ञप्ता काली सा भीमरूपिणी ।
दैत्यसेनां समासाद्याऽसुरान् सर्वानभक्षयत् ॥ २० ॥
विनाश्याऽसुरसेनां सा चण्डमुण्डौ महासुरौ ।
छित्त्वा खड्गेन चादाय चण्डिकायै निवेदयत् ॥ २१ ॥
अथ तौ निहतौ ज्ञात्वा शुम्भः क्रोधसमाकुलः ।
सर्वसैन्यसमायुक्तो निशुम्भाद्यैश्च संयुतः ॥ २२ ॥
योद्धुमभ्याययौ देवीं तुहिनाऽचलसंस्थिताम् ।
देवी समीक्षत तदा सैन्यमसुरभूपतेः ॥ २३ ॥
अपारं सागरमिव रथोत्तुङ्गतरङ्गकम् ।
नृत्यत्तुरङ्गभङ्गाढ्यं गजग्राहसमाकुलम् ॥ २४ ॥

खेटकूर्मयुतं वेल्लत्करवालतिमिङ्गिलम् ।
श्वेतच्छत्रमहाफेनं महावादित्रनिस्वनम् ॥ २५ ॥
गजघण्टाझणत्कारबधिरीकृतदिक्तटम् ।
एवं सेनामपारां तां दृष्ट्वा देवीं सुरास्तदा ॥ २६ ॥
एकाकिनीं चिन्तयानाः कथमेतद्भवेदिति ।
ज्ञात्वा विषादं देवानामसृजन्मातृकागणम् ॥ २७ ॥
ब्राह्मी माहेश्वरी चैन्द्री वैष्णवी शिखिवाहनी ।
वाराही नारसिंही चाऽऽग्नेयी चैव वारुणी ॥ २८ ॥
एवं सुरेशशक्तीस्ताः शक्तिसङ्घसमावृताः ।
तत्तद्देवसमाकारा वपुर्वस्त्रायुधोज्ज्वलाः ॥ २९ ॥
असङ्ख्यं तच्छक्तिसैन्यमसुरानभिसंययौ ।
तयोः समभवद्युद्धं सेनयोरुभयोरपि ॥ ३० ॥
खड्गैः परश्वधैर्भिन्दिपालैः परशुपट्टिशैः ।
त्रिशूलचक्रपरिघदण्डतोमरमुद्गरैः ॥ ३१ ॥
अन्यैरुच्चावचाकारैरायुधैस्तुमुलो रणः ।
अभवच्छक्तिसेनाभिरसुराणां भयङ्करः ॥ ३२ ॥
असृङ्मय्यो ववुर्नद्यः फेनिला भीरुभीतिदाः ।
तदन्तरे दैत्यसैन्यं दृष्ट्वा क्षीणन्तु शक्तिभिः ॥ ३३ ॥
रक्तबीजाभिधो दैत्यो योद्धुमभ्याययौ रणे ।
युयोध शक्तिसेनाभिः स दैत्यो रक्तबीजकः ॥ ३४ ॥
युध्यतस्तस्य रुधिरबिन्दवस्तत्र भूतले ।
यावन्तः पतितास्तेभ्यः पुरुषा वीर्यवत्तराः ॥ ३५ ॥
तत्समा अभवन्नन्ये तेभ्यश्चान्ये ततोऽपरे ।
रक्तबीजसमाः सर्वे रूपबुद्धिपराक्रमैः ॥ ३६ ॥
अनेकार्बुदसंख्यातैर्व्याप्तं तैः सर्वभूतलम् ।
दृष्ट्वै तदद्भुतं देवा भीताः किन्नु भवेदिति ॥ ३७ ॥

अथ सा चण्डिका दृष्ट्वा रक्तबीजसमुद्भवम् ।
कालीं पार्श्वस्थितां प्राह युक्तियुक्ततरं वचः ॥ ३८ ॥
कालिके विस्तृतं वक्त्रं कृत्वाऽत्यद्भुतसम्भ्रमम् ।
रक्तबीजस्य समरे भक्षती चर सर्वतः ॥ ३९ ॥
तथेति सा विस्तृताऽऽस्या चरमाणा रणाऽजिरे ।
भक्षयन्ती शोणितानि दैत्यानां त्रासकारिणी ॥ ४० ॥
एवं तस्यां भक्षयन्त्यां क्षयं जग्मुर्महाऽसुराः ।
मातृकाशस्त्रसंछिन्नाः क्षीणरक्ताश्च भूयशः ॥ ४१ ॥
एवं नष्टे रक्तबीजे निशुम्भो दैत्यशेखरः ।
योद्धुमभ्याययौ देवीं चण्डिकामसुरैर्वृतः ॥ ४२ ॥
शरवर्षं ववर्षोच्चैश्चण्डिकां प्रति कोपितः ।
अथ साऽनाशयच्छीघ्रं तं वर्षं प्रतिवर्षतः ॥ ४३ ॥
शक्तिभिर्दैत्यसेना च युयोधाऽतिबलीयसी ।
शक्तिभिर्मृगराजेन काल्या च निहतां चमूम् ॥ ४४ ॥
दृष्ट्वा निशुम्भः सङ्क्रुद्धः चण्डिकाऽभिमुखो ययौ ।
अथाऽऽयान्तं दैत्यपतिं शस्त्रवर्षैरवाकिरत् ॥ ४५ ॥
ग्रस्तं तं शस्त्रवर्षेण दैत्या हाहेति चुक्रुशुः ।
क्षणेन शस्त्रवर्षन्तं विधूय शरवर्षतः ॥ ४६ ॥
निर्जगाम शस्त्रमेघात् निशुम्भो दिनकृद्यथा ।
अथ देव्यै प्रचिक्षेप शक्तिं सर्वाऽऽयसीं क्रुधा ॥ ४७ ॥
तां मध्ये सायकैस्त्रेधा चिच्छेद चण्डिकाऽम्बरे ।
परिघं परशुं शूलं गदां प्रासादिकं तथा ॥ ४८ ॥
क्षिप्तं क्षिप्तं निशुम्भेन चिच्छेद सायकैर्मुहुः ।
अथ खड्गं समादाय निशुम्भश्चण्डिकां प्रति ॥ ४९ ॥
अभ्यधावदतिक्रोधात्तिष्ठ तिष्ठेति तां वदन् ।
देवीसमीपं सम्प्राप्तं कालान्तकयमोपमम् ॥ ५० ॥

दृष्ट्वा विभ्युर्देवगणाः स्वस्तीत्याहुर्महर्षयः ।
तदन्तरे समायातं बलेनाऽऽक्रम्य तं परा ॥ ५१ ॥
खड्गेनाऽभ्यहरत्तस्य मस्तकं निमिषाऽर्धतः ।
अथ सिंहः कालिका च शक्त्यो दैत्यवाहिनीम् ॥ ५२ ॥
चक्रुर्निःशेषितां क्रोधान्मुहूर्तेन समन्ततः ।
शुम्भो निशुम्भं निहतं भ्रातरं खिन्नमानसः ॥ ५३ ॥
सेनां तथा विनिहतां रोषमाहारयत् परम् ।
सिंहं जघान खड्गेन मूर्ध्नि शुम्भोऽसुरेश्वरः ॥ ५४ ॥
युद्ध्वा चिरं शक्तिभिश्च कालिकामभिसंययौ ।
तया समभवद्युद्धं शुम्भस्य परमाद्भुतम् ॥ ५५ ॥
शस्त्राभिज्ञत्वतस्तस्य बलेन विक्रमेण च ।
लाघवेनाऽपि सा काली विस्मयं परमं गता ॥ ५६ ॥
देवाश्च ऋषयः सर्वे साधु साध्वित्यपूजयन् ।
दृष्ट्वा तं चण्डिकाऽप्युग्रं धृत्या विक्रमणेन च ॥ ५७ ॥
अतिक्रमन्तं तां कालीमाससादाऽसुरेश्वरम् ।
आयान्तीं चण्डिकां दृष्ट्वा हसन्नुच्चैरुवाच ताम् ॥ ५८ ॥
शृणु दुष्टे यदि मया युद्धश्रद्धा तवाऽस्ति चेत् ।
तिष्ठन्त्विमाः सर्वतस्ते मुहूर्तं पश्य मे बलम् ॥ ५९ ॥
स्त्रीषु कारुणिको भाव इति मे समुपेक्षिताः ।
अतस्त्वमेका समरे मां प्राप्य न भविष्यति ॥ ६० ॥
श्रुत्वेत्थं दानववचो विनिवर्त्याऽखिला अपि ।
सिंहाधिपं समारूढा शुम्भेन युयुधे मृधे ॥ ६१ ॥
शरनीहारसंछन्नां चक्रे तां क्षणमात्रतः ।
शुम्भबाणाब्धिनिर्मग्नां दृष्ट्वा देवीं सुरेश्वराः ॥ ६२ ॥
हा हेति चुक्रुशुर्भीत्या जहृषुर्दैत्यसैनिकाः ।
प्रशशंसुः साधुशब्दैर्जयशब्दैरवर्धयन् ॥ ६३ ॥

तदन्तरे चण्डिकाऽपि वातैरिव शरोत्करैः ।
निर्भिद्य शरनीहारमुद्गच्छद्भानुमानिव ॥ ६४ ॥
उद्गतामस्त्रजालेन भूयो भूयः समाक्षिपत् ।
साऽपि प्रत्यस्त्रतो भूयो निरस्याऽस्त्राणि सम्बभौ ॥ ६५ ॥
अथ तामजयामस्त्रैर्मत्वा शुम्भः प्रतापवान् ।
उत्पत्याऽऽदाय तां देवीमाक्रमद्गगनाऽन्तरम् ॥ ६६ ॥
अथ तां दैत्यराजेन हृतां दृष्ट्वाऽमरेश्वराः ।
दुःखिता अस्तुवन्नाद्यां त्रिपुरां परमेश्वरीम् ॥ ६७ ॥
स दैत्यस्तां समादाय ययौ निमेषमात्रतः ।
योजनानां सहस्राणि दशसप्तत्रयोदश ॥ ६८ ॥
यान्तं गृहीत्वा स्वात्मानं चण्डिकाऽवेत्य सत्वरम् ।
खड्गेन प्राहरन्मूर्ध्नि वज्रकल्पेन दानवम् ॥ ६९ ॥
स हतो वलवन्मूर्ध्नि किञ्चित्कश्मलमाविशत् ।
अमुञ्चत्तां ततः सोऽपि युयुधे गगनाऽङ्गणे ॥ ७० ॥
चिरं युद्ध्वा तेन सह गदाहस्तं महासुरम् ।
प्रहर्तुमुत्पतन्तं तं पादे जग्राह चण्डिका ॥ ७१ ॥
भ्रामयित्वा बहुगुणं क्षितौ वेगादपोथयत् ।
भूमावास्फालितो दैत्य उद्वमन् रुधिरं बहु ॥ ७२ ॥
मूर्च्छामवाप निमेषं यावत्पुनरुदञ्चति ।
तावत्पादेन हृदये समाक्रम्य च चण्डिका ॥ ७३ ॥
शूलेन कन्धरे तस्य विव्याध परमा क्रुधा ।
छिन्नोत्तमाङ्गो दैत्येशो निष्प्राणः समपद्यत ॥ ७४ ॥
ततोऽसुरगणाः सर्वे शेषिता दिक्षु विद्रुताः ।
दिशो वितिमिरा आसन् हते शुम्भे महासुरे ॥ ७५ ॥
शान्ता वाता ववुः सूर्यः सप्रभः सागराः स्थिराः ।
एवं देव्या विनिहतं शुम्भं दैत्यगणेश्वरम् ॥ ७६ ॥

देवा निशम्य जहृपुरस्तुवंश्चाप्यनेकशः ।
तुष्टाव विष्णुस्तां देवीं चण्डिकां प्रीतमानसः ॥ ७७ ॥
जयति सुरवरेण्या शङ्करी शुम्भहन्त्री
परशिवपरशक्तिः पश्यतां पापहन्त्री ।
निजपदयुगभक्तव्रातसन्तापहन्त्री
परिचितनिजभावस्वान्तःविभ्रान्तिहन्त्री ॥ ७८ ॥
यदि खलु पदपद्मं संस्मृतश्चेत्कदाचित
कथमपि जनिमद्भिः संसृतावेकत्वारम् ।
पुररपि कथमेषां स्यात् सृतिर्दुःख दात्री
मरुसलिलसमाना सन्निकर्षस्थितीनाम् ॥ ७९ ॥
तव जननि परो यो वैभवोऽनन्तपारः
कथमहमहिराट् त्वं प्राप्य तञ्च प्रवक्ष्ये ।
अपि नभसि कदाचिद्रेणवः पार्थिवाः
स्युर्गणनपरिसमाप्ता नैव ते तस्य संख्या ॥ ८० ॥
जगति जनितदुःखं हंसि यत्तन्न चित्रं
भवति ननु निजोऽयं तोकके मातृभावः ।
न हि जगति समर्थो भ्रान्तिमांश्चापि कश्चि-
न्निजगृहमभिनश्यत् प्रेक्ष्य कुर्यादुपेक्षाम् ॥ ८१ ॥
वचननिचयसारां सुन्दरीं कोऽपि लोके
वचनरसविलासैस्तोषमानेतुमीहेत् ।
स खलु मधुपृषत्कैर्नेतुमीष्टेऽमृताब्धिं
मधुरससमभावं देवि तच्चे स्तुतिः का ॥ ८२ ॥
इति स्तुत्वा हरिर्देवीं नमश्चक्रे च दण्डवत् ।
विधिमुख्या अपि सुरा भक्तिनिर्भरितान्तराः ॥ ८३ ॥
एवं स्तुता चण्डिका साऽसुरान् हत्वा सुरार्तिदान् ।
देवताभ्यो वरं दत्त्वा चाऽन्तर्धानं समाययौ ॥ ८४ ॥

एवं राम पुरा देवी निजघान महाऽसुरान् ।
शुम्भादीन् वीर्यबलवत्तरान् लोकविनाशनान् ॥ ८५ ॥
एवं सा जगतां धात्री त्रिपुरा लोकभावनी ।
यदा यदा विधिमुखैरापन्नैरसुरादिभिः ॥ ८६ ॥
आराधिता तदा देवकार्यसाधनहेतवे ।
रक्षणाय च लोकानामवतीर्णा निजांऽशतः ॥ ८७ ॥
नारायणादयश्चान्ये प्राप्यैवाऽस्याः कलालवम् ।
जगद्रक्षादिकं कर्तुमवर्तेरुरनेकधा ॥ ८८ ॥
एनां विहाय जगति स्पन्देताऽपि कथं तृणम् ।
यथा तरङ्गा जलधिमृते भार्गव सर्वथा ॥ ८९ ॥
तस्मात् परात्परमयीं प्रणताऽघहन्त्रीं
भक्त्या भजेत परिहृत्य समस्तकृत्यम् ।
नो चेदनन्तभववारिधिमध्यमग्नो
यास्यत्यगाधतलमात्मविनाशहेतुम् ॥ ९० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
चण्डिकाचरिते त्रिचत्वारिंशोऽध्यायः ॥ ३५९४ ॥

# अथ चतुश्चत्वारिंशोऽध्यायः ।

निशम्य चण्डिकाऽऽख्यानं रामो भृगुकुलोद्वहः ।
कथामधुसमास्वादमाद्यन्मद्युकराऽन्तरम् ॥ १ ॥
त्रिपुरावैभवस्फारश्रवणाऽऽनन्दनन्दितः ।
न वेद स्वान्तरं बाह्यं क्षणं लिखितवत् स्थितः ॥ २ ॥
अथ स्मृत्वा प्रकृतकं विस्मितः प्राह सादरम् ।
भगवन् करुणासिन्धो भवताऽहं समुद्धृतः ॥ ३ ॥
अपाराऽगाधसंसारमध्यमग्नोऽतिविह्वलः ।
धन्योऽहं भगवत्पादपोतमाश्रित्य निर्भयः ॥ ४ ॥
भवाम्भोधिं महाभीमं सन्तरिष्येऽचिरेण वै ।
अनुग्रहात्ते भीतिर्मे मृत्यूद्भूता न शिष्यति ॥ ५ ॥
तस्याः श्रीत्रिपुरादेव्याः प्रसङ्गात् कथिता त्वया ।
कात्यायनीचण्डिकयोः कथा सुमाहिमोन्नता ॥ ६ ॥
अंशावतारात्मिकयोरधुनाऽन्यत् समुच्यताम् ।
न वितृष्यामि लेशेनाऽप्यहं श्रीचरितश्रुतेः ॥ ७ ॥
चेतनः को नु तृप्येत श्रीकथामृतसेवनात् ।
विना मुमूर्षोर्मृत्युघ्नादामयीव महौषधात् ॥ ८ ॥
श्रुत्वैवं जामदग्न्यस्य वाक्यमत्रिसुनन्दनः ।
हृष्टः प्राह पराशक्तिकथातत्परतां विदन् ॥ ९ ॥
निशम्य तां भृगुकुलतिलकाद्भुतसत्कथाम् ।
त्रिपुराक्रोधजातायाः कालिकाया विचित्रिताम् ॥ १० ॥
पुरा दितिसुता दैत्याः कालखञ्जा इति श्रुताः ।
सहस्रमभवंस्तेऽत्र भ्रातरो बलवत्तराः ॥ ११ ॥

तपश्चक्रुर्वत्सराणामर्बुदानां त्रयोदश ।
तदा तत्तपसा सर्वलोको व्याकुलितोऽभवत् ॥ १२ ॥
इन्द्रासनं प्रचलितं देवांश्च भयमाविशत् ।
देवैः सम्प्रार्थितो वेधाः समागत्य जगाद तान् ॥ १३ ॥
दैत्या वरं ब्रूत किं वो मतं मत्तः समाप्स्यथ ।
तपसाऽलं सर्वलोकनाशनेनेति ते ततः ॥ १४ ॥
प्रणम्य प्राहुरत्यन्तमभयं मृत्युतोऽस्तु नः ।
श्रुत्वा दैत्येरितं वेधा ज्ञात्वा सर्वभयावहम् ॥ १५ ॥
स्त्रीभ्योऽन्यत्राऽमरत्वं वो भवेदिति समाह तान् ।
विमृश्य तेऽपि चाऽन्योन्यमब्रुवन् चतुराननम् ॥ १६ ॥
वर्तमानचरित्राभ्यः स्त्रीभ्योऽप्यमरताऽस्तु नः ।
अस्त्वित्युक्त्वा जगाम स्वं चतुर्वक्त्रो निवेशनम् ॥ १७ ॥
अथ दैत्याः कालखञ्जा महाबलपराक्रमाः ।
जित्वाऽमरान् महेन्द्रादीन् जह्रुस्त्रिभुवनश्रियम् ॥ १८ ॥
हविर्भागानप्सरसो दिक्पालसदनानि च ।
ततो गत्वा ऽधिपैर्देवाः स्वपदादवरोपिताः ॥ १९ ॥
धात्रादिभिः सुसङ्गम्य प्रार्थयामासुरात्मनाम् ।
पराभवात् कालखञ्जैरुद्धारः स्यात् कथन्त्विति ॥ २० ॥
प्रार्थितो ध्यानमाश्रित्य भविष्यं समचष्टत ।
विज्ञाय तेषामुदयं बभाषे तांश्चतुर्मुखः ॥ २१ ॥
भो देवा अत्र नाऽन्यस्य कृत्यं समवशिष्यते ।
न तेषां पुरुषैर्मृत्युः स्त्रीभिर्वा प्रकृतात्मभिः ॥ २२ ॥
या स्याल्लोकचरित्रातिरिक्ता तेषां मृतिस्ततः ।
तादृशी नाऽस्ति लोकेषु योषित् काचित् क्वचित् सुराः ॥ २३ ॥
लोकातिरिक्तशीला या तस्मादेतद्धि दुष्करम् ।
तदत्र त्रिपुरेशानीं राधयामोऽर्थसिद्धये ॥ २४ ॥

इत्युक्त्वा मेरुशिखरमासाद्य विधिमुख्यकाः ।
त्रिपुरां तुष्टुवुर्देवीं लोकयात्राविधायिनीम् ॥ २५ ॥
तदन्तरे कालखञ्जा ज्ञात्वाऽमरविचेष्टितम् ।
भार्गवोक्ताद्ययुस्तत्र विहन्तुममराक्रियाः ॥ २६ ॥
वध्यतां हन्यतां शीघ्रं गत्वेत्याहुः सुराऽरयः ।
दृष्ट्वा देवाः कालखञ्जानागतान् भीतमानसाः ॥ २७ ॥
उच्चैर्विचुक्रुशुर्देवीं शरणीकृतभावनाः ।
त्राहि त्राहि महेशानि वध्यमानान् सुराऽरिभिः ॥ २८ ॥
देवान् शरण्ये त्रिपुरे आपन्नान् भक्तवत्सले ।
विक्रोशत्स्वतिभीतेषु दैत्येभ्यस्त्रिपुराम्बिका ॥ २९ ॥
आविरासीत् सुरगणानार्तांस्त्रातुं महाभयात् ।
अथाऽभवन्महाशब्दः प्रागुदीच्यां भयावहः ॥ ३० ॥
प्रजज्वाल महातेजः खं दिशं व्याप्य सर्वतः ।
तेन शब्देन महता तेजसा चाऽमरारयः ॥ ३१ ॥
निपेतुर्मूर्च्छितास्तत्र मत्वा ब्रह्माण्डभेदनम् ।
आविर्बभूवाऽथ परा त्रिपुरा परमेश्वरी ॥ ३२ ॥
तां दृष्ट्वा त्रिपुरां देवाः सौन्दर्यजलधिं दिशाम् ।
कोटिकन्दर्पसौन्दर्यसन्दोहतनुसुन्दराम् ॥ ३३ ॥
विद्युल्लतामिव तनुत्विषा लोकाऽक्षिसम्मुषम् ।
समानतुलिताऽशेषाऽवयवन्यासशोभिताम् ॥ ३४ ॥
चन्द्रचूडां त्रिनयनां पाशाऽङ्कुशधनुःशरान् ।
दधानां पाणिकमलैर्दीप्रविद्रुमनालजैः ॥ ३५ ॥
मुखेन्दुसौन्दर्यसरित्फुल्लेन्दीवरलोचनाम् ।
मुखलावण्यजलधिं मुक्ताविन्दुमदच्छदाम् ॥ ३६ ॥
मुखेन्दून्मेषचकितयुतकोककुचद्वयीम् ।
अङ्गमवालळतिकानिर्गमद्बाहुशाखिकाम् ॥ ३७ ॥

पाणिप्रवालशाखाऽग्रकोरकाऽङ्गुलिशोभिनीम् ।
माणिक्यकदलीकाण्डसूक्ष्मच्छदसमांऽशुकाम् ॥ ३८ ॥
जङ्घानिषङ्गनिक्षिप्तमदनेषुनिभाऽङ्गुलाम् ।
विद्युल्लतापरिक्षिप्तताराऽऽभाकल्पभूषिताम् ॥ ३९ ॥
मुखेन्दूदयनिर्गच्छदूध्र्वसन्तमसाऽलकाम् ।
दण्डवत्प्रणता देवा वदन्तस्त्राहि मामिति ॥ ४० ॥
तदन्तरे सुराः केचिदुत्थिता विस्मृतेस्तदा ।
शस्त्रहस्ताऽमरगणान् जिघांसन्तोऽभिसङ्गताः ॥ ४१ ॥
दृष्ट्वा तानसुरान् क्रुद्धा हुङ्कारमकरोत्तदा ।
तद्धुङ्कारान्महाशक्तिः प्रादुर्भूता चतुर्भुजा ॥ ४२ ॥
भिन्नाऽञ्जनचयाऽऽभासा मुक्तकेशी दिगम्बरी ।
हृष्टा करालवदना लम्बजिह्वाऽतिभीषणा ॥ ४३ ॥
तां प्राह त्रिपुरेशानी संहरेमान् दितेः सुतान् ।
आज्ञप्तैवं महादेव्याः कालीक्रोधसमुद्भवा ॥ ४४ ॥
अतिशीला समभवल्लोकवृत्तविपर्ययात् ।
नग्नोन्मुक्तदीर्घकचा घोररूपा भयङ्करी ॥ ४५ ॥
दंष्ट्रोल्लसल्लम्बजिह्वा करवालकरा परा ।
निहत्य दैत्यांस्तां कांश्चिन्मुण्डैः कचनिबन्धनैः ॥ ४६ ॥
आपादलम्बिनीं मालां तथा तत्करपङ्क्तिभिः ।
दधार निर्मितां काञ्चीमेवं लोकाऽतिकारिणी ॥ ४७ ॥
वारुणीं मदिरां भूयो भूयः पीत्वाऽतिभीषणी ।
असुरान् भक्षयन्ती सा सृक्कणीस्नुतशोणिता ॥ ४८ ॥
समेत्य त्रिपुरां देवीं कामुकीं मैथुनेच्छया ।
देवि मे दिश भर्तारमनुरूपं सुखावहम् ॥ ४९ ॥
नो चेत् कामपराधीना दैत्यान् हन्तुं न पारये ।
प्रार्थितैवं कालिकया त्रिपुरा परमेश्वरी ॥ ५० ॥

देवं सदाशिवं प्राह भव भर्ताऽनुरूपतः ।
इत्याज्ञप्तोऽभवत्तस्यास्तुल्यरूपः सदाशिवः ॥ ५१ ॥
दृष्ट्वा तं कालिका तुल्यं नाम चक्रे महेश्वरी ।
प्रतीच्छाऽमुं महाकालं भर्तारं कालिके समम् ॥ ५२ ॥
दृष्ट्वा प्रसन्ना सा काली महाकालेन सङ्गता ।
ययौ दैत्यान्नाशयितुं तदङ्गाऽसङ्गहर्षिता ॥ ५३ ॥
अत्यन्तकामुकी तेन महाकालेन क्रीडितुम् ।
समारेभे ततः सोऽपि पपौ भूयः सुरां बहु ॥ ५४ ॥
मत्तेन मिथुनीभावं प्रयाता कालिका तदा ।
उन्मत्तमतिमत्तं तं काली कामवशाऽऽकुला ॥ ५५ ॥
कृत्वाऽधस्तं महाकालं मदव्याकुलितं द्रुतम् ।
विपरीतरतिश्चक्रेऽवितृप्ता कामचारतः ॥ ५६ ॥
रत्यासक्तां महाकालीं चिरं दैत्याः समुत्थिताः ।
दृष्ट्वा देवान् हन्तुमैच्छन् तदा देवैरभिष्टुता ॥ ५७ ॥
विपरीतरतादाशु विरता सुरसङ्कटम् ।
योधयामास चण्डाऽट्टहासा काली भयङ्करी ॥ ५८ ॥
आक्रम्य रोदसी खड्गप्रहारेण महासुरान् ।
हत्वा हत्वा प्रचिक्षेप मुखे भक्षणतत्परा ॥ ५९ ॥
एवं तानसुरान् काली भक्षयन्ती रणाऽजिरे ।
चचार दैत्यदावाग्निः सर्वलोकभयङ्करी ॥ ६० ॥
तस्या दैत्यांश्चर्वयन्त्याः सफेनं रुधिरं बहु ।
सृक्कणीभ्यां प्रसुस्राव गिरिशृङ्गाद्यथा झरः ॥ ६१ ॥
एवं तानसुरान् सर्वान् भक्षयित्वा मुहूर्ततः ।
रक्तपानेन तेषां सा सुरापानादपीश्वरी ॥ ६२ ॥
प्रोन्मत्ता ताण्डवं चक्रे भिन्नाऽञ्जनचयोपमा ।
यथा संवर्तवातेन नीलाद्रिः प्रतिसञ्चरेत् ॥ ६२ ॥

एवं नृत्ये समारब्धे तया ब्रह्माण्डमण्डपे ।
चकम्पे विश्वमखिलं वायुनेव महातरुः ॥ ६४ ॥
पदानिक्षेपनिष्पिष्टचूर्णशेषमहीधरम ।
विभ्रमद्बाहुसङ्घट्टत्रोटिताऽशेषलोककम् ॥ ६५ ॥
करवालाऽग्रसंछिन्नताराग्रहमहापथम् ।
निश्वासधूतजीमूतततिचूर्णितादिक्तटम् ॥ ६६ ॥
विलोक्य नाशाऽभिमुखं ब्रह्माण्डभयविह्वलाः ।
कृताञ्जलिपुटा धातृमुखाः कालीमुपस्थिताः ॥ ६७ ॥
अस्तुवन्निस्तुलवचोगुम्फनैरर्थगुम्फितैः ।
महर्षिसिद्धविद्याध्रयक्षगन्धर्वसंयुताः ॥ ६८ ॥
काली करालवदना करवालधारा
नीताऽन्तकालमसुरारिगणा महेशी ।
लोकाऽर्तिनाशनविधानविलासवेषा
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ६९ ॥
सम्भिन्ननीलमणिशैलनिभा निता-
न्तपादाऽन्तसङ्गतविमुक्तकचप्रताना ।
देवारिमुण्डकृतकुण्डलमण्डिताऽऽस्या
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७० ॥
दैत्यप्रतानपरिचर्वणवक्त्रपार्श्व-
प्रस्यन्दिरक्तमयसंस्रुतिशोभिताङ्गी ।
निर्गत्सु रक्तरसनाऽन्तरितस्तनाऽऽढ्या
पायादपायजलधेः पतितान पदेऽस्मात् ॥ ७१ ॥
मुण्डं महासिमभयं वरदं दधाना
दीर्घैर्महाहिनिभपाणिभिरुग्ररूपैः ।
देवारिनाशनविलासविलोलचित्ता
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७ ॥

सद्यो निकृत्तदितिजोऽत्ततनूर्ध्वक्लृप्ताऽऽ
पादप्रलम्बिरुचिरस्रगलङ्कृताङ्गी ।
तद्बाहुनिर्मितकटीरशनानिबद्धा
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७३ ॥
नृत्यप्रकम्पितसमुन्नतपीवराऽति-
मात्रस्तनाऽऽहतिविशीर्णसुमेरुश्रृङ्गा ।
आशाऽम्बरा पदनखक्षतदारितक्ष्मा
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७४ ॥
क्रोधोद्भवा त्वमपि दैत्यविनाशहेतो-
र्घोरं स्वरूपमवभासयसि महिम्ना ।
न स्याद्यतो विषमिहाऽऽमृततोयराशेः
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७५ ॥
यत्रेदमित्थमखिलं प्रतिभाति घोरं
मायादृशां न च यथार्थदृशां कदाचित् ।
तत्त्वं पराऽमृतसुखप्रतिभानरूपा
पायादपायजलधेः पतितान् पदेऽस्मात् ॥ ७६ ॥
इति स्तुत्वा विधिमुखा दण्डवत्प्रणता भुवि ।
शृण्वन्त्यपि स्तुतिं काली नाऽबुध्यत् मदोत्कटा ॥ ७७ ॥
अथ विष्णुर्महाकालं प्रार्थयामास सन्नतः ।
शान्तये कालिकादेव्याः स्तुत्वा स्तुतिभिरुत्तमैः ॥ ७८ ॥
उपसृत्य महाकालः पानमत्तां शनैः शनैः ।
पादमूले कालिकायाः शयानोऽथ दिगम्बरः ॥ ७९ ॥
सा तं समारुह्य हृदि ननर्त विगतस्मृतिः ।
तदङ्गसंस्पर्शमात्रात् प्रत्यबुध्यत वै पतिम् ॥ ८० ॥
निवृत्ततण्डवा भूत्वा प्राह देवान् पुरः स्थितान् ।
प्रसन्नाऽस्मि सुराः किं वो वाञ्छितं तत् प्रतीच्छथ ॥८१॥

इति प्रोक्ताः कालिकया विधिमुख्याः समब्रुवन् ।
सम्पन्नं कालिके सर्वं कृपया ते वयं सुराः ॥ ८२ ॥
सर्वथा स्मो हतरिपुगणा विगतसाध्वसाः ।
त्वमेवं रमणी भर्त्रा सह लोकशिवङ्करी ॥ ८३ ॥
जनान् पातु गिरावस्मिन् स्थिरीभव महेश्वरि ।
प्रार्थितैवं देवगणैः काली प्राह प्रसादिता ॥ ८४ ॥
गिरौ वसामि भो देवा रूपेणाऽनेन सर्वदा ।
प्रदात्री वाञ्छितार्थानां मत्पराणां विशेषतः ॥ ८५ ॥
यो मामेवंविधां लोके भावयेद्भक्तिनिर्भरः ।
स्थापयेदपि मन्मूर्तिं पूजयेत् पिशिताऽऽसवैः ॥ ८६ ॥
बलिभिः कामभोगैश्च द्वन्द्वभावसमुद्भवैः ।
निर्विकल्पः सर्वसिद्धिं साधयामि न संशयः ॥ ८७ ॥
इति तेऽभिहितं राम कालिकाचरितं महत् ।
एवं सा कालिका भूत्वा चकार लोकरक्षणम् ॥ ८८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कालीचरिते चतुश्चत्वारिंशोऽध्यायः ॥ २६८२ ॥

# अथ पञ्चचत्वारिंशोऽध्यायः ।

जामदग्न्याऽथ ते वक्ष्ये दुर्गामाहात्म्यमद्भुतम् ।
यच्छ्रुत्वा पातकेभ्योऽपि मुच्यते नाऽत्र संशयः ॥ १ ॥
त्रिपुरांऽशसमुद्भूता दुर्गा देवी महेश्वरी ।
देवानां दुर्गतेस्त्राणाद्दुर्गेति परिकीर्तिता ॥ २ ॥
दुरितं गच्छति स्मृत्या तस्माद्दुर्गा समीरिता ।
तस्या माहात्म्यमनघं पुराणेषु समीरितम् ॥ ३ ॥
पुरा देवपतिः शक्रः श्रियौन्नत्यात् स्मयं गतः ।
ऐरावतं समारूढो गन्धर्वाऽप्सरसां गणैः ॥ ४ ॥
सेवितो विन्ध्यशिखरे श्रृङ्गं प्राप्तः कुतूहलात् ।
तत्र कश्यपदायादः सुनेत्रो मुनिसत्तमः ॥ ५ ॥
तपश्चचार विपुलं तेजसा समभिज्वलन् ।
तस्य पत्नी गौतमजा सुमित्राख्या पतिव्रता ॥ ६ ॥
स्नातुं समाययौ नद्यां नर्मदायां समीपतः ।
दृष्ट्वेन्द्रस्तां स्थूलतनुं कृष्णवर्णां विरूपिणीम् ॥ ७ ॥
जहासोच्चैः स्मयन्नतस्तामुपव्रज्य हेलया ।
प्रोवाच प्रहसन् वाक्यमात्मपातं विमूढधीः ॥ ८ ॥
काऽसि कस्याऽसि सुभगे महिषी प्रतिभासि मे ।
कतरं विपुलं लोके महिषं जनयिष्यसि ॥ ९ ॥
श्रुत्वाऽवहेलनं क्रुद्धा सुमित्रा पतिदेवता ।
प्राह शक्रं सुनिर्भर्त्स्य निःश्वसन्ती रुषान्विता ॥ १० ॥
दुर्मते ते दर्पहरो महिषो भविता द्रुतम् ।
शची ते महिषी भूत्वा जनयिष्यति तं रिपुम् ॥ ११ ॥

विसृष्टे तु महाशापे भीतो देवपतिस्तदा ।
दण्डवत् प्रणतो देवीं त्राहि त्राहीत्यवोचत ॥ १२ ॥
ययौ स्वमाश्रमं स्नात्वा सुमित्राऽतिप्ररोषिता ।
अनुवव्राज देवेन्द्रः शचीयुक्तो भयाऽऽतुरः ॥ १३ ॥
दृष्ट्वा सुनेत्रमासीनं ज्वलन्तमिव पावकम् ।
प्रसादयामास शक्रः शचीयुक्तः पुनः पुनः ॥ १४ ॥
ज्ञात्वा सोऽप्यपचारं तं दृष्ट्वाऽतिरुषितां प्रियाम् ।
भीतः सुनेत्रः प्राहेदमिन्द्रं पत्नीं सुतोषयत् ॥ १५ ॥
देवेन्द्र शृणु वक्ष्यामि न श्रुतं किं त्वया पुरा ।
पतिव्रतानां माहात्म्यं सर्वलोकविशेषितम् ॥ १६ ॥
पतिव्रता यदि क्रुद्धा ब्रह्माण्डं नाशयेत् क्षणात् ।
प्रसन्ना विसृजेद्भूयो ब्रह्माण्डं सचराचरम् ॥ १७ ॥
पतिव्रताया माहात्म्यात् स्तब्धः सूर्यश्चिरं ननु ।
पुरा दाक्षायणी मूर्तिर्यज्ञपत्नी पतिव्रता ॥ १८ ॥
चकार प्रलयं लोके माहत्म्यात्तपसो ननु ।
तत् प्रसादय तामेव गत्वा नत्वा शचीयुतः ॥ १९ ॥
न मे शक्तिः प्रतीकारे सर्वथा देवभूपते ।
पुराऽभून्मुद्गलो नाम तपोराशिर्द्विजोत्तमः ॥ २० ॥
तस्य भार्या सानुमती सुन्दरी लोकपूजिता ।
तां वायुर्ददृश नद्यां विगाहन्तीं सुमध्यमाम् ॥ २१ ॥
सौन्दर्यसम्पदा तस्याः कामबाणप्रपीडितः ।
जघनं प्रविवेशाऽऽशु वस्त्रोत्क्षेपणहेतवे ॥ २२ ॥
विज्ञाय वायोर्दौरात्म्यमूरुभ्यां तमकर्षत ।
संहृत्य स्वोरुमध्ये तं रुरोध तपसा हि सा ॥ २३ ॥
रुद्धो वायुर्यदा जातस्तया सर्वे जडीकृताः ।
लोकाः क्षणं तद्विचार्य लोकनाशप्रकारणात् ॥ २४ ॥

तत्याज देहव्यापारहेतुं वायुं पतिव्रता ।
तदन्यं वायुमखिलमूरुमध्ये निरोधयत् ॥ २५ ॥
अथ लोका मरुद्धीना विह्वला अभवन्मुहुः ।
न वाति जगति क्वाऽपि मारुतो लयमागतः ॥ २६ ॥
वायुलोकेऽपि लुप्तं तं ज्ञात्वा तल्लोकवासिनः ।
निवेदयन् वायुनाशं देवेशस्य समीपतः ॥ २७ ॥
निशम्य नाशं मरुतः शक्रोऽन्विष्याऽखिलं जगत् ।
विधातारमुपेत्याऽथ प्रणम्याऽतिसुदुःखितः ॥ २८ ॥
भगवन् मरुता हीनो लोको नाशमुपैष्यति ।
न वर्धते तृणमपि निःसत्वं भुवनत्रयम् ॥ २९ ॥
नैषत्तस्मै विप्रकृतं केनचित् क्रोधहेतवे ।
कुतो विलयनं प्राप्तो न जाने मारुतो बली ॥ ३० ॥
श्रुत्वेन्द्रवचनं वेधाः ध्यात्वा तत्समचेष्टत ।
अवगत्याऽऽह हर्यश्वं शृणु शक्र मरुद्गतिम् ॥ ३१ ॥
कुरुक्षेत्रे मुद्गलस्य मुनेर्भार्या पतिव्रता ।
तयोपसंहृतो वायुरपचाराल्लयं गतः ॥ ३२ ॥
ऊरुमध्ये कृशीभूतो लुप्तशक्तिः सुदुःखितः ।
पतिव्रता सानुमती तपस्तेजःसुसम्भृता ॥ ३३ ॥
पार्थिता सा विमुञ्चेत्तमुपायेन सुरेश्वर ।
न त्वं साक्षात् प्रार्थय तां क्रुद्धा भस्मीकरिष्यति ॥ ३४ ॥
मुद्गलं शरणं याहि स ते श्रेयो विधास्यति ।
श्रुत्वैवं धातृवचनं जगाम मुद्गलाऽऽश्रमम् ॥ ३५ ॥
सुरैः परिवृतः शक्रः पूजाद्याहृतिहेतवे ।
वने स्थितं तं समेत्य भीतस्तस्या निरन्तरे ॥ ३६ ॥
प्रणम्य प्रार्थयामास मारुतस्य विमुक्तये ।
मुद्गलः प्राह देवेन्द्रं मधुरं वचनं तदा ॥ ३७ ॥

देवेन्द्र शृणु सत्यं ते ब्रवीमि सुरसंयुत।
नाऽहं समर्थस्तां वक्तुं मारुतं विसृजेति वै ॥ ३८ ॥
मयैतद्विदितं पूर्वं तपसा सर्वमेव तत्।
अपराधयुतं ते चेद्वक्ष्यामि विसृजेति ताम् ॥ ३९ ॥
मां साश्रमं सलोकं वा भस्मीकुर्यात् क्षणेन सा।
तद्युक्तिं तेऽभिधास्यामि कुबेरवरुणाऽग्निभिः ॥ ४० ॥
ब्रह्मचर्यसमाच्छन्नो निवसंस्त्वं समाहितः।
सेवाभिः तोषय तां तुष्टा कुर्यात् समीहितम् ॥ ४१ ॥
ओमित्युक्त्वा देवपतिः कुबेरवरुणाऽग्निभिः।
ब्रह्मचर्ये प्रतिच्छन्नो निवसंस्तत्र संयतः ॥ ४२ ॥
श्रद्धया तां सानुमतीं परिचेतः समन्ततः।
तस्याः प्रियतमा गावस्तत्सेवायां शतक्रतुः ॥ ४३ ॥
धनेशः फलमूलानामाहर्ता नित्यसंयतः।
जलाऽऽहरणवस्त्रादिक्षालने वरुणोऽन्वहम् ॥ ४४ ॥
अग्निहोत्रस्य सम्पत्तावग्निस्तस्थे नु संयतः।
देवेन्द्रो गा दुहन् दुग्धं प्रत्यहं समवर्धयत् ॥ ४५ ॥
अत्यन्तमधुरं दुग्धं स्नेहोत्कर्षमभूत्तदा।
कुबेरोऽभ्याहरत् स्वादुफलमूलानि चाऽन्वहम् ॥ ४६ ॥
वरुणः स्वादुभूतं वै तोयमानयतीप्सितम्।
एवं तैरनिशं देवी सेव्यमाना प्रतोषिता ॥ ४७ ॥
प्रसन्ना प्राह भर्तारमेकान्ते समुपस्थितम्।
एते विद्यार्थिनो देवपरिचर्यापरायणाः ॥ ४८ ॥
सम्प्रत्यनुग्रहे योग्या इति मे भाति सत्यतः।
विशेषतस्तु मामेव सेवमानाः कुतास्त्विमे ॥ ४९ ॥
अत्र त्वया चाऽनुमतास्तत्र हेतुं वद प्रभो।
पृष्ट एवं मुद्गलस्तु स्मितपूर्वमभाषत ॥ ५० ॥

शृणु भद्रे क्षमायुक्ता न रोषं कर्तुमर्हसि ।
क्रोधेन नश्यति तपस्तस्माद् क्षान्ता सदा भव ॥ ५१ ॥
त्वयाऽपचारी संरुद्धो मारुतो जघनाऽन्तरे ।
तेन हीनेन लोकोऽयमवसादमुखं गतः ॥ ५२ ॥
तस्याऽद्य वायोरुद्धस्य चाऽतीयुर्दशवत्सराः ।
तं विमोचयितुं चैते शक्राऽग्निजलयक्षपाः ॥ ५३ ॥
भीतास्त्वत्सेवनपराः प्रसादं कर्तुमर्हसि ।
तदन्तरे प्रसन्नां तां ज्ञात्वा शक्रमुखाः सुराः ॥ ५४ ॥
कृताञ्जलिपुटा नत्वा-प्रसादायोपसंस्थिताः ।
तान् दृष्ट्वाऽतिप्रसन्ना सा मुमोच मारुतं तदा ॥ ५५ ॥
समीरो निर्गतो रोधाल्लज्जितः प्रणिपत्य ताम् ।
ययौ शक्रादिसंयुक्तः नत्वा मुद्गलमेव च ॥ ५६ ॥
एवं पुरातनं वृत्तं स्वारोचिषसमुद्भवम् ।
तस्मात्त्वमिन्द्रस्तार्त्तीयो रैवताऽन्तरसंस्थितः ॥ ५७
प्रसादयाऽत्र तामेव नाऽन्यथाऽभयसंक्षयः ।
श्रुत्वा मुनेर्वचस्त्वेवं सुमित्रामभिजग्मतुः ॥ ५८ ॥
शची तां प्रार्थयामास भूयो दैत्यमुपाश्रिता ।
ततः सा शक्रमहिषीमब्रवीत् कृपयाऽन्विता ॥ ५९ ॥
गच्छ भद्रे प्रसूयाऽऽशु महिषं शापतश्च्युता ।
इन्द्रोऽपि भ्रष्टसर्वस्वो देवीमाराध्य सत्वरम् ॥ ६० ॥
देव्या हतरिपुर्भूत्वा पुनरेष्यति तं पदम् ।
एवं सम्प्राप्य शापान्तमाश्रमात्तौ विनिर्गतौ ॥ ६१ ॥
अथेन्द्राणी क्षणेनैव महिषी समजायत ।
गिरिशृङ्गनिभा चाऽतिविकटा घोररूपिणी ॥ ६२ ॥
भूत्वा सैवं तु महिषी प्राविशद्वनमुत्तमम् ।
निघ्नन्ती व्याघ्रसिंहेभान् दारयन्ती गिरेर्गणान् ॥ ६३ ॥

प्रविवेश महारण्यं दुर्गं प्राणिविवर्जितम् ।
तत्राऽऽदिदैत्यराजस्य कैटभस्य महौजसः ॥ ६४ ॥
स्कन्नं वीर्यं पर्वताभं तृणैरन्तर्हितं स्थितम् ।
महिषी तत्तृणं जग्धुं प्रवृत्ताऽतिक्षुधाऽन्विता ॥ ६५ ॥
शीतेन तद्घनीभूतं स्फटिकाऽद्रिरिव स्थितम् ।
निश्वासोष्मसमाक्रान्त्या द्रवीभूतं क्रमेण तत् ॥ ६६ ॥
भक्षितं तत्तृणयुतमशेषं यर्हि चाऽभवत् ।
तदा सा गर्भिणी भूत्वा महिषं समजीजनत् ॥ ६७ ॥
प्रसूय महिषं शापान्मुक्तेन्द्राणी दिवं ययौ ।
वने तस्मिन् स महिषः कालेन समवर्धत ॥ ६८ ॥
महागिरिप्रमाणोऽसौ शृङ्गाभ्यां पर्वतान् बली ।
चिक्षेप लीलया भूयः खुरैः पृथ्वीं व्यदारयन् ॥ ६९ ॥
अथाऽसुरास्तं समेत्य दैत्यराज्ये न्यवेशयन् ।
स प्राप्य दैत्यराजत्वं युयोधाऽसुरचोदितः ॥ ७० ॥
देवैः शक्रादिभिर्भूयो यममग्निं धनेश्वरम् ।
जित्वाऽधिकारमकरोत् स्वयमेव महासुरः ॥ ७१ ॥
शक्रञ्च वरुणं सोमं जित्वा श्रियमुपाऽहरत् ।
त्रिलोकीशासनपरः महिषः समजायत ॥ ७२ ॥
एवं निराकृतास्तेन महिषेण दुरात्मना ।
शक्रादिदेवाः सञ्जग्मुः पद्मयोनिं प्रजापतिम् ॥ ७३ ॥
तस्मै निवेदयामासुर्महिषेण पराभवम् ।
भगवन् महिषाऽऽख्येन वयं सर्वे विनिर्जिताः ॥ ७४ ॥
हृताऽधिकारसर्वस्वाश्चरामो भुवि मर्त्यवत् ।
विचिन्त्याऽत्रोपायं रक्षाऽस्मान् शरणागतान् ॥ ७५ ॥
निशम्य शक्रादिवचो ध्यात्वा लोकपितामहः ।
मत्वा गुरुतरं कर्म दध्यौ विष्णुञ्च शङ्करम् ॥ ७६ ॥

अथ तौ समनुप्राप्तावुत्थाय विधिरादरात् ।
गृहीत्वा तावासनयोर्विनिवेश्याऽभ्यपूजयत् ॥ ७७ ॥
अथ देवैः शक्रमुखैः प्रणतौ हरिशङ्करौ ।
निशम्य दैत्यराजस्य चेष्टां विधिमवोचतुः ॥ ७८ ॥
नैतदल्पं विजानीहि महद्भयमुपस्थितम् ।
तपसा सर्वदेवानामवध्योऽयं महाऽसुरः ॥ ७९ ॥
त्वत्तः प्राप्तवरः पूर्वं महिषोऽसुरनायकः ।
न देवैर्नाऽसुरैर्मर्त्यैर्न तिर्यग्भिर्भवेन्मृतिः ॥ ८० ॥
प्रत्येकं मिलितैर्वापि पुरुषैर्न पराजयः ।
न कदाचिदिमं जेतुं योषित् काऽपि भविष्यति ॥ ८१ ॥
नाऽपि देवगणाऽन्येन क्वचित्तस्य पराजयः ।
एवं पुरा प्राप्तवरो विषमं समुपस्थितम् ॥ ८२ ॥
नाऽत्र किञ्चित् ध्यातुमपि शक्यते तस्य वै वधे ।
नाऽस्माभिर्वध्यता चाऽस्य नान्येभ्योऽपि च वध्यता ॥ ८३ ॥
तस्मादत्र महादेवीं त्रिपुरां परमेश्वरीम् ।
उपस्थास्याम एवाऽऽशु साऽस्माकं शं विधास्यति ॥ ८४ ॥
इति निश्चित्य वैकुण्ठमुखास्तां तुष्टुवुः पराम् ।
दुर्गतस्तारयेत्येवमुच्चैर्देवगणैर्वृताः ॥ ८५ ॥
विदित्वैतद्देवकृत्यं माहिषस्य चमूपतिः ।
बिडालाक्षोऽसुरैर्युक्तो हन्तुं देवान् समाययौ ॥ ८६ ॥
बिभ्युर्देवाः समालोक्य दैत्यं योद्धुं समागतम् ।
हरिश्चुक्रोध शम्भुश्च क्रुद्धाद्धारिमुखात्तदा ॥ ८७ ॥
शम्भोर्मुखाद्विधिमुखाच्छक्रादिसुरवक्त्रतः ।
निर्गत्य सुमहत्तेजः क्षणेनैकीभवत्तदा ॥ ८८ ॥
तत्तेजः पुञ्जमतुलं सर्वदेवविनिर्गतम् ।
नारीरूपमभूत् कान्त्या त्रिलोकीं व्याप्य संस्थितम् ॥ ८९ ॥

तां पप्रच्छुर्हरिमुखा नत्वा का त्वमितीश्वरीम् ।
सा प्राह विष्णुप्रमुखान्मेघगम्भीरया गिरा ॥ ९० ॥
स्मृता दुर्गतिनाशाय दुर्गाऽहममरैर्नतु ।
प्रसन्ना भवतां दैत्यानरीन् हन्मि भवत्स्तुता ॥ ९१ ॥
श्रुत्वा देवीवचो विष्णुर्दुर्गे हंसि रिपुं कथम् ।
न सुरैर्न तु तद्भिन्नैर्हतः स्यात् सोऽसुरः क्वचित् ॥ ९२ ॥
अथ दुर्गा प्राह हरिं भयं त्यज हरे द्रुतम् ।
न भिन्ना नाऽपि चाऽभिन्ना सर्वदेवसमुद्भवा ॥ ९३ ॥
निहन्मि दैत्यं महिषमायुधानि च वाऽहनम् ।
कल्पयन्तु सुराः सर्वे युधि जेष्यामि वो रिपुम् ॥ ९४ ॥
एवमुक्ता दुर्गया ते स्वायुधेभ्योऽमरा द्रुतम् ।
निर्यान्त्यायुधजालानि ददुर्देव्यै पृथक् पृथक् ॥ ९५ ॥
हिमाद्रिर्वाहनं सिंहं स्वात्वसारं ददौ तदा ।
विश्वकर्मा भूषणानि समुद्रो रत्नमालिकाम् ॥ ९६ ॥
वरुणो वारुणीपात्रमानन्दरससम्भृतम् ।
अथ सा सिंहमारूढा भूपिताऽऽयुधसंयुता ॥ ९७ ॥
त्रिलोकीमभिसंव्याप्य काशयन्ती स्वतेजसा ।
स्तूयमाना स्थिता तत्र दैत्यान् हन्तुं कृतोद्यमा ॥ ९८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे दुर्गोपाख्याने पञ्चचत्वारिंशोऽध्यायः ॥ ३७८० ॥

---

# अथ षट्चत्वारिंशोऽध्यायः ।

अथ सा सिंहसंस्थाना कोटिसूर्यसमद्युतिः ।
विविधाऽऽयुधसंराजत्सहस्रभुजशोभिनी ॥ १ ॥
किरीटकोटिसंक्रान्तसूर्यमार्गा त्रिलोचना ।
कनकाऽम्बरसंवीता रत्नभूषणभूषिता ॥ २ ॥
समुद्रदत्तं जलजं पूरयामास हर्षिता ।
सिंहो जगर्ज तमनुजगुर्देवा जयेति ताम् ॥ ३ ॥
जयसिंहध्वनिभ्यां स शङ्खनादोऽतिभैरवः ।
स मूर्च्छितस्त्रिभुवनं दारयन्निव सम्बभौ ॥ ४ ॥
तेन शब्देन वित्रस्तो विडालाक्षः पलायितः ।
शब्दश्रुतिसमुद्भूतरोपो महिषदानवः ॥ ५ ॥
ससेनोऽभ्याययौ शब्दमनुलक्ष्याऽतिवेगितः ।
विडालाक्षेण संश्रुत्य देव्याः परमवैभवम् ॥ ६ ॥
क्रोधसंमूर्च्छितोऽभ्यागान्महिषो दैत्यसंवृतः ।
उदग्राश्चिक्षुरश्चाऽसिलोमा दीर्घहनुर्बली ॥ ७ ॥
विडालाक्षश्चेति पञ्च सैनिका महिषस्य ते ।
अनेककोटिदैत्यानां सेनाभिः परिवारिताः ॥ ८ ॥
उग्रवीर्यस्तथोग्राऽऽस्यः प्रलम्बश्च प्रभञ्जनः ।
सारणः कृकलासश्च काकवक्त्रो विशङ्कटः ॥ ९ ॥
महिषस्य सुता ह्येते महावीर्यपराक्रमाः ।
योद्धुमभ्याययुर्देवीं धृतशस्त्राः प्रकोपनाः ॥ १० ॥
भेरुण्डः काकतुण्डश्च कुरण्डश्चण्डविक्रमः ।
भाण्डीरण्डिम्भौ क्रकचः काचकान्तः कटोत्कटः ॥ ११ ॥

नवैते मन्त्रिणस्तस्य योद्धुं देवीं समाययुः ।
सेनाभिः कोटिसंख्याभिः प्रत्येकमभिसंवृताः ॥ १२ ॥
अथाऽभवन्महायुद्धं दैत्यानां त्रिदशैः सह ।
शस्त्रास्त्रवर्षणं भीरुहृदयस्य विदारणम् ॥ १३ ॥
शस्त्रास्त्रैर्दैत्यसेनां तां जघ्नुर्देवाः समन्ततः ।
दैत्याश्च देवान् संजघ्नुरेवं युद्धमभूत्तयोः ॥ १४ ॥
ततो भेरुण्डप्रमुखाः समेत्याऽमरपुङ्गवान् ।
शस्त्रास्त्रैर्ववृषुस्तैस्ते सञ्जाता हीनवर्चसः ॥ १५ ॥
दृष्ट्वाऽमरपराभूतिं दुर्गा सिंहमचोदयत् ।
दुर्गयाऽधिष्ठितः सिंहः प्रोड्डीय गगनाऽन्तरम् ॥ १६ ॥
न्यपतद्दैत्यसेनासु गरुत्मान् पन्नगेष्विव ।
नखैः कांश्चिन्मुखैः कांश्चित् कांश्चिल्लाङ्गूलविभ्रमात् ॥ १७ ॥
सटाविक्षेपतः कांश्चिदुरसा वेगतोऽपि च ।
दैत्यान् विनाशयामास गरुत्मानिव पन्नगान् ॥ १८ ॥
हृतगण्डकर्णपार्श्वनासाहृत्करपादकाः ।
क्रोडकुक्षिशिरोहीना दैत्याः सिंहेन चाऽभवन् ॥ १९ ॥
दैत्यारण्ये महावह्निरिव जातो मृगाऽधिपः ।
क्षणेन नाशितप्रायं सैन्यं दृष्ट्वा च सैनिकाः ॥ २० ॥
उदग्राऽऽद्याः शस्त्रधराः सिंहं हन्तुं प्रचक्रमुः ।
सिंहोऽपि तान् युयोधैको दुर्गया ह्यभिरक्षितः ॥ २१ ॥
नखैर्ददार गात्राणि तेषां वज्रसमानि वै ।
अथोत्पत्य नभो वेगान्निपत्योदग्रमूर्धनि ॥ २२ ॥
पिपेष सिंह उरसा दैत्यानाञ्च प्रपश्यतः ।
दृष्ट्वा तादृक् तस्य वीर्यं प्रशंसुर्देवदानवाः ॥ २३ ॥
पुनर्निमेषेण जवाद्युगपच्चिक्षुरादिकान् ।
उत्पपात गृहीत्वा खं पादैर्गृध्र इवाऽऽमिषम् ॥ २४ ॥

उदरं पाटयामास हरिणानां वृको यथा।
ते पाटितोदराः सर्वेऽपतन् भूमौ गताऽसवः ॥ २५ ॥
इत्येवं सैनिकान् पञ्च भूयः सेनामनाशयत्।
हतान् सेनापतीन् दृष्ट्वा भेरुण्डाद्यास्तु मन्त्रिणः ॥ २६ ॥
सकृदभ्याययुः सिंहं हन्तुं ते बलिनो नव।
नवभिस्तैश्चिरं युद्ध्वा कुरण्डं चण्डविक्रमम् ॥ २७ ॥
तलप्रहारेण सकृन्नाशयामास वै क्षणात्।
भेरुण्डं भक्षयामास भाण्डीरञ्च व्यदारयत् ॥ २८ ॥
पातयन् डिम्भमुरसा क्रकचञ्च कचोत्कटम्।
लाङ्गूलेनाऽऽहरत् काचकान्तस्याऽऽशु शिरो महत् ॥२९॥
चपेटया काकतुण्डमनयद्यमसादनम्।
एवं मन्त्रिगणं हत्वा स सिंहो धूतकेसरः ॥ ३० ॥
प्रावृड्जलदवद्भीममसुञ्चन्निनदं तदा।
निशाम्य निहतान् सैन्यपतीन् शूरांश्च मन्त्रिणः ॥ ३१ ॥
महिषस्य सुता ह्यष्टौ महाबलपराक्रमाः।
योद्धुमभ्याययुर्देवीं युद्धशस्त्राऽस्त्रकोविदाः ॥ ३२ ॥
उग्रवीर्यो गदाहस्तो योधयामास तं हरिम्।
युद्ध्वा चिरं तलहतः पपात भुवि मूर्च्छितः ॥३३॥
उग्राऽऽस्यश्च प्रलम्बश्च प्रभञ्जनः स सारणः।
चत्वार एते हरिणा युयुधुर्बलशालिनः ॥ ३४ ॥
त्रिशूलपरिघप्रासकरवालकरैस्तु सः।
हरिर्युयोध चैकोऽपि कालोऽन्तकयमोपमैः ॥ ३५ ॥
तावन्मूर्च्छाविनिर्मुक्त उग्रवीर्योऽतिकोपनः।
गदामादाय वेगेन संभ्राम्य हरिमूर्धनि ॥ ३६ ॥
चिक्षेप सा हरिशिरः प्राप्याऽशनिदृढं तदा।
उत्पपाताऽतिवेगेन क्षितेः कन्दुकवत् क्षणात् ॥ ३७ ॥

तथा पतन्त्या निहतः सारणश्चूर्णिताऽङ्गकः ।
अथ सिंहः समाक्षिप्य चोग्रवीर्यं प्रकोपनः ॥ ३८ ॥
ददार नखवज्रेण पर्वतं वृत्रहा यथा ।
दारिताङ्गश्चोग्रवीर्यो ममार पतितो भुवि ॥ ३९ ॥
अथाऽवशिष्टाः षट् पुत्रा महिषस्य बलोत्कटाः ।
मत्वा हरिमजेयं तं युगपद्योद्धुमाययुः ॥ ४० ॥
तैर्युध्यमानं बलिनमालक्ष्य हरिपुङ्गवम् ।
दुर्गा श्रान्तं चिरं युद्धान्मत्वा सिंहमुवाच ह ॥ ४१ ॥
साधु साधु हरिश्रेष्ठ प्रसन्ना तव विक्रमात् ।
एतैर्नियोद्धुमिच्छामि विरम त्वमितः परम् ॥ ४२ ॥
श्रुत्वैवमाम्बिका वाक्यं विरराम महाऽऽहवात् ।
अथ दुर्गा तैर्युयोध मुहूर्तं घोरविक्रमैः ॥ ४३ ॥
ततः शूलेन सर्वांस्ताननयद्यमसादनम् ।
हतान् पुत्रान् मन्त्रिणश्च सैनिकानपि वीक्ष्य सः ॥ ४४ ॥
अल्पाऽवशिष्टां सेनाञ्च क्रोधसंरक्तलोचनः ।
योद्धुमभ्याययौ दुर्गां महिषः शैलराडिव ॥ ४५ ॥
खुरक्षेपैर्दारयन्तं महीं श्वासैर्घनाऽऽवलिम् ।
नाशयन्तं पातयन्तं तारकाः पुच्छवेगतः ॥ ४६ ॥
गर्जन्तं सांवर्तकवद्वमन्तं पावकं मुखात् ।
मेहन्तं मूत्रयन्तञ्च नृत्यन्तं चक्रकन्धरम् ॥ ४७ ॥
दृष्ट्वा समाह्वयद्दुर्गा मेघगम्भीरभाषिणी ।
एहि दुष्ट महादैत्य मुहूर्तं समरे स्थिरः ॥ ४८ ॥
युद्ध्वा मया पितृगणान् प्रपश्यसि ततो द्रुतम् ।
इत्युक्त्वा शरवर्षेण ववर्ष महिषाऽसुरम् ॥ ४९ ॥
नीलाद्रिमिव जीमूतः प्रावृष्यासारपङ्क्तिभिः ।
सा वृष्टिः सायकौघस्य पर्वते जलवृष्टिवत् ॥ ५० ॥

नैषच्छुजं समकरोन्महिषस्य तनौ तदा ।
मोघं दृष्ट्वा बाणवर्षं शूलखड्गपरश्वधैः ॥ ५१ ॥
तोमरप्रासपरिघशक्तिपट्टिशमुद्गरैः ।
जघान तानि शस्त्राणि मोघान्येव तदाऽभवन् ॥ ५२ ॥
तदङ्गं प्राप्य शस्त्राणि चूर्णीभूतानि वै क्षणात् ।
करकावर्षवद्दण्डशैलमासाद्य तत्क्षणात् ॥ ५३ ॥
अथ मत्वा महासारवर्ष्माणमसुरेश्वरम् ।
बबन्ध पाशैः सुदृढैः शाक्तैर्मन्त्राऽभिमन्त्रितैः ॥ ५४ ॥
बध्यमानः क्षणेनैव सिंहो भूत्वा युयोध ताम् ।
शक्त्या हतः सिंहतनुं त्यक्त्वा निमेषमात्रतः ॥ ५५ ॥
सहस्रसिंहसुवहं रथमास्थाय दंशितः ।
योद्धुमभ्याययौ यत्र पौरुषं रूपमास्थितः ॥ ५६ ॥
महागिरिनिभो दैत्यः सहस्रवदनेक्षणः
सहस्रहस्ताऽङ्घ्रियुतो नानाप्रहरणोद्यतः ॥ ५७ ॥
युयोध दुर्गां परमामस्त्रशस्त्रप्रवर्षणः ।
निमेषेणैव तं वर्षं शरवर्षैर्महेश्वरी ॥ ५८ ॥
निवार्य मारुतेनेव जघानाऽऽकर्णपूरितैः ।
विद्धस्तेनेषुणा गाढं क्षणं मूर्च्छामवाप्य च ॥ ५९ ॥
पुनर्मायामुपाश्रित्य युयोधाऽतिबलो तदा ।
प्रादुश्चकाराऽश्मवर्षमतिमात्रं यदाऽसुरः ॥ ६० ॥
तदा दुर्गां शिलावृष्ट्या समाक्रान्ताऽभिजायत ।
दृष्ट्वाऽश्मवर्षसंछन्ना देवा हा हेति चुक्रुशुः ॥ ६१ ॥
ततः सा मारुताऽस्त्रेण वर्षन्तं नाशयत् परा ।
एतस्मिन्नन्तरे सिंहो वहन् दुर्गां महाबलः ॥ ६२ ॥
पक्षीवोड्डीय दैत्यस्य निपपात महारथे ।
तावज्ज्ञात्वाऽऽत्मनो मृत्युं गदया हरिपुङ्गवम् ॥ ६३ ॥

निहत्य मूर्ध्नि दैत्योऽपि रथात्तस्मादवप्लुतः ।
सिंहप्रतापवेगेन ससिंहौघो महारथः ॥ ६४ ॥
चूर्णीकृतोऽथ सा देवी तं पाशेनाऽनुपाशयत् ।
तावद्दैत्योऽप्यभूच्छैलः सुमेरुरिव चोन्नतः ॥ ६५ ॥
अथ सा कुलिशाऽस्त्रेण बिभेद गिरिरूपिणम् ।
भिद्यमानो नगात्तस्माद्गजो भूत्वा युयोध ताम् ॥ ६६ ॥
सिंहेन सह तां शीघ्रं करेणोत्क्षेप्तुमुद्यतः ।
तावद्देवी तस्य करं चिच्छेद करवालतः ॥ ६७ ॥
अथ भूयो भवेद्दैत्यः पूर्ववन्महिषाऽऽकृतिः ।
शृङ्गाभ्यां शैलशृङ्गाणि चिक्षेप समरेऽनु ताम् ॥ ६८ ॥
अथ सिंहः खमुत्पत्य निपपाताऽसुरोपरि ।
हरिणा तं समाक्रान्तं दुर्गा दृष्ट्वा महासुरम् ॥ ६९ ॥
महाखड्गेन चिच्छेद महिषस्याऽऽशु संयुगे ।
शिरो महागिरिनिभं ततस्तस्मान्महासुरः ॥ ७० ॥
कराभ्यां खेटनिस्त्रिंशौ दधानो निर्जगाम ह ।
तं निर्गच्छन्तमेवाऽऽशु दुर्गा पाशेन दानवम् ॥ ७१ ॥
बद्ध्वा जघान खड्गेन युध्यमानं महासुरम् ।
स छिन्नमूर्धा खड्गेन निपपात गताऽऽयुषः ॥ ७२ ॥
एवं दैत्ये विनिहते महिषे शेषदानवाः ।
भीता ययुर्भूमितलं दिशो वितिमिराऽभवन् ॥ ७३ ॥
ववौ वायुः सुखस्पर्शो जज्वलुः शान्तपावकाः ।
ववर्ष दुर्गां पर्जन्यः पुष्पवर्षैः सुमोदनैः ॥ ७४ ॥
अवर्धयन् जयेत्युच्चैर्देवा विधिमुखास्तदा ।
एवं दैत्ये हते लोकशत्रौ श्रीजगदम्बिकाम् ॥ ७५ ॥
प्रणम्य विबुधा दुर्गां ब्रह्मविष्णुशिवादयः ।
संहृष्टाः चाऽस्तुवन् भक्त्या परां तां त्रिपुराकलाम् ॥७६॥

नमो नमस्ते जगतां विधात्रि संहर्त्रि सर्वाऽन्तरसत्यरूपे ।
प्रपन्नलोकाद्यविनाशहेतुदयाऽम्बुराशे परिपाहि दुर्गे ॥ ७७ ॥
महाभयाद्दानवराजरूपा त्वया समस्तं जगदेतदद्य ।
त्रातं यथा क्रूरमहाऽहिग्रस्तं भेकं तथाऽस्मात् परिपाहि दुर्गे ॥७८॥
यदा वयं दुर्विषहाऽऽपदोघैर्ग्रस्तास्तदा त्वं जगतां विधात्री ।
लीलावपुः प्राप्य विसृष्टमात्रा विपन्निमग्नान् परिपाहि दुर्गे ॥७९॥
यत्तेऽखिलं लोकवितानमेतत्तनोः कलांऽशप्रविभक्तसंस्थम् ।
तदन्तरे दर्शयसि स्वरूपं माया तवैतत् परिपाहि दुर्गे ॥८०॥
मायात्मिका त्वं निजनिर्मलेऽम्ब यतो जगच्चित्रमुदीर्यसेऽङ्गे ।
विचित्ररूपाऽपि चिदेकरूपाऽविभाव्यशक्तिः परिपाहि दुर्गे ॥८१॥
यत्ते पदाब्जैकसमाश्रयास्ते विचित्रकृत्या विधिविष्णुमुख्याः ।
तत्ते विचित्राऽऽकृतिरत्र का स्यात् स्तुमः कथं त्वां परिपाहि दुर्गे।८२।
दुर्गेषु नित्यं भवसङ्कटेषु दुरन्तचिन्ताऽहिनिगीर्यमाणान् ।
शरण्यहीनांच्छरणाऽऽगतार्तिनिवारिणी त्वं परिपाहि दुर्गे ॥८३॥

एवं ब्रह्ममुखा देवाः स्तुत्वा दुर्गां महेश्वरीम् ।
पुष्पाद्यैः पूजयामासुर्विविधैरर्हणैः शिवाम् ॥ ८४ ॥
ततः प्रसन्ना तान् प्राह दुर्गा दुर्गतिनाशिनी ।
भवद्भिः पूजिता देवाः प्रसन्ना वोऽभिवाञ्छितम् ॥ ८५ ॥
प्रतीच्छध्वं दिशाम्यद्य दुष्प्रापमपि सर्वथा ।
निशम्य दुर्गया प्रोक्तमूचुर्देवा महेश्वराः ॥ ८६ ॥
भगवत्याः हतः शत्रुरस्माकं महिषाऽसुरः ।
त्रैलोक्यकण्टकः सर्वं जगज्जातं निरामयम् ॥ ८७ ॥
वयं स्वस्वपदं प्राप्ता भगवत्याः प्रसादतः ।
नाऽस्ति वाञ्छितशेषो नो यत्त्वां कल्पद्रुमाश्रिताः ॥८८॥
अथाऽपि त्वां सुपृच्छामो जगद्रक्षणहेतवे ।
विपन्नं त्वं कथं शीघ्रं प्रसन्ना रक्षसीश्वरि ॥ ८९ ॥

एतन्नो ब्रूहि देवेशि रहस्यमपि सर्वथा ।
प्रार्थितैवं सुरगणैः प्राह दुर्गा दयाऽन्विता ॥ ९० ॥
देवाः शृणुध्वमेतत्तु गोप्यमत्यन्तदुर्लभम् ।
द्वात्रिंशन्नाममाला मे सर्वाऽऽपत्प्रविनाशनी ॥ ९१ ॥
नाऽस्ति तत्सदृशी काचित्स्तुतिस्त्रैलोक्यमण्डले ।
रहस्यरूपा सर्वत्र शृणुध्वं तां ब्रवीमि वः ॥ ९२ ॥
दुर्गा दुर्गार्तिशमनी दुर्गाऽऽपद्विनिवारिणी ।
दुर्गमच्छेदिनी दुर्गसाधिनी दुर्गनाशिनी ॥ ९३ ॥
दुर्गतोद्धारिणी दुर्गनिहन्त्री दुर्गमाऽपहा ।
दुर्गमज्ञानदा दुर्गदैत्यलोकदवानला ॥ ९४ ॥
दुर्गमा दुर्गमाऽऽलोका दुर्गमाऽऽत्मस्वरूपिणी ।
दुर्गमार्गप्रदा दुर्गमविद्या दुर्गमाश्रिता ॥ ९५ ॥
दुर्गमज्ञानसंस्थाना दुर्गमध्यानभासिनी ।
दुर्गमोहा दुर्गमगा दुर्गमाऽर्थस्वरूपिणी ॥ ९६ ॥
दुर्गमाऽसुरसंहन्त्री दुर्गमाऽऽयुधधारिणी ।
दुर्गमाङ्गी दुर्गमता दुर्गम्या दुर्गमेश्वरी ॥ ९७ ॥
दुर्गभीमा दुर्गभामा दुर्गभा दुर्गदारिणी ।
नामाऽऽवलिमिमां यस्तु दुर्गाया मम मानवः ॥ ९८ ॥
पठेत् सर्वभयान्मुक्तो भविष्यति न संशयः ।
शत्रुभिः पीड्यमानो वा दुर्गबन्धगतोऽपि वा ॥ ९९ ॥
द्वात्रिंशन्नामपाठेन मुच्यते नाऽत्र संशयः ।
राज्ञा वधाय चाऽऽज्ञप्तः क्रुद्धेन दण्डनाय च ॥ १०० ॥
युद्धे शत्रुभिराक्रान्तो व्याघ्राद्यैर्वा तथा वने ।
मुच्यते सर्वभीतिभ्यः पठन्नष्टोत्तरं शतम् ॥ १०१ ॥
आपत्सु नैतत्सदृशमन्यदस्ति भयाऽपहम् ।
एतत् पठतां देवाः न किञ्चिद्धीयते क्वचित् ॥ १०२ ॥

नैतद्देयमभक्ताय नाऽस्तिकाय शठाय च ।
देयं भक्ताय शान्ताय गुरुदेवरताय च ॥ १०३ ॥
प्राप्तो महापदं यस्तु पठेन्नामावलीमिमाम् ।
सहस्रवारमयुतवारं वा लक्षमेव वा ॥ १०४ ॥
ब्राह्मणैर्वा स्वयं वाऽपि मुच्यते सकलाऽऽपदः ।
संसिद्धेऽग्नौ हुनेदेभिर्नामभिर्लक्षसंख्यया ॥ १०५ ॥
तिलैः शुक्लैस्त्रिमध्वक्तैर्मुच्यते चाऽऽपदांगणैः ।
अयुतत्रयमेतस्य पुरश्चरणमुच्यते ॥ १०६ ॥
पुरश्चरणपूर्वन्तु सर्वकार्याणि साधयेत् ।
मन्मूर्तिं मृन्मयीं कृत्वा शुभ्रामष्टभुजाऽन्विताम् ॥ १०७ ॥
गदाखड्गत्रिशूलेषुचापाऽब्जखेटमुद्गरान् ।
दधानां चन्द्रचूडालां त्रिनेत्रां लोहिताऽम्बराम् ॥ १०८ ॥
सिंहारूढां विनिघ्नन्तीं शूलेन महिषाऽसुरम् ।
प्रपूज्य तत्र मां भक्त्या विविधैरुपहारकैः ॥ १०९ ॥
नामभिः पूजयेत् पुष्पैः शतवारं हयाऽरिभिः ।
रक्तैर्हुनेदपूपैश्च मन्मन्त्रजपपूर्वकम् ॥ ११० ॥
निवेदयेत् सुभक्ष्यैश्च विविधैः पिशिताऽऽसवैः ।
एवं मण्डलमात्रेण असाध्यमपि साधयेत् ॥ १११ ॥
यो नित्यं मां भजेन्मर्त्यः स क्वचिन्नापदं व्रजेत् ।
इत्युक्त्वा साऽमरांस्तत्र यथावन्तर्धिमाम्बिका ॥ ११२ ॥
एतद्दुर्गामहाऽऽख्यानं शृण्वतामापदो न हि ।
इति रामसमाख्यातं दुर्गाचरितमद्भुतम् ॥ ११३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये महात्म्यखण्डे दुर्गोपाख्याने षट्चत्वारिंशोऽध्यायः ॥ ३८९३ ॥

# अथ सप्तचत्वारिंशोऽध्यायः ।

भगवन्नवधूतेश करुणाऽपारवारिधे ।
कृपयोक्तमुपाख्यानं दुर्गायाः परमाऽद्भुतम् ॥ १ ॥
धन्योऽस्मि कृतकृत्योऽस्मि त्वत्कृपाविषयो यतः ।
दुर्लभं मर्त्यलोकेऽस्मिन् त्वत्कृपाऽऽलोकनं ननु ॥ २ ॥
तव वक्त्रेन्दुसम्भूतं त्रिपुरामहिमाऽमृतम् ।
पिबतां नृचकोराणामानन्दः केन सम्मितः ॥ ३ ॥
पिबतस्त्वन्मुखाम्भोजकथामधुरसं पुनः ।
न मे तृप्तिर्यथा कामिजनस्य स्त्रीमुखादिव ॥ ४ ॥
तच्छ्रोतुमभिवाञ्छामि कामस्य पुनरुद्भवम् ।
पुरा श्रीत्रिपुरादेव्या लीनो नेत्रेषु मन्मथः ॥ ५ ॥
देहः शिवक्रोधवह्निभस्मीभूत इति श्रुतम् ।
प्राणप्रियेण रहिता रतिः परमदुःखिता ॥ ६ ॥
कथं पुनः प्रियं प्राप्ता तन्मे शंस महामते ।
इति पृष्टो भार्गवेण दत्तात्रेयो मुनीश्वरः ॥ ७ ॥
अत्यन्तं हर्षजलधावभवन्मग्नमानसः ।
पुलकाऽङ्कुरुहो नेत्रस्नुताऽऽनन्दाऽऽस्रवाऽऽविलः ॥ ८ ॥
मुहुर्तमात्रमभवद्गतवृत्त्याऽन्तरस्मृतिः ।
अथ स्मृतिं समासाद्य हर्षगद्गदया गिरा ॥ ९ ॥
जामदग्न्येत्युपामन्त्र्य प्राह रामं तपोनिधिः ।
जामदग्न्य धन्यतमस्त्वं यस्मात्त्रिपुराकथाम् ॥ १० ॥
शृण्वन्नपि स्वल्पमपि नैषि तृप्तिं कथाश्रुतेः ।
एतन्महाभाग्यमिह यच्छ्रीदेवीकथामृते ॥ ११ ॥
शुश्रूषुत्वमनन्यजन्मभवं यल्लोकदुर्लभम् ।
धन्योऽहं स्मारितो यत्ते त्रिपुरामहिमोन्नतिम् ॥ १२ ॥

यत्प्रसङ्गाल्लोकतन्त्रत्रोटनक्षमता भवेत् ।
प्रसङ्गात् प्राकृताल्लोके चन्द्रेन्द्रादिकथा शुभा ॥ १३ ॥
ततो विरिञ्चिक्रौञ्चाऽरिगणपाऽऽदिकथोत्तमा ।
ततो विष्णोस्ततः शम्भोर्महिमा लोकपावनः ॥ १४ ॥
ततो मुख्यं रमागौरीभारत्यादिसुवैभवम् ।
सर्वोत्तमं पराशक्तेस्त्रिपुरायाः कथानकम् ॥ १५ ॥
वर्ण्यते महिमा तस्याः केन वा पृथिवीतले ।
तारागणाश्च नभसि वर्षधारास्तथाऽम्बरे ॥ १६ ॥
भूम्यां रजांसि यत्नेन मितानि स्युः कथञ्चन ।
न तस्यास्त्रिपुरादेव्या महिम्नोऽन्तोऽस्ति भार्गव ॥ १७ ॥
मुख्याऽवतारचरितं संक्षेपेण निरूपितम् ।
पूर्णस्वरूपा या देवी तां वक्तुं न हि कश्चन ॥ १८ ॥
समर्थोऽस्मिन् प्रभवति लोके साक्षान्महेश्वरः ।
वेदशास्त्रपुराणानि तन्त्राण्यपि च सर्वशः ॥ १९ ॥
तस्याः स्वरूपमप्राप्य स्थितान्यर्वाक्पदे सदा ।
यथेन्द्रियाणां स्वतनौ वह्नेर्वा नो गतिः क्वचित् ॥ २० ॥
वायोः प्रस्तरगर्भाऽन्तः तद्रूपे निखिलाऽऽगमाः ।
तत्स्वरूपबलात्सिद्धं भातं सर्वं तदाश्रयात् ॥ २१ ॥
चितिशक्तिस्तथारूपा त्रितयात् पूर्वभाविनी ।
त्रिपुराख्या समाख्याता व्याख्याऽऽख्यानविवर्जिता ॥२२॥
अनादिमध्यनिधना सा स्ववैभवनिर्भरात् ।
विचित्राऽऽभासरूपेण सृष्ट्याद्याख्यां सदा गता ॥ २३ ॥
तद्वैभवभरोत्थेऽस्मिन्निमित्तेऽस्य विनिर्मिते ।
स्वनिर्मितस्थितिविधौ दृश्यतामभिपद्यते ॥ २४ ॥
तत्र तेऽभिहितं पूर्वं चरित्रं त्रिपुराऽऽस्पदम् ।
कुमार्याद्यंशसम्भूतं विचित्रविभवोन्नतम् ॥ २५ ॥

इदानीं तेऽभिधास्यामि त्रिपुरायाः परात्परम्।
यद्रूपं तस्य माहात्म्यं येन कामो विभावितः॥ २६॥
सा मूर्तिर्ललितेत्युक्ता सर्वेषु ललनात् सदा।
अस्या विचित्रं चरितं भण्डदैत्यनिवर्हणम्॥ २७॥
अतिवीर्यबलज्ञानाक्रियाचरितचित्रितम्।
पुरा भण्ड इति ख्यातस्तपोवीर्यबलाऽन्वितः॥ २८॥
ससर्जाऽण्डान्यनेकानि ब्रह्मविष्णुशिवानपि।
पराजितास्तेन देवास्त्रिपुरां परमेश्वरीम्॥ २९॥
प्रसादयामासुरलं साऽग्निकुण्डसमुद्भवा।
ललिता त्रिपुरामूर्त्तिर्देवानां प्रीतिहेतवे॥ ३०॥
निहत्य भण्डं सगणमकरोन्नीरुजं जगत्।
तदा विष्णुमुखा देवाः स्तुत्वा तां ललिताऽम्बिकाम्॥३१॥
कामस्योत्पत्तये देवीं प्रार्थयामासुरानताः।
रतिमानीय कृत्वाऽग्रे श्रीदेवीपादपद्मयोः॥ ३२॥
मातः कामस्य दयिता रतिरेषाऽतिदुःखिता।
विधवा प्रियवैधुर्यशोकाऽग्निज्वलिता सदा॥ ३४॥
कृशीभूताऽतिमलिना छिन्ननालाऽब्जिनी यथा।
इमामुद्धर शोकाब्धौ मज्जन्तीं कृपया द्रुतम्॥ ३५॥
भक्तमूर्धन्यभूतस्य नोचितं ते पराभवम्।
त्रिनेत्रेणेति मन्यामस्तदम्बाऽस्यां दयां कुरु॥ ३६॥
निशम्य प्रार्थनां देवी देवानां प्राह सुस्मिता।
देवाः शृणुध्वं सत्यं तन्मद्भक्तस्य पराभवः॥ ३७॥
न भवेत् कुत्रचिल्लोके न कामोऽपि पराकृतः।
शापस्य गौरवाद्गौर्या मद्भक्त्या विशेषतः॥ ३८॥
देह एव पराभूतो न कामो भस्मतां गतः।
नेत्रे मम वसत्येषः कामो मद्भक्तशेखरः॥ ३९॥

एषा मद्भक्तिपरमा रतिः कामप्रिया सती ।
वैधव्यं कथमीयेत दिनं ध्वान्तगणं यथा ॥ ४० ॥
मयैष पुनरुद्भूतो मदनो रतिमेष्यति ।
पश्यध्वं क्षण एवैष रतेर्दुःखनिकृन्तनः ॥ ४१ ॥
इत्युक्त्वा ललिता देवी कामेशं परमेश्वरम् ।
सुन्दराऽपाङ्गपीयूषवर्षणैरभ्यषेचयत् ॥ ४२ ॥
अपाङ्गाद् हृदयं प्राप्य कामेशस्य स मन्मथः ।
शरीरं प्राप्य तद्देहात् कन्दर्पो निर्जगाम ह ॥ ४३ ॥
सुप्तोत्थितमिवाऽऽत्मानममंसत स मन्मथः ।
प्रणनाम महादेवीं भक्तिक्षीराऽब्धिसम्प्लुतः ॥ ४४ ॥
मातरं पितरं देवान्नत्वा सर्वानवास्थितः ।
तुष्टाव ललितेशानीं विविधैरुत्तमैः स्तवैः ॥ ४५ ॥
अथ मात्रा रमादेव्या श्रुत्वा स्वतनुनाशनम् ।
पुनर्नेत्रादुद्भवञ्च प्रार्थयामास तां शिवाम् ॥ ४६ ॥
जगदम्ब न वाञ्छामि देहमत्यन्तनश्वरम् ।
विदेह एव तिष्ठामि नाशभीतिर्न मे भवेत् ॥ ४७ ॥
नाऽहं जीवितुमर्हामि महेश्वरपराजितः ।
यदि देवस्त्रिनयनः परिभूयान्मया हतः ॥ ४८ ॥
तदा मे जीवितेनाऽर्थः सत्यं प्रतिशृणोमि ते ।
तन्नेत्राऽग्नि समासाद्य भस्मीभूतः पतङ्गवत् ॥ ४९ ॥
त्वत्पादसंश्रयोऽप्यम्ब न मे जीवनजं फलम् ।
तदलं देवि देहेन जीवितेन च सर्वथा ॥ ५० ॥
देहं नैवाऽहमिच्छामि दयां मयि समावह ।
धिङ् मां रमासुतो भूत्वा श्रीदेवीपादसंश्रयः ॥ ५१ ॥
परिभूतो वरिगोष्ठ्यां पुनर्जीवाम्यनार्यवत् ।
श्रुत्वैवं मन्मथवचः प्राह श्रीललिताऽम्बिका ॥ ५२ ॥

वत्स कन्दर्प मा खेदं गच्छ त्वमरिमर्दन ।
मत्पादसंश्रयाणां तु नास्ति क्वाऽपि पराभवः ॥ ५३ ॥
मन्नेत्रयोः संस्थितस्त्वं सुषुप्त इव पूरुषः ।
गौरीशापविनिर्दग्धो देहो भस्मत्वमागतः ॥ ५४ ॥
त्वद्देहसम्भवाः कामा असंख्यास्त्वत्समौजसः ।
जयन्ति सर्वलोकांस्ते तेषां त्वमीश्वरो भव ॥ ५५ ॥
अथ कामान् देहभवानाहूयाऽम्बाऽब्रवीद्वचः ।
कामाः शास्तैष वो देवः कामराजो मम प्रियः ।
शासनेऽस्य सदा स्थेयं भवद्भिर्देहसम्भवैः ॥ ५६ ॥
यच्छ काम पुनर्देहं शिवं जहि निमेषतः ।
देवैः सम्प्रार्थितः पुत्रसमुत्पादनकर्मणि ॥ ५७ ॥
आस्ते निष्काम एवाऽसौ समुद्रः स्तिमितो यथा ।
न त्वयाभिहतो नूनं विवशो विह्वलेन्द्रियः ॥ ५८ ॥
समेष्यत्यद्रिजां शीघ्रं मोहिनीं विष्णुमप्युत ।
तनुं नेच्छस्यलं यत्ते तनुमन्यो न पश्यति ॥ ५९ ॥
रतिं विना त्रिलोकेऽपि गच्छ देवं द्रुतं जहि ।
इत्याज्ञप्तो ययौ कामः सन्नद्धः शङ्करं प्रति ॥ ६० ॥
अदृश्य एव बाणेन जघान स्वरिपुं शिवम् ।
हतः कामेन चाऽत्यन्तं देवैरपि शिवोऽर्थितः ॥ ६१ ॥
अनुगच्छन् पर्वतजां कामबाणप्रपीडितः ।
ततो जातो गुहस्तेन हतास्तारकमुख्यकाः ॥ ६२ ॥
दैत्याः सखायो भण्डस्य महावीर्यपराक्रमाः ।
अथ कालान्तरे शम्भुर्मोहिनीदर्शनादलम् ॥ ६३ ॥
कामास्त्रविद्धहृदयो बभूव स्खलितेन्द्रियः ।
एतत्ते सर्वमाख्यातं कामस्य जननं पुनः ॥ ६४ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
कामोज्जीवने सप्तचत्वारिंशोऽध्ययः ॥ ३९५७ ॥

# अथाऽष्टचत्वारिंशोऽध्यायः ।

श्रुत्वा कामपुनर्भूतिं जामदग्न्योऽतिकौतुकी ।
दत्ताऽऽत्रेयं पुनरपि पप्रच्छ विनयाऽन्वितः ॥ १ ॥
भगवन् श्रोतुमिच्छामि कथं निष्काम ईश्वरः ।
मोहिन्या मोहितो जातस्तन्मे शंस दयानिधे ॥ २ ॥
भार्गवेणैवमापृष्टो दत्तः प्रोवाच योगिराट् ।
शृणु रामाऽभिधास्यामि कथां परमपावनीम् ॥ ३ ॥
पुरा देवाऽसुरे युद्धे क्षीरसागरसम्भवम् ।
दैत्या जह्रुः सुधाकुम्भं तदा विष्णुर्महासुरान ॥ ४ ॥
मोहिनीरूपमासाद्य सुधाकुम्भं समाहरत् ।
वञ्चयित्वा दितिसुतान् देवेभ्यो विभजत् सुधाम् ॥ ५ ॥
श्रुत्वैतच्छङ्करो वृत्तं विष्णुना सङ्गतः क्वचित् ।
प्रोवाच विष्णो रूपं ते मोहिन्याख्यं प्रदर्शय ॥ ६ ॥
जगाद विष्णुः श्रीकण्ठं तद्रूपमतिमोहनम् ।
दृष्ट्वा त्वं मोहितः सद्यो मुक्तवीर्यो भविष्यसि ॥ ७ ॥
श्रुत्वा जहास सुतरामब्रवीद्वचनं पुनः ।
नाहं दैत्यसमो विष्णो ये त्वया मोहिता भृशम् ॥ ८ ॥
न मेरुशिखरे वात्या वीर्यं मूर्च्छति कुत्रचित् ।
आस्ते मोहमयी वृत्तिर्यन्मां मोहयितुं क्षमः ॥ ९ ॥
हरिरेवमधिक्षिप्तो दर्शयिष्यामि कालतः ।
इत्याभाष्य गतौ विष्णुशङ्करौ स्वं स्वमालयम् ॥ १० ॥
एवं शिवेनाऽधिक्षिप्तो विष्णुः स्वस्मिन् व्यचिन्तयत् ।
नूनं शिवो महातेजा ऊर्ध्वरेता यताऽऽत्मवान् ॥ ११ ॥

साक्षात् कामोऽपि नाऽशकद्यं मोहयितुमीश्वरम् ।
तं कथं मोहयिष्यामि येन कामो हतः क्षणात् ॥ १२ ॥
नूनं यास्यामि लघुतां प्रदर्श्य मोहिनीतनुम् ।
यं सा पर्वतजा गौरी भगिनी लोकसुन्दरी ॥ १३ ॥
त्रिपुरांऽशसमुद्भूता सदा सन्निहिता सती ।
न समर्था मोहयितुं स्पर्शदर्शपराऽप्यलम् ॥ १४ ॥
तत्कथं मोहिनीवेषं कृत्वा ऽहं मोहयामि तम् ।
इति चिन्तापरो भूत्वा विमृश्य तदनन्तरम् ॥ १५ ॥
नूनमत्र विना देव्यास्त्रिपुरायाः प्रसादनम् ।
न सेत्स्यति मतं तस्मात्तां समाराधयाम्यहम् ॥ १६ ॥
इति निश्चित्योपतस्थौ त्रिपुरां लोकसुन्दरीम् ।
षष्टिवर्षसहस्राणि तां समाराधयद्धरिः ॥ १७ ॥
अथ प्रसन्ना त्रिपुरा प्रादुर्भूता महेश्वरी ।
प्रोवाच विष्णुं वत्सेति सम्बोध्य परमेश्वरी ॥ १८ ॥
वरं वरय ते ऽभीष्टं यत्तद्दास्ये रमापते ।
नाऽदेयं विद्यते तुभ्यं चिरमाराधिता यतः ॥ १९ ॥
एवं नियुक्तः श्रीदेव्या नमस्कृत्य परां हरिः ।
प्राह देवि महेशानं कामारिमपि मोहितुम् ॥ २० ॥
मोहिनीरूपमिच्छामि यच्छिवस्याऽपि मोहकम् ।
श्रुत्वा विष्णोः प्रार्थितं तत् प्रोवाच त्रिपुरेश्वरी ॥ २१ ॥
पुरुषं वाऽपि स्त्रीरूपं सर्वलोकैकमोहनम् ।
यदेच्छसि तदा तेऽस्तु गच्छ मन्मथसंयुतः ॥ २२ ॥
दृष्ट्वा त्वां मन्मथाऽऽविद्धो गिरिशो मोहमेष्यति ।
ऊर्ध्वरेताः शम्भुरयं योगीशो जितमन्मथः ॥ २३ ॥
तदर्थं ते ददाम्यंशं मत्सौन्दर्यस्य तेन तम् ।
मोहयिष्यस्यतितरां लोके ख्यातिञ्च यास्यसि ॥ २४ ॥

एवं देव्या वरं लब्ध्वा कामेन पुरुषोत्तमः ।
ययौ कैलासशैलेन्द्रं यत्र देवः स्थितः शिवः ॥ २५ ॥
पार्वत्या सहितस्तस्मादविदूरे मनोहरे ।
सुरसिन्धुतटे फुल्लवने शुकपिकाऽऽकुले ॥ २६ ॥
मोहिनीरूपमास्थाय विचचार समन्मथः ।
समानसर्वाऽवयवं सर्वसौन्दर्यसंश्रयम् ॥ २७ ॥
तप्तहेमाऽऽभसुतनुं पूर्णचन्द्रनिभाऽऽननम् ।
कस्तुरिकातिलकिकाकलङ्कच्छविलाञ्छनम् ॥ २८ ॥
घननीलकबन्धान्तमध्योद्यन्मुखचन्द्रकम् ।
मन्दहासक्षीरनिधिफुल्लेन्दीवरनेत्रकम् ॥ २९ ॥
नासाचम्पकविन्यस्तनिवृत्ताऽलिविशेषकम् ।
मुखसौन्दर्याऽब्धिवलन्मीनचञ्चललोचनम् ॥ ३० ॥
कुन्दकोरकपङ्क्त्याऽऽभद्विजपङ्क्त्युपशोभितम् ।
गण्डाऽऽभोगस्फुरद्रत्नकुण्डलश्रीमनोहरम् ॥ ३१ ॥
कन्दुकाऽऽभकुचद्वन्द्वसतीर्थीकृतकोककम् ।
प्रवाललतिकाभोगशोभाजित्पाणियुग्मकम् ॥ ३२ ॥
रत्नाङ्गदोर्मिवलयशोभाद्विगुणसुन्दरम् ।
प्रवाललतिकोदञ्चत्कराम्बुजविराजितम् ॥ ३३ ॥
तनुवल्लीबाहुशाखाप्रान्तकोरकिताऽङ्गुलिम् ।
पृथुवक्षःस्थलीन्युब्जदुन्दुभिद्वयसुस्तनम् ॥ ३४ ॥
चर्मबन्धनसुग्रन्थिनिमग्नाऽसितचूचुकम् ।
नाभीबिलोद्गमद्रोमलतातनुभुजङ्गकम् ॥ ३५ ॥
ऊर्ध्वाङ्गाधारतोऽमेयमध्यभागसमाश्रयम् ।
नाभीह्रदस्वर्णतटसोपानत्रिवलीयुतम् ॥ ३६ ॥
कौसुम्भांऽशुकसंवीतितनितम्बलघुतायुतम् ।
काञ्चीमणिप्रवितत्तिप्रभाद्विगुणिताऽरुणम् ॥ ३७ ॥

रत्ननूपुरविन्यस्तकिङ्किणीस्वनसुन्दरम् ।
मन्दयानाऽतिसौन्दर्यपराकृतमरालकम् ॥ ३८ ॥
एवं सुमोहिनीरूपं कृत्वा यज्ञपतिर्हरिः ॥ ३९ ॥
व्यहरत्कन्दुकक्रीडापरः फुल्लवनाऽऽलिषु ॥
मधुरं सुस्वरं गायन् शिवस्य पुरतस्तदा ॥ ४० ॥
शिवः श्रुत्वा गीतरवमपश्यत्तां पुरो वने ।
गौरि पश्याऽतिसुभगां कन्दुकक्रीडने रताम् ॥ ४१ ॥
भज्यमानामिव लतां तडिल्लेखेव भासुराम् ।
कन्दुकक्रीडनाऽऽलोलहारवल्गत्पृथुस्तनीम् ॥ ४२ ॥
स्वेदार्द्राऽशुकसुव्यक्तस्तनश्रोण्यूरुमण्डलाम् ।
स्तनभारनमन्मध्यां नृत्यत्कुचसुकुड्मलाम् ॥ ४३ ॥
कन्दुकोत्पातसंलग्नकरनेत्राऽम्बुजद्वयीम् ।
उपयावोऽतिकुतुकाऽऽलोकाय द्रुतमद्रिजे ॥ ४४ ॥
अथ तामुपयान्तं तं मन्मथोऽप्यविदूरतः ।
जघान पुष्पविशिखैर्हृदि देवस्य शूलिनः ॥ ४५ ॥
विद्धो मन्मथवाणेन दृष्ट्वा तां मोहिनीं पुरः ।
कामाग्निज्वलितात्माऽसौ हित्वा गौरीं द्रुतं ययौ ॥ ४६ ॥
क्षुब्धेन्द्रियगणो देवस्तामासाद्य समीपतः ।
काऽसि सुन्दरि मां पश्य कुतस्त्विह समागता ॥ ४७ ॥
मनो हरासि मे वाले पृच्छामि त्वां शिवो ह्यहम् ।
अनादृत्यैव तद्वाक्यं सा क्रीडनपरा पुनः ॥ ४८ ॥
मन्मथाऽऽविद्धहृदयो गाढव्याकुलिताऽन्तरः ।
अनुव्रज्य करं तस्या जगृहेऽतिविमोहितः ॥ ४९ ॥
तदङ्गस्पर्शनोद्भूतसुखक्षुब्धेन्द्रियः शिवः ॥ ५० ॥
मुमोच वीर्यमत्यन्तं प्राकृतः पुरुषो यथा ।
अथ विष्णुर्निजं रूपं दधार शिवसन्निधौ ॥ ५१ ॥

ज्ञात्वा शिवोऽप्यतिक्षुब्धहृदयो ह्रियमावहत् ।
हरिस्त्रिलोचनं प्राह दर्शितं शिव ते मया ॥ ५२ ॥
यन्मे दिदृक्षितं रूपं मोहिन्याख्यं सुमोहनम् ।
श्रुत्वा हरिवचः शम्भुर्लज्जयाऽवनताऽऽननः ॥ ५३ ॥
एवं पुरा स कामारिर्मोहिनीरूपदर्शनात् ।
नष्टवीर्यः समभवदत्यन्तं क्षुभितेन्द्रियः ॥ ५४ ॥
त्रिपुरायाः कृपाप्राप्तौ न किञ्चिद् दुर्लभं भवेत् ।
एवं विष्णुविरिञ्च्याद्यास्त्रिपुरां परमेश्वरीम् ॥ ५५ ॥
समाराध्य प्राप्तकृपा व्यदधुर्दुर्घटान्यलम् ।
एवं ब्रह्मादयः सर्वे त्रिपुराया उपासकाः ॥ ५६ ॥
आराधयन्ति तामेव तद्विद्यां प्रजपन्ति च ।
तेषु सर्वोत्तमः कामो भक्तलोकैकशेखरः ॥ ५७ ॥
विद्याप्रवर्तकश्चैवमन्येऽप्यस्याः कृपावशात् ।
जाता विद्येश्वरास्तेषु मुख्यास्ते द्वादश स्मृताः ॥ ५८ ॥
तानहं ते प्रवक्ष्यामि शृणु भार्गव संयतः ।
मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च मन्मथः ॥ ५९ ॥
अगस्तिरग्निः सूर्यश्च इन्द्रः स्कन्दः शिवस्तथा ।
क्रोधभट्टारको देव्या द्वादशाऽमी उपासकाः ॥ ६० ॥
एतान् प्रातः स्मरन्नित्यं सर्वपापैः प्रमुच्यते ।
एते प्राप्तप्रसादा यत्तस्या देव्यास्ततोऽन्वहम् ॥ ६१ ॥
स्मरणात् सर्वसौभाग्यफलप्राप्तिर्भवेदिह ।
त्रिपुरोपासका ये वै तैः स्मर्तव्या विशेषतः ॥ ६२ ॥
ततस्तस्याः सुभक्तिः स्याद्भवपाशनिकृन्तनी ।
जगत्सृष्टिमोषधीनाममृतांऽशुनिषेचनम् ॥ ६३ ॥
धनेशत्वञ्च सौभाग्यं शिवस्य विजयं तथा ।
समुद्रशोषणाद्यश्च देवतामुखतां तथा ॥ ६४ ॥
लोकप्रकाशकत्वञ्च देवेशत्वमनुत्तमम् ।

मृत्योर्जयं क्रौञ्चजयं योगीशत्वञ्च भार्गव ॥ ६५ ॥
त्रिपुरायाः प्रसादेन प्राप्ता एते हि साधकाः ।
एते समस्तविद्येशा अन्ये बीजाद्युपासकाः ॥ ६६ ॥
तत्र मुख्यास्त्रिगुरवो लोके सर्वत्र पूजिताः ।
मित्रीशषष्ठीशोड्डीशा आद्याऽऽचार्याः शिवाऽङ्गजाः ॥६७॥
कूटोपासनसम्प्राप्तमहेश्वरपदा इमे ।
एवं सा त्रिपुरेशानी कृत्वा विविधरूपकम् ॥ ६८ ॥
चक्रे जगद्रक्षणं सा कलया विश्वमास्थिता ।
पूर्वसागरतीरे तु कामगिर्यात्मना स्थिता ॥ ६९ ॥
मेरुसानौ स्थिता सैव जालन्धरस्थानरूपतः ।
पूर्णगिर्यात्मना प्रत्यक् समुद्रप्रान्ततः स्थिता ॥ ७० ॥
एवं त्रिधा संस्थिताऽपि पुनर्बहुविधा स्थिता ।
काञ्चीपुरे तु कामाक्षी मलये भ्रामरी तथा ॥ ७१ ॥
केरले तु कुमारी सा अम्बाऽऽनर्तेषु संस्थिता ।
करवीरे महालक्ष्मीः कालिका मालवेषु सा ॥ ७२ ॥
प्रयागे ललिता देवी विन्ध्ये विन्ध्यनिवासिनी ।
वाराणस्यां विशालाक्षी गयायां मङ्गलावती ॥ ७३ ॥
वङ्गेषु सुन्दरी देवी नेपाले गुह्यकेश्वरी ।
इति द्वादशरूपेण संस्थिता भारते शिवा ॥ ७४ ॥
एतासां दर्शनादेव सर्वपापैः प्रमुच्यते ।
अशक्तो दर्शने नित्यं स्मरेत् प्रातः समाहितः ॥ ७५ ॥
तथाप्युपासकः सर्वैरपराधैर्विमुच्यते ।
एवमन्यानि रूपाणि शतशोऽथ सहस्रशः ॥ ७६ ॥
कृत्वा भुवि स्थिता देवी जनानुद्धर्तुमिच्छया ।
इति ते राम सम्प्रोक्तं मोहिन्याः शिवमोहनम् ॥ ७७ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे मोहिन्युपाख्याने अष्टचत्वारिंशोऽध्यायः ॥ ४०३४ ॥

# अथैकोनपञ्चाशत्तमोऽध्यायः ।

एवं श्रुत्वा जामदग्न्यो माहात्म्यश्रुतिकौतुकी ।
पप्रच्छाऽत्रिसुतं देवमवधूतकुलेश्वरम् ॥ १ ॥
भगवन्नधुना तस्यास्त्रिपुराया महाद्भुतम् ।
ललितारूपधारिण्या माहात्म्यं वद विस्तृतम् ॥ २ ॥
कथं वा सा जगद्धात्री प्रार्थिता ऽऽविर्बभूव ह ।
किमाकारा कथं युद्धमासीद्भण्डेन संयुगे ॥ ३ ॥
किम्प्रभावः स दैत्येन्द्रः कस्य पुत्रः कथं सुरान् ।
अजयत् सर्वमाख्याहि शिष्यायाऽनुरताय मे ॥ ४ ॥
न हि शिष्येण सम्पृष्टा गुरवो दीनवत्सलाः ।
समियन्ति क्लेशमिह त्रिपुरायाः कथारसात् ॥ ५ ॥
त्वद्वक्त्रविकसत्पद्मजातादत्यन्तमोदनात् ।
नैव जातु वितृप्यामि चिरं जक्षन् द्विरेफवत् ॥ ६ ॥
पृष्ट एवं जामदग्न्याद्दत्तात्रेयो मुनीश्वरः ।
निशाम्य श्रवणोत्साहं तस्य प्राह प्रमोदितः ॥ ७ ॥
शृणु राम प्रवक्ष्यामि साक्षाच्छ्रीललिताकथाम् ।
या हि साक्षान्महेशान्यास्त्रिपुरायाः कलात्मिका ॥ ८ ॥
त्रिपुरा परमेशानी सर्वकारणकारणम् ।
सर्वाऽऽश्रया चितिः प्रत्यक्प्रकाशाऽऽनन्दनिर्भरा ॥ ९ ॥
शिवः सर्वजगद्धाता संविदानन्दविग्रहः ।
तस्याः संविदियं शक्तिश्चिच्छक्तिरभिधीयते ॥ १० ॥
या चितिः परमेशस्य क्रियास्फूर्तिः सुखाऽऽत्मता ।
सा शक्तिः परमेशस्य विमर्शाऽऽख्या महत्तरा ॥ ११ ॥
महाकाशात्मिका यस्यां जगदेतद्धि राजते ।
सा त्रिधा भाति रूपैश्च त्रिपुराख्या प्रकीर्तिता ॥ १२ ॥

समुद्रस्य जलमिव सूर्यस्य किरणा इव ।
धरण्या मृत्तिकेवेयं शिवस्य शक्तिरीरिता ॥ १३ ॥
न तया विद्यते देवो विना कोऽपि कथञ्चन ।
जलं विनेव जलधिर्विनेवाऽर्को गभस्तिभिः ॥ १४ ॥
ललिता तस्य वै मूर्तिः स्ववैभवभराऽऽत्मिका ।
चिच्छक्तेः स्थूलतरवद्देहः सा पूर्णरूपिणी ॥ १५ ॥
अन्याः सर्वाः शिरोबाहुपादवत् स्युर्निरूपिताः ।
कुमार्याद्याः शक्तयोऽस्या ललिता सर्वतोऽधिका ॥ १६ ॥
पुरा कुम्भोद्भवमुनिर्लोकान् दुःखपरायणान् ।
तीर्थयात्राप्रसङ्गेन दृष्ट्वा कारुण्यमागतः ॥ १७ ॥
काञ्चीपुरे महाविष्णुं तोषयामास भूयसा ।
तपसा सोऽपि सन्तुष्टस्तस्मै स वरदोऽभवत् ॥ १८ ॥
जगदुद्धरणे हेतुं पृष्टः स प्राह तं मुनिम् ।
त्रिपुरायाः स्थूलमूर्तेर्माहात्म्यमतिचित्रितम् ॥ १९ ॥
ललितायाः महादेव्या भण्डासुरवधादिकम् ।
तस्मै ब्रवीमि विततं शृणु भार्गव संयतः ॥ २० ॥
संक्षिप्योक्त्वा महाविष्णुर्विस्तरं श्रोतुमिच्छते ।
स्वांऽशं मुनिं हयग्रीवं नियोज्य प्रययौ हरिः ॥ २१ ॥
अथ स्वाश्रममागत्य पूजयित्वा हयाऽऽननम् ।
मुनिं पप्रच्छ ललिताविभवं परमाद्भुतम् ॥ २२ ॥
अश्वानन महाप्राज्ञ कथं सा त्रिपुरा परा ।
आविर्भूता भण्डदैत्यं नाशयामास संयुगे ॥ २३ ॥
एतदीहे श्रोतुमहं कृपया वक्तुमर्हसि ।
इति पृष्टो हयग्रीवो ललिताभक्तशेखरः ॥ २४ ॥
स्मृत्वा श्रीललितादेव्या माहात्म्यं हर्षनिर्भरः ।
आनन्दाऽश्रुपरीताक्षः पुलकाङ्करुहो मुनिः ॥ २५ ॥
हर्षगद्गदया वाचा प्रवक्तुमुपचक्रमे ।
धन्योऽसि कुम्भसम्भूते जन्मान्तरशताऽर्जितम् ॥ २६ ॥

फलितं सुकृतं तेऽद्य धीर्जाता तव चेदृशी ।
नाऽल्पपुण्यफलं ह्येतच्छ्रीकथाश्रवणार्हनम् ॥ २७ ॥
ललितामाहात्म्यसुधां यः पातुमभिवाञ्छति ।
तं जानीयान्मृत्युभयमुक्तं पुरुषसत्तमम् ॥ २८ ॥
एतत्सारं मर्त्यलोके ललितायाः कथाश्रुतिः ।
भक्तिसंजननद्वारा यया तत्पदमाप्नुयात् ॥ २९ ॥
न यावत् संश्रुतं ह्येतल्ललिताचरितं नृभिः ।
तावत्सर्वं कृतं व्यर्थं भस्मनि प्रहुतं यथा ॥ ३० ॥
त्रिपुरोपासनायुक्तैः श्रोतव्यं सर्वथा त्विदम् ।
अशृण्वन्नाप्नुयात् किञ्चिदुपासनफलं यतः ॥ ३१ ॥
तस्मात् सर्वप्रयत्नेन श्रोतव्यं देवतापरैः ।
शृणुयाद्वाचयेद्वापि पुण्यव्रतदिनाऽऽदिषु ॥ ३२ ॥
देवताप्रीतिमाप्नोति त्रिपुरा परमेश्वरी ।
आसीत् पुरा भण्ड इति दानवोऽतिमहाबली ॥ ३३ ॥
आराध्य स शिवं देवं वरं लेभेऽतिदुर्लभम् ।
अथाऽभयं प्राप्य दैत्यः सर्वेभ्योऽपि जगत्त्रयम् ॥ ३४ ॥
जित्वा शशास बलवान् यथा विष्णुर्जगत्पतिः ।
पराजितास्तेन युद्धे इन्द्राद्या विबुधास्तदा ॥ ३५ ॥
हृतैश्वर्या दीनतरा विचेरुर्भुवि मर्त्यवत् ।
हविर्भागानप्सरसो नन्दनञ्च भयानकम् ॥ ३६ ॥
कल्पवृक्षञ्च बुभुजुर्दैत्या भण्डसमाश्रयाः ।
प्रेक्ष्येन्द्राणीं भण्डदैत्यस्तदा श्रीरिव रूपिणीम् ॥ ३७ ॥
साम्नाऽभिवाञ्छताहर्तुं यावत्तावच्छची स्वयम् ।
पित्रा पुलोम्ना सहिता ययौ दैत्यैरलक्षिता ॥ ३८ ॥
कैलासपर्वते देवीं गौरीमाश्रित्य चाऽवसत् ।
एवमिन्द्रं कुबेरञ्च वरुणं वायुमेव च ॥ ३९ ॥
अग्निं यमं सोममपि जित्वा दैत्यैरशासत ।
स्वर्गे स्थितः स्वयं भूमौ विशुक्रं स न्यवेशयत् ॥ ४० ॥

पातालेषु विषङ्गश्च त्रिलोकीमनुशासत ।
वद्ध्वा शक्रादिदिक्पालांश्चक्रे भारस्य वाहकान् ॥ ४१ ॥
अथ कालेन तद्दृष्ट्वा गुरुरौशनसः कविः ।
मोचयामास तान् देवानेवंदेवानबाधत ॥ ४२ ॥
बोधितोऽसुरसङ्घैः स कदाचिद्भण्डदानवः ।
दैत्यानां शोणितपुरं नाशितं प्राक्सुरोत्तमैः ॥ ४३ ॥
मयमाहूय शिल्पेशमाज्ञापयत तद्विधौ ।
अथाऽऽज्ञप्तो मयश्चक्रे शोणिताख्यं पुरं तदा ॥ ४४ ॥
स्वर्गादप्यधिकं सर्वशोभनं सुमनोहरम् ।
आलोक्य भण्डदैत्येशः स्वर्गं सर्वं व्यनाशयत् ॥ ४५ ॥
सुधर्मानन्दनश्चाऽपि निन्ये तस्मिन् पुरोत्तमे ।
स्वर्गं चक्रे शोणपुरं सर्वसम्पत्समृद्धिमत् ॥ ४६ ॥
तत्र दैत्येश्वरः स्थित्वा स्वयं राज्यमशासत ।
दिक्पतीनपि दैतेयांश्चक्रे भण्डमहासुरः ॥ ४७ ॥
सृष्ट्वा तत्तत्समान्दैत्यांस्तेजोवीर्यपराक्रमैः ।
एवं सर्वं समाक्रान्तं भण्डदैत्येश्वरेण वै ॥ ४८ ॥
तदाऽतिदीप्ततेजस्वी भण्डो लोकानशासत ।
शोणिताऽऽख्यपुरस्याऽपि शून्यकं नाम कल्पयत् ॥ ४९ ॥
एवं तपोवीर्ययुतो भण्डो दैत्यपुरेश्वरः ।
ब्रह्माण्डं तद्विभिद्यैव ब्रह्माण्डानि समाक्रमत् ॥ ५० ॥
ब्रह्माण्डानां शतं पञ्च भण्डश्चक्रे स्वयं वशे ।
पञ्चोत्तरशताऽण्डानामधिपः समजायत ॥ ५१ ॥
सर्वत्राण्डेषु तस्याऽऽज्ञा जाताऽप्रतिहता तदा ।
एवं देवान्निराकृत्य समस्ताण्डान्यशासत ॥ ५२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये ललितामाहात्म्ये भण्ड-प्रतापो नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४०६० ॥

# अथ पञ्चाशत्तमोऽध्यायः ।

एवं श्रुत्वा हयग्रीवकथितं कुम्भसम्भवः ।
विस्मितस्तं पुनरपि पर्यपृच्छत भार्गवः ॥ १ ॥
हयग्रीव दयासिन्धो प्रोक्तमेतद्विचित्रितम् ।
एवंवीर्यो भण्डदैत्यः कस्मात्सम्भूतिमागतः ॥ २ ॥
सामर्थ्यं वा कथञ्चैव तपसा वा स्वभावतः ।
कथं देवान् समजयत् ब्रह्मादीन्नाजयत् कुतः ॥ ३ ॥
एतन्मे ब्रूहि तत्त्वेन श्रोतुमुत्कण्ठितं मनः ।
एवं पृष्टः कुम्भजेन प्राह तुष्टो हयाननः ॥ ४ ॥
शृणु कुम्भोद्भव कथां प्राचीनां भण्डसंश्रयाम् ।
यदा शिवस्य क्रोधेन कामो भस्मत्वमागतः ॥ ५ ॥
तदा तद्भसितं लेखगणेशो बालभावतः ।
पुञ्जीकृत्य तेन नराकृतिश्चक्रे ऽतिपेशलाम् ॥ ६ ॥
तां भस्मप्रकृतिं दृष्ट्वा चारुसर्वाङ्गशोभनाम् ।
प्रदर्शयामास गौर्यै गणेशो मातृनन्दनः ॥ ७ ॥
दृष्ट्वा साऽपि शिवं प्राह गणेशप्रीतिकाम्यया ।
जीवयैनं महाभाग गणेशप्रियपूरुषम् ॥ ८ ॥
क्रीडत्वनेन सहितो गणेशो मे प्रियः सुतः ।
पार्वत्या प्रहितः शम्भुर्भवितव्यस्य गौरवात् ॥ ९ ॥
दृष्ट्याऽमृतांशुवर्षिण्या निरीक्ष्य तमजीवयत् ।
स जीवितोऽतिसौन्दर्यवपुः कामांऽशसम्भवम् ॥ १० ॥
हरक्रोधसमायोगादसुरस्तामसोऽभवत् ।
गणेशस्य प्रियसखा तेनैव सह क्रीडति ॥ ११ ॥

तदन्तरे कदाचिद्वै दिक्पालास्तत्र संययुः ।
तान् दृष्ट्वाऽपृच्छदसुरो गणेशं क इमे इति ॥ १२ ॥
महर्द्धिमन्तः केनेमे प्राप्ता ईदृग्विधां श्रियम् ।
एवं पृष्टो गजमुखः प्राह तं प्रियमात्मनः ॥ १३ ॥
सखे शृणु ब्रवीम्येते दिक्पाला लोकपूजिताः ।
तपसा तोषयित्वेशं महादेवं दिगीश्वराः ॥ १४ ॥
इमां विभूतिं सम्प्राप्तास्तपसा तोषिते शिवे ।
दुर्लभं न हि किञ्चित् स्याद्यथा प्राप्ते सुरद्रुमे ॥ १५ ॥
श्रुत्वा विघ्नेश्वरवचस्तपस्येव मनो दधे ।
अनुज्ञातो गणेशेन स्वर्धुनीतीरसंश्रयः ॥ १६ ॥
तपश्चक्रेऽतिविपुलं दशवर्षसहस्रकम् ।
महादेवं समुद्दिश्य फलाहारो यताऽऽत्मवान् ॥ १७ ॥
अथ प्रीतो महादेवो वरदस्तस्य चाऽग्रतः ।
ब्रूहि वत्स तेऽभिमतं प्रीतो दातुं समागतः ॥ १८ ॥
एवं महादेववचो निशम्य सोऽसुरोऽवदत् ।
प्रणम्य देवमीशानमयाचत कृताञ्जलिः ॥ १९ ॥
देवाऽहं सर्वजगतां शास्ता सर्वजयी तथा ।
सृजामि दैत्यान् देवांश्च दैत्यान् लोकाननेकधा ॥ २० ॥
शस्त्राण्यस्त्राणि शास्त्राणि विद्या मायास्तथैव च ।
वशे भवन्तु मे देवा ब्रह्माद्या अपि नित्यशः ॥ २१ ॥
अभयं सर्वतो मेऽस्तु मृत्युर्मे माऽस्तु कुत्रचित् ।
इति श्रुत्वा तस्य वचः प्राह देवः पिनाकभृत् ॥ २२ ॥
नाऽर्हस्त्वमेवम्भूतानां वराणामिति शङ्करः ।
निगद्याऽन्तर्हितिमगादथ दैत्योऽपि दुःखितः ॥ २३ ॥
पुनस्तपश्चकारोग्रं दश अयुतवत्सरान् ।
धूमाऽऽहारोऽम्बरे संस्थः शीताऽऽतपसहस्तदा ॥ २४ ॥

ततः पुनर्महादेवः सन्निधिं प्राप्य चाऽब्रवत् ।
तपसा घोरसङ्काशान्निवर्तस्व महामते ॥ २५ ॥
त्रिलोकीशासको भूयाः सुराऽसुरजयी तथा ।
सृज मर्त्याऽसुरसुरान् लोकान् शास्त्रादिकान्यपि ॥ २६ ॥
देवमर्त्याऽसुरेभ्यस्ते भूयादभयमेव च ।
न ते वशे भविष्यन्ति ब्रह्माद्याश्चाऽमृतिर्न च ॥ २७ ॥
इति दत्त्वा वरं तस्मै शिवोऽन्तर्धानमागमत् ।
शिवेऽन्तर्धानमायाते दैत्यः पुनरचिन्तयत् ॥ २८ ॥
किं मे वरैरभिमतैरमरत्वमृते भवेत् ।
पुनस्तपश्चराम्येव यावन्मे वरदः शिवः ॥ २९ ॥
इति निश्चित्य भूयोऽपि तप उग्रं चचार सः ।
ऊर्ध्वपाद अधो मूर्धा निरुच्छ्वासो निरीहकः ॥ ३० ॥
तरोः स्कन्धे लम्बमानः प्रज्वाल्याऽग्निमधो भुवि ।
तज्ज्वालाप्लुष्टसर्वाङ्गः सन्नियम्येन्द्रियाण्यलम् ॥ ३१ ॥
विंशतिप्रयुतं तस्य वत्सराणां तपस्यतः ।
ययौ तदा तस्य मुनेरोमकूपेभ्य उद्गमत् ॥ ३२ ॥
धूमस्तेन च त्रैलोक्यं व्याप्तमासीत् समन्ततः ।
इन्द्राऽऽसनं प्रचलितं देवा मोहं समाययुः ॥ ३३ ॥
सन्तापः सर्वदेवानामभवद्हृदि साध्वसम् ।
भूश्चकम्पे समुद्राश्च वेलामत्यागमंस्तदा ॥ ३४ ॥
दिशः प्रजज्वलुर्नद्यः कालुष्यं सन्दधुस्ततः ।
देवा इन्द्रमुखास्त्रस्ताः प्रार्थयामासुरात्मजम् ॥ ३५ ॥
विधिर्विचार्य हरिणा ययौ देवं त्रिलोचनम् ।
मन्त्रयित्वा चिरं तत्र शिवं प्राह विधिस्तदा ॥ ३६ ॥
महादेवाऽसुराय त्वं वरं दातुं समर्हसि ।
अमरत्वमृते तस्य देहि सर्वं समीहितम् ॥ ३७ ॥

नो चेद्भस्मत्वमायान्ति लोकास्तस्य तपोऽग्निना ।
एवं विधिमुखैः शम्भुः प्रेरितस्तत्र संययौ ॥ ३८ ॥
दृष्ट्वा दैत्यं तपस्यन्तं क्षामाऽङ्गं धमनीततम् ।
एकाऽग्रचित्तं तपसा ज्वलन्तमिव पावकम् ॥ ३९ ॥
तपसा ते दैत्य तुष्टः प्राप्तोऽहं वरदः शिवः ।
ब्रूहि यत्ते स्त्राऽभिमतं प्राप्स्यस्यखिलमीहितम् ॥ ४० ॥
इतीरितः शिवेनाऽथ दृष्ट्वा देवं समागतम् ।
प्रणम्य दण्डवत् स्तुत्वा वाक्यं प्राञ्जलिरब्रवीत् ॥ ४१ ॥
देव पूर्वं त्वया दत्तं सर्वं ह्यमरतां विना ।
तन्मे भूयाद्विधात्रादीनपि जेष्यामि संयुगे ॥ ४२ ॥
ब्रह्माण्डभेदने शक्तिरपि चाऽस्तु महेश्वर ।
श्रुत्वैवमासुरं वाक्यमाचष्टे तं महेश्वरः ॥ ४३ ॥
शृणु मे भाषितं दैत्य देवाऽसुरनरैर्न ते ।
मृत्युर्भवेद्योनिजातान्मानसान्न च कुत्रचित् ॥ ४४ ॥
तरुभ्यः पर्वतेभ्यश्च मृगाः सर्पाश्च पक्षिणः ।
कृमिकीटपतङ्गाद्या यक्षविद्याध्रकिन्नराः ॥ ४५ ॥
पिशाचाः किंपुरुषाश्च राक्षसाश्च त्रिमूर्तयः ।
शस्त्राणि च तथाऽस्त्राणि प्रसिद्धानीह यानि वै ॥ ४६ ॥
नाऽस्ति ते मृत्युरेतेभ्यः सर्वथाऽसुर संशृणु ।
अन्यच्च सर्वं ते प्रोक्तं भविष्यति न संशयः ॥ ४७ ॥
इति दत्त्वा वरं तस्मै शिवोऽन्तर्धानमाययौ ।
अथ दैत्यो विमृशत न मे मृत्युः सुरादिभिः ॥ ४८ ॥
यदि तर्हि कुतो मृत्युर्जातोऽहं सर्वथाऽमरः ।
इति मत्वा कृतार्थं स्वं ययौ कैलासपर्वतम् ॥ ४९ ॥
गणेशेन स्वसुहृदा मिलित्वा प्राह चाऽखिलम् ।
अथाऽद्रिजां नमस्कृत्य गणेशेन युतोऽसुरः ॥ ५० ॥

समाचष्टे वरप्राप्तिं श्रुत्वा साऽप्यभिनन्दत ।
प्राहाऽसुरं गिरिसुता वत्स प्राप्तो वरो महान् ॥ ५१ ॥
देवेषु नाऽपराद्धव्यमन्यथा भीतिमाप्स्यसि ।
देवेद्विजप्रजाद्रोहान्नष्टा दैत्याश्च दानवाः ॥ ५२ ॥
दैत्यदानवसंसर्गं परित्यज सुदूरतः ।
सङ्गाद्बुद्धेः प्रणाशः स्याद्याहि पातालकोककम् ॥ ५३ ॥
स्वर्गादपि विशिष्टं तं धर्मतः परिपालय ।
तथेत्युक्त्वा प्रणम्याऽथ लोकं पातालमन्वगात् ॥ ५४ ॥
तत्र दैत्यैर्दानवैश्च पातालान्यन्वशासत ।
अथ तैर्दानवाऽधीशैर्भूयो भूयः प्रबोधितः ॥ ५५ ॥
त्रिलोकीं जेतुमारब्धो दैत्यसेनासमावृतः ।
तत्रोत्तरकुरुष्वासीद्युद्धं सुमहदद्भुतम् ॥ ५६ ॥
तस्य युद्धसमारम्भं दृष्ट्वा लोकपितामहः ।
निवारयत् सामवाक्यैर्न ते दैत्येश साम्प्रतम् ॥ ५७ ॥
योद्धुं ते करदा देवा भविष्यन्तीह सर्वथा ।
पातालानां भुतलस्य त्वं राजा भव सर्वतः ॥ ५८ ॥
सन्तु स्वर्गादिषु सुरा विरोधो माऽस्तु तेऽमरैः ।
श्रुत्वेत्थं ब्रह्मवचनं मन्त्रयित्वा सुरैस्तदा ॥ ५९ ॥
इन्द्राणीं नन्दनं रम्भामुखाः करमयाचत ।
श्रुत्वाऽयुक्तं वचस्तस्य दैत्यं क्रुद्धो ऽब्रवीद्विधिः ॥ ६० ॥
भण्डस्त्वमसि दुर्बुद्ध इत्युक्त्वाऽन्तरधीयत ।
अथ देवैः समेतास्ते भण्डाद्या दैत्यदानवाः ॥ ६१ ॥
युयुधुर्दारुणतरं कुरुष्वत्यन्तदुर्मदाः ।
जित्वा बबन्धुरिन्द्रादीन् योजयन् भारवाहने ॥ ६२ ॥
एवं जित्वा त्रिलोकीं स भण्डदैत्योऽतिदर्पितः ।
स्वपार्श्वाभ्यां समसृजद्विषङ्गञ्च विशुक्रकम् ॥ ६३ ॥

पुत्रपौत्रशतैर्युक्तो महैश्वर्यविराजितः ।
चक्रेऽण्डानां शतं पञ्च स्ववशे भण्डदानवः ॥ ६४ ॥
वीर्योद्रिक्तं भण्डदैत्यं दृष्ट्वा तं तारकाऽसुरः ।
सख्यत्वमाययौ तस्य तस्मै प्रीतश्च सोऽभवत् ॥ ६५ ॥
अष्टादशानामण्डानामाधिपत्यं समादिशत् ।
चतस्रः स्वाऽनुजाः कान्ताः श्रीरिवाऽत्यन्तरूपिणीः ॥६६॥
सम्मोहिनी सुन्दरी च चित्राङ्गी कुमुदोत्करा ।
इति तस्मै ददौ भार्या हेतवे तारकाऽसुरः ॥ ६७ ॥
उग्रकर्माऽग्रधन्वा च विद्युन्माली विभीषणः ।
इन्द्रशत्रुरमित्रघ्नो विजयो विश्वतापनः ॥ ६८ ॥
एते तस्याऽभवन् दैत्याः प्रियाः प्राज्ञाः सुमन्त्रिणः ।
तेभ्यो ददौ दिक्पतित्वं प्रसन्नो भण्डदानवः ॥ ६९ ॥
एवं वैभवसम्प्रात्या मत्तः कालेन सोऽभवत् ।
सृष्टिं स्थितिञ्च संहारं स्वयमेवाऽकरोत्तदा ॥ ७० ॥
दुर्मन्त्रिभिर्मन्त्रितोऽथ जेतुं लोकपितामहम् ।
सत्यलोकं ययौ दृप्तस्तत्र यावदयं गतः ॥ ७१ ॥
विज्ञाय लोकधाताऽपि सलोको दर्शनं गतः ।
वैकुण्ठेऽप्येवमभवत् कैलासमथ संययौ ॥ ७२ ॥
श्रुत्वा गणेशस्तं प्राप्तं प्रीत्या प्रमथसंवृतः ।
अगात्तं पूर्वसुहृदं मार्ग एव सुसङ्गतः ॥ ७३ ॥
दृष्ट्वा गणेशस्तं मत्तं भण्डं सन्त्यक्तसौहृदम् ।
रुरोध युक्तं दैत्येन्द्रैः प्रमथाऽनीकसंवृतः ॥ ७४ ॥
भण्डेनाऽथ समाज्ञप्तः प्राह दैत्यो विभीषणः ।
रे गजाऽऽस्य द्रुतं गत्वा ब्रूह्यात्मपितरं शिवम् ॥ ७५ ॥
दैत्येश्वरोऽत्र संयातो द्रुतं तं शरणीकुरु ।
नो चेद्युध्यस्व शौर्येण ततः प्राप्स्यसि तत्फलम् ॥ ७६ ॥

पलायनपरो मा भूर्यदि शूरोऽसि संयुगे ।
अथाऽपि मातरं ब्रूयाः शची त्वां समुपाऽऽश्रिता ॥ ७७ ॥
तां वाञ्छत्येष दैत्येशस्तत्समर्पय मा चिरम् ।
अन्यथा केशपाशेषु परामृष्टा तया सह ॥ ७८ ॥
दैत्यैर्हृता मत्समीपं मानहीना भविष्यसि ।
ब्रूहीत्थं गच्छ मूढेह मा मृत्युवशमन्वगाः ॥ ७९ ॥
श्रुत्वेत्थं दैत्यवचनं गणेशः क्रोधमूर्च्छितः ।
तलप्रहारेण शिरः पातयामास तत्क्षणात् ॥ ८० ॥
निजघ्नुः प्रमथाश्चाऽपि दैत्यांस्तस्य पुरःसरान् ।
अथाऽभवन्महद्युद्धं दैत्यप्रमथयोर्भृशम् ॥ ८१ ॥
निजघ्नुः सर्वतो दैत्यान् प्रमथा बलवत्तराः ।
तदन्तरे दैत्यगणैर्युद्धं श्रुत्वाऽथ पार्वती ॥ ८२ ॥
वात्सल्याद्रक्षितुं पुत्रं गणेशं तत्र संययौ ।
शक्तीनां कोटिभिर्युक्ता संयुगे समचेष्टत ॥ ८३ ॥
घोरं प्रमथदैत्यानां युद्धं तद्वीक्ष्य पार्वती ।
प्रमथान् हीयमानांस्तु ज्ञात्वा शक्तिगणाऽऽवृता ॥ ८४ ॥
युयोध दैत्यैः सा देवी मुहूर्तं तत उल्बणम् ।
युद्धमासीच्छक्तिगणैर्दैत्यानां प्रमथैः सह ॥ ८५ ॥
शक्तिभिः प्रमथैश्चैव बलवद्भिर्दृढं हताः ।
दैत्या न सेहुरार्तितां पलायनपराऽभवन् ॥ ८६ ॥
छिन्नाङ्गाश्छिन्नमूर्द्धानश्चूर्णीकृतकलेवराः ।
निहता भक्षिताश्चान्ये प्रमथैः शक्तिभिस्तथा ॥ ८७ ॥
एवं स्वसैन्यविध्वंसं दृष्ट्वा भण्डासुरस्तदा ।
योद्धुमभ्याययौ क्रुद्धो रथसंस्थोऽतिभीषणः ॥ ८८ ॥
रुरोध तं गणेशोऽपि भण्डं निर्भर्त्स्य वेगतः ।
गदाहस्तो विन्ध्य इव गङ्गां त्रिपथगां भुवि ॥ ८९ ॥

तयोरथाऽभवद्युद्धं भण्डदैत्यगणेशयोः ।
वज्रनिष्पेषणं घोरं विष्णुकैटभयोरिव ॥ ९० ॥
उभावपि रणश्लाघ्यावुभावपि मदोत्कटौ ।
युयुधातेऽतिसंरब्धौ वने गन्धद्विपाविव ॥ ९१ ॥
अथ क्रुद्धो गणपतिर्गदामुद्यम्य वेगतः ।
आक्षिपद्भण्डदैत्याय वज्रं शक्रो नगेष्विव ॥ ९२ ॥
तया तस्य रथं साऽश्वसूतध्वजपरिष्कृतम् ।
क्षणेन भस्मतां नीतं पुनः शीघ्रं गणेश्वरः ॥ ९३ ॥
तथैव ताडयामास गदया वज्रकल्पया ।
अथाऽऽहतोऽतिवेगेन कृत्तमूलद्रुमो यथा ॥ ९४ ॥
मूर्च्छया निपतद्भूमौ महोल्केवाऽतिसञ्ज्वरे ।
हा हेति चुक्रुशुर्दैत्यास्तुष्टाः प्रमथशक्तयः ॥ ९५ ॥
साधुशब्दैर्गणेशानं पूजयामासुरुच्चकैः ।
मूर्च्छामुक्तः क्षणेनैव भण्डः प्रोत्थाय सत्वरम् ॥ ९६ ॥
अङ्कुशेनाऽहनन्मूर्ध्नि बलेन बलिनां वरः ।
गजाऽऽस्य स्ताडितो मूर्ध्नि तीक्ष्णेन सृणिना तदा ॥ ९७ ॥
भिन्नकुम्भः पपातोर्व्यां शैलो वज्राऽऽहतो यथा ।
प्रमथाः शक्तिभिश्चाऽपि हा हेत्युच्चुक्रुशुर्भृशम् ॥ ९८ ॥
तदन्तरे भण्डदैत्यं जिघृक्षन्तं गणेश्वरम् ।
पार्वती स्तम्भयामास हुङ्कारेण रुषाऽन्विता ॥ ९९ ॥
दैत्यं बद्ध्वाऽथ पाशेन शूलेनाऽऽहन्तुमुद्यता ।
तावद्विधिः समागत्य प्रार्थयामास पार्वतीम् ॥ १०० ॥
देवि नाऽयं त्वया वध्यः शङ्करस्य वरान्ननु ।
युद्धान्निवर्तस्व ततो गच्छत्वेषोऽसुरो भुवम् ॥ १०१ ॥
इत्युक्ता पार्वती ज्ञात्वा वरं तस्य महत्तरम् ।
गच्छ दैत्याऽधम भुवं मुक्तोऽस्यद्य पुनर्न हि ॥ १०२ ॥

इदं स्थानं प्रवेशाऽर्हं मेरुशृङ्गं कदाऽपि ते ।
भूयात्प्रविष्टस्य शिरः शतधा नाऽस्ति संशयः ॥ १०३ ॥
एवं शप्त्वा शक्तिसङ्घैः प्रमथैरपि दानवान् ।
भण्डादीन् प्राक्षिपद्भूमौ वायुस्तालफलान् यथा ॥ १०४ ॥
एवं भण्डो जितो गौर्या विमना दैत्यसंवृतः ।
अभ्याययौ शून्यकं स्वं विषण्णो दीनमानसः ॥ १०५ ॥
एवं भण्डस्य वीर्यं ते प्रोक्तं तत्तपसा भृतम् ।
गौरीशापवशादेव ब्रह्माद्यास्त्वपराजिताः ॥ १०६ ॥
एवं भण्डासुरो लोकान् विजित्याऽसुरनायकः ।
बबाधे सुरलोकांश्च नगरेषु वृको यथा ॥ १०७ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे भण्डप्रतापो नाम पञ्चाशत्तमोऽध्यायः ॥ ४१६७ ॥

# अथैकपञ्चाशत्तमोऽध्यायः ।

शृणु कुम्भज तेनैवं निरस्ताः सर्वतोऽमराः ।
दुःखिताः काननेष्वद्रिदरीष्वन्तर्गुहासु च ॥ १ ॥
नदीकुञ्जेषु दैत्येशत्रस्ता दैत्यैरलक्षिताः ।
ऊषुर्दीर्घतमं कालं कचिद्दैत्यैर्विलक्षिताः ॥ २ ॥
आकृष्टास्ताडिताः सेवां कुर्युर्भृत्या यथा तथा ।
एवं वर्षसहस्राणामतीतं द्विसहस्रकम् ॥ ३ ॥
तदा क्वचित्तु देवेन्द्रो ददर्शाऽऽङ्गिरसं गुरुम् ।
प्रणम्य तं प्राह शक्रः बद्धाऽञ्जलिपुटस्तदा ॥ ४ ॥
गुरो मां पश्य शोचन्तं देवेशं त्वत्समाश्रयम् ।
चिराय परिदृष्टोऽसि शिष्ये मयि दयां कुरु ॥ ५ ॥
नाऽहं सोढुमितः शक्तः कष्टमेवंविधं विभो ।
पुरा विधिः प्रार्थितोऽपि मया भूयः स्वयं जगौ ॥ ६ ॥
नाऽधुनाऽस्य प्रतीकारे कालो देवपते शृणु ।
प्रतीक्ष कालं कालेन विना नो सिध्यतीहितम् ॥ ७ ॥
तस्याऽद्य वत्सरा वृत्ता असंख्येया युगात्मकाः ।
न तं कालं प्रपश्यामि लेशतोऽपि सुखावहम् ॥ ८ ॥
पश्य मां मलिनं दीनं क्षामाऽङ्गं सर्वतो भयम् ।
एष कुञ्जः कण्टकितः स्वर्गो नन्दनमेव च ॥ ९ ॥
सुधर्मा चाऽत्र मशका गन्धर्वाः स्वरमण्डलाः ।
वन्दिनः करटा एते शालूराः स्तुतिवाचनाः ॥ १० ॥
रम्भाद्याः खद्योतगणा हंसतूलं शिलातलम् ।
उपधानं गुल्मपादो मन्त्राऽऽह्वानं शिवाध्वनिः ॥ ११ ॥

परिषद्ध्वककङ्काद्याः पटवासो महीरजः ।
चामराः कण्टकितरुशाखा वात्याप्रवेपिताः ॥ १२ ॥
एवं समाचारयुतं पश्यंस्तेन द्रुतं मनः ।
नूनं भाग्यं ममैवैतदित्युक्त्वा मूर्च्छितोऽभवत् ॥ १३ ॥
तं दुःखमूर्च्छितं दृष्ट्वा गुरुः कारुण्यमागतः ।
समाश्वास्याऽमरपतिः प्रोवाचाऽऽङ्गिरसो वचः ॥ १४ ॥
शृणु देवर्षभ बुधा नाऽनुशोचन्ति कुत्रचित् ।
आपत्सु हर्षकलिताः सम्पत्सु समतां गताः ॥ १५ ॥
सज्जना विकृतिं नैव गच्छन्ति विशदाऽऽशयाः ।
शोकं जित्वा विमर्शेन सन्धैर्येण महाजनाः ॥ १६ ॥
प्रभवन्ति शुभायैव कालमात्रप्रतीक्षकाः ।
शृणु तेऽत्राऽभिधास्यामि व्यवसायं फलावहम् ॥ १७ ॥
तपसा तोष्य भूतेशं प्राप्तवान् सर्वतोऽभयम् ।
न योनिजैर्मानसैर्वा मृत्युस्तस्य शिवेरितः ॥ १८ ॥
द्वैविध्यमन्तरा लोके नाऽस्ति कश्चन कुत्राचित् ।
देवाद्यैः पुरुषैश्चाऽपि नाऽस्य मृत्युरुदीरितः ॥ १९ ॥
अतोऽमरगणैर्युक्तस्त्रिपुरां परमेश्वरीम् ।
प्रयाहि शरणं नाऽस्ति रक्षकोऽन्यः कथञ्चन ॥ २० ॥
इत्युक्त्वा मारुतं देवं दध्यौ देवगुरुस्तदा ।
ध्यातमात्रो जगत्प्राणः प्रणम्य समुपस्थितः ॥ २१ ॥
वाचस्पतिस्तमाहाऽथ शृणु मारुत मे वचः ।
त्वं सर्वदागतिः सर्वप्राणश्चाऽपि महाबलः ॥ २२ ॥
नय शक्रं हिमगिरेः शिखरं व्योममार्गतः ।
शीघ्रमन्यान् सुरान् सर्वान पावकप्रमुखानपि ॥ २३ ॥
ततस्ततो दैत्यगणैरानयाऽलक्षितो भृशम् ।
तत्र पौरुषयोगेन साध्यं सर्वसमीहितम् ॥ २४ ॥

ओमित्युक्त्वा निमेषेण देवान् सर्वान् समानयत् ।
समेता हिमवच्छृङ्गे शक्राद्याः सर्वतोऽमराः ॥ २५ ॥
अथ वायुं प्रेषयित्वा चाऽऽनिनाय गुणेश्वरान् ।
निश्चित्य भण्डदैत्यस्य विजयाय समीहितम् ॥ २६ ॥
त्रिपुरां परमेशानीं विना नेह गतिः क्वचित् ।
एवं विधिमुखा देवास्त्रिपुरां परमेश्वरीम् ॥ २७ ॥
दध्युः सर्वजगद्धात्रीं निगृहीताऽक्षमारुताः ।
एवं तेषामगाद्ध्याननिष्ठानां वत्सरं शतम् ॥ २८ ॥
अथ देवा मन्त्रयित्वा त्रिपुराप्रीतिहेतवे ।
महायागेन त्रिपुरामयजन् तन्त्रमार्गतः ॥ २९ ॥
समाप्तेऽथ महायागे मन्त्रद्रव्यसुसम्भृते ।
यत्र ब्रह्माऽभवद्ब्रह्मा आचार्यो गुरुरेव च ॥ ३० ॥
ऋत्विजः शिवविष्णवाद्या यागे तस्मिंस्तदाऽभवन् ।
प्राप्तेऽन्त्यदिवसे तस्मिंश्चिद्भावप्रविभाविते ॥ ३१ ॥
यागवह्नौ चिदाकारे महाकुण्डसमेधिते ।
अजयत् पूर्णयाऽऽहुत्या गुरुर्ध्यायन् पराम्बिकाम् ॥ ३२ ॥
तदा भक्त्या संस्तुवत्सु देवेषु त्रिपुराम्बिका ।
प्रादुरासीत् कुण्डमध्याच्चिदग्नेर्ज्वलतोऽन्तरात् ॥ ३३ ॥
पूर्णाऽऽहुत्यां हुतायां वै कुण्डे जज्वाल पावकः ।
योजनैकसमुच्छ्राया ज्वालाऽत्यन्तं व्यवर्धत ॥ ३४ ॥
तत्राऽभवन्महाशब्दः पर्वतस्येव भिद्यतः ।
शताऽशनिनिपातात्मा भिन्दंच्छ्रोत्राणि नाकिनाम् ॥ ३५ ॥
ततोऽमराणां चक्षूंषि मुष्णन् प्रौढेन तेजसा ।
सकृत् सौदामिनीकोटिसङ्घट्टसदृशच्छविः ॥ ३६ ॥
महाप्रकाश उदभूद्वह्निज्वालाऽन्तरे तदा ।
महता ध्वनिना तद्वत्तेजसा च बुधास्तदा ॥ ३७ ॥

बधिराऽन्धीकृताः सर्वे मूर्च्छिता आपतन् भुवि ।
विना गुरुं त्रिमूर्तिभ्यः पतिताः सर्व एव ते ॥ ३८ ॥
तत्तेजोमध्यतः प्रादुरासीच्छ्रीत्रिपुराऽम्बिका ।
तरुणाऽरुणपुञ्जाऽङ्गसम्प्रदायतनुच्छविः ॥ ३९ ॥
विद्युल्लतेव विद्योतत्तनूद्यत्तनुवल्लरी ।
विद्युल्लताविकसितपूर्णचन्द्राऽम्बुजाऽऽनना ॥ ४० ॥
कबरीतिमिरौघोद्यत्सिन्दूराऽरुणसुप्रभा ।
तारकाजालवद्व्योमकबरीरत्नभूषणा ॥ ४१ ॥
दीर्घवेणीभोगिवक्त्रनिर्यत्सीमन्तजिह्विका ।
सिन्दूराऽरुणलौहित्याऽऽक्षिप्तकेशनभोऽङ्गणा ॥ ४२ ॥
विपर्यस्ताऽर्धचन्द्राऽङ्कफाले राजद्विशेषिका ।
कुन्तलाऽलिगणाऽऽकीर्णविकसद्वदनाऽम्बुजा ॥ ४३ ॥
मुखसौन्दर्यसरसीनीलाऽम्बुजनिभेक्षणा ।
कन्दर्पकोटिजननमन्त्राऽऽकूतसमीक्षणा ॥ ४४ ॥
क्षीराऽब्धिकोटिलहरीसम्भवाऽपाङ्गसुन्दरा ।
चाम्पेयकलिकासम्पत्प्रपोषकसुनासिका ॥ ४५ ॥
कुरुविन्दाऽऽदर्शशोभाप्रोल्लसद्गण्डमण्डला ।
अपाङ्गसरिदुन्मज्जत्ताटङ्कमणिनीरजा ॥ ४६ ॥
ताटङ्काऽम्बुजसंस्थानमुक्ताऽऽवलिमरालिका ।
कर्णभूषाकान्तिचापकटाक्षशरसन्ततिः ॥ ४७ ॥
पक्कदाडिमबीजात्मदन्तलौहित्यदच्छदा ।
विकसद्रक्तकुमुदाऽऽन्तरकिञ्जल्कदच्छविः ॥ ४८ ॥
प्रवालदच्छदोदञ्चद्दन्तकुन्दसुकोरका ।
मन्दहसक्षीरनिधिप्रवालरदनच्छदा ॥ ४९ ॥
मुखमाणिक्यकमलवृन्ताऽऽभचिबुकोज्ज्वला ।
मणिग्रैवेयकाकल्पलसद्ग्रीवाऽब्जसुन्दरा ॥ ५० ॥

पाणिरत्नमृणालोद्यत्पद्मकोशस्तनद्वयी ।
माणिक्यदेहलतिकास्तनस्तवकशोभिनी ॥ ५१ ॥
मुखचन्द्रप्रभाभीतिनिलीनकुचकोकिका ।
मन्दस्मितसरित्पूरखेलत्कुचमरालिका ॥ ५२ ॥
तनुवल्लीशाखिकोद्यत्पाणिपल्लवलोहिता ।
करप्रवालाऽग्रजपाकोरकाऽङ्गुलिमण्डिता ॥ ५३ ॥
सृणिपाशधनुर्बाणैर्लसद्बाहुचतुष्टया ।
वलयाऽङ्गदरत्नोर्मिकूर्पासविलसद्भुजा ॥ ५४ ॥
मुखपद्ममृणालाऽऽभमुक्ताहारलतोज्ज्वला ।
रोमाऽऽलितनुनालोद्यत्कुचद्वन्द्वाऽब्जकुड्मला ॥ ५५ ॥
रोमाऽऽलिवल्लरीमूलनाभिनिम्नाऽऽलवालिनी ।
नाभिसरोन्नीतरोमलताशैवालवारिलिका ॥ ५६ ॥
कौसुम्भरत्नवसनसमाच्छन्ननितम्बिनी ।
ऊर्ध्वाऽङ्गधारणामात्रनिमित्तप्राप्तमध्यमा ॥ ५७ ॥
सूक्ष्माऽभ्राऽऽभांऽशुकाऽन्तस्थदृश्यतारकभूषणा ।
माणिक्यकदलीकाण्डपरिभाव्यूरुमण्डला ॥ ५८ ॥
पद्मरागनिषङ्गाऽऽभजङ्घायुगसुमण्डिता ।
कमठीपृष्ठविभ्रमसूचनप्रपदाऽन्विता ॥ ५९ ॥
मणिनूपुरसंराजत्किङ्किणीचारुसिञ्जिता ।
विकसत्पद्मसौभाग्यवदान्यपदपङ्कजा ॥ ६० ॥
पादाम्बुजप्रविलसन्मणिहंसकमण्डिता ।
नखचन्द्रसुधास्यन्दहृतसन्ततसन्तता ॥ ६१ ॥
मरालीमन्दगमनकुलाऽऽचार्यपदद्वयी ।
भक्तवाञ्छावितरणपदमन्दारपल्लवा ॥ ६२ ॥
एवमाविर्भवन्तीं तां दृष्ट्वा ब्रह्मादयस्तदा ।
दण्डवत् प्रणता भूत्वा जय देवीति तां जगुः ॥ ६३ ॥

तत्र वाचस्पतिर्नत्वा भूयः प्रोत्थाय तां पराम् ।
पश्यंस्तद्दर्शनोद्भूतहर्षवारिधिसम्प्लुतः ॥ ६४ ॥
उत्तंसितकरद्वन्द्वसम्पुटोद्यत्सरोरुहः ।
नेत्राऽम्बुजस्रवद्धर्षवारिपूरपरिप्लुतः ॥ ६५ ॥
अस्तौषीदतिसुप्रेमभरगद्गदमन्थरः ।
रचनाचातुरीमोदैर्मोदयंस्त्रिपुराम्बिकाम् ॥ ६६ ॥

तव विभवविलासं वर्णितुं मे न शक्ति-
यदिदमपि मयोक्तं तावकी नैव शक्तिः ।
न हि भवति ततो मे वाक्पतित्वस्य हानि-
र्यदि भवति तदा स्यात्त्वत्प्रसादस्य हानिः ॥ ६७ ॥

सुरगुरुरहमेवं वच्मि यत्तत्त्वमेव
त्वमहमिदमितीयत्सर्वमम्ब त्वमेव ।
तत इह न हि मे स्तो हानिलाभौ तरङ्गे
मधुरकटुरसौ वा क्षीरसिन्धोरिवाऽन्यौ ॥ ६८ ॥

यदिह विविधभेदं प्रेक्षते मूढदृष्टि-
र्मुकुरतलविराजच्चित्रवद्भासमानम् ।
यदिदमिह पुरस्तादर्शितं दिव्यरूपं
तदपि च कृपया नः पूर्ववन्माययैव ॥ ६९ ॥

विबुधसमुदयानां खं वरं मन्यमानो
जननि तव विलासैर्मोहितो मूढबुद्धिः ।
तव निरवधिशक्तिं वर्णितुं दृश्यभेदं
यतति विहततर्कैस्तैर्थिकस्त्वामजानन् ॥ ७० ॥

विविधवचनजालैरस्ति नास्तीति पक्षै-
र्विवदनपरमाणां याति कालो वृथैव ।
क्षणमपि जगदम्ब त्वत्कलां चिन्मयीं ये
निजहृदि विमृशन्तः संस्थितास्ते हि धन्याः ॥ ७१ ॥

विगतविषयतृष्णावासने स्वाऽन्तरङ्गे
विमलमुकुरतुल्ये निश्चले स्वात्मनैव ।
तव जननि कलां तां योगिनः प्रेक्षमाणाः
परमसुखपदस्थास्ते हि धन्या जयन्ति ॥ ७२ ॥
इति चिरतरकालं त्वत्स्वरूपं विमृश्याऽऽ
न्तरभुवि दृढभावाः स्युर्निसर्गस्वभावाः ।
तदनु बहिरशेषं त्वत्स्वरूपं मृशन्तः
त्वयि परमविलासास्ते हि योगीन्द्रपूज्याः ॥ ७३ ॥
अहमपि ललिते त्वत्पादपद्मस्य कश्चित्
परिचयमभिगम्याऽन्तः सदा सर्वतोऽपि ।
वचनविरचनानां चिन्तनानामपि त्वा
मणु किमपि विना नाऽवैमि तत्त्वां नतोऽस्मि ॥ ७४ ॥
इति स्तुत्वाऽमरगुरुः प्रणतो दण्डवद्भुवि ।
गुणभूता विधिमुखा अपि तुष्टुवुरम्बिकाम् ॥ ७५ ॥
जय जय जननि जगल्लयपालनसर्जनविभवे समाचितिरूपे ।
सर्वाऽऽभासनतनुरपि वितता संविदनुत्तरमात्रशरीरा ॥७६॥
नैपुण्यमेतद्दर्पणसदृशं बाह्यनिरोधेऽप्यतिचित्रं ते ।
विजयत्येतत्तव दुर्घटनाघटनाशक्तिर्महतीसत्ता ॥ ७७ ॥
स्वं रूपं तद्विततमपीश्वरि दुर्घटशक्त्या परिमितरूपम् ।
कृत्वा दर्शनदृश्यविभेदान् विविधान् सर्वान् परिभासयासि॥७८
एवं स्वीयं रूपमनेकं परिमितरूपा पश्यन्ती त्वम् ।
बन्धकं चित्परिमृश्याऽन्तर्यन्त्राद्भूयो भासि यथावत् ॥७९॥
स्वात्माऽऽदर्शे प्रविततलीलां भावयसीत्थं स्वातन्त्र्यात्त्वम् ।
दृष्ट्वा कल्पितमेतत्स्वीयं नन्दस्यनिशं देवि नमस्ते ॥८०॥
सन्ततलीलामिति यः कश्चन शक्त्या भिन्नस्तव जानीयात् ।
स च लोकानां त्वमिव महेश्वरि लीलाद्रष्टा नन्दति देवः ॥८१॥

गूढं रूपं तव सविलासं द्रष्टुं शक्ता न हि ये दीनाः ।
तेषामेतत्परमं रूपं प्रकटितमक्ष्णोः फलसंजननम् ॥८२॥
कुङ्कुमशोणं गुरुकुचनम्रं चन्द्रकलाऽऽढ्यं सुललितरूपम् ।
सृणिशरचापान् पाशं बिभ्रद्वयमिह भूयः प्रणमामस्तत ॥८३॥
स्तुत्वैवमपि ब्रह्माद्याः प्रणेमुः पादसन्निधौ ।
अथ तान् प्राह परमा वत्सा उत्तिष्ठत द्रुतम् ॥ ८४ ॥
एषाऽहं कृतसन्नाहा प्राप्ता शत्रुवधाय वः ।
किं वोऽभिलषितं भूयः प्रतीच्छध्वं गुणेश्वराः ॥ ८५ ॥
त्वमप्याङ्गिरस ब्रूहि वाञ्छितं किं ददामि ते ।
निशम्यैवं वचो देव्याः प्रोचुर्ब्रह्मादयस्ततः ॥ ८६ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये महात्म्यखण्डे ललिताऽऽविर्भावो नामैकपञ्चाशत्तमोऽध्यायः ॥ ४२५३ ॥

# अथ द्विपञ्चाशत्तमोऽध्यायः ।

शृणु कुम्भोद्भव मुने ब्रह्मादीनां वचस्ततः ।
प्राहुर्ब्रह्ममुखा देवीं भक्तिनम्रसुमूर्तयः ॥ १ ॥
भूय एवं महापत्सु जगतां रक्षणोद्यता ।
विधेयममराऽरीणां शत्रूणां प्रविहिंसनम् ॥ २ ॥
मातः शृणु कथं भण्डदैत्यो भूयस्त्वया हतः ।
नूनं त्रिलोचनेनाऽसौ सर्वतोऽमरतां गतः ॥ ३ ॥
कथं वाऽमरकार्यं स्यात् कथं चाऽसुरघातनम् ।
श्रुत्वैवं धातृमुख्यानां वचः सा प्राह शङ्करी ॥ ४ ॥
मा कृथाः पद्मयोने त्वं शङ्कामत्राऽसुराऽऽहतौ ।
माऽहं योनिसमुद्भूता मनसा वाऽपि कस्यचित् ॥ ५ ॥
अग्निकुण्डसमुद्भूता स्त्रीस्वरूपाऽस्म्यलौकिकी ।
अप्रसिद्धेन चाऽस्त्रेण निहन्म्येनं महासुरम् ॥ ६ ॥
श्रुत्वैवं ललितावाक्यं जहुश्चिन्तां गुणेश्वराः ।
अथोवाचाऽमरगुरुः पराशक्तिं कृताञ्जलिः ॥ ७ ॥
देवि त्वां सर्वजननीमेवरूपां महेश्वरीम् ।
पश्यन्तु शक्रप्रमुखा भूयासुस्तेन पाविताः ॥ ८ ॥
निशम्याऽऽङ्गिरसवचः प्राह सा त्रिपुरेश्वरी ।
शृणु जीवशक्रमुखा नैवं शक्तिमयीं तनुम् ॥ ९ ॥
ममैते द्रष्टुमप्यर्हा नाऽन्यैर्दृष्टमिदं वपुः ।
न हि साधारणः कश्चिदेवंरूपां प्रपश्यति ॥ १० ॥
यूयं मेऽस्यास्तनोर्भक्ताश्चैतद्ध्यानपराः सदा ।
अतो वो दर्शितं चैतन्नान्यैर्दृष्टं कदाचन ॥ ११ ॥
रूपान्तरं परिमितं तत् प्रपश्यतु वज्रभृत् ।
अथ भूयोऽपि बहुधा प्रार्थयामास तां गुरुः ॥ १२ ॥

प्रदर्शयैतच्छक्राय चेति सा गुरुमब्रवीत् ।
यदि मामीदृशीं शक्रः पश्येत्तच्छृणु वाक्यं ते ॥ १३ ॥
मां समाराधयतु स श्रीसूक्तविधिना ततः ।
दर्शयिष्यामि तस्मै स्वमिदं रूपं न संशयः ॥ १४ ॥
इत्युक्त्वा मूर्च्छितान् देवान् सुधादृष्ट्या प्रबोध्य सा ।
अन्तर्धानं ययौ तत्र ब्रह्मादीनां प्रपश्यताम् ॥ १५ ॥
अथोत्थिताः शक्रमुखा देवाः सर्वे बृहस्पतेः ।
श्रुत्वा श्रीत्रिपुरादेव्या आविर्भावं ततो वृषा ॥ १६ ॥
देवैः समेतो गुरुणा विज्ञातोपासनक्रमः ।
लक्ष्मीसूक्तविधानेन भक्तिश्रद्धाऽतिनिर्भरः ॥ १७ ॥
आराधयामास परां त्रिपुरां परमेश्वरीम् ।
एवं तस्याऽऽराधयतो मासाः षट् पञ्च चाऽत्ययुः ॥ १८ ॥
तदन्तरे दैत्यगुरुर्ज्ञात्वाऽमरविचेष्टितम् ।
भण्डासुराय तद्वृत्तं ज्ञापयामास सर्वशः ॥ १९ ॥
शृणु दैत्यपते शत्रुः सुरेशो हिमवद्गिरौ ।
साम्प्रतं परमां शक्तिमुपातिष्ठति भक्तितः ॥ २० ॥
सा प्रसन्ना क्षणेनैव त्वां सपुत्रं सबान्धवम् ।
ध्वंसयिष्यति दावाग्निस्तृणदारुचयं यथा ॥ २१ ॥
यतस्व तावदेव त्वं यावन्नाशं न यास्यसि ।
नाऽत्रोपास्यो दृश्यतेऽन्यः साम्नो बलवदाश्रिते ॥ २२ ॥
दिवं भुवं समर्प्याऽऽशु सधनं सपरिच्छदम् ।
इन्द्राय पातालमात्रराज्यस्तां जगदीश्वरीम् ॥ २३ ॥
प्रयाहि शरणं देवीमन्यथा नाशमेष्यसि ।
इत्युक्त्वा पूजितस्तेन जगामाऽभिमतां गतिम् ॥ २४ ॥
अथ भण्डासुरो दैत्यो मन्त्रिभिर्मन्त्रशिक्षणैः ।
मन्त्रयामास दैत्योऽसौ सेवितः शून्यके पुरे ॥ २५ ॥
राज्ञाऽऽज्ञप्ता मन्त्रिणस्ते प्रोचुः स्वस्वमताऽनुगम् ।
कश्चित् साम भेदमन्यः परो दानमुवाच ह ॥ २६ ॥

दण्डमाहुस्तथा केचिदेवं व्याकुलिता सभा ।
तदन्तरे विशुक्रस्य पुत्रः शुक्रसमो मतौ ॥ २७ ॥
श्रुतवर्मेति विख्यातः प्राह नत्वा सुरेश्वरम् ।
शृणु राजन्नर्थशास्त्रमर्यादासहितं वचः ॥ २८ ॥
बाह्यदृष्टिर्दोषवती निसर्गेणैव चञ्चला ।
दृष्ट्या बुद्ध्याख्यया सत्त्वरूपया विमृशेत् कृतिम् ॥ २९ ॥
अविमृश्यकरो वह्नौ पतङ्ग इव नश्यति ।
सुविमृश्यकरो यस्तु तं सम्पत् प्रवृणोत्यलम् ॥ ३० ॥
मन्त्री वृथाऽभिनिवेशः स्फुटदृष्टिर्दृतग्रहः ।
राजाऽभिमतवक्ता च सततं स्वार्थतत्परः ॥ ३१ ॥
नाशयेद्राज्यसहितं राजानं नाऽत्र संशयः ।
यथा नौरासनच्छिद्रा सपान्थं नाविकं जले ॥ ३२ ॥
तस्माद्दुर्मन्त्रिणस्त्याज्या राज्ञा राज्यं बुभूषता ।
शृण्वहं तेऽभिधास्यामि कर्तव्याऽनन्तरक्रियाम् ॥ ३३ ॥
महाराज त्वया देवात्तपसा तोषितात् पुरा ।
अप्राप्तमभयं स्त्रीभ्यो मत्वाऽल्पमिति ते मुधा ॥ ३४ ॥
तदत्र न हि विस्रम्भः पुरा महिषदानवः ।
राज्यं त्रिभुवने प्राप्य स्त्रिया विनिहतो बली ॥ ३५ ॥
पुरा शुम्भनिशुम्भौ च बलिनावतिविक्रमौ ।
हतौ युद्धे चण्डिकया सबलाविति नः श्रुतम् ॥ ३६ ॥
जये लिङ्गं न हेतुः स्यान्निमित्तं बुद्धिविक्रमौ ।
अन्यच्च तेऽभिधास्यामि चिरमेतद्धि संस्थितम् ॥ ३७ ॥
दैत्यदानवरक्षःसु यो यः शुभतरो ह्यभूत् ।
तं तमुद्धरते विष्णुर्मार्गस्थमिव कण्टकम् ॥ ३८ ॥
तं नः श्रुतं तेन दैत्यरिपुणा हरिणा खलु ।
तोषिता परमाशक्तिराविर्भूता वधाय ते ॥ ३९ ॥
होमाऽग्निकुण्डाद्यद्योनिमनोभ्यां न च साऽभवत् ।

अमानसा योनिजेभ्यो नाऽमरत्वं त्वया हृतम् ॥ ४० ॥
आचार्यो भगवान् शुक्रः सर्वबुद्धिमतां वरः ।
स यदाह न चाऽल्पं तद्विद्धि दैत्यगणेश्वरः ॥ ४१ ॥
तस्माद्गुरूक्तमेवेह युक्तं मे प्रतिभासते ।
मनीषिणा सर्वयत्नैर्निरस्यं कालजं भयम् ॥ ४२ ॥
अभये विक्रमो वर्यः शान्तिरेव भयाऽऽगमे ।
सर्वथा मूलनाशो हि शत्त्याऽपोह्यः प्रजानता ॥ ४३ ॥
कृत्ते मूले फलाशा का मूलगोपे फलोदयः ।
अत्र मेऽभिमतं राजन् शृणु बुद्ध्या विचारितम् ॥ ४४ ॥
गुरूक्तरीत्या संशान्ति सम्पाद्य प्रकृते पुनः ।
तपसा पूर्ववद्देवान् शेपं भयमपोह्य च ॥ ४५ ॥
ततो भूयस्त्रिजगतीं वशे कुरु सुविक्रमः ।
इति तेऽभिहितो मन्त्रो नाऽतः क्षेमं भवेत् क्वचित् ॥४६॥
विमृश्य यदभीष्टं ते तदाचर न ते चिरम् ।
श्रुतवर्मवचः श्रुत्वा भण्डो दैत्यपतिर्वचः ॥ ४७ ॥
प्राह तं दूषयन्नेव पक्षं दैत्यसभागतः ।
मर्तुकामस्याऽगदवन्न तत्तस्य ह्यरोचत ॥ ४८ ॥
तदन्तरे मदोन्मत्तो दैत्यः प्रोवाच भूपतिम् ।
दैत्येश्वर मया प्रोक्तं शृण्वत्राऽतिसुखावहम् ॥ ४९ ॥
न प्रवेश्या मन्त्रगोष्ठ्यां बालाः कातरतां गताः ।
एष बालस्तव भुजबलं नो वेत्ति किञ्चन ॥ ५० ॥
भीरोर्विप्रस्योशनसो वाक्याददितरामयम् ।
राज्ञां युद्धप्रसङ्गेषु का विप्रस्य भवेन्मतिः ॥ ५१ ॥
विप्रा वैतानधिषणा वेदविद्याविचक्षणाः ।
निमन्त्रणविधानज्ञास्तेषां युद्धेषु का गतिः ॥ ५२ ॥
स्वधीते स्तीक्ष्णधाराज्ञाः शूराः कुशसमित्स्तृतौ ।
न खड्गधारां जानन्ति न शूराः शरसंस्तृतौ ॥ ५३ ॥

हन्त विप्रैरपि यदि युद्धं मन्त्रेण जीयते ।
ग्रामसिंहविभीषितैस्तदेभा मूत्रमुत्सृजुः ॥ ५४ ॥
यदि विप्रा युद्धकृत्यमपि जानीयुरुद्धतम् ।
तर्हि मत्तेभकुम्भस्य विपाटो जम्बुकैः कृतः ॥ ५५ ॥
उत्तिष्ठैष क्षणो राजन्न विश्रान्तिं समर्हति ।
योषिद्वा पुरुषो वा नोपेक्ष्यः शत्रुतां गतः ॥ ५६ ॥
हन्ताऽद्य योषिद्दैत्येन्द्र मेरून्मूलनविक्रमम् ।
विजेष्यति प्रतापाऽर्कसन्तापितजगत्त्रयम् ॥ ५७ ॥
तदा नीलोत्पलदलैर्निर्भिद्येत महीधरः ।
कुशाग्रैरपि विद्धः स्याल्लोहशैलो निरन्तरः ॥ ५८ ॥
अथ वा त्वमिहैवाऽऽस्व कामभोगपरः सुखम् ।
मामाऽऽज्ञापय ते भृत्यं गत्वाऽहं तान्निमेषतः ॥५९॥
ब्रह्मादींस्तां च बद्ध्वा वा हत्वा वोपहरामि ते ।
श्रुत्वैवं दैत्यवचनं प्रहृष्टो भण्डदानवः ॥ ६० ॥
प्रहस्य श्रुतवर्माणं प्राह कालवशं गतः ।
वत्स किं युद्धवार्ताभिरेव भीतोऽसि वै मुधा ॥ ६१ ॥
नैवमस्मत्कुले कश्चिज्जातो भविताऽपि वा ।
यः स्त्रियो युद्धवार्ताभिरेव भीतो नपुंसकः ॥ ६२ ॥
बालोऽसि गच्छ कान्ताभिश्चाटुभाषणमर्हसि ।
धिङ्मां यस्त्वादृशं चक्रे मन्त्रिणं मन्त्रनाशकम् ॥ ६३ ॥
धीराणामपि धैर्याऽद्रिवज्रवाक्कौशलं खलम् ।
इत्युक्त्वा प्रोत्थितः खड्गहस्तो देवान् विहिंसितुम् ॥६४॥
कोटिकोट्यसुरैर्युक्तः शूरैश्चित्राऽऽयुधैर्ययौ ।
यत्र शक्रमुखा देवास्त्रिपुरां समुपस्थिताः ॥ ६५ ॥
आगतं भण्डदैत्येशं श्रुत्वा शक्रमुखाः सुराः ।
अत्यन्तभीता देवेशीमुच्चैः पाहीति संजगुः ॥ ६६ ॥
भीतान् विदित्वा त्रिपुरा प्राह नित्यां चतुर्दशीम् ।

गच्छ ज्वालामालिनि त्वं रक्ष भीतान् सुरान् द्रुतम् ॥६७॥
आज्ञप्तैवं यतो दैत्या आयान्त्यमरहिंसकाः ।
ज्वालया तान् रुरोधोच्चैर्ज्वालामालिनिका शिवा ॥ ६८ ॥
दृष्ट्वा ज्वालावृतं देशं मत्वा दावाग्निसम्प्लुतान् ।
हतान् देवान् प्रहर्षेण भण्डदैत्यः पुनर्ययौ ॥ ६९ ॥
देवाश्च दैत्यसेनानां श्रुत्वा कोलाहलं भृशम् ।
वित्रस्ता मर्तुकामास्ते छित्त्वाऽङ्गानि समन्ततः ॥ ७० ॥
अग्निकुण्डे देवतायाः प्रीतये जुहवुः पृथक् ।
अशेषाऽङ्गानि हुत्वैवं पूर्णाहुतितया तनुम् ॥ ७१ ॥
विशिष्टां होतुकामास्ते पेठुर्मन्त्रानुपांशुतः ।
तदन्तरे सा त्रिपुरा भक्तरक्षापरायणा ॥ ७२ ॥
कुण्डमध्यादाविरासीत्तडित्कोटिसमप्रभा ।
जातश्चटचटाशब्दः कुण्डमध्यान्महोन्नतः ॥ ७३ ॥
ज्वाला व्यवर्धताऽतीव वह्नेस्ते ददृशुः सुराः ।
ज्वालामध्ये महादेवीं सर्वसौन्दर्यसन्ततिम् ॥ ७४ ॥
हृष्टा जय जयेत्युच्चैरवोचुर्दण्डवन्नताः ।
अथोत्थाय शक्रमुखास्तुष्टुवुस्तां महेश्वरीम् ॥ ७५ ॥
आजग्मुर्ब्रह्मविष्ण्वाद्या मुनयश्चर्षयस्तथा ।
पुष्पवृष्टिरभूद्व्योम्नो नेदुर्दुन्दुभयोऽपि च ॥ ७६ ॥
ववुर्वाताः सुखस्पर्शाः सुगन्धा मृदुसञ्चराः ।
ब्रह्माद्याः सर्वतस्तस्याः पूजां चक्रुर्यथाविधि ॥ ७७ ॥
महोपचारमाल्याद्यैरुपहारैर्विशेषतः ।
विविधैर्भक्ष्यभोज्याद्यैरासवैः पिशितैरपि ॥ ७८ ॥
एवं सम्पूज्य देवेशीं तोषयामासुरुच्चकैः ।
गायनैर्नृत्यवाद्याद्यैरुत्सवैरपि भूरिशः ॥ ७९ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे त्रिपुरा-
ऽऽविर्भावो नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ४३३२ ॥

# अथ त्रिपञ्चाशत्तमोऽध्यायः ।

अथ शक्रमुखा देवा दृष्ट्वा तां परमेश्वरीम् ।
विधातृमुख्यानूचुस्ते देव्याः संस्थानहेतवे ॥ १ ॥
श्रुत्वाऽमरवचो ब्रह्ममुखास्तां जगदीश्वरीम् ।
प्रणम्य प्रार्थयामासुर्यत्तच्छृणु घटोद्भव ॥ २ ॥
परमेश्वरि शक्राद्यैस्तव संस्थानमीहितम् ।
अस्यां जगत्यां यन्नित्यं पश्यामस्त्वां महेश्वरीम् ॥ ३ ॥
वयं गुणेश्वरा नित्यं त्वत्कृपाऽऽत्तमहित्वतः ।
प्राप्य त्वदीयं ते लोकं पश्यामस्त्वत्पदाम्बुजम् ॥ ४ ॥
एते शक्रादयो देवा नियत्या नियतास्तव ।
ब्रह्माण्डभेदं नाऽर्हन्ति तत्त्वां द्रष्टुमभीप्सवः ॥ ५ ॥
तदत्र लोकं निर्माय निवासं कर्तुमर्हसि ।
प्रार्थितेत्थं ब्रह्ममुखैः त्रिपुराम्बा महेश्वरी ॥ ६ ॥
मेरुशृङ्गे विश्वकर्मनिर्मिते नगरे शुभे ।
अवसत् सपरीवारा यथा लोके स्वके तथा ॥ ७ ॥
अथाऽर्थिता निजाऽर्धांशविभागपरिकल्पितम् ।
कामेश्वरं पतिं चक्रे समूढाऽभवदम्बिका ॥ ८ ॥
इत्थं हयाऽऽस्यगदितं निशम्य घटसम्भवः ।
पप्रच्छ विभवश्रुत्यां परायां जातकौतुकः ॥ ९ ॥
हयग्रीव दयासिन्धो कुत्र संस्थं हि तत्पुरम् ।
कीदृशं किं प्रमाणञ्च यस्मिन् वसति सा परा ॥ १० ॥
इन्द्रादीनामप्रवेश्यं विश्वशिल्पिः कथं नु तम् ।
ज्ञातवान्नाम किं तस्य संस्थानञ्चाऽपि कीदृशम् ॥ ११ ॥

अथाऽपि शक्रप्रमुखैः श्रीसूक्तविधिना ननु ।
आराधिता सा त्रिपुरा प्रसन्नाऽभवदम्बिका ॥ १२ ॥
विधानं कीदृशं तस्य सूक्तस्याऽपि कथंविधम् ।
किं माहात्म्यं भवेत् सूक्तमेतन्मे वक्तुमर्हसि ॥ १३ ॥
भक्तस्य तव शिष्यस्य कृपां कुरु हयानन ।
इत्थं पर्यनुयुक्तः स हयाऽऽस्यो मुनिसत्तमः ॥ १४ ॥
मत्वा योग्यं हि तच्छ्रुत्वा निजगाद स हर्षितः ।
शृणु कुम्भज वक्ष्यामि भक्तिश्रद्धायुतो ह्यसि ॥ १५ ॥
नैतदश्रद्दधानाय चाऽभक्ताय शठाय च ।
वक्तुमर्हं सर्वथैव धन्योऽसि त्वं महीतले ॥ १६ ॥
यत्कथाश्रवणोत्साह ईदृशस्तव दृश्यते ।
एतस्य कारणं वेद्मि नैतदल्पफलं मुने ॥ १७ ॥
गुणमूर्तिषु सर्वेषां भक्तिः साधारणी भवेत् ।
त्रिपुरापादभक्तिस्तु दुर्लभा सर्वतो भवेत् ॥ १८ ॥
यत्र स्यात् त्रिपुराभक्तिस्तज्जन्म चरमं भवेत् ।
शिवविष्ण्वादिभक्तिस्तु द्वारमत्र प्रकीर्तितम् ॥ १९ ॥
क्रमेणाऽऽराध्य विष्ण्वादीन् प्राप्य श्रीपादसेवनम् ।
मुच्यते सर्वथा जन्तुर्नान्यथा कल्पकोटिभिः ॥ २० ॥
अत्रोपपत्तिं वक्ष्यामि संशयस्ते भवेन्न हि ।
लोके साम्राज्ययुक्तस्य येऽनुगास्तारतम्यतः ॥ २१ ॥
मुख्या मध्यास्तथा हीनास्ते तुष्टाः स्वपदं प्रति ।
अनिरोधं स्वोपरिस्थप्राप्तौ मार्गं दिशन्ति च ॥ २२ ॥
यथाऽऽदौ द्वारिकस्तुष्टो द्वारेष्वप्रतिबन्धनम् ।
प्राङ्गणेशप्राप्तिमाप दिशत्येव घटोद्भव ॥ २३ ॥
ब्रह्माद्या गुणसम्भूतास्तत्समाराधका इति ।
न सन्देहस्तव भवेत् सुप्रसिद्धतयैव च ॥ २४ ॥

वस्त्वद्वैतेऽपि लौकिक्या दृष्ट्या तान्नियतः स्फुटम् ।
मुख्यगौणप्रभेदश्च यथा देहेषु वै शिरः ॥ २५ ॥
नाऽत्राऽऽश्वासो दुष्कृतिनामन्धानाञ्च प्रपश्यताम् ।
ये च पादभवा देवाः सदा सेवनतत्पराः ॥ २६ ॥
त्वं महाभाग्यवान् ब्रह्मन् प्राप्तो यच्छ्रीपरारतिम् ।
एतत् सङ्गस्य माहात्म्यमहो भाग्यमहो तपः ॥ २७ ॥
शृणु ब्रह्मंस्तव परापादभक्तिप्रयोजकम् ।
यत्ते प्रिया सती लोपामुद्राऽऽख्या राजकन्यका ॥ २८ ॥
पुरा सा पितृगेहस्था प्राप भक्तिं परापदे ।
तद्धेतुं ते प्रवक्ष्यामि न तज्जानाति कश्चन ॥ २९ ॥
त्रिपुरामुख्यशक्तिस्तु भगमालिनिकाऽभिधा ।
तत्सेवनपरो राजा सर्वदा सर्वभावतः ॥ ३० ॥
बाल्यादियं शुद्धचित्ता पितृसेवापरायणा ।
पितुर्दृष्ट्वोपासनायाः क्रमं देव्या यथाक्रमम् ॥ ३१ ॥
राज्यकर्म करे तस्मिंस्तां समाराधयत्यसौ ।
एवं चिराऽऽराधनेन भक्त्या भावनयाऽपि च ॥ ३२ ॥
तुतोष सा भगवती वरेण समच्छन्दयत् ।
वव्रे चाऽसौ सर्वजगत्पूज्यायाः पादसेवनम् ॥ ३३ ॥
प्रसन्ना साऽपि सद्विद्यां त्रैपुरीं समलक्षयत् ।
लक्षिता चाऽपि तां विद्यां वाक्समुद्रपरिप्लुताम् ॥ ३४ ॥
समुद्धरद्रत्नमिव ततस्तस्य प्रसादनात् ।
विद्या ऋषित्वं सम्प्राप्ता तन्नाम्ना सा स्फुटङ्गता ॥ ३५ ॥
तस्याः सङ्गप्रभावेन तव भक्तिसमुद्गमः ।
इति श्रुत्वा कुम्भभवः पत्न्या विभवविस्तरम् ॥ ३६ ॥
प्रसन्नः पूजयामास पत्नीं श्रीपादतत्पराम् ।
अथाऽवदद्धयाऽऽस्योऽपि प्रसन्नः कुम्भजन्मने ॥ ३७ ॥

शृणु ते सम्प्रवक्ष्यामि कलशीसुत संयतः ।
श्रीसूक्तस्य विधानं यत्पृष्टं परमपावनम् ॥ ३८ ॥
न वक्तव्यमभक्ताय नाऽन्यदेवपराय च ।
विद्यैवैतद्गोपितव्यं सर्वत्राऽतिसुगोपितम् ॥ ३९ ॥
श्रीसूक्तं षोडशर्चं तदादि वेदसमुद्भवम् ।
पुरा श्रिया सुदृष्टं तद्वेदाऽब्धेः सम्यगुद्धृतम् ॥ ४० ॥
तेनाऽऽराध्य परां शक्तिं त्रिपुरां सुविधानतः ।
सम्प्राप्ता लोकमातृत्वं सर्वपूज्यत्वमागता ॥ ४१ ॥
आराधिता वत्सराणामर्बुदान्येकविंशतिः ।
प्रसन्ना छन्दयामास वरेण त्रिपुरा परा ॥ ४२ ॥
तया वृतश्च सायुज्यं ततः प्राह पराम्बिका ।
वत्से त्वया विना विष्णुरप्रभुः परिपालने ॥ ४३ ॥
अपालितं तेन चैतद्विशीर्येत निमेषतः ।
ततो मे नियतेर्भङ्ग एव नाऽर्हसि सम्प्रति ॥ ४४ ॥
तत् साम्प्रतं दिशाम्येवं त्वदाख्यां सर्वदाऽप्यहम् ।
धारयामि स्वरूपञ्च तत्ते वक्ष्यामि श्रूयताम् ॥ ४५ ॥
श्रीविद्येत्यहमाख्याता श्रीपुरं मे पुरं भवेत् ।
श्रीचक्रं मे भवेच्चक्रं श्रीक्रमः स्यान्मम क्रमः ॥ ४६ ॥
श्रीसूक्तमेतद्भूयान्मे विद्या श्रीषोडशी भवेत् ।
महालक्ष्मीत्यहं ख्याता त्वत्तादात्म्येन संस्थिता ॥ ४७ ॥
त्वं चतुर्धा मत्समीपे पूजां प्राप्स्यसि संस्थिता ।
यद्यत्तव प्रियं लोके तन्ममाऽपि प्रियं भवेत् ॥ ४८ ॥
पूज्यसे भार्गवे वारे भक्तैस्त्वं सुविधानतः ।
तत्राऽहमपि पूज्या स्यां भक्तैरपि विशेषतः ॥ ४९ ॥
तत्र सूक्तभवैर्मन्त्रैः पूजिता ह्युपचारकैः ।
हुताऽपि विविधैर्द्रव्यैः प्रसन्ना वाञ्छिताऽर्थदा ॥ ५० ॥

अभिषिक्ता च सलिलैर्दुग्धाद्यैः फलजैरसैः ।
सर्वकामप्रदा तस्य यन्त्रे मूर्त्यादिकेऽपि वा ॥ ५१ ॥
नित्ये नैमित्तिके काम्ये पूजनेऽन्यत्र चाऽपि मे ।
लक्ष्मीसूक्तं षोडशर्चं देव्याः स्नानविधौ पठेत् ॥ ५२ ॥
सकृदावर्तनाल्लक्ष्मीः सदा तस्य गृहे वसेत् ।
पूजाऽशक्तौ केवलं वा सूक्तन्ते यः पठेत् सदा ॥ ५३ ॥
तस्याऽखिलं कृतं पूर्णं भवेत्तुष्टा भवाम्यहम् ।
विद्याऽपि त्वत्समायोगाद्भविष्यति मम प्रिया ॥ ५४ ॥
अहं विद्यात्मिका यत्तद्बीजं ते सर्वशोभनम् ।
पूर्णा तेन समादिष्टा महाश्रीषोडशाक्षरी ॥ ५५ ॥
उपचारेषु पूजाया मन्त्रान् सूक्तभवान् पठेत् ।
सा पूजा स्यान्महापूजा प्रसन्नाऽहं ततो द्रुतम् ॥ ५६ ॥
सूक्तेऽर्थरूपा गुप्ताऽहं मद्बीजञ्चाऽपि गोपितम् ।
पूर्णरूपा प्रार्थिताऽहं ऋषिभिः पावकात् पितुः ॥ ५७ ॥
नाऽन्यत् प्रियतरं लोके त्वत्सूक्ताद्भवति क्वचित् ।
त्वमहं देव्यहं त्वञ्च नावयोरन्तरं भवेत् ॥ ५८ ॥
ईक्षते योऽन्तरं तस्य भवेयुः परमापदः ।
इति दत्त्वा वरं तस्यै रमायै त्रिपुरा परा ॥ ५९ ॥
जगाम व्योमतां सद्यः प्रोक्तमेतद्घटोद्भव ।
श्रीसूक्तस्य महित्वं तेनैतद्ब्रूयाः कथञ्चन ॥ ६० ॥
अभक्तेषु शठेष्वन्तःश्रद्धाविरहितेषु च ।
अथ वक्ष्ये श्रीपुरस्य वृत्तं लोकोत्तरं शृणु ॥ ६१ ॥
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ।
यदा सा परमा देवी प्रार्थिता विधिमुख्यकैः ॥ ६२ ॥
शक्रादीनां दर्शनार्थं स्थितिं कुर्वीति कुम्भज ।
अङ्गीचकार संस्थानं लीलाविग्रहधारिणी ॥ ६३ ॥

ततस्त्वष्टारमाहूय मेरुशृङ्गे महोन्नते ।
आज्ञापयद्विधिर्देव्याः श्रीपुरस्य विनिर्मितौ ॥ ६४ ॥
विश्वकर्मा तथाऽऽज्ञप्तः प्रणम्य प्रपितामहम् ।
भगवन्न मया ज्ञातं तत्पुरं कुत्र संस्थितम् ॥ ६५ ॥
किं प्रमाणं किमाकारं किम्मयं किंविधं स्थितम् ।
एतन्मे शंस भगवन् विधास्येऽहं निशम्य तत् ॥ ६६ ॥
अथ प्राह जगत्स्रष्टा शृणु विश्वकृते ब्रुवे ।
श्रीपुरस्य प्रमाणञ्च संस्थानं प्रकृतिं तथा ॥ ६७ ॥
रूपञ्चाऽपि स्फुटतरं सावधानमनाः शृणु ।
यच्छ्रुत्वा त्रिपुरापादभक्तिमासादयेच्छुभाम् ॥ ६८ ॥
कनकाद्रिः सुमेर्वाख्यो जगच्चित्रकलेवरः ।
तस्य मध्ये महाशृङ्गो यश्चतुःशतयोजनः ६९ ॥
तत्र श्रीत्रिपुरादेव्याः पुरं कुरु जगत्कृते ।
श्रुत्वा मया यथाप्रोक्तं कर्तव्यं सुविधानतः ॥ ७० ॥
मनोहरं चारुतरं वप्रभेदसुशोभितम् ।
यथा जगत्प्रतिकृतिस्तन्मे निगदतः शृणु ॥ ७१ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे लक्ष्मीसूक्तमहिमोक्तिस्त्रिपञ्चाशत्तमोऽध्यायः ॥ ४४०३ ॥

# अथ चतुःपञ्चाशत्तमोऽध्यायः ।

अनेककोटिसङ्ख्यानां ब्रह्माण्डानां बहिःस्थितः ।
ऊर्ध्वतोऽनन्तसङ्ख्याकः सुधासिन्धुर्जगत्कृते ॥ १ ॥
सुमेरुसदृशोन्नम्रनृत्यद्वीचितरङ्गकः ।
तस्य मध्ये मणिद्वीपः प्रभाक्षिप्ततमस्ततिः ॥ २ ॥
योजनानां कोटिशतैर्विस्तृतोऽतिमनोहरः ।
कल्पद्रुमवनैश्चित्रैश्चित्रिता परितः स्थली ॥ ३ ॥
तत्र स्थितं पुरं तस्याः सर्वरत्नसमुज्ज्वलम् ।
योजनानां चतुर्लक्षैर्दीर्घायामसुविस्तृतम् ॥ ४ ॥
तावन्मितस्तस्य सालो लोहसारमयस्थितः ।
चतुरस्रः सर्वभद्रः समुज्ज्वलितदिक्तटः ॥ ५ ॥
चतुःसहस्रमुन्नम्रो योजनानां सवप्रकः ।
चतुर्द्वारयुतो बाह्ये परिखेण विराजितः ॥ ६ ॥
तदन्तः सप्तसाहस्रयोजनाऽन्तरितः स्थितः ।
प्राकारः कांस्यरचितः प्रोक्तमानोऽतिभासुरः ॥ ७ ॥
तदन्तरे कल्पवृक्षवाटीगणशताऽऽकुले ।
दशयोजनविस्तीर्णवापीशतविराजिते ॥ ८ ॥
शतयोजनविस्तीर्णप्रफुल्लकमलाऽऽकरैः ।
दिक्ष्वष्टसु युतेस्ववर्णायस्मयाऽर्धबहिर्भुवि ( ??? ) ॥ ९ ॥
कांस्यलक्ष्माऽन्तरभुवि नानापक्षिमृगैर्युते ।
कमलाऽऽकराऽन्तर्भुवि क्लृप्तकांस्यगृहाष्टके ॥ १० ॥
अनेकचित्ररचिते पञ्चाऽऽवरणराजिते ।
शतयोजनविस्तारसमुन्नम्रे सशोभिते ॥ ११ ॥

महासने महाकालः कालीसंश्लिष्टविग्रहः ।
त्रिपुराम्बापादसेवाप्राप्तसौभाग्यनिर्भरः ॥ १२ ॥
आत्मानमष्टधा कृत्वा स्थितो गेहाष्टके पृथक् ।
असंख्यपरिवारौघैः सेवितः सततं स्थितः ॥ १३ ॥
अन्तःकांस्यमयाद्वप्रात् प्रोक्तयोजनदूरतः ।
प्राकारस्ताम्ररचितस्तरुणाऽरुणसम्प्रभः ॥ १४ ॥
प्रोक्तमानद्वारवापीपद्मिनीगृहमध्यभूः ।
बहिरन्तः कांस्यताम्रमयस्थलयुताऽन्तरः ॥ १५ ॥
तदन्तरं प्रोक्तवत्तु कल्पवृक्षवनैर्युतम् ।
गृहेषु राजते तेषु वसन्तर्तुः सुपेशलः ॥ १६ ॥
मधुमाधवशक्तिभ्यां सेवमानः पराम्बिकाम् ।
संयुतः स्वपरीवारैः समेधते निजश्रिया ॥ १७ ॥
सालमानं द्वारमपि वापिकाः पद्मिनीभुवः ।
प्रोक्तरीत्यैव विज्ञेया विशेषः प्रोच्यते क्रमात् ॥ १८ ॥
अथ सीसमयः सालः सन्तानवनमण्डितः ।
ग्रीष्मर्तुः संस्थितः शुक्रशुचिशक्तिपरीवृतः ॥ १९ ॥
आरकूटमयो वप्रो हरिचन्दनवाटिकः ।
नभोनभस्यशक्तिभ्यां वर्षर्तुस्तत्र शोभते ॥ २० ॥
पञ्चलोहमयः सालो मन्दारवनमण्डितः ।
शरदृतुरिषोर्जा(?)भ्यां शक्तिभ्यां तत्र राजते ॥ २१ ॥
ततो राजतसालो वै पारिजातवनाऽऽवृतः ।
सहस्सहस्यशक्तिभ्यां हेमन्तस्तत्र राजते ॥ २२ ॥
तपनीयमयस्सालो बालसूर्यशतप्रभः ।
कदम्बविपिनं तत्र हालाऽऽमोदसुमेदुरम् ॥ २३ ॥
मृदङ्गसङ्गीतमधुरं लास्यगीतर्द्धिसङ्कुलम् ।
कीरमण्डलचाटूक्तिमधुरध्वनिसुन्दरम् ॥ २४ ॥

तत्र सा मन्त्रिणी देवी संस्थिता लोकमोहनी।
सङ्गीतमातृका देवी मातङ्गीत्यभिविश्रुता ॥ २५ ॥
शुकाद्या श्यामला चान्या शारिकाद्या हसन्तिका।
वीणावेणुमुखा तद्वच्छ्यामला लघुपूर्विका ॥ २६ ॥
श्यामला राजपूर्वा स्यात् स्वयं या मन्त्रिणी मता।
श्रीमातृका तत्प्रियाऽन्या चेत्येवमष्टदिक्स्थिताः ॥ २७ ॥
मातङ्गकन्याकोटीनां कोटिभिः परिवारिता।
अथ वप्रः पुष्परागमयः पूर्वोक्तवत् स्थितः ॥ २८ ॥
सिद्धेशः सिद्धसंवीतः तत्र ध्यायति तां पराम्।
पद्मरागमयो वप्रस्तदन्तोऽग्निशिखाऽरुणः ॥ २९ ॥
चारणास्त्रिपुराभक्ता वसन्ति युवतीयुताः।
सालो गोमेदमणिजस्तत्र भैरवनायकैः ॥ ३० ॥
कालसङ्कर्षिणी देवी वटुकौघसमावृता।
कराला कालमेघाभा करवालकृताऽऽयुधा ॥ ३१ ॥
अष्टकोटिभैरवाणां नाथैरष्टसुभैरवैः।
द्वात्रिंशत्कोटिवटुकयुतैः संसेविता सदा ॥ ३२ ॥
महाराज्ञीपादपद्मं ध्यायन्ती सुविराजते।
ततो वज्रमयः सालस्तत्र वज्रा नदी स्थिता ॥ ३३ ॥
परिखावद्वेष्टयित्वा सुधासिन्धुप्रवेशिनी।
तटाभ्यां गोमेदवज्रमयाभ्यां प्रविभासिनी ॥ ३४ ॥
तत्र वज्रेश्वरी देवी वज्रभूषा समुज्ज्वला।
वज्रप्रदानसन्तुष्टा वज्रिप्रमुखपूजिता ॥ ३५ ॥
वैदूर्यसालस्तस्यान्तस्तत्र नागा दितेः सुताः।
निरन्तरं ध्यायमानाः पराम्बापादपङ्कजम् ॥ ३६ ॥
अथेन्द्रनीलसालःस्यात् तत्र मर्त्याः समास्थिताः।
मुक्तावप्रस्तदन्तस्था दिक्पाला दिक्षु वैक्रमात् ॥ ३७ ॥

अथ सालः मारकतः स्वर्णतालवनैर्युतः ।
तालद्रुस्यन्ददत्यन्तहालासौरभसम्भृतः ॥ ३८ ॥
तत्र श्रीदण्डिनी देवी स्वप्ने स्यादेभिरावृता ।
अपराधिजनान् दण्डे योजयन्ती सुसंस्थिता ॥ ३९ ॥
मधुसेवोन्मिषत्स्वान्तराऽऽनन्दाब्धिपरिप्लुता ।
ततो विद्रुमसालः स्याद्वप्रास्तत्राऽन्तरे स्थितः ॥ ४० ॥
अनेकसिद्धमुनिभिर्योगिभिश्च समावृतः ।
नवरत्नकृतो वप्रस्ततोऽतिरुचिरः शुभः ॥ ४१ ॥
तत्र विष्णुः पार्षदादिसेविताऽङ्घ्रिर्विराजते ।
ततोऽप्यनेकरत्नौघमयो वप्रोऽतिभासुरः ॥ ४२ ॥
शिवः प्रमथसंसेव्यस्तत्राऽध्यास्ते त्रिलोचनः ।
ततो मनोमयः सालोऽरुणोरुणसमच्छविः ॥ ४३ ॥
तन्मध्येऽमृतवापी स्यात् परितः परिखाऽऽकृतिः ।
प्रफुल्लपद्मसङ्कीर्णा त्र्यंशे मध्यभुवः स्थिता ॥ ४४ ॥
हंसैः कारण्डवैः कोकैः सारसैः सुविराजिता ।
तन्मध्ये नवरत्नाढ्यनौकायां सुविराजिते ॥ ४५ ॥
पद्माऽऽसने समासीना तारा भक्तौघतारिणी ।
असंख्यरत्नपोतस्थशक्तिभिः परिवारिता ॥ ४६ ॥
दण्डिन्याज्ञां विना कश्चिन्न सन्तारयति क्वचित् ।
अथ बुद्धिमयः सालो विशदश्चन्द्रबिम्बवत् ॥ ४७ ॥
आनन्दवापिका तत्र प्रोक्तवत्सर्वशोभना ।
तत्राऽमृतेशी तरणिसंस्थाना शक्तिभिर्वृता ॥ ४८ ॥
सुरानन्दमयी तस्यामामोदभरिताऽन्तरा ।
आज्ञां विनाऽमृतेशान्या नैनत् पिबति कश्चन ॥ ४९ ॥
न सन्तरेद्वापिकाञ्चाऽमृतैश्वर्याभिरक्षिताम् ।
अहङ्कारमयस्तस्माद्वरणः श्यामलाऽऽकृतिः ॥ ५० ॥

नीलमेघप्रतीकाशस्तदन्तर्वापिकाऽपि च।
विमर्शाऽऽख्या ज्ञानरसवहानिश्चलशीतला ॥ ५१ ॥
तत्र नौकास्थिता देवी कुरुकुल्ला महेश्वरी।
तदाज्ञामन्तरा तत्र नैपत् प्राप्नोति तद्रसम् ॥ ५२ ॥
पीत्वा तल्लेशकमपि समस्ताऽज्ञानसम्भवम्।
त्यजन्ति तापं पश्यन्ति जगत्तत्त्वमनावृतम् ॥ ५३ ॥
अथ सूर्यात्मकः सालः प्रकाशनिकरः स्थितः।
तत्राऽन्तरे समासीनः सूर्यो जलजविष्टरे ॥ ५४ ॥
मार्तण्डभैरवाद्यैश्च रविभिर्द्वादशात्मभिः।
समेतः सूर्यसदृशदेहैर्भक्तैरभिष्टुतः ॥ ५५ ॥
ततः शशाङ्काऽऽवरणः कोटिचन्द्रसमप्रभः।
तत्र सोमः स्थितो राजा किरंस्तत्र सुधांऽशुभिः ॥ ५६ ॥
तदन्तरे तु शृङ्गारसालोऽत्यन्तविचित्रितः।
कौस्तुभाऽऽख्यमणिव्रातनिर्मितो रुचिराऽऽकृतिः ॥५७॥
तन्मध्ये परिघा स्वच्छशृङ्गाररससम्भृता।
तत्र कौस्तुभसङ्क्लृप्तपोते शृङ्गारनामके ॥ ५८ ॥
कन्दर्पः संस्थितो रत्या प्रीत्या सम्मिलितः स्वयम्।
अनेककोटिकन्दर्पैरतिप्रीतिगणैरपि ॥ ५९ ॥
सेव्यमानो मोदते श्रीत्रिपुराभक्तशेखरः।
तत्पारे तु महापद्मवनमामोदमेदुरम् ॥ ६० ॥
स्थलपद्मवनं तेषां काण्डाः पत्राणि केसराः।
कर्णिकाश्चापि चाऽत्यन्तदीर्घास्तत्ते ब्रवीम्यहम् ॥ ६१ ॥
सहस्रयोजनाऽऽयामाः काण्डा गव्यूतिपीवराः।
विंशतिर्योजनानान्तु पत्राऽऽयामः प्रकीर्तितः ॥ ६२ ॥
त्रिंशद्योजनदीर्घाणि पत्राणि कलशीसुत।
योजनानां पञ्चदश केसराणाञ्च दीर्घता ॥ ६३ ॥
कर्णिका योजनदशविस्ताराः सम्प्रकीर्तिताः।
तत्र भृङ्गा मणिनिभाः शैलशृङ्गमिताः स्थिताः ॥ ६४ ॥
गृहं श्रीत्रिपुरादेव्यास्तदन्तरातिभासुरम्।

चिन्तामणिमयेकाऽतिरचितं चित्रचित्रितम् ॥ ६५ ॥
चतुर्द्वारयुतं तत्र दिव्याऽऽधारसुसम्भृतम् ।
वह्निमूर्तिमयाऽऽधारो वर्तुलस्तत्कलायुतः ॥ ६६ ॥
योजनानां पञ्चशतं विस्तारेऽर्धं समुन्नतौ ।
तत्र सूर्यात्मकं पात्रं कलाद्वादशसंयुतम् ॥ ६७ ॥
योजनानां सहस्रन्तु विस्तारे सार्धमुन्नते ।
तत्राऽमृताऽऽसवः पूर्णः स्वाद्यो मञ्जुलसौरभः ॥ ६८ ॥
सुधांशुरूपः संयुक्तः कलाभिः परितो विधुः ।
तत्र पोतस्थितः खेलंस्तरङ्गेष्वासवाऽमृते ॥ ६९ ॥
श्रीचक्रस्थाः शक्तयो यास्तासां पानाय कल्पितम् ।
महापद्माऽटवीसंस्थाश्चाऽपि याः शक्तयोऽमलाः ॥ ७० ॥
मुख्यशक्तिप्रसादन्तु प्राप्य मोदन्ति सन्ततम् ।
तत्राऽग्नेयं महाकुण्डं चिदग्निज्वालमालितम् ॥ ७१ ॥
सहस्रयोजनाऽऽयामं तथा निम्नं त्रिमेखलम् ।
शतयोजनमुन्नम्रा विस्तृता मेखलाः पृथक् ॥ ७२ ॥
तत्र श्रीत्रिपुरादेव्या जनकश्चिन्मयाऽनलः ।
द्विसहस्रयोजनोन्नतज्वालामालयाऽऽवृतः ॥ ७३ ॥
गृहस्य पश्चिमदिशि स्थितश्चक्रात्मको रथः ।
नानामणिगणाऽऽकीर्णः सहस्रयोजनाऽऽयतः ॥ ७४ ॥
चतुर्गुणोन्नतो भूमिनवकेनाऽतिसुन्दरः ।
दशेन्द्रियहयोपेतो मनःसारथिसंयुतः ॥ ७५ ॥
आम्नायचक्रश्चाऽङ्गारो योगरश्मिर्मरुध्वजः ।
नभो वितानः सुमहान् सर्वलोकमयः स्थितः ॥ ७६ ॥
चिन्तामणिगृहे तस्मिन्मध्ये श्रीचक्रनायकः ।
नवाऽऽवरणदेवीभिर्युतः परमशोभनः ॥ ७७ ॥
तन्मध्ये त्रिपुरा देवी पञ्चब्रह्मात्ममञ्चके ।
कामेश्वराऽङ्कसंस्थाना ज्योतीरूपा विराजते ॥ ७८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे श्रीपुरवर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥४४८१॥

# अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

श्रुत्वैवमद्भुतं वृत्तं विश्वकर्माऽतिविस्मितः ।
पप्रच्छाऽनन्तरं वाक्यं सर्वलोकपितामहम् ॥ १ ॥
पितामहाऽत्र सन्देहो भगवन् बहुधा मम ।
हृदि तत् परिपृच्छामि वक्तुं तन्मे त्वमर्हसि ॥ २ ॥
केनेदं निर्मितं स्थानं कदा केन च हेतुना ।
न गतिस्तत्र चाऽन्येषां गुणजेभ्य इति श्रुतम् ॥ ३ ॥
पुनस्तत्राऽमरा मर्त्या नागाद्याश्चाऽपि वर्णिताः ।
कथमेतत् स्थितं देव कृपां कुरु मयीश्वर ॥ ४ ॥
आपृष्ट एवं लोकेशः प्राह तं विश्वशिल्पिनम् ।
त्वष्टः शृणु समाख्यास्ये चैतद्वृत्तं सुगोपितम् ॥ ५ ॥
पुरा वयं गुणमया विश्वशक्त्या विनिर्मिताः ।
ब्रह्मादयो लोकसृष्टिस्थितिसंहृतये ननु ॥ ६ ॥
तदा वयं सृष्टिमुखक्रियाकृतिपरायणाः ।
सदा समाकुलस्वान्तैस्तोषिताऽस्माभिरम्बिका ॥ ७ ॥
त्रिपुरा परमाशक्तिः केवला चितिरूपिणी ।
निष्कलाऽऽकाशरूपेण केवलं वाङ्मयी शिवा ॥ ८ ॥
आहाऽशरीरिणी वत्साः किं वः समभिवाञ्छितम् ।
संश्रुत्वैवं परां वाचं नत्वाऽस्माभिः समीरितम् ॥ ९ ॥
स्तुत्वा तां विविधैस्तोत्रैर्बद्धाऽञ्जलिभिरादरात् ।
महादेवि वयश्चाऽस्मिन् जगत्कृत्ये निरन्तरम् ॥ १० ॥
भवत्या विनियुक्ता वै नैषद्विन्दामहे रतिम् ।
त्वत्स्वरूपस्थितिं त्यक्त्वा न किञ्चिदभिरोचते ॥ ११ ॥

सुधारसाऽऽस्वादनानां यथा क्षारोदसेवने ।
तत्कृपां कुरु देवेशि न रमामोऽत्र कर्मसु ॥ १२ ॥
एवमुक्ता ब्रह्ममुखैस्त्रिपुरा प्राह नः पुनः ।
विधिमुख्याः साम्प्रतं नो भवेदेतत् कथञ्चन ॥ १३ ॥
नियतिर्मेऽतिदुर्वारा सङ्क्लृप्ता माज्ञयैव सा ।
चिन्तितुं नाऽर्हथैवं वो दास्ये ऽन्यदभिवाञ्छितम् ॥ १४ ॥
ततोऽस्माभिः प्रार्थिता सा त्रिपुरा लोकभावनी ।
यद्येवमम्ब तत्त्वञ्च गुणमूर्तिर्महेश्वरी ॥ १५ ॥
राजराजेश्वरी भूत्वाऽखिलाऽण्डानां प्रशासने ।
कुरु तत्र वयं नित्यं त्वन्मूर्तेरभिषेवनात् ॥ १६ ॥
प्राप्स्यामोऽत्र रतिं लोके त्वदाज्ञापालनादपि ।
इत्यस्मदीरितं श्रुत्वा प्राह सा त्रिपुरा परा ॥ १७ ॥
अस्त्वेवं वो हितार्थाय दृश्यमूर्तिर्भवाम्यहम् ।
नाऽत्राऽण्डेषु स्थितिं प्राप्स्ये किन्त्वशेषाऽण्डवर्तिनाम् ॥१८॥
साधारणं सुधाऽम्भोधौ रत्नद्वीपं सृजाम्यहम् ।
तत्र मां भक्तिभावेन यजन्तु जगदीश्वराः ॥ १९ ॥
तत्र कुण्डे समिध्याऽग्निं चिन्मयं ज्वलिते शुचौ ।
यथेप्सितं ध्यायत मां स्त्रीपुम्प्रकृतितः शुभाम् ॥ २० ॥
ध्यानाऽनुरूपा वो भूत्वा प्रशासिष्येऽण्डसन्ततिम् ।
तत्राऽखिलाऽण्डसंस्थानां ब्रह्मादीनां निरन्तरम् ॥ २१ ॥
दिशामि दर्शनं स्वीयं स्थूलभावस्य संस्थिता ।
इत्युक्त्वाऽस्मान् विधिमुखानन्तर्धानं जगाम सा ॥ २२ ॥
अथ तस्या वचनतो ब्रह्माण्डान्निर्गता वयम् ।
पीयूषाऽब्धिं समासाद्य रत्नद्वीपं समन्ततः ॥ २३ ॥
विचिन्वताश्चिरेणाऽथ मणिद्वीपोऽनुसादितः ।
नवरत्नमयः स्वीयच्छविव्याप्तदिगन्तरः ॥ २४ ॥

तत्र गत्वा विनिर्माय कुण्डं परमशोभनम् ।
प्रोक्तमानं तत्र वह्नियोजनं स्यात्कथन्त्विति ॥ २५ ॥
चिन्तां प्राप्ता वयं तत्र नाऽग्निरस्ति नचेन्धनम् ।
अथ देवः शिवः कुण्डे स्वाक्षणोऽग्निमनुकल्पयत् ॥ २६ ॥
अनिन्धनन्तु तं दृष्ट्वा प्रशमाऽभिमुखं शुचिम् ।
विष्णुः स्वयं स्वचेतोंऽशैरेधांसि समकल्पयत् ॥ २७ ॥
अथ प्रज्वलिते वह्नौ विधिस्त्वं समकल्पयम् ।
मनःपशुं बुद्धिमाज्यमहङ्कारं हविस्तथा ॥ २८ ॥
करणानि च पात्राणि तद्धोतुं देवतां पराम् ।
अभिध्यायमहं स्वाऽन्तर्वह्नौ स्त्रीमुर्तिमीदृशीम् ॥ २९ ॥
ध्यात्वा हविर्हुतं यावत्तावत् सा परमेश्वरी ।
कुण्डवह्नेः समुदभूत् ध्यानरूपाऽनुसारिणी ॥ ३० ॥
पराशक्तिरियं तत्र ततोऽस्माभिरभिष्टुता ।
निर्ययौ पावकात्तस्माद्वह्निस्त्रैलोक्यसुन्दरी ॥ ३१ ॥
अथाऽवदन्मां परमा काऽऽसनं मे विनिर्दिश ।
आदिष्ट एवं परममासनं कल्पितं मया ॥ ३२ ॥
स्पर्शमात्राद्विशीर्णं तदासनं भूय एव तत् ।
कल्पितं विविधं सारं स्पर्शाच्छीर्णं बभौ क्षणात् ॥ ३३ ॥
सर्वसामर्थ्यविहितान्यासनान्यपि तानि मे ।
परःशतं विशीर्णानि तदाऽहं लज्जितोऽभवम् ॥ ३४ ॥
अथाऽऽविरासीन्निमिषात् सर्वदेवः सदाशिवः ।
तदिच्छयैव तुर्यश्च तौ तां देवीं प्रणेमतुः ॥ ३५ ॥
तावब्रवीत् परा देवी सा कल्पयतमासनम् ।
दध्यौ सदाशिवः श्रुत्वा वाक्यं तस्याः क्षणादथ ॥ ३६ ॥
अनेककोटिसंख्याता आययुर्गुणमूर्तयः ।
सदाशिवा ईश्वराश्च तेभ्यः सर्वेभ्य एव च ॥ ३७ ॥

सारं समाकृष्य पञ्चमूर्तीश्चक्रेऽतिसुन्दरीः ।
सदाशिवांऽशेन तत्र सिन्दूरनिचयाऽरुणम् ॥ ३८ ॥
फलकं कल्पयत्तस्य मूर्त्या सङ्घटितं शुभम् ।
ईशरुद्रहरिविधिशक्तिसङ्घचतुष्टयैः ॥ ३९ ॥
पादांस्तन्मूर्तिघटितान्निर्ममे स सदाशिवः ।
अशेषपृथिवीसारसम्भृताऽऽस्तरणं ततः ॥ ४० ॥
हंसतूलसंहतिवत् कोमलं तस्य मूर्धनि ।
आस्तृतं मेरुशिखरिसमुदायसुसाधितम् ॥ ४१ ॥
उपधानं विरचयद्देवदेवः सदाशिवः ।
प्रणम्य प्राह तां देवीं सिद्धमम्ब समारुह ॥ ४२ ॥
तन्मध्ये तं गुणेशाना नमस्कृत्य सदाशिवम् ।
प्रोचुर्देव नौपयिकं पीठमेतद्धि मन्दिरम् ॥ ४३ ॥
आकाशसंश्रयं तस्मान्मन्दिरं कुरु सुन्दरम् ।
सदाशिवोऽपि युक्तं तन्मत्वा चक्रे गृहं शुभम् ॥ ४४ ॥
चिन्तामणिगणैः कीर्णं नानारत्नोपभूषितम् ।
योजनानां द्वे सहस्रे विस्तृतौ गृहराजकः ॥ ४५ ॥
चतुर्द्वारश्चतुर्वेदमय आम्नायमण्डितः ।
नभोमयवितानेन महताऽतिविराजितः ॥ ४६ ॥
मत्वा गृहं तदाऽऽकाशेन मनोहरमुत्तमम् ।
ससर्ज तस्य परितो महापद्मवनं शुभम् ॥ ४७ ॥
सम्प्रोक्तलक्षणं तेन मन्दिरं तद्व्यराजत ।
एवं तन्मन्दिरे रत्नसिंहासनमधीश्वरी ॥ ४८ ॥
समारुहत् सा त्रिपुरा भासयन्ती समन्ततः ।
रत्नसिंहासने तस्मिन् संस्थिता सा महेश्वरी ॥ ४९ ॥
असंख्यैर्विधिविष्ण्वीशतुर्यमूर्तिसदाशिवैः ।
संस्तुता बहुधा प्राह सदाशिवमधीश्वरी ॥ ५० ॥

सदाशिव ममाऽऽख्यानमनाख्यायाऽद्भुतं कुरु ।
आख्याताऽहं येन लोके भवामि विदिताऽऽकृतिः ॥ ५१ ॥
एवं तया नियुक्तोऽथ देवदेवः सदाशिवः ।
यावत्तस्याः समाख्यानं चिन्तयामास मानसे ॥ ५२ ॥
तावद्ब्रह्मविष्णुरुद्रमुखैः सम्प्रार्थितोऽभवत् ।
देव नौपयिकं ह्येतद्भासते नः पराम्बिका ॥ ५३ ॥
चितिर्दृष्टमयी नित्या सदसद्रूपकारणम् ।
ध्यानाऽनुरोधवपुषा दयया दृश्यतां गता ॥ ५४ ॥
योषिद्रूपधरा देवी विना पुरुषसंश्रयम् ।
नाऽत्यर्थं शोभते लोकविगानादिति मन्महे ॥ ५५ ॥
न क्वचिल्लोकविततौ नारी नरसमाश्रयम् ।
ऋते सम्भवते वल्ली तरुहीना यथा भुवि ॥ ५६ ॥
तदेतस्या जगद्धात्र्या अनुरूपं पतिं शुभम् ।
परं कल्पय यन्नः स्यात् सर्वेषामभिवाञ्छितम् ॥ ५७ ॥
श्रुत्वैवं गुणमूर्तीनामुक्तं देवः सदाशिवः ।
चिन्तयित्वा चिरं वाक्यं प्राह व्यवसिताऽन्तरः ॥ ५८ ॥
शृण्वन्तु गुणजाता मे वाक्यमेतत् समाहिताः ।
इयं परात्परा देवी सच्चिन्मात्रस्वरूपिणी ॥ ५९ ॥
एकाऽऽसीत् सर्वपुरतः स्वातन्त्र्याऽऽत्मविधायिनी ।
न सन्नाऽसदभिन्नं वा विभिन्नं किमपि ह्यभूत् ॥ ६० ॥
सा स्वस्वभावविभवभरेणैवाऽवभासयत् ।
एतज्जगच्चक्रचित्रं स्वात्मन्यादर्शलीलया ॥ ६१ ॥
नैतस्याः सदृशः कोऽपि कुत एवाऽधिको भवेत् ।
तदस्याः सर्वलोकैकमातुर्भर्ताऽत्र को भवेत् ॥ ६२ ॥
न हि मेऽत्र भवेच्छक्तिः कर्तुं स्यात् खलु किञ्चन ।
वदत्येवं सदा पूर्वं शिवेऽस्माकं प्रपश्यताम् ॥ ६३ ॥

विदित्वाऽस्मत्समीहां सा त्रिपुरा परमेश्वरी ।
ईषत् स्मितं कृतवती कोटिपूर्णेन्दुभासनम् ॥ ६४ ॥
अथाऽभवन्महाशब्दो ब्रह्माण्डौघविभेदनः ।
विदलन् श्रोत्रजालानि बधिरीकृतदिक्तटः ॥ ६५ ॥
प्रजज्वाल महातेजः सर्वदिङ्मण्डलाऽदनम् ।
तडित्कोट्युदयाऽऽभासं सर्वचक्षुःप्रमोषणम् ॥ ६६ ॥
तेन शब्देन महता तेजसा च समन्ततः ।
बधिराऽन्धीकृताः किं तदित्याश्चर्यं समागताः ॥ ६७ ॥
दृष्टाऽस्माभिः क्षणेनैव ततः सा परमेश्वरी ।
समानसुन्दराऽङ्गस्य पर्यङ्कमणिशोभिनी ॥ ६८ ॥
मिथुनीभूतसंस्थाना प्रतिबिम्बं श्रिता यथा ।
दृष्ट्वा समानपुरुषवामाऽङ्कसुविराजिताम् ॥ ६९ ॥
प्रहर्षमतुलं प्राप्ताः स्वेष्टसिद्धेर्जगद्विधे ।
स्वाऽङ्गसौन्दर्यलालित्यभरणेनैव परस्परम् ॥ ७० ॥
क्षिपन्निव तन्मिथुनं परीरम्भसुखोल्वणम् ।
अथाऽब्रवीन्नः परमा देवा वः सिद्धमीप्सितम् ॥ ७१ ॥
अहं द्विधा हि सञ्जाता भवदीप्सितहेतवे ।
वदन्त्वावयोर्नामानि यावः ख्यातिं यतस्त्विह ॥ ७२ ॥
श्रुत्वा सदाशिवो देवः प्रेक्षाऽस्मान्नाम कर्मणि ।
विमूढानाह नत्वा तां देव्यस्मत्कामपूरणात् ॥ ७३ ॥
कामेश्वरी त्वं देवश्च भवेत् कामेश्वरस्तथा ।
राजराजात्मनां नस्त्वमीशनाच्चाऽपि साम्प्रतम् ॥ ७४ ॥
राजराजेश्वरी त्वं वै राजराजेश्वरस्त्वयम् ।
त्वं वै त्रिपुरसुन्दरी चैष त्रिपुरसुन्दरः ॥ ७५ ॥
अथ धातृमुखाः स्तुत्वा वयं तां परमेश्वरीम् ।
अप्रार्थयत भूयस्तां मत्वा तत्रैकलां स्थिताम् ॥ ७६ ॥

मातस्त्वं परिवारेण स्थातुमत्राऽर्हसीश्वरि ।
दृष्ट्वैकलां त्वां न वयं हृष्यामोऽतितरां शिवे ॥ ७७ ॥
एवं सा प्रार्थिताऽस्माभिः स्वदेहात् क्षणमात्रतः ।
परां स्वसदृशीं शक्तिमसृजत् प्रतिबिम्बवत् ॥ ७८ ॥
इत्याह्वयत तां शक्तिं महात्रिपुरसुन्दरीम् ।
इति सृज शक्तिचक्रं ममाऽनुगुणमुत्तमम् ॥ ७९ ॥
सर्वलोकेप्सितकरं परिवारं मदंशतः ।
ओमित्युक्त्वा च सा देवी शक्तिचक्रं महाऽद्भुतम् ॥ ८० ॥
ससर्ज श्रीमहादेव्याः शक्त्याऽऽवरणमद्भुतम् ।
तावन्मध्ये महादेवी स्वयं षोडशधाऽभवत् ॥ ८१ ॥
स्वयं ततोऽतिरिक्ताऽभूद्देवी सप्तदशी तदा ।
एतस्मिन्नन्तरे साऽपि महात्रिपुरसुन्दरी ॥ ८२ ॥
नवशक्तीः ससर्जाऽङ्गात् सृष्ट्वा सा प्राह ताः प्रति ।
पृथक् सृजेथाः स्वस्वाऽनुरूपाः शक्तीर्मनोहराः ॥ ८३ ॥
महासुन्दर्येति चोक्ताः ससृजुस्ताः पृथक् पृथक् ।
एवं सृष्टपरीवारा महाश्रीत्रिपुराऽम्बिका ॥ ८४ ॥
स्थानं तासां जगच्चक्रमयं निर्माय सत्वरम् ।
तत्तत्स्थानस्थिताभिः सा शक्तिभिः सेविताऽभवत् ॥ ८५ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललितामाहात्म्ये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ४९६६ ॥

# अथ षट्पञ्चाशत्तमोऽध्यायः ।

श्रुत्वेत्थमद्भुतं वृत्तं विश्वकर्मा जगद्विधिः ।
पप्रच्छ भूयः प्रणतस्तच्छ्रुतावतिकौतुकी ॥ १ ॥
भगवन् शक्तयो देव्या सृष्टा यास्त्रिपुराम्बया ।
नृपसंख्या नाम तासां रूपं स्थानञ्च मे वद ॥ २ ॥
महात्रिपुरसुन्दर्या सृष्टा यास्ताः समीरय ।
किंरूपाः कति संख्याकास्तत्सृष्टाश्चाऽपि वर्णय ॥ ३ ॥
स्थानञ्चाऽपि जगच्चक्रप्रतिरूपं किमात्मकम् ।
सृष्टं श्रीत्रिपुराशक्त्या कुत्र काः शक्तयः स्थिताः ॥ ४ ॥
एतन्मे सर्वमाख्याहि श्रोतुं मे प्रसमीहितम् ।
इति पृष्टो विश्वकृता प्रीतः प्राह चतुर्मुखः ॥ ५ ॥
शृणु त्वष्टर्गुह्यतमं सावधानेन चेतसा ।
एवमादौ विसृष्टा सा महात्रिपुरसुन्दरी ॥ ६ ॥
नवशक्तीरसृजत शक्त्यौघस्य विसर्जने ।
समाज्ञप्तास्तया तास्तु प्राहुस्त्रिपुरसुन्दरीम् ॥ ७ ॥
कथं वयं सृजामोऽम्ब शक्तीस्ते समुदीरिताः ।
श्रुत्वेति प्राह सा भूयो महात्रिपुरसुन्दरी ॥ ८ ॥
आत्मयोगं समाश्रित्य द्रुतं सृजथ मा चिरम् ।
इत्युक्त्वाऽथा समसृजद्दशशक्तीः सुलोहिताः ॥ ९ ॥
ताश्चाऽणिमादिसिद्धीनां प्रदा लोकेऽभवन्नथ ।
पाशाऽब्जाऽङ्कुशपाणयः शशिखण्डशिखण्डकाः ॥ १० ॥
अणिमा लघिमा चैव महिमेशित्विका ततः ।
वशित्वा प्राकाम्यका च भुक्तीच्छाप्राप्तयः क्रमात् ॥ ११ ॥
सर्वकामा च सिद्ध्यन्ता दश देव्यः समुद्गताः ।
अथ ता नवशक्त्यस्तु प्राहुर्देवीं स्वमातरम् ॥ १२ ॥

नाम नः प्रदिशाऽम्बाऽऽशु ततः शक्तीः सृजामहे ।
श्रुत्वाऽऽह ता महाशक्तीर्महात्रिपुरसुन्दरी ॥ १३ ॥
योगेन सर्जनाद्यूयं योगिन्यस्तु भविष्यथ ।
अथाऽद्या प्रार्थयामास त्रिपुरेशीं प्रणम्य तु ॥ १४ ॥
मातः स्थानं कल्पयाऽऽशु शक्तीनां समवस्थितेः ।
प्रार्थितैवं पराशक्तिः ससर्ज स्थानमद्भुतम् ॥ १५ ॥
चतुरस्रा वेदिकैका योजनद्वितयोन्नता ।
द्विशतं योजनानान्तु विस्तारेण विनिर्मिता ॥ १६ ॥
तस्योपरि चतुर्दिक्षु योजनानां चतुष्टयम् ।
वहिर्विहाय तस्यान्तश्चतुर्द्वारं सुशोभनम् ॥ १७ ॥
योजनानान्तु विंशत्या विस्तृतं सुमनोहरम् ।
षट्योजनसुदीर्घञ्च तत्सम्बद्धा तदन्ततः ॥ १८ ॥
योजनद्वयमुन्नम्रा चतुरस्रसुभूमिका ।
द्वियोजना ततोऽन्तस्तु योजनोच्चा तथा पुनः ॥ १९ ॥
एवं भूमित्रयं तस्य चाऽन्तः षोडशयोजने ।
भूमिका योजनोन्नम्रा षोडशच्छदसन्निभा ॥ २० ॥
तदन्तर्योजनोन्नम्रा वसुपत्रसमाकृतिः ।
योजनानान्तु विंशत्या भूमिकाऽतिमनोहरा ॥ २१ ॥
आदित्ययोजनाऽऽयामा तदन्तर्योजनोन्नता ।
भूमिका शक्रकोणाभा तदन्तश्चाऽपि तावती ॥ २२ ॥
भूमिका दशकोणाभा तस्याऽन्तः शिवयोजना ।
योजनोच्चा पूर्ववत्तु दशकोणसमप्रभा ॥ २३ ॥
अन्तरे दशसंख्यातयोजनाऽऽयामतः स्थिता ।
वसुकोणात्मिका भूमिर्योजनोच्छ्रायशोभिनी ॥ २४ ॥
तस्याऽन्तस्त्र्यस्रभूमिस्तु रसयोजनसम्मिता ।
योजनोच्चा तदूर्ध्वंस्था तावदुच्छ्रायशोभिनी ॥ २५ ॥

योजनाऽऽयतविस्तारा विन्दुभूमिः सुवर्तुला ।
प्रकल्प्य स्थानमेवं सा वृत्तभूमौ स्वयं स्थिता ॥ २६ ॥
पञ्चब्रह्मासनाऽऽसीनकामेशोत्सङ्गशोभिनी ।
स्वाङ्गोद्भूताः शक्तयो याः स्वसमा नृपसंख्यकाः ॥ २७ ॥
ताः स्वभूमेरधस्त्र्यस्रभूमौ संवेशिताः क्रमात् ।
इन्दोः कलामयाः पक्षदिनाऽधिष्ठातृदेवताः ॥ २८ ॥
नित्याऽऽख्याः कारणेनाऽऽसां नामानि च वदामि ते ।
आद्या कामेश्वरी नित्या द्वितीया भगमालिनी ॥ २९ ॥
नित्यक्लिन्ना च भेरुण्डा ततः स्याद्वह्निवासिनी ।
महाविद्येश्वरी पश्चाच्छिवदूती ततः परम् ॥ ३० ॥
त्वरिता कुलसुन्दरी नित्या नीलपताकिका ।
विजया सर्वमङ्गला ज्वालामाला ततः परम् ॥ ३१ ॥
चित्रेति नाम क्रमतो वामे पृष्ठे च दक्षिणे ।
पञ्चकक्रमयोगेन त्र्यस्रभूमौ निवेशिताः ॥ ३२ ॥
स्वयं सप्तदशी नित्या षोडशी या पुरोदिता ।
सा तपोवीर्यसंयोगात् सायुज्यं समुपागता ॥ ३३ ॥
सृष्टादौ तत्र या देवी महात्रिपुरसुन्दरी ।
तां विन्दुभूम्यधिष्ठात्रीं कृत्वा स्वाग्रे निवेशयत् ॥ ३४ ॥
योगिन्योऽपि तया सृष्टा नवसंख्याः पुरोदिताः ।
ताभिश्चाऽपि पृथक्कृत्यैर्नाम प्राप्तं यथाक्रमम् ॥ ३५ ॥
प्रकटा च ततो गुप्ता तथा गुप्ततरा परा ।
सम्प्रदायाऽकुलोत्तीर्णा निगर्भा च रहस्यका ॥ ३६ ॥
तथैवाऽतिरहस्याख्या पराऽपररहस्यका ।
निवेशिताः क्रमेणैता देव्या चक्रेषु तच्छृणु ॥ ३७ ॥
चतुरस्रे नृपदले नागपत्रे ततः परम् ।
मन्वादिग्दिङ्नागवह्निकोणेषूर्ध्वे पृथक् पृथक् ॥ ३८ ॥

ततः सा प्रकटाऽऽख्याना योगिनी स्वविनिर्मिताः ।
दशशक्तीरधो भूम्यां क्रमेण विनिवेशयत् ॥ ३९ ॥
पुनः सृष्ट्वाऽष्टशक्तीस्तु ब्राह्म्यादीर्मातृकाऽऽत्मिकाः ।
वर्गशक्तीर्द्वितीयस्यां भूमिकायां निवेशयत् ॥ ४० ॥
ततः ससर्ज शक्तीनां दशकं प्रकटाऽभिधा ।
तृतीयभूमिकायां ताः क्रमेणाऽभिनिवेशयत् ॥ ४१ ॥
अथ गुप्ताऽभिधानाऽपि दृष्ट्वा नृपनिवेशनम् ।
असृजत्तावतीः शक्तीरथ गुप्ततराऽभिधा ॥ ४२ ॥
सम्प्रदायाऽकुलोत्तीर्णा निर्भगा च पृथक् पृथक् ।
स्वस्वसंस्थानसम्मित्याऽसृजच्छक्तीर्विचित्रिताः ॥ ४३ ॥
शक्तीर्विभावयामास रहस्याः सप्तसङ्ख्यकाः ।
रहस्यतरनाम्नी च शक्तिमेकां ससर्ज ह ॥ ४४ ॥
अणिमाद्या अपि पृथक् ससृजुः शतशोऽशतः ।
शक्तीः स्वस्वसमाकाराऽऽयुधवस्त्रविभूषणाः ॥ ४५ ॥
विन्दुचक्रेश्वरी या सा महात्रिपुरसुन्दरी ।
विनियुक्ता मूलदेव्या शक्तीनामभिधाऽऽकृतौ ॥ ४६ ॥
चकार तत्तत्कर्माऽनुरूपं नाम पृथक् पृथक् ।
तृतीयभूमिकादेव्यो याः सृष्टा दशसङ्ख्यकाः ॥ ४७ ॥
मुद्रातत्त्वविधानज्ञाः सर्वमुद्रात्ममूर्तयः ।
आहरन्ति मुदं देव्यस्तस्मान्मुद्रासमाऽऽह्वयाः ॥ ४८ ॥
मुदमुत्पाद्य या लोकान् क्षोभयन्त्यतिमात्रकम् ।
द्रावयत्याकर्षयति वशयेन्मादयत्यपि ॥ ४९ ॥
बीजयत्यङ्कुरयति चारयत्यपि खे तथा ।
त्रिखण्डयति योन्यात्मभावमानयतीश्वरी ॥ ५० ॥
इति मुद्रा वीर्यवत्यः ख्याताः सङ्क्षोभिणीति च ।
विद्राविण्याकर्षणी च ततः पश्चाद्वशङ्करी ॥ ५१ ॥
उन्मादिनी महाङ्कुशा त्रिखण्डा खेचरी तथा ।

बीजा योनिः क्रमादेता दिक्षु कोणेष्वधोर्ध्वयोः ॥ ५२ ॥
भूमिकात्रितयेऽप्येवं ब्राह्मी माहेश्वरी तथा ।
कौमारी वैष्णवी वाराही माहेन्द्री ततः परम् ॥ ५३ ॥
चामुण्डा च महालक्ष्मी(ः) एवमाद्ये स्थिता इमाः ।
ब्रह्मादीनां समानाङ्गाऽऽयुधाऽऽभरणवाससः ॥ ५४ ॥
मुद्रास्तु लोहिताऽऽभासाः पाशमुद्राऽङ्कुशैर्युताः ।
लोहिताऽङ्कुशधारिण्यः पद्मरागसुभूषणाः ॥ ५५ ॥
अथ गुप्ताऽऽख्यया सृष्टा भक्तेष्टाकर्षणात्तथा ।
कामाकर्षिणिकाऽऽद्या स्याद्बुद्ध्याकर्षिणिका परा ॥५६॥
अहङ्काराऽऽकर्षिणी च शब्दाऽऽकर्षिणिका तथा ।
स्पर्शाऽऽकर्षिणिका तद्वद्रूपाऽऽकर्षिणिका ततः ॥ ५७ ॥
रसाऽऽकर्षिणिका गन्धाऽऽकर्षिणी चित्तपूर्विका :
आकर्षिणी धैर्यपूर्वा कर्षिणी स्मृतिपूर्विका ॥ ५८ ॥
नामपूर्वाऽऽकर्षिणी च बीजाऽऽकर्षिका परा ।
आत्माऽऽकर्षिणिका तद्वदमृताऽऽकर्षिणी ततः ॥ ५९ ॥
शरीराऽऽकर्षिणीत्येवं षोडशच्छदशक्तयः ।
भाविता गुप्तयोगिन्याऽग्रपत्राद्वामतः स्थिताः ॥ ६० ॥
शुभ्राः शुभ्रांऽशुकाकल्पाः पूर्णतारुण्यशोभिताः ।
पाशदानसुधाकुम्भाऽङ्कुशाऽऽयुधपरिष्कृताः ॥ ६१ ॥
अनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गपूर्विका ।
मदनाऽनङ्गमदनाऽऽतुराऽनङ्गाऽऽद्यरेखिका ॥ ६२ ॥
अनङ्गवेशिन्यनङ्गाऽङ्कुशाऽनङ्गाऽऽद्यमालिनी ।
एता गुप्ततराऽऽख्योस्तथा नागच्छदनिवेशनाः ॥ ६३ ॥
रक्तवर्णांऽशुककल्पा दिक्कोणक्रमतः स्थिताः ।
पाशं नीलोत्पलं पात्रमङ्कुशं पाणिषु स्थितम् ॥ ६४ ॥
संक्षोभिणी विद्राविणी चाऽऽकर्षिणी चाऽऽह्लादिनी ।
सम्मोहिनी स्तम्भिनी च जृम्भिणी च वशङ्करी ॥ ६५ ॥

रञ्जिनी चोन्मादिनी च ततश्चैवाऽर्थसाधिनी।
सम्पत्तिपूरणी मन्त्रमयी द्वन्द्वक्षयङ्करी ॥ ६६ ॥
सम्प्रदायोद्भाविताः मनुकोणेषु संस्थिताः।
अग्राद्वामक्रमेणैव रक्ताभांऽशुकभूषणाः ॥ ६७ ॥
पाशाऽमृतघटाऽऽदर्शाऽङ्कुशशोभिचतुर्भुजाः।
सिद्धिप्रदा सम्पत्प्रदा ततः पश्चात्प्रियङ्करी ॥ ६८ ॥
मङ्गलाऽऽद्याकारिणी च ततः कामप्रदा स्मृता।
दुःखाद्विमोचिनी तद्वन्मृत्युप्रशमनी ततः ॥ ६९ ॥
विघ्नान्निवारिणी चाऽङ्गसुन्दरी तदनन्तरम्।
सौभाग्यदायिनी पङ्क्तिकोणे प्राग्वत् समास्थिताः ॥ ७० ॥
पाशं भूषणपेटीश्चाऽङ्कुशं पाणिचतुष्टयैः।
दधाना विशदाऽऽकारांऽशुकभूषणभूषिताः ॥ ७१ ॥
कुलोत्तीर्णाः समुदिताः शक्तयो यौवनाऽन्विताः।
ज्ञानशक्तिरैश्वर्यप्रदा ततो ज्ञानमयी स्मृता ॥ ७२ ॥
ततो व्याधिविनाशिनी चाऽऽधाराद्यास्वरूपिका।
ततः पापहराऽऽनन्दमयी रक्षास्वरूपिणी ॥ ७३ ॥
ईप्सिताद्याप्रदा चेति दशारे पूर्ववत् स्थिताः।
पाशदानज्ञानटङ्ककरा रक्ताङ्गभूषणाः ॥ ७४ ॥
निगर्भाख्या भाविताास्तु तरुण्यः शक्तयोऽमलाः।
वशिनी मोदिनी तद्वद्विमला चाऽरुणा ततः ॥ ७५ ॥
जयिनी सर्वेश्वरी च कौलिनी चेति शक्तयः।
रहस्ययोगिनीजाता पद्मरागसमप्रभाः ॥ ७६ ॥
चापदानपुस्तकेषुकरा लोहितभूषणाः।
नागकोणेषु पूर्वोक्तक्रमेण सुविराजिताः ॥ ७७ ॥
शक्तिरेका चाऽतिरहस्याऽऽख्योत्थो दक्षकोणके।
एवं ताः शक्तयश्चक्रे सृष्टाः प्रकृतिशक्तिभिः ॥ ७८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे श्रीचक्रदेवतानिरूपणं नाम षट्पञ्चाशत्तमोऽध्यायः ॥४६४३॥

# अथ सप्तपञ्चाशत्तमोऽध्यायः ।

श्रुत्वाऽत्वष्टेरितं धातुः पुनः पप्रच्छ सादरम् ।
पितामह श्रुतञ्चैतच्छ्रीचक्रं शक्तिमण्डलम् ॥ १ ॥
शक्तीनां नाम सम्पत्तिहेतुं मे पृच्छते वद ।
तथाऽष्टाऽऽरे त्रिकोणे च कुतः स्थानं विशक्तिकम् ॥ २ ॥
षोडशी सा महानित्या केन सायुज्यमागमत् ।
एवं त्वष्टाऽनुयुक्तोऽथ प्रीतः प्राह चतुर्मुखः ॥ ३ ॥
विश्वकर्तः शृणु महागुह्यमेतन्निगूहितम् ।
महाश्रीत्रिपुरेशान्या सृष्टास्त्रित्यास्तु षोडश ॥ ४ ॥
महात्रिपुरसुन्दर्या सृष्टास्त्वन्यास्तु शक्तयः । (?)
नाम तासां पृथक्स्वीयक्रियपयैव निरूपितम् ॥ ५ ॥
या सा शक्तिर्महादेवी त्रिपुराऽऽख्या महत्तरा ।
तस्याः सदा विलसितं जगदेतच्चराऽचरम् ॥ ६ ॥
ब्रह्मादिमूर्तिष्वंशेन संस्थिता सा महेश्वरी ।
जगच्चक्रक्रियाकाण्डं निर्वाहयति चिन्मयी ॥ ७ ॥
सा खण्डैकरसाप्यम्बा चितिमात्रशरीरिणी ।
अनेकधाऽपि भवति स्वस्वातन्त्र्याऽवभासिनी ॥ ८ ॥
यथा सहस्ररश्मीनां पिण्डो हंसो नभोमणिः ।
एकोऽप्यनेकधाऽप्यास्ते यथा वा वार्निधिः स्थितः ॥ ९ ॥
तरङ्गोर्मिफेनमय एकाऽनेकात्मना तथा ।
दर्पणः प्रतिबिम्बानां सहस्रेण यथा स्थितः ॥ १० ॥
तथैषा परमा चाऽपि भेदाऽभेदमयी स्थिता ।
शक्तयोंऽशात्मिकास्तस्या अणिमाद्याः प्रकीर्तिताः ॥११॥

तस्याः स्वातन्त्र्यवशतः स्थूलाऽऽकारपरिग्रहः ।
या शक्तिर्यत्क्रियाहेतुर्नाम तस्यास्तथास्थितम् ॥ १२ ॥
एवं सृष्टाः शक्तयस्ता महामायाविमोहिताः ।
स्पर्धाश्चक्रुः संस्थितिषु स्थाननीचोच्चभावतः ॥ १३ ॥
दृष्ट्वा तच्छक्तिचक्रेषु कश्मलं समुपस्थितम् ।
महादेव्याज्ञया प्राह महात्रिपुरसुन्दरी ॥ १४ ॥
शृणुध्वं शक्तयः सर्वा मम वाक्यं हि साम्प्रतम् ।
स्पर्धाक्रोधात्मनामत्र स्थानं देवीसमीपतः ॥ १५ ॥
दुर्लभं तत्तपोयोगात् स्थानं विन्दथ नाऽन्यथा ।
इत्युक्त्वाऽऽदौ स्वयञ्चक्रे तपः सुमहदद्भुतम् ॥ १६ ॥
दृष्ट्वा तपस्यभिरतां महात्रिपुरसुन्दरीम् ।
अन्याः सर्वा अपि तपश्चक्रुर्नियतमानसाः ॥ १७ ॥
एवं शक्तिगणे तत्र तपस्यभिरते सति ।
अगात् कालो दीर्घतमस्तदा तुष्टाऽवदत् परा ॥ १८ ॥
वत्सास्तुष्टाऽस्मि तपसा स्थानं योग्यं दिशामि वः ।
इत्युक्त्वा स्थानमदिशन्महात्रिपुरसुन्दरी ॥ १९ ॥
या तस्यै सर्वचक्राणामीश्वरीत्वं ददौ परा ।
अथ नित्याऽऽत्मशक्तीनां व्यस्रभूमौ निवेशनम् ॥ २० ॥
प्रतिपार्श्वे पञ्चकस्य चाऽथ नित्या तु षोडशी ।
प्रदिष्टसम्मुखस्थानाऽप्यमन्यत न तद्बहु ॥ २१ ॥
पुनरातिष्ठदत्यन्तं तपः परमदुष्करम् ।
एवं कामेश्वरी तद्वद्भगमालिनिकाऽपि च ॥ २२ ॥
न तत्स्थानमलं मत्वा तपश्चक्रतुरुत्तमम् ।
एवं तपस्यभिरते शक्तिमण्डलके शिवा ॥ २३ ॥
एकाकिनीं स्वामपश्यन्न तत् सम्यगमन्यत ।
तावद्विज्ञायाऽभिमतं महात्रिपुरसुन्दरी ॥ २४ ॥

त्रिपुराऽङ्गायुधेभ्यश्च दशशक्तीर्विसर्जयत् ।
ता विसृष्टाः स्थितेः स्थानं महात्रिपुरसुन्दरीम् ॥ २५ ॥
पप्रच्छुः प्राह ता देवी तपसा स्थानमीक्षथ ।
इत्युक्त्वा तप एवोच्चैश्चक्रुः प्राक् शक्तिभिः सह ॥ २६ ॥
पुनर्देवी स्वपरितो मत्वैकामवलोकयत् ।
अवलोकनतो जाताः शक्तयो वेदसङ्ख्यकाः ॥ २७ ॥
काञ्चनाऽऽभा पद्मधराः शुभ्रवस्त्रविभूषणाः ।
दृष्ट्वा शक्तिगणं सर्वं तपस्याभिरतं सदा ॥ २८ ॥
मनो दधुस्तपस्येव त्वष्टस्ता अपि संययुः ।
भूयो ददर्श परितो जातं शक्तिचतुष्टयम् ॥ २९ ॥
पाशाऽभयवरसृणिधरा रक्ताऽङ्गभूषणाः ।
त्रिनेत्राश्च तपस्येव रता दृष्ट्वा च पूर्वजाः ॥ ३० ॥
पुनः सृष्टास्तथाऽन्याश्च पाशपुस्तकमालिकाः ।
दधाना अङ्कुशञ्चापि रक्तवर्णविभूषणाः ॥ ३१ ॥
पुनः सृष्टास्सक्तयश्च तावत्यः स्फटिकप्रभाः ।
पाशाभयवरसृणिधराश्च तप आस्थिताः ॥ ३२ ॥
सृष्टाः पुनश्च तावत्यो रक्ताऽऽकारविभूषणाः ।
तपस्येव रतास्ताश्च दृष्ट्वा शक्तीः पुरः स्थिताः ॥ ३३ ॥
अथ दृष्ट्वा तपः प्रौढं प्राह तां त्रिपुरेश्वरी ।
नित्यां षोडशिकां वत्से वरं ब्रूह्यभिवाञ्छितम् ॥ ३४ ॥
सायुज्यमेव सा वव्रे सर्वां मत्वाऽल्पिकां स्थितिम् ।
प्राप्ता च परया तत्र सायुज्यं षोडशी परा ॥ ३५ ॥
या जाताः स्वाङ्गतो देव्याश्चतस्रः पञ्चधा च ताः ।
स्वयन्तु पञ्चमी भूत्वा तासां तुष्टा समास्थिता ॥ ३६ ॥
पञ्च पञ्चकतां तेन प्रापुस्ता नामपञ्चकम् ।
रत्नेश्वरीत्वमाद्यानां कामधुक्त्वं ततः परम् ॥ ३७ ॥

तथा कल्पलतेशित्वं ततः कोशेश्वरीपदम् ।
लक्ष्मीश्वरीत्वमन्त्यानां शक्तिवृन्दाऽऽसने स्थितिम् ॥३८॥
प्रत्येकञ्च ददौ शक्तिसहस्रेश्वरतां शिवा ।
रत्नाः कामदुघाः कल्पलताकोशाऽभिधायुताः ॥ ३९ ॥
लक्ष्मीसमाख्यास्ताः शक्तीस्त्वष्टर्जानीहि ताः पृथक् ।
पञ्चविंशतिसाहस्रसङ्ख्यास्तास्तु पृथक्पृथक् ॥ ४० ॥
सेवमानाः स्वस्वनाथं प्रत्येकन्तु सहस्रकम् ।
पञ्चसाहस्रसङ्ख्याका मूलदेव्यास्तु शक्तयः ॥ ४१ ॥
सिद्धलक्ष्मीस्तत्र चाऽद्या राजमातङ्गिनी परा ।
तृतीया भुवनेशानी तुर्या वाराहिका मता ॥ ४२ ॥
रत्नेश्वर्य इमाः प्रोक्तास्ततः कामदुघाः शृणु ।
सुधापीठेश्वरी चाऽऽद्या सुधासूश्च ततः परा ॥ ४३ ॥
तृतीया चाऽमृतेशानी तुर्या चाऽन्नप्रपूरणी ।
अथ कल्पलतास्तत्र पञ्चकामा ततः परा ॥ ४४ ॥
पारिजातेश्वरी चाऽपि कुमारी च ततः परा ।
पञ्चबाणेश्वरी चाऽथ परंज्योतिस्ततः परा ॥ ४५ ॥
परा निष्कलशाम्भवी चाऽजपा मातृका परा ।
इति कोशेश्वरीः प्रोक्ताः शृणु लक्ष्मीश्वरीस्ततः ॥४६॥
लक्ष्मीश्चाऽथ महालक्ष्मीस्त्रिशक्त्याद्या ततः परा ।
साम्राज्यलक्ष्मीश्च रमा चेति पञ्चकदेवताः ॥ ४७ ॥
एवं पञ्चकदेवीनां तपसा परितोषिता ।
ददौ समीपसंस्थानं बिन्दुचक्रोपरि क्रमात् ॥ ४८ ॥
आग्नेयादिषु कोणेषु तपसस्तु प्रकर्षतः ।
मातङ्गिन्याश्च वाराह्या ददावतुलसम्पदम् ॥ ४९ ॥
मन्त्रिणीत्वं सर्वलोककार्यमन्त्रणहेतुताम् ।
वाराह्या दाण्डिनीत्वञ्च दुष्टदण्डनहेतुताम् ॥ ५० ॥

ततः कालान्तरे हेमहरिन्मणिसुवप्रयोः ।
मध्यं स्थानं ददौ देवी प्रसन्ना परिसेचनात् ॥ ५१ ॥
एवं तपो विशेषेण तुष्टा स्थानं पुनर्ददौ ।
कामेश्वरी च वज्रेशी भगमालिनिका च या ॥ ५२ ॥
ताभ्यः समयदेवीत्वं दत्त्वा स्वाऽग्रे च पृष्ठतः ।
वामे च दक्षिणे पार्श्वे स्थानं देव्यभिकल्पयत् ॥ ५३ ॥
उद्भाविता तु या देवी रहस्यतरनामया ।
सा प्राप तपसोत्कर्षाद्वज्रसालाऽन्तरे भुवि ॥ ५४ ॥
आधिपत्यं वज्रनदीतीरे मन्दिरसंस्थितिम् ।
वज्ररत्नेश्वरीत्वञ्च तेन वज्रेश्वरी मता ॥ ५५ ॥
पुनस्त्रिकोणकोणेषु स्थानं कामेश्वरीमुखाः ।
प्रापुस्तपस आधिक्यात्तथा कामेश्वरी पुनः ॥ ५६ ॥
अष्टाऽरेषु द्वितीयञ्च स्थानं प्राप्ता तपोवलात् ।
तथाऽन्या अपि शक्तीस्तु महात्रिपुरसुन्दरी ॥ ५७ ॥
देव्या तया च स्थानेषु क्रमेण विनिवेशयत् ।
एवं नवसु चक्रेषु विभज्य विनिवेश्य च ॥ ५८ ॥
स्वयं तत्तदधिष्ठात्री नवधा समजायत ।
त्रिपुरा त्रिपुरेशी च तथा त्रिपुरसुन्दरी ॥ ५९ ॥
ततास्त्रिपुरवासिनी त्रिपुरा श्रीस्ततः परा ।
त्रिपुरमालिनी त्रिपुरा सिद्धा त्रिपुराऽम्बिका ॥ ६० ॥
नवमी च स्वयं तत्र महात्रिपुरसुन्दरी ।
तत्तदावरणाऽऽद्याऽग्रे स्थिता तत्सदृशाऽऽकृतिः ॥ ६१ ॥
मूलदेव्याऽऽभिमुख्येन संस्थिताः सर्वशक्तयः ।
अथ ब्रह्मादिभिर्दृष्ट्वा सर्वं शक्तिगणाऽऽवृतम् ॥ ६२ ॥
मत्वा न तत् सम्यगिति कामेशः प्रार्थितोऽभवत् ।
कामेश भगवन् देव त्वमपि सृज स्वांऽशतः ॥ ६३ ॥

परिवारं शिवाकारं नैतदौपयिकं यतः ।
मन्यामहे शक्तिगणं केवलं विषमन्त्विति ॥ ६४ ॥
अथ कामेश्वरो देवः स्वांऽशाच्छक्त्यंशतोऽपि च ।
उभयांऽशात्तदन्यस्मादसृजद्वेदसङ्ख्यकान् ॥ ६५ ॥
मित्रीशषष्ठीशौड्डीशचर्यानाथाऽभिधास्ततः ।
पुस्तकाऽभीतिवरचिद्दधानान् स्फटिकप्रभान् ॥ ६६ ॥
श्वेतवस्त्राऽऽकल्पयुतांस्त्रिणेत्रान् रक्तशक्तिकान् ।
पद्माऽऽसनसमासीनान् प्रसन्नवदनेक्षणान् ॥ ६७ ॥
तान् गुरून् शक्तिमन्त्राणामकरोच्छान्तविग्रहान् ।
पृथग्विद्यागुरून् यूयं सृजध्वमिति चाऽब्रवीत् ॥ ६८ ॥
अथाऽऽद्यस्तत्र दिव्याख्यान् सिद्धाख्यानपरस्तथा ।
तृतीयो मानवाऽऽख्यांस्तु गणानसृजत क्रमात् ॥ ६९ ॥
मुनिवेदनागसंख्यान् सर्वविद्यागुरूनथ ।
नाथान्नवाऽसृजत्तुर्यः कालमूर्तीन्महाप्रभान् ॥ ७० ॥
गुरुमण्डलमेवन्तु सृष्टमुग्रतरं तपः ।
तप्त्वा प्राप स्थानमपि त्वरिता पृष्ठभागके ॥ ७१ ॥
तत्र त्रिपङ्क्तिरूपेण मन्दिराणि क्रमेण तु ।
दिव्यसिद्धमानवौघगुरूणां संस्थितानि हि ॥ ७२ ॥
तत्र स्थानं प्राप्नुवन्ति त्रिपुरां परमेश्वरीम् ।
पूर्णोपासनयोगेनोपास्य शास्त्रोक्तमार्गतः ॥ ७३ ॥
गुरुभिर्बोधिताः पश्चात् प्रयान्ति परमं पदम् ।
इति ते पृष्टमाख्यातं रहस्यं परमं महत् ॥ ७४ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे श्रीचक्र-
देवतानिरूपणं सप्तपञ्चाशत्तमोऽध्यायः ॥ ४७१७ ॥

# अथाऽष्टपञ्चाशत्तमोऽध्यायः ।

अथ भूयश्चतुर्वक्त्रं त्वष्टा पप्रच्छ सादरम् ।
जगद्विधे त्वां पृच्छामि गुरवस्त्वौघरूपिणः ॥ १ ॥
कुतः समानसङ्ख्याका नाऽभवंस्तन्ममेरय ।
नाम तेषाञ्च सर्वेषामथाऽग्नेः कुण्डमीरितम् ॥ २ ॥
तत्राऽग्निश्चिन्मयः केन जातस्तदपि वर्णय ।
तत्र कुण्डे भवाञ्चिश्च स्त्रीरूपा केन हेतुना ॥ ३ ॥
विचिन्तिता पराशक्तिर्वदैतत् कारणं विभो ।
न तृप्याम्यद्भुतकथां संश्रृण्वन्नपि भूरिशः ॥ ४ ॥
को नु तृप्येत्पराशक्तेः स्वात्ममूर्तेः कथाऽमृतम् ।
पिबन्नपि चिरं दैवहतं स्थाणुमृते क्वचित् ॥ ५ ॥
तन्मे प्रब्रूहि भगवन् श्रोतव्यं यदि मे भवेत् ।
श्रुत्वा विश्वकृतोक्तं तत् प्रसन्नः प्रपितामहः ॥ ६ ॥
समाहितः श्रृणु कथां त्वष्टश्चित्रां पुरातनीम् ।
पार्वतीं सर्वतो गुप्तां प्रसन्नः प्रब्रुवे तव ॥ ७ ॥
मित्रीशाद्यास्तु ये सृष्टा राजराजेश्वरेण ते ॥
वाग्विद्यागुरवः सर्वे स्वच्छसंवित्तिरूपिणः ॥ ८ ॥
पश्यन्ती मध्यमा चेति वैखरी च परा तथा ।
चतुर्विधा शब्दमयी पराशक्तिर्विजृम्भते ॥ ९ ॥
तत् क्रमं ते प्रवक्ष्यामि सर्वत्रैव सुगोपितम् ।
त्रिपुराख्या हि या शक्तिः स्वच्छसंवेदनामयी ॥ १० ॥
न तत्र वागिन्द्रियाणि मनो वाऽप्यस्ति सर्वथा ।
सर्वास्तिसारभूताऽऽत्मरूपिणी परमेश्वरी ॥ ११ ॥

न धर्मो धर्मवान् वाऽपि सर्वधर्मविवर्जनात् ।
सर्वाऽऽश्रयचितिः स्वच्छा केवला वागगोचरा ॥ १२ ॥
तस्य चैतन्यमात्मेति न ततो विद्यतेऽधिकम् ।
तदेव सर्वस्वातन्त्र्यमतो मायाख्यमीरितम् ॥ १३ ॥
अतर्क्याऽपर्यनुयोज्यमाहात्म्यमखिलाऽऽश्रयम् ।
स्वयं स्वात्मानममलं विकल्पयति भूरिशः ॥ १४ ॥
लीलयैव सर्वजगज्जालमेष समीरतः ।
विकल्प एव शब्दात्मा स्थूलमध्यविभेदतः ॥ १५ ॥
सूक्ष्मकारणभेदाभ्यां चतुर्विधमिति स्थितम् ।
तत्र स्थूलन्तु यद्रूपं वैखरीति प्रकीर्तितम् ॥ १६ ॥
तत्र ध्वन्यात्मको व्यक्तो वर्णात्मा व्यक्त ईरितः ।
तल्लौकिकाऽलौकिकत्वाद्विधा सर्वत्र संस्थितः ॥ १७ ॥
तत्राऽव्यक्तः सप्तविधो नादब्रह्माङ्कुरात्मकः
षड्जर्षभौ च गान्धारमध्यपञ्चमधैवताः ॥ १८ ॥
निषाद इति सप्तैते तन्त्रीकण्ठादिजाः स्वराः ।
रागाऽभिधभूताऽग्निदस्रनागसंख्याविभेदिनः ॥ १९ ॥
एवं भूयो भेदेन तु न सङ्ख्येया भवन्ति ते ।
तदेतद्देवसंस्थानं गुरवः सप्तसङ्ख्यकाः ॥ २० ॥
दिव्यौघास्तेन सम्प्रोक्ता मित्रीशेन प्रभाविताः ।
व्यक्तस्त्वलौकिको विद्यामयः कूटचतुष्टयम् ॥ २१ ॥
तदाश्रयाः सिद्धगणास्तेनैते वेदसङ्ख्यकाः ।
सिद्धौघगुरवः प्रोक्ताः षष्ठीशप्रतिभाविताः ॥ २२ ॥
लौकिको मातृकाऽऽत्मा स्यादष्टकूटेश्वरीमयः ।
तत्संश्रया मानवाः स्युरतस्ता वसुसंख्यकाः ॥ २३ ॥
एकोनविंशतिमिता एवमोघत्रयस्थिताः ।
औड्डीशप्रभवा एते वसुसंख्यास्तु मानवाः ॥ २४ ॥

शब्दः कालमयः सर्वो मात्रात्रयपराऽवधिः ।
ध्वनिराशिः समायुक्तो वर्णाराश्यष्टकेन च ॥ २५ ॥
तेन स्युर्नवनाथा वै चर्यानाथसमुद्भवाः ।
कालस्याऽवच्छेदकास्ते तुरीयपदसंश्रयाः ॥२६ ॥
प्रकाशोऽथ विमर्शाख्योऽथाऽऽनन्दो ज्ञानसंज्ञकः ।
सत्यः पूर्णः स्वभावाऽऽख्यः प्रतिभः सुभगाऽभिधः ॥ २७॥
इति मे नवनाथास्तु ओघानामधिनायकाः ।
ओघश्चतुर्विधो विद्याविभेदाद्गुरुभेदतः ॥ २८ ॥
मिश्रितत्वाच्छक्तिमिश्रा गुरवः संव्यवस्थिताः ।
ओघस्तु पञ्चमोऽपि स्याद्गुरुविद्याप्रवर्तकः ॥ २९ ॥
द्वादशैकादशरसमितास्ते चक्रबाह्यगाः ।
वयं दिव्यभावाः सिद्धाः कुमाराद्याश्च मानवाः ॥ ३० ॥
नृसिंहाद्या इति प्रोक्ता गुरवस्त्वोघसम्भवाः ।
अथाऽग्नेश्चिन्मयत्वं ते वर्णयामि क्रमाच्छृणु ॥ ३१ ॥
गुणमूर्तौ तृतीयो यो महादेवो महेश्वरः ।
तमःक्रियः सत्त्वमूर्तिर्विकसच्चिन्मयाऽन्तरः ॥ ३२ ॥
देहिनां देहमध्यस्थं मार्गत्रयमनामयम् ।
दक्षवाममध्यसंस्थं पिङ्गलेडासुषुम्णकम् ॥ ३३ ॥
इच्छाक्रियाज्ञानमयं तत्र भिन्नं द्वयं स्थितम् ।
बद्धं मध्यं ज्ञानमार्गं विद्वांसः प्राहुरार्यकाः ॥ ३४ ॥
चित्स्पन्दरूपिणी रुद्धा पार्श्वाभ्यामूर्ध्वनिर्गता ।
क्रियामिच्छां चेतयति मर्त्यांस्तेन हि चेतनाः ॥ ३५ ॥
क्रियेच्छामात्रसंयुक्ता ज्ञानमार्गस्य रोधतः ।
आश्रयीभूतचिन्मात्रस्योर्ध्ववाहाच्च चेतनाः ॥ ३६ ॥
तिरश्चामूर्ध्वमार्गाणां संरोधात्तिर्यगा स्थितेः ।
न चेतयन्ति ते भूतं भव्यञ्च क्वाचिदात्मनि ॥ ३७ ॥

तेनाऽचेतनतुल्यास्ते तिर्यञ्चः सर्व एव हि ।
एवं स्थिते महादेवो यस्त्रिनेत्रस्ततोऽधिकः ॥ ३८ ॥
अस्माकमन्तःसम्भिन्ना मध्यनाडी चिदास्पदा ।
तेनाऽन्तरस्मद्विज्ञानं पूर्णं समुपलक्ष्यते ॥ ३९ ॥
महादेवस्याऽन्तरे तु ज्ञानोद्रेकात्तदूर्ध्वतः ।
फालदेशे विनिर्भिन्ना मध्यनाडी चिदात्मिका ॥ ४० ॥
अन्तस्तमोद्रेकभावाच्चिदेवाऽग्नितया स्थिता ।
तस्मात्तन्नेत्रसम्भूतश्चिदग्निरिति विश्रुतः ॥ ४१ ॥
अथ तत्तेऽभिधास्यामि स्त्रीरूपा चिन्तिता यतः ।
शृणु लोके विश्वकर्मन् यत्सुखं तच्चिदात्मकम् ॥ ४२ ॥
अतः सुखे पशूनाञ्च प्रीतिः सर्वात्मना स्थिता ।
सुखावहं सुन्दरञ्च लोके प्रत्यक्षभावनात् ॥ ४३ ॥
योषिद्रूपं सुन्दरञ्च तस्माल्लोके जनैः सदा ।
प्रेक्ष्यते योषितां रूपं सुखसाधनभावतः ॥ ४४ ॥
अन्यच्च तेऽभिधास्यामि सा या चिद्रूपिणी परा ।
स्ववैभवात्मकं विश्वं स्वातन्त्र्येण प्रकाशितम् ॥ ४५ ॥
नियत्या स्वाऽऽत्मनः शक्त्या नियतं सर्वमेव हि ।
अभिमानो वृथा मोहादहं कर्तेति संस्थितः ॥ ४६ ॥
यदि कर्ता स्वयं स्याच्चेत् कुतोऽन्यत् प्रसमीक्ष्यते ।
तथाऽप्यसम्मतप्राप्तिर्भवेद्वा कथमीरय ॥ ४७ ॥
तस्मात् सृष्ट्यादिकं किञ्चित् सर्वं तस्या विजृम्भितम् ।
तस्माद्योषिन्मयध्यानं तयैव प्रविभावितम् ॥ ४८ ॥
सर्वं विश्वस्य वैचित्र्यं तत्स्वातन्त्र्यनिबन्धनम् ।
एवं स्थिता महाराज्ञी चिन्तामणिगृहे तदा ॥ ४९ ॥
महापद्मवनाऽन्तःस्थं वीक्ष्य तद्गृहराजकम् ।
मत्वा तदपि नो सम्यङ्महादेवः सदाशिवः ॥ ५० ॥

श्रीदेव्याज्ञां समादाय निर्ममे प्रोक्तवत्पुरम् ।
ब्रह्माण्डेषु स्थिता देवा दैत्या मर्त्यादयोऽपि ये ॥ ५१ ॥
उपास्य त्रिपुरेशानीं सालोक्यं मुक्तिमाययुः ।
ते तत्र तत्तत्स्थानेषु निवसन्ति पृथक् पृथक् ॥ ५२ ॥
इन्द्रब्रह्मादयोऽप्येवं निवसन्ति चिरं पुरे ।
तत्तद्ब्रमान्तरभुवि स्वाम्यं प्राप्य सुनिर्मलम् ॥ ५३ ॥
तत्तत्कालप्रमाणस्य नियुतं प्रोष्य वै ततः ।
विशन्ति परमं भावमवाङ्मनसगोचरम् ॥ ५४ ॥
तदन्तरे तु सम्प्राप्ता विधीन्द्रेन्दुमुखादयः ।
पूर्वं संस्थितसायुज्यं लब्ध्वा तिष्ठन्ति सर्वतः ॥ ५५ ॥
साम्प्रतं यो विधिस्तत्र विद्यते तेन संयुताः ।
ब्रह्माण्डान्तरसम्प्राप्ताः षष्टिसाहस्रसंख्यकाः ॥ ५६ ॥
षट्शतश्च त्रिषष्टिश्च सायुज्यं ब्रह्मणा गताः ।
इति ते सर्वमाख्यातं मानं श्रीपुरसंस्थितम् ॥ ५७ ॥
अत्र मेरौ प्रोक्तरीत्या पुरं रचय सुन्दरम् ।
यत्र श्रीपुरसाम्राज्ञी त्रिपुराम्बा भविष्यति ॥ ५८ ॥
वयं यत्र स्थितां नित्यं पश्यामो नेत्रसुन्दरीम् ।
इति धातृवचः श्रुत्वा विश्वकर्माऽतिविस्मितः ॥ ५९ ॥
निर्मातुं श्रीपुरं देव्या मेरुश्रृङ्गे मनो दधे ।
विभावयन् विधिप्रोक्तं हर्षनिर्भरिताऽन्तरः ॥ ६० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललितामाहात्म्ये श्रीपुरवर्णनेऽष्टपञ्चाशत्तमोऽध्यायः ॥४७७७॥

---

# अथैकोनषष्टितमोऽध्यायः ।

एवं श्रुत्वा हयग्रीववाक्यमत्यन्तसुन्दरम् ।
कुम्भोद्भवः प्राह भूयस्तत्कथाश्रवणोत्सुकः ॥ १ ॥
भगवन्नश्ववदन भण्डदैत्यः समागतः ।
तपो विघ्नं निर्जराणां चिकीर्षन् वन्हिनाऽऽहूतान् ॥ २ ॥
देवान्निशाम्य विमुखः प्रयातः शून्यपत्तनम् ।
ततः किमकरोत्तत्र तन्मे वद सुविस्तरम् ॥ ३ ॥
संशृण्वन् ललितशान्त्याः कथां कथयतस्तव ।
पुनः श्रोतुं समीहा मे वर्धतेऽतितरां ननु ॥ ४ ॥
एवं पृष्टः कुम्भजेन मुनिः प्राह हयाऽऽननः ।
शृणु कुम्भोद्भव कथां विचित्रां परमाऽद्भुताम् ॥ ५ ॥
अपयाते भण्डदैत्ये देवर्षिरथ नारदः ।
शून्यकं प्रत्याजगाम शरदभ्रमिवाऽम्बरात् ॥ ६ ॥
तमायान्तं देवमुनिं भण्डदैत्यो विहायसि ।
ददर्श वृष्टमेघाभं वादयन् वल्लकीं शुभाम् ॥ ७ ॥
समुद्गम्य समानीय मुनिं दैत्यः प्रपूजयत् ।
सम्पूज्य विधिना प्राह कृताञ्जलिरिदं वचः ॥ ८ ॥
देवर्षे स्वागतं नूनं चिरात्तेऽहं समीप्सितः ।
कृपया पश्य शिष्यं ते दुर्लभं ते कृपेक्षणम् ॥ ९ ॥
ब्रूहि कच्चिन्निर्जराणां प्रक्षीणानां स्थितिं स्थिराम् ।
प्रायो विप्रा भीरवो हि गुरुर्मे भयमोहितः ॥ १० ॥
मद्बाहुवीर्यमविदं देवाऽसुरभयावहम् ।
देवाः शक्तिमुपासीनाः प्रसन्ना यदि सा भवेत् ॥ ११ ॥

पराजयस्ते ध्रुवं स्यात्तस्माद्विहितं समाचर ।
इत्युक्तोऽहं दैत्यगणैस्तत्राऽऽयातो जिघांसया ॥ १२ ॥
वन्हिज्वालाऽवलीढांस्तान् दृष्ट्वा देवान् सवासवान् ।
हृष्टः प्रत्यागतः स्थानं तत्र पृच्छामि प्रस्तुतम् ॥ १३ ॥
कथं दावाग्निना ग्रस्ता देवा भस्मत्वमाययुः ।
कश्चित्तत्र विमुक्तो वा तन्मे शंस मुनीश्वर ॥ १४ ॥
पृष्ट एवं देवमुनिः प्रहस्य प्राह दैत्यपम् ।
दैत्येश्वरेभ्योऽसूया मे न कर्तव्या कदाचन ॥ १५ ॥
नाऽनृतं कुत्रचिद्ब्रूमो वयं सत्यैकसंश्रयाः ।
प्रभाषसे कथं मुग्ध इवत्वं पण्डितोऽपि सन् ॥ १६ ॥
विपरीतो ननु विधिर्यस्मात्ते बुद्धिरीदृशी ।
शोकस्थाने हर्षयुतो यतस्त्वं वीक्षितो मया ॥ १७ ॥
सुसमृद्धाः शत्रवस्ते महादेवीसमाश्रयात् ।
आविर्भूता त्वद्वधाय तोषिता शक्रमुख्यकैः ॥ १८ ॥
चिदग्निकुण्डान्निर्याता ललिता परमेश्वरी ।
सर्वलोकेश्वरी दिव्यरूपाऽद्भुतमहाबला ॥ १९ ॥
सर्वाऽऽयुधसमुपेता शक्तिसङ्घैः परीवृता ।
समेष्यति त्वां निहन्तुं किं तुष्यसि हि मूढवत् ॥ २० ॥
श्रुत्वा नारदसम्प्रोक्तं प्रहस्य आह दैत्यराट् ।
नूनं मया पुरैवोक्तं विप्राः प्रकृतिभीरवः ॥ २१ ॥
मुने जानासि नो मां त्वं साक्षान्मृत्योर्भयङ्करम् ।
विष्णुः सुरेष्वतिबली स युद्धे मे पराजितः ॥ २२ ॥
पञ्चोत्तरशताण्डानामधिपोऽहं पराक्रमी ।
देवासुरादिस्रष्टाऽहं लोकशस्त्राऽस्त्रसन्ततेः ॥ २३ ॥
ममवशे स्थिता ब्रह्मविष्णुमुख्यपरम्पराः ।
कथं भीतोऽसि स्त्रीहेतोर्निसर्गादबलाः स्त्रियः ॥ २४ ॥

तदन्तरे भण्डदैत्यपत्न्यः सम्मोहिनीमुखाः ।
देवर्षिमानयामासुरवरोधे सखीगणैः ॥ २५ ॥
आगतं मुनिशार्दूलं सम्पूज्याऽऽसनमुख्यकैः ।
पाद्याऽर्घ्यैः सुवलिद्रव्यैः प्रणम्य प्राहुरादरात् ॥ २६ ॥
देवर्षे त्वत्प्रसादेन धन्यास्त्वद्दर्शनेन च ।
वयमस्मान्निरीक्षस्व दृष्ट्या करुणया भृशम् ॥ २७ ॥
वयन्तु गुरुपत्नीभ्यः शुश्रुमाऽत्यन्तसाध्वसम् ।
उत्पन्ना ललिता देवी देवैः समभिपूजिता ॥ २८ ॥
भर्तुर्वधाय नो देवसौख्याय परमेश्वरी ।
तद्बोधयाऽसुरपतिं यथानाशं न चैष्यति ॥ २९ ॥
शरणं त्वां प्रपन्नाःस्मो निमग्ना दुःखसागरे ।
उद्धराऽस्मान् दुःखसिन्धोः पाहि नः परिचारिकाः ॥३०॥
इत्युक्त्वा चरणौ स्पृष्ट्वा रुरुदुर्दैत्ययोषितः ।
वीक्ष्य तासां प्ररुदितं करुणाऽऽक्रान्तमानसः ॥ ३१ ॥
आनाय्य दैत्यराजं तं तत्र प्रोवाच नारदः ।
दैत्येश्वर मदुक्तं त्वं शृणु वाक्यं सुधासमम् ॥ ३२ ॥
मा शोचयाऽबलाश्चेमा मा नाशाय च बान्धवान् ।
हितवक्ता हि लोकेषु जनः परमदुर्लभः ॥ ३३ ॥
अविचार्याऽऽगमाऽपायं मधुरं यः समक्षतः ।
वदेत्तमभिजानीयाच्छत्रुं मित्रस्वरूपिणम् ॥ ३४ ॥
यो ब्रूयादागमाऽपायं विमृष्य परया धिया ।
कटुकं ह्यौषधसमं जानीयान्मित्रमेव तम् ॥ ३५ ॥
गुरुः काव्योऽत्यन्तधीरदीर्घाऽमर्शी प्रिये हितः ।
तदुक्तमत्यन्तपथ्यं रोगिणो भेषजं यथा ॥ ३६ ॥
गुरूक्तमपरित्यज्य सौभाग्यं परमाप्नुयात् ।
तदहं प्रब्रवीमि त्वां यत्तदैत्यपते शृणु ॥ ३७ ॥

मन्यसे यत्त्वमात्मानं सर्वेभ्यो बलवत्तरम् ।
तत्राऽपि शृणु वक्ष्यामि कैटभो दैत्यशेखरः ॥ ३८ ॥
यस्याऽभून्मेदसश्चेयं मेदिनी लोकधारिणी ।
विष्णुना निहतो युद्धेऽप्रतिमां बलपौरुषे ॥ ३९ ॥
स्त्रियं तामबलां यत्त्वं मन्यसे तत् पुरा श्रुतम् ।
शुम्भासुरनिशुम्भौ च महिषश्च बलोद्धतः ।
हतोऽनयैव परया महासुरबलैर्वृतः ॥ ४० ॥
अलं ते बलदर्पेण रिपुणा स्वाऽऽत्मघातिना ।
न किं स्मरसि गौर्या ते युद्धे पूर्वपराभवम् ॥ ४१ ॥
गौर्यादिभिर्विशिष्टेयं ललिता परमेश्वरी ।
सेव्यते याऽनेककोटिगौरीप्रमुखशक्तिभिः ॥ ४२ ॥
नाऽस्याः शक्तेः पादनखसमं ब्रह्माण्डमण्डलम् ।
यस्य प्रसादादेव त्वं मन्यसे बलिनां वरम् ॥ ४३ ॥
सोऽपि तस्या महादेवः पीठपादांशसम्भवः ।
तदलं स्वाऽऽत्मसर्वार्थनाशनाऽभिनिवेशतः ॥ ४४ ॥
प्रपश्येमाः प्रियाः साध्वीः शोचन्तीर्दैन्यमागताः ।
अहं त्वां तत्र नेष्यामि पराशक्तेः पदान्तिकम् ॥ ४५ ॥
क्षामयामि च तां देवीं त्वदर्थं सर्वयत्नतः ।
राज्यं प्रसाधि पाताले दिवं शासतु वासवः ॥ ४६ ॥
रक्ष दैत्यपरीवारान् मा विनङ्क्षीः प्रियैः सह ।
न करिष्यसि मत्प्रोक्तं यदा तर्हि विनङ्क्ष्यसि ॥ ४७ ॥
दैत्येश कच्चिन्मत्प्रोक्तं श्रुतं मनसि रोचते ।
धिया सात्त्विकया चैतद्विमृश स्वात्मरक्षणम् ॥ ४८ ॥
श्रुत्वेत्थं नारदवचो भण्डदैत्यः प्रहस्य च ।
हस्तेनाऽऽदाय देवर्षिं प्रारोहत् सौधशेखरम् ॥ ४९ ॥
मेरुशृङ्गप्रतीकाशं काञ्चनं सौधशेखरे ।

वातायने मणिमये विवेश मृदुविष्टरे ॥ ५० ॥
सन्निवेश्याऽऽसने तत्र देवर्षिं मृदुतूलजे।
देवर्षे मयि रोषं त्वं न शिष्ये कर्तुमर्हसि ॥ ५१ ॥
जानामि त्वां महाभक्तं पराशक्तेः पदाऽऽश्रयम्।
यद्ब्रवीष्यखिलं तच्चेनाऽन्यथा विदितं मया ॥ ५२ ॥
जानासि सर्वं मे वृत्तं लीलयैवं ब्रवीषि माम् ॥ ५३ ॥
अहं ननु रमादेव्या दूतो माणिक्यशेखरः।
कदाचित् सा तोषणाय त्रिपुराया महत्तपः ॥ ५४ ॥
चक्रेऽब्दानां त्रिनियुतं जाह्नवीतटसंश्रया।
कदाचित् किन्नरी काचित्तारुण्याऽमृतपूरिता ॥ ५५ ॥
उन्मज्जन्ती निमज्जन्ती पतिता जाह्नवीजले।
स्रोतोऽभिरुह्यमाना सा त्रातारं नाऽधिगच्छत ॥ ५६ ॥
दृष्ट्वा करुणयाऽऽविष्ट आप्लुतः स्वर्धुनीजले।
तां पृष्ठतः समारोप्य तटमारुह्य सत्वरम् ॥ ५७ ॥
तां समावेशयं तत्र विज्वरा सा क्षणाद्बभौ।
तदङ्गस्पर्शनाच्चाहं लावण्यस्य समीक्षणात् ॥ ५८ ॥
कामेन मोहितो जातस्तामवोचमिमां गिरम्।
कल्याणि त्वं रक्षिताऽसि मया मृत्योर्मुखादिव ॥ ५९ ॥
त्वदङ्गसङ्गात् कामार्तो जातोऽहं रक्ष मामिह।
कृते प्रतिकृतिं कुर्याच्छक्तः सर्वात्मना स्वयम् ॥ ६० ॥
अकुर्वन् प्रत्युपकृतिं निहन्त्यात्मानमात्मना।
तन्मां कामाग्निनाऽऽविष्टमार्तं ते शरणाऽऽगतम् ॥ ६१ ॥
रक्षाऽधुना स्वात्मदानान्नो चेत् प्राणान् जहाम्यहम्।
श्रुत्वा मद्विपरीतोक्तिं साध्वी सा किन्नरी वचः ॥ ६२ ॥
अब्रवीदमृतस्यन्दि मधुरं गुणवत्तरम्।
मा बुद्धिभ्रंशमागच्छ किन्नरीपतिदेवता ॥ ६३ ॥

तपस्यभिरतो भर्ता इतो मे क्रोशपञ्चके ।
आस्ते तस्य प्रिया चाऽस्मि तरुच्छायेव सङ्गता ॥ ६४ ॥
नाऽतिवर्ते पतिं क्वाऽपि शृण्वन् यदपि कारणम् ।
य आपद्भ्यः समुद्धर्ता यश्च बाल्ये प्रपोषकः ॥ ६५ ॥
स पिता धर्मतः शास्त्रे प्रोक्तस्तस्मात् पिता मम ।
त्वं ते सुता धर्मतोऽहं नैवं मां वक्तुमर्हसि ॥ ६६ ॥
पुरुषः स्वात्मनः शत्रुं मनो यच्छेदपस्थलात् ।
नाशयेत्तं मनः शीघ्रं मनो यस्य वशे न हि ॥ ६७ ॥
विमृश स्वच्छया बुद्ध्या धीरया लोकचेष्टितम् ।
स्त्रीसुखं सर्वतो ह्येकं न विशेषः पशुष्वपि ॥ ६८ ॥
तत् स्वकान्तास्वेव रतिं मनसा भर नाऽन्यतः ।
पतिव्रतानां क्रोधाग्निं प्राप्य मा भस्मतां व्रज ॥ ६९ ॥
इत्यादिहितवाक्यानि वदन्ती बहुधाऽप्यहम् ।
काममोहपरीताऽऽत्मा परामर्ष्टुमुपद्रुतः ॥ ७० ॥
सा क्रोशन्ती रमादेव्याश्चरणान्तिकमागता ।
वदन्ती रक्ष रक्षेति ततस्तस्यास्तु सम्मुखे ॥ ७१ ॥
परामृष्टोत्तरीये सा मया कामान्धचक्षुषा ।
अथ दृष्ट्वाऽनयं देवी रमा क्रुद्धा शशाप माम् ॥ ७२ ॥
नैषा देवतनुर्मूढ दुर्विनीत तवोचिता ।
कृत्यं तवाऽसुरं ह्येतत्ततस्त्वमसुरो भव ॥ ७३ ॥
तं शापं घोररूपन्तु श्रुत्वा कामस्य वेगतः ।
प्रतिबुद्धः शोकसिन्धुनिमग्नोऽभवमञ्जसा ॥ ७४ ॥
समाश्वस्ता किन्नरी सा नत्वा स्वभवनं ययौ ।
पुनः प्राह रमादेवी मां मग्नं शोकसागरे ॥ ७५ ॥
धिगनार्य मत्समीपं न वस्तुं त्वमिहाऽर्हसि ।
शरीरं ते घोररूपं परदाराऽभिमर्शनम् ॥ ७६ ॥

गच्छत्वदृश्यतां सद्यो भव वायुशरीरकः ।
एवं तया प्रशप्तोऽहं भीतो देवीश्रियं तदा ॥ ७७ ॥
प्रसादयं बहुविधैः प्रार्थनैः सन्नतैरपि ।
एवं चिरेण भूयोऽपि प्रसन्नाऽभवदाम्बिका ॥ ७८ ॥
मया शापविमोक्षाय प्रार्थिता साऽऽह मां तदा ।
माणिक्यशेखर कृतं त्वयाऽत्यन्तविनिन्दितम् ॥ ७९ ॥
नैतस्याऽपचितिं चान्यां पश्यामि स्वल्पमप्युत ।
नाऽन्यथा मे भवेच्छापः कृतं भोक्तव्यमेव ते ॥ ८० ॥
नष्टदेहो वायुभूतश्चिरं स्थित्वाऽसुरो भव ।
किन्तु तां पतितां तोये दययोद्धृतवानसि ॥ ८१ ॥
तेन पुण्यप्रपाकेन विभवं सर्वतोऽधिकम् ।
प्राप्याऽनेकाऽण्डनाथस्त्वं भुक्त्वा भोगान् यथेप्सितान् ॥ ८२ ॥
महादेव्या हतः सङ्ख्ये प्राप्य तल्लोकसंस्थितिम् ।
प्राप्य तत्र चिरं कालमसुरैः प्रतिपूजितः ॥ ८३ ॥
अन्ते तत्पदमासाद्य न भूयः सम्भविष्यसि ।
श्रुत्वैतद्वचनं भूयो ह्यपृच्छं लोकमातरम् ॥ ८४ ॥
देवि का सा महादेवी निहतः स्यां यया मृधे ।
सा किं त्वत्तोऽधिका देवी नाऽहं जाने तवाऽधिकाम् ॥ ८५ ॥
ब्रूहि सा कतमा का च तस्याः किं वा महित्वकम् ।
इत्यापृष्टा महादेवी प्राह श्रीलोकमातृका ॥ ८६ ॥
माणिक्यशेखर शृणु सा देवी सर्वतः परा ।
महाचितिस्वरूपा सा यस्याः प्रकृतिधर्मतः ॥ ८७ ॥
ब्रह्मा विष्णुर्हरश्चैव प्रत्यण्डं गुणमूर्तयः ।
ईश्वरोऽपि तिरोधानकरस्त्रिगुणजेश्वरः ॥ ८८ ॥
तत्राऽप्यनुग्रहकरः सदाशिव इतीरितः ।
यस्या ईक्षणलेशेनाऽनुग्रहादखिलं सृजेत् ॥ ८९ ॥
अनादिकालतो मायापाशितानणुसङ्घकान् ।
अनुग्रहान्मोचयितुं सृजत्येष महेश्वरः ॥ ९० ॥

न मुक्तिः प्रलयस्थानामणूनां शून्यभावतः ।
देहभावं समापन्ना सृष्टौ ज्ञातुं प्रभान्विताः ॥ ९१ ॥
सोऽपि तस्या अंशभूत इति सा साररूपिणी ।
सर्वाऽऽत्मरूपा परमा चितिशक्तिरुदीरिता ॥ ९२ ॥
सैवाऽस्त्यत्र जगच्चित्रभिति दर्पणसम्मिता ।
सर्वाऽऽत्मना बृंहणेन ब्रह्मशब्देन शब्दिता ॥ ९३ ॥
न स्त्री न पण्डो न पुमांस्त्रिपुरा चिच्छरीरिणी ।
अवाङ्मनसगम्या सा चेत्यानिर्मुक्तचिन्मयी ॥ ९४ ॥
सा तु सप्तदशी नित्या परमेश्वरसंश्रया ।
द्वे कले तस्य नाथस्य कार्यता कर्तृतेति च ॥ ९५ ॥
कार्यता स्यात् षोडशधा कर्तृता चैकरूपिणी ।
इन्द्रियाणान्तु दशकं भूतानां पञ्चकं तथा ॥ ९६ ॥
अन्तःकरणमित्येवं कार्यता षोडशाऽऽत्मिका ।
कर्तृता स्यात् सप्तदशी कला नित्या महेशितुः ॥ ९७ ॥
सा षोडशाऽऽश्रयीभूता संवित् सर्वस्य कारणम् ।
तां हित्वा न शिवः कश्चित् ब्रह्मा वाऽपि सदाशिवः ॥९८॥
ईश्वरः शिवविष्णू वा ब्रह्मा वा देवतागणः ।
नरा नार्यः प्राणिजातं जङ्गमं स्थावरं तथा ॥ ९९ ॥
प्राणवच्चाऽप्राणकं वा न किञ्चिदवशिष्यते ।
भूषणेषु स्वर्णमिव जलवत् सागरादिषु ॥ १०० ॥
शून्यत्वमिव चाऽऽकाशे स्पर्शवत् स्पन्दवत्परे ।
तेजस्युष्णं यथा रूपं जले स्पन्दो रसो यथा ॥ १०१ ॥
पृथिव्यां गन्धकाठिन्ये इव सा सर्वतः स्थिता ।
सा स्वाऽऽभासितलीलाऽऽत्मलोकोद्धरणहेतुना ॥ १०२ ॥
परश्रीचक्रनगरसाम्राज्ञीत्वमधिष्ठिता ।
जाता वयं तदङ्गेभ्यो वाक्श्रीगौरीसमाह्वयाः ॥१०३॥
काली क्रोधात् समुत्पन्ना महाकालेन संयुता ।
वचनात्तु तथा जाता तारा भैरवसंयुता ॥ १०४ ॥

पराक्रमात् समुद्भूता दुर्गा दुर्गतिनाशिनी ।
क्रौर्यात् प्रत्यङ्गिरोद्भूता महाशरभसंयुता ॥ १०५ ॥
शौर्याज्जाता शूलिनी च मालिनी वाक्समुद्भवा ।
चण्डिका चण्डशब्देन धूम्रा क्रूरेक्षणेन च ॥ १०६ ॥
एवं सर्वास्तदङ्गोत्था न हि काचित्ततः परा ।
तस्या लीलाऽवतारेण ललिताऽऽख्येन सङ्गरे ॥ १०७ ॥
हतस्तल्लोकवसतिं चिरं प्राप्य विमोक्ष्यसे ।
इत्युक्तस्तु तया पश्चात् प्रार्थनं कृतवान् पुनः ॥ १०८ ॥
एवञ्चेदम्ब भवतु किञ्चित्त्वां प्रार्थये पुनः ।
आसुरत्वं भवेद्योनिसम्बन्धेन विना मम ॥ १०९ ॥
पराशक्तेर्मुख्यभक्तशरीरान्मे जनिर्भवेत् ।
न जातु मामियं प्रज्ञा जहातु जगदम्बिके ॥ ११० ॥
प्रार्थितैवं तथैवाऽस्तु तवेत्युक्तवती रमा ।
तदहं भक्तमूर्धन्यात् कामाऽङ्गाज्जनिमाप्तवान् ॥ १११ ॥
पञ्चोत्तरशताऽण्डानामाधिपत्यं चिरं कृतम् ।
विषयानुत्तमान् भुक्त्वा नित्यञ्च चिरकालतः ॥ ११२ ॥
निर्विण्णो विषयेभ्योऽहं काङ्क्षे तस्या वधं स्वकम् ।
वस्तुं तस्याः समीपेऽहं तल्लोके कृतनिश्चयः ॥ ११३ ॥
तस्याः पदाम्बुजं ध्यायन्नजस्रं परमेश्वरीम् ।
प्रतीक्षामि कदाऽऽगत्य वधिष्यति च मामिति ॥ ११४ ॥
पुत्रपौत्रकलत्राद्यैर्निहतस्तु तया रणे ।
तल्लोके निवसाम्याशु इति मे त्वरते मनः ॥ ११५ ॥
तद्गत्वाऽश्वास्य मे भार्यां बोधयाऽऽश्वविवेकतः ।
इति श्रुत्वा भण्डवचो नारदो हृष्टमानसः ॥ ११६ ॥
संश्लाघ्य भण्डदैत्येशं समाश्वास्य च तत्प्रियाम् ।
जगामाऽभिमतं स्थानं नारदो मुनिसत्तमः ॥ ११७ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललितामाहात्म्ये नारदसंवादे एकोनषष्टितमोऽध्यायः ॥४८९४॥

---

# अथ षष्टितमोऽध्यायः ।

इत्युदीरितमाकर्ण्य नारदो हारितायनम् ।
प्रसन्नः प्राह संहृष्टः स्वाऽनुभूतनिरूपणात् ॥ १ ॥
हारितायन साधूक्तं त्वयैतच्चिरकालजम् ।
मानसं बाह्यमपि च ममाऽऽसीद्यत् पुरातनम् ॥ २ ॥
तद्यथातथनिर्देशात् स्मृतं मे प्रोक्तवत्क्रमात् ।
चिरकालेनाऽन्तरितमप्यद्येव तवोक्तितः ॥ ३ ॥
भात्यन्तःकरणे सर्वं धन्यस्त्वमसि भूतले ।
यत्पराकृपया सर्वं विदितं बाह्यमान्तरम् ॥ ४ ॥
तत्त्वां पृच्छामि मे ब्रूहि संशयोऽन्तश्चिरात् स्थितः ।
अतीतमान्तरं बाह्यं कथं ते विदितं ह्यभूत ॥ ५ ॥
अदृष्टमश्रुतं वाऽपि कथं जानासि सुव्रत ।
श्रुत्वेत्थं नारदवचः प्रहस्य हारितायनः ॥ ६ ॥
देवर्षे शृणु वक्ष्यामि बह्वल्पमिदमीरितम् ।
अत्रोपपत्तिरपरे खण्डे सम्यग्भविष्यति ॥ ७ ॥
यथाऽनुभूतं स्मरति जन एवमहं ननु ।
वरेण ब्रह्मणः सर्वबाह्यं वाऽप्यान्तरं तथा ॥ ८ ॥
त्वत्प्रसादेन जिता सा मात्रेणैवाऽनुभूतवत् ।
संस्मराम्यविदग्धं श्रीदेव्याः सुप्रसादतः ॥ ९ ॥
ततो दत्तगुरुः प्राह रामायैकाग्रचेतसे ।
शृणु भार्गव तत्पश्चाद्धयाऽऽस्यः कुम्भजन्मने ॥ १० ॥
प्राह युद्धकथां भण्डाऽसुरदेव्योर्महाद्भुताम् ।
शृणु कुम्भोद्भव मुने होमाऽग्निजनितां शिवाम् ॥ ११ ॥

ललितां सर्वलोकैकसुन्दरीं परमेश्वरीम् ।
दृष्ट्वा शक्रमुखा देवाश्चिन्तयामासुरान्तरे ॥ १२ ॥
नन्वियं तरुणी सर्वलोकसौन्दर्यमन्दिरा ।
लतेवाऽऽलम्बरहिता भर्तृहीना न शोभते ॥ १३ ॥
देवचिन्तां विदित्वैवं ब्रह्माद्या गुणमूर्तयः ।
दध्युः कामेश्वरं यावत्तावत्सोऽपि विनिर्गतः ॥ १४ ॥
तनोस्तस्या महादेव्याः समानाऽऽकारभूषणः ।
दृष्ट्वाऽनुरूपं देव्यास्ते पतिरस्या वरो मतः ॥ १५ ॥
भूयाद्विवाहः अनयोरित्याशंसनतत्पराः ।
तद्विज्ञाय विधिमुखाः प्रार्थ्य देवीं परात्पराम् ॥ १६ ॥
महोत्सवविधानेन विवाहं समकल्पयन् ।
अथ देवैः प्रार्थिता सा ललिता परमेश्वरी ॥ १७ ॥
वधाय भण्डदैत्यस्य परिवारानकल्पयत् ।
समस्ताऽऽवरणौघांश्च स्मरणात् समवाऽसृजत् ॥ १८ ॥
तदन्तरे तु देवर्षिः प्राप्तो देव्याः पदाऽन्तिकम् ।
प्रणम्य दण्डवद्देवीं स्तुत्वा विविधसंस्तवैः ॥ १९ ॥
कृताञ्जलिर्बभाषे तां विनीतो नतकन्धरः ।
देव्यहं समनुप्राप्तो भण्डदैत्यस्य सन्निधेः ॥ २० ॥
आगच्छति महासेनां विकर्षन् बलवत्तरः ।
तदहं प्रेषितस्तेन त्वामाहाऽसुरभूपतिः ॥ २१ ॥
अबला त्वं कस्य बलान्मया योद्धुं हि वाञ्छसि ।
अज्ञात्वा मद्बलं मुग्धा विनाशं मा व्रजाऽधुना ॥ २२ ॥
भव मत्पार्श्वगा शीघ्रं त्यज ब्रह्ममुखान् सुरान् ।
भूयः पराजितान्मत्तो मायामात्रसमाश्रितान ॥ २३ ॥
मया विरुध्य कोऽप्यत्र योषिद्वा पुरुषोऽपि वा ।
क्वेयात् सुखं मृत्युमुखप्रविष्टमिव सर्वथा ॥ २४ ॥

इत्युक्त्वा युद्धसन्नाहं परमं सम्यगादिशत् ।
मन्येऽहं त्वं जितमाया तेन धीरेण साम्प्रतम् ॥ २५ ॥
पृच्छामि देवि त्वां किञ्चिद्रहस्याज्ञापयाऽऽशु माम् ।
निशम्य नारदोक्तिं तां मन्त्रिणीं समवेक्षत ॥ २६ ॥
विदित्वा देव्यभिप्रायामिङ्गितज्ञाऽथ मन्त्रिणी ।
करेणाऽऽदाय देवर्षिं रहसि प्राविशत् परा ॥ २७ ॥
अथ तत्र समासीना प्राह तं मन्त्रनायिका ।
पृच्छ नारद प्रष्टव्यं यत्ते मनसि विद्यते ॥ २८ ॥
जानामि त्वां परादेव्याः पादभक्तिपरायणम् ।
नूनं नाऽविदितं तेऽस्ति लोके श्रीपादसंश्रयात् ॥ २९ ॥
तथाऽपि पृच्छ तेऽभीष्टं छेद्मि संशयमाहितम् ।
आज्ञप्त एवं मन्त्रिण्या प्रणम्य सुरतापसः ॥ ३० ॥
प्राह बद्धाञ्जलिपुटः प्रश्नशब्दान् सुपेशलान् ।
देवि भण्डासुरो दृष्टो मया सम्यक् परीक्षितः ॥ ३१ ॥
नूनं स सर्वभक्तानामस्माकं शेखरायितः ।
कथं युद्धे पराभूयात् परापादैकसंश्रयः ॥ ३२ ॥
अथाऽपि तेन सम्प्रोक्तमहं देव्या हतो युधि ।
चिरं निवस्य श्रीलोके ततो गच्छामि तत्पदम् ॥ ३३ ॥
तल्लोकबाधकः कस्माद्धीनाऽऽचारोऽपि मुच्यते ।
वयं कस्माल्लोकगतिं विन्दामस्तद्ब्रवीहि मे ॥ ३४ ॥
पृष्टैनं श्यामला राज्ञी नारदं प्रत्युवाच ह ।
शृणु मे नारद वचो रहस्यमपि साम्प्रतम् ॥ ३५ ॥
श्रीपादसंश्रयः क्वाऽपि हीयते न कदाचन ।
तस्योत्तमपदप्राप्तिः सर्वथा स्यान्न चाऽन्यथा ॥ ३६ ॥
यथा बालस्याऽऽमयिनो माता पथ्यमपीच्छितम् ।
न यच्छति तथा पथ्यमौषधं ह्यनपेक्षितम् ॥ ३७ ॥

दधाति बलतस्त्वेवं तत्प्रपोषणतत्परा ।
तं भक्तशेखरं हत्वा दुष्कृतं विततं कृतम् ॥ ३८ ॥
दर्शनाऽऽलापशस्त्राद्यैर्विनाऽस्य बलवत्तरम् ।
स्वपदं प्रापयत्याशु तथा शृणु ब्रवीम्यहम् ॥ ३९ ॥
यस्तु यं प्रार्थयत्यर्थमेकान्तेन स्वचेतसा ।
तस्मै तत्त्रिपुरा शीघ्रं प्रयच्छति न संशयः ॥ ४० ॥
प्रतिकूलमभीष्टस्य यावन्नो नाशमृच्छति ।
तावदेव तस्य चिरं ततः स्वेष्टमवाप्नुयात् ॥ ४१ ॥
शृणु त्वं नित्यमुक्तोऽसि न ते मुक्तिः समीहिता ।
अज्ञस्य तत्समीहा स्यात् ज्ञस्य वै तत्कुतो भवेत् ॥ ४२ ॥
बद्धो हि मुक्तिं वाञ्छेत यथा भुक्तिं बुभुक्षितः
तृप्तः कथं भुक्तिमिच्छेत्तत्राऽन्यो भोजयेत् कथम् ॥ ४३ ॥
अप्राप्तस्य प्राप्तिरिष्टा का या प्राप्तस्य सम्भवेत् ।
आकाशस्येव पूर्णस्य किं प्राप्तिः स्यात् कथं वद ॥ ४४ ॥
तस्मादज्ञस्य प्राप्तव्यो मुक्तिस्ते ज्ञस्य सा कथम् ।
श्रुत्वेत्थं नारदो मन्त्रिणीप्रोक्तं हृष्टमानसः ॥ ४५ ॥
प्रणम्य ताञ्च त्रिपुरां जीवन्मुक्तो जगाम ह ।
अथ सा त्रिपुरा देवी भण्डाऽसुरवधं प्रति ॥ ४६ ॥
प्रार्थिता विधिविष्ण्वाद्यैर्निर्ययौ शक्तिसेनया ।
चक्रराजसमाकाररथे पर्वनवाऽऽत्मके ॥ ४७ ॥
ऊर्ध्वोर्ध्वभूमिकाऽऽकारसदृशे समलङ्कृते ।
ऊर्ध्वभूमौ स्थिता युद्धसम्भारौघसुसम्भृता ॥ ४८ ॥
अभेद्यकवचदांशिताऽतिविभीषणी ।
शस्त्राऽस्त्रनिचयोपेता रोषाऽरुणितलोचना ॥ ४९ ॥
धनुर्वेदो मूर्तिधरः स्थितः पार्श्वे कृताञ्जलिः ।
शस्त्राण्यस्त्राणि च तथा मूर्तिमन्ति स्थितानि वै ॥ ५० ॥

अधोधः क्रमतः सर्वास्तथाऽऽवरुणशक्तयः ।
देशिताश्चित्रकवचैः शस्त्राऽऽस्त्रैः सुपरिष्कृताः ॥ ५१ ॥
गुर्वौघा अपि सन्नद्धाः संस्थिता युद्धकाङ्क्षिणः ।
तद्दक्षिणे तु मन्त्रेशी सप्तपर्वविराजिते ॥ ५२ ॥
संस्थिता सपरीवारा सन्नद्धा युद्धकर्मणि ।
शुकादिश्यामलावर्गैः सेव्यमाना विनिर्ययौ ॥ ५३ ॥
दिव्यपानाऽऽमोदमदघूर्णनेत्राऽम्बुजद्वयी ।
तथाविधा ऽऽसङ्ख्यकोटिमातङ्गतनयाऽऽवृता ॥ ५४ ॥
गानैर्वाद्यैर्नर्तनैश्च सोपहासपटूक्तिभिः ।
मन्त्रिणी तोषयन्त्यस्ता विलासैर्हास्यमिश्रितैः ॥ ५५ ॥
साऽपि श्रीललिता राज्ञी मन्त्रिणी मन्त्रकोविदा ।
तस्या मनोऽनुकूलेषु मन्त्रेषु नियतं स्थिता ॥ ५६ ॥
विशेषतो गीतवाद्यनर्मक्रीडासमुत्सुका ।
अथ तद्वामतो दण्डसाम्राज्ञी शूकराऽऽनना ॥ ५७ ॥
किरिचक्रे पञ्चपर्वयुते सर्वोर्ध्वतः स्थिता ।
परीवृता ह्यनेकाभिर्जम्भिन्यादिस्वशक्तिभिः ॥ ५८ ॥
क्रोधमूर्तिः क्रूरतरा क्षमापनपरप्रिया ।
अपराधपरान् सर्वान् दण्डयन्ती सदा स्थिता ॥ ५९ ॥
महामहिषसिंहाभ्यां वाहनाभ्यां स्वपार्श्वयोः ।
स्थिताभ्यां सीरमुसलमुखशस्त्रैश्च शोभिनीम् ॥ ६० ॥
वटुकैर्योगिनीभिश्च कोटिभिः सा परीवृता ।
तथा श्रीललितादेश्या बाला त्रिपुरसुन्दरी ॥ ६१ ॥
कुमारी लघुचक्राख्यस्पन्दने समवस्थिता ।
निजावृत्तिमहाशक्तिगणैः परिसमावृता ॥ ६२ ॥
तस्या दक्षिणपार्श्वे तु प्राप्ता सम्पदधीश्वरी ।
रणकोलाहलाऽऽख्याने त्रिधा भिन्नेऽतिभीषणे ॥ ६३ ॥

वारणेन्द्रे विन्ध्यगिरिमहाशिखरसन्निभे ।
निसर्गमत्ते संरूढा महाङ्कुशविधारिणी ॥ ६४ ॥
तामन्वसंख्या मत्तेभाः कोटिकोट्यतिसङ्ख्यकाः ।
विन्ध्योद्भवा मलयजाः प्राग्ज्योतिषसमुद्भवाः ॥ ६५ ॥
सुशिक्षिता युद्धगतिपरिज्ञाः षष्टिहायनाः ।
प्रचेलुः सम्पदीशित्रीपरीवारसुशक्तिभिः ॥ ६६ ॥
शस्त्राऽस्त्रसमरज्ञाभिरधिरूढाः सुवेगिनः ।
तस्याः श्रिता वामभागमश्वारूढा महेश्वरी ॥ ६७ ॥
अपराजितसंज्ञानमश्वरत्नं महोन्नतम् ।
गन्धर्वजातिजं वायुजवनं समधिष्ठिता ॥ ६८ ॥
उच्चैःश्रवपरीभाविसर्वलक्षणमण्डितः ।
शुक्त्यर्धशुक्तिमणिभिर्देवस्वस्तिकपद्मकैः ॥ ६९ ॥
गण्डिकादिशुभैश्चिह्नैश्चिह्नितो हेमभासुरः ।
सूक्ष्माऽवधानतोऽप्यस्य न विदुः खुरसङ्गतिम् ॥ ७० ॥
अभिज्ञः स्वामिचित्तस्य परागमविधानवित् ।
तामन्वश्वा असंख्येयाः सिन्धुटङ्कणसम्भवाः ॥ ७१ ॥
आरट्टाः पार्वतीयाश्च वार्वराश्च सुतेजनाः ।
शोणाः श्यामाः सिताः पीताः कपिलाः पाटलास्तथा॥७२॥
हरिता धूम्रवर्णाश्च कल्माषा नीललोहिताः ।
विचित्राश्चारुसर्वाङ्गा घनकेसरमण्डनाः ॥ ७३ ॥
विचित्रशिक्षागतयो नृत्यज्ञा लयसङ्गताः ।
विचित्रशस्त्राऽस्त्रधरशक्तिभिः समधिष्ठिताः ॥ ७४ ॥
पुरः पतन्तः परितस्तरङ्गा इव वारिधेः ।
दारयन्तोऽवनिमिव खुरक्षेपैर्विनिर्ययुः ॥ ७५ ॥
खुरविक्षेपसम्भूतैश्चटच्चटरवैर्युतैः ।
ह्रेषितस्वनसङ्घातैर्गजचीत्कारमिश्रितैः ॥ ७६ ॥

शक्तीनां सिंहनादैश्च वीराऽऽस्फोटमहास्वनैः ।
जयभेरीरवैर्मृण्डुमृदङ्गझल्लरीरवैः ॥ ७७ ॥
गोमुखाऽऽनकनिःसाणतालकाहलनिःस्वनैः ।
मिश्रितः श्रीचक्रराजरथनेमिगणोद्भवः ॥ ७८ ॥
महाध्वनिः सर्वदिशं पूरयन्निव सम्बभौ ।
श्रुत्वा श्रीललितादेव्या जैत्रयात्रामहास्वनम् ॥ ७९ ॥
दैत्याः साध्वसमत्यन्तं मृत्योरिव समाययुः ।
भण्डदैत्यः स्वात्मवधं चिराभिलषितं तथा ॥ ८० ॥
श्रुत्वा तं निम्नदं द्वारादध्यवस्यत सर्वथा ।
अथ दैत्यान् समालोक्य त्रस्तान् शुष्यन्मुखाम्बुजान् ॥८१॥
कृपया परयाऽऽविष्ट इदं स्वान्तरचिन्तयत् ।
नूनं हीमे मम कृते विनश्यन्ति सबान्धवाः ॥ ८२ ॥
लोके मृत्योर्नातिरिक्तं भयमस्ति कदाचन ।
मत्कृते निहतानेतान् शोचिष्यन्ति प्रियात्मजाः ॥ ८३ ॥
भगिन्यो मातृमुख्याश्च हन्त वैशसमीदृशम् ।
तदहं पुरतो गत्वा युद्ध्वा श्रीललिताम्बया ॥ ८४ ॥
तच्छस्त्राऽनलपूतात्मा प्रपद्येऽभिमतां गतिम् ।
शोचयामि कुतस्त्वेता वियोज्य स्वस्वबान्धवैः ॥ ८५ ॥
तदलं घोरनिधनारोदनेन कृतेन मे ।
शक्तोऽरक्षन् स्वीयजनं शोकस्थानात् कथञ्चन ॥ ८६ ॥
बन्धुघ्नः स तु विज्ञेयः पुरुषादसमो जनैः ।
अथैवं मयि निर्गत्य प्राप्ते देव्या निजाऽत्ययम् ॥ ८७ ॥
बन्धूनां शोक एवाऽस्यान्मया विरहिताऽऽत्मनाम् ।
कथं मयि हते देवशासना मम बान्धवाः ॥ ८८ ॥
महर्द्धिशोभना देवैः परीभूता हृतर्द्धयः ।
भविष्यन्ति शुचा हीना न चैतदपि सम्मतम् ॥ ८९ ॥

प्राप्य सर्वोच्छ्रयं कश्चिदाभिभूतः कथं भवेत् ।
नूनं मयि हते देव्या भ्रातृपुत्रादिबान्धवाः ॥ ९० ॥
शूरास्तु तत्क्षणे एव वीर्यक्रोधसमुच्छ्रिताः ।
युद्धाऽग्नौ स्वात्मशलभान् भस्मीकुर्युर्न संशयः ॥ ९१ ॥
अथ ये कातराः स्वल्पवीर्यास्तेऽवनिरन्ध्रगाः ।
देवा इव दैन्यभाजो वियुक्ताः स्त्रीसुतादिभिः ॥ ९२ ॥
शोचयन्तस्तथाऽन्योन्यं भवेयुर्वै मृताऽधिकाः ।
आरोदनन्तु बन्धूनां नास्तीति न कथञ्चन ॥ ९३ ॥
तद्वृथा किं चिन्तनेन मन्ये नाऽन्यदितो वरम् ।
आदौ देव्या हतेष्वेषु ततोऽहमभवं हतः ॥ ९४ ॥
अयं श्रेयान् हि मे भाति सन्त्यत्र बहुशो गुणाः ।
पावनं देवताशस्त्रैः प्राप्तिर्लोकोत्तमस्य च ॥ ९५ ॥
परीभवाऽऽद्यसम्भावः कीर्तिर्लोके महत्तरा ।
अत्राऽपि मन्ये स्त्रीबालमुखानां न हि सम्भवम् ॥ ९६ ॥
अप्रतीकार्यमेतत्तु दैवमत्र परायणम् ।
अथ चैतन्मया पूर्वं श्रुतमब्जासनान्मुखात् ॥ ९७ ॥
सा परा त्रिपुरा देवी भक्तवाञ्छाप्रपूरणी ।
इति तन्मे परीवारं न शोषयतु सा परा ॥ ९८ ॥
न मे चैतेनाऽहमेषां परमार्थस्वभावतः ।
जानानस्याऽपि मे देवी मोहमुत्पादयत्यलम् ॥ ९९ ॥
तन्मे विचिन्तनं व्यर्थं स्वप्नसारे जगत्स्थितौ ।
तत्त्वां सर्वेन भावेन शरणं प्राप्तवानहम् ॥ १०० ॥
तन्मां नियोजयेद्यद्वन्नियुक्तोऽस्मि न चाऽन्यथा ।
पाहि मां परमेशानि शरण्ये शरणागतम् ॥ १०१ ॥
मोहजालप्रबन्धान्मामभ्युद्धर्तुमिहाऽर्हसि ।
इति प्रार्थ्य महादेवीं त्रिपुरां भण्डदानवः ॥ १०२ ॥

निशाम्य दैन्यमापन्नान् बन्धून् स्वपरितःस्थितान् ।
हर्षयन्निति होवाच पराक्रमयुतं वचः ॥ १०३ ॥
हे दानवा मम वचः शृणुध्वं श्रद्धया परम् ।
न मे मृत्युः कुतोऽप्यस्ति मृत्योर्मृत्युरहं यतः ॥ १०४ ॥
शस्त्राणाञ्च तथाऽस्त्राणां महामायाविनामपि ।
सचराऽचरलोकानां स्रष्टाऽहं वः समक्षतः ॥ १०५ ॥
पञ्चोत्तरशताण्डानामीश्वरोऽहं महाबलः ।
तत्रेमामबलां ज्ञात्वा न शीघ्रं हन्तुमुत्सहे ॥ १०६ ॥
युद्धनिर्भरतामस्या दृष्ट्वा निर्जित्य लीलया ।
स्वाऽन्तःपुरं समानीय महाऽऽनन्दमुपैम्यलम् ॥ १०७ ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये. भण्डासुरवि-
चारे षष्टितमोऽध्यायः ॥ ६० ॥

# अथैकषष्टितमोऽध्यायः ।

इत्युक्त्वा पार्श्वगं सूतं दीर्घग्रीवं महाऽसुरः ।
बभाषे क्रोधताम्राक्षो रथः संयुज्यतामिति ॥ १ ॥
अथ सूतो निमेषेण सन्नद्धं स्यन्दनोत्तमम् ।
निवेदयद्दैत्यनाथे प्रणम्याऽतिविनीतवत् ॥ २ ॥
आरुरोह रथश्रेष्ठं भण्डदैत्यः प्रतापनः ।
गृहीत्वा सशरं चापं प्रचचालाऽतिरोषितः ॥ ३ ॥
दृष्ट्वा श्रुत्वा च दैत्येशं व्रजन्तं युद्धकारणात् ।
दैत्या विनिर्ययुः शीघ्रं सन्नद्धाः क्रोधमूर्च्छिताः ॥ ४ ॥
पुरतः पार्श्वयोः पृष्ठे सर्वतः परिवार्य तम् ।
निर्ययुर्दैत्यसुभटाः सङ्घशो धृतहेतयः ॥ ५ ॥
भण्डदैत्यसुताः सर्वे भण्डतुल्यपराक्रमाः ।
कुटिलाक्षोऽग्रजस्तेषाममेयबलविक्रमः ॥ ६ ॥
स्यन्दनस्थाः सुसन्नद्धाः समरेष्वनिवर्तिनः ।
अक्षोहिणीशतयुता भण्डदैत्याऽग्रतो ययुः ॥ ७ ॥
अहम्पूर्विकया युद्धे ये संस्पर्धन्ति नित्यशः ।
पार्श्वयोर्दैत्यराजस्य विषङ्गश्च विशुक्रकः ॥ ८ ॥
चेलतुर्भ्रातरौ तस्य विष्णुतुल्यपराक्रमौ ।
रथस्थौ तौ महाचापौ क्रुधाऽरुणितलोचनौ ॥ ९ ॥
ग्रसन्ताविव सैन्यानि परेषां ययुतुर्द्रुतम् ।
प्रत्येकमक्षोहिणीनां शतेन परिवारितौ ॥ १० ॥
उग्रकर्ममुखास्तस्य मन्त्रिणो भीमविक्रमाः ।
अनुजग्मुर्दैत्यपतिं शताऽक्षोहिणिसंयुताः ॥ ११ ॥

एवं प्रचलिते दैत्यनाथे समरकारणात् ।
रराज राजपथ्या तु प्रावृट्कालनदी यथा ॥ १२ ॥
कूलङ्कषा दैत्यजला रथाऽऽवर्तसमाकुला ।
तुरङ्गभङ्गा द्विरदग्राहा खेटककच्छपी ॥ १३ ॥
उष्णीषतत्फेनपिण्डाऽऽढ्या पताकालहरीयुता ।
खड्गदीर्घमहासर्पा तूणीमत्स्यविचित्रिता ॥ १४ ॥
दानवाऽऽस्याऽम्भोजतातिस्तन्नेत्रशफरीगणा ।
विचित्रच्छत्रहंसादिपतत्रिततिमालिनी ॥ १५ ॥
उच्चलत्तुरङ्गोत्तुङ्गशिशुमारकुलाऽऽविला ।
रथघोषमहाघोषा वाहिनी जलवाहिनी ॥ १६ ॥
निर्गमत्तत्पुरद्वारान्महतो रत्नगोपुरात् ।
कुल्यामुखाज्जलं ह्याशु केदारे प्रसृतं यथा ॥ १७ ॥
पुरद्वाराद्वाहिनी सा प्रसृताऽभूद्बहिः क्षणात् ।
तदन्तरे तु विजयः प्राप्य दैत्येश्वरं द्रुतम् ॥ १८ ॥
मन्त्री प्रणम्य विन्यस्य मूर्ध्न्यञ्जलिपुटं स्थितः ।
प्राप्याऽऽज्ञामवदत्तं स वचस्तत्कालसम्मतम् ॥ १९ ॥
दैत्येश्वर महाराज कीर्तिस्ते सर्वतस्तता ।
प्रतापतपनश्चोर्ध्वे ब्रह्माण्डानि तपत्यसौ ॥ २० ॥
बलवत्तर एषोऽत्र हरिरेको विभावितः ।
सोऽपि त्वत्सम्मुखं प्राप्य युद्धे भूयः पराजितः ॥ २१ ॥
त्वां युद्धे जयेत्कश्चिदिति मोघो हि निश्चयः ।
तथाऽपि मन्त्रिणा काले चाऽर्थशास्त्रप्रमाणतः ॥ २२ ॥
विमृश्य राज्ञे वक्तव्यं हितमागमसम्मितम् ।
काले युक्तमनुक्त्वा तु न स्रुमन्त्रित्वमर्हति ॥ २३ ॥
चत्वार एव सम्प्रोक्ता उपाया दण्डशासने ।
तत्रैकैकोऽपि स्वे काले सम्मतो बलवत्तरः ॥ २४ ॥

अन्यकालेऽन्यमातिष्ठन्मूढदुर्मन्त्रिमन्त्रितः ।
नश्येदसदृशं भुक्त्वा ह्यामयीवाऽगदं नृपः ॥ २५ ॥
तत्राऽध्यवसितं प्राज्ञैर्दूतचारदृशाऽखिलम् ।
दृष्ट्वा युद्धं प्रकुर्वीत तेन श्रेयः समाप्नुयात् ॥ २६ ॥
तत्सम्मतौ दूतचारौ परेषु प्रेषय द्रुतम् ।
तावत् सेनाऽपि सन्नद्धा भविष्यत्यविशङ्किता ॥ २७ ॥
रक्षणं नगरस्याऽपि विहितं स्याद्यथाविधि ।
विज्ञप्तव्यमिदं काले मया ते स्वामिनः पुरः ॥ २८ ॥
विज्ञापितं तद्भवता कर्तव्यं कालसम्मितम् ।
निशम्य मन्त्रिवाक्यं तद्युक्तं कुशलसम्मतम् ॥ २९ ॥
समाधानाय बन्धूनामभिमन्यत मन्त्रणम् ।
निवेश्य सेनापतिभिः सेनां तत्र विभागशः ॥ ३० ॥
पुररक्षाविधानाय कुटिलाक्षमवाऽसृजत् ।
अमित्रघ्नं मन्त्रिवर्यं प्राह भण्डमहाऽऽसुरः ॥ ३१ ॥
गच्छाऽमित्रघ्न मच्छास्त्या तां ब्रूहि ललिताऽभिधाम् ।
नाऽहं त्वां सुन्दरीं देवीं सर्वथा संश्रयोचिताम् ॥ ३२ ॥
वाञ्छामि योद्धुं तत्कस्मान्मां योद्धुं त्वमिहागता ।
युद्धश्रद्धा तवेयं वै सम्मतं मम सर्वथा ॥ ३३ ॥
न बिभेमि महायुद्धे तत्त्वद्युद्धे भयं कुतः ।
किन्त्वहं त्वां प्रियाकारां दृष्ट्वा द्रुतं मनोभवाम् ॥ ३४ ॥
तत्सुराणां परित्यज्य पक्षं मत्संश्रया भव ।
साम्ना युद्धेन वाऽपि त्वां करोम्यात्मसमाश्रयाम् ॥ ३५ ॥
मद्विरोधेन ते लोके हानिरेव न संशयः ।
विमृश्यैतद्द्रुततरं पक्षमेकतरं भज ॥ ३६ ॥
इति तां ब्रूहि साम्ना च ज्ञात्वा तस्याः समीहितम् ।
बलञ्च सर्वं तत्कृत्यं ज्ञात्वा याहि द्रुतं पुनः ॥ ३७ ॥

अथ मायाविनां श्रेष्ठं विद्युन्मालिनमाह सः ।
विद्युन्मालिन्महाप्राज्ञ मायाविकुलनायक ॥ ३८ ॥
परैरविदितो गत्वा देव्याः सेनामशेषतः ।
बलञ्च व्यवसायश्च भेदच्छिद्राणि युक्तितः ॥ ३९ ॥
विचार्य शीघ्रमायाहि त्वमत्र कुशलोऽह्यसि ।
आज्ञप्ताविति तौ दैत्यौ ययतुः शक्तिवाहिनीम् ॥ ४० ॥
अनन्तामम्बुधिप्रख्यामविगाह्य कथञ्चन ।
अमित्रघ्नो महासेनां विवेशाऽब्धिं यथा प्लवः ॥ ४१ ॥
उत्खातकरवालाभिः शक्तिभिः परिरक्षिताम् ।
प्रविष्टमात्रं शक्त्या स गृहीतो बलवत्तरः ॥ ४२ ॥
परिचारिकया दण्डनाथायाः काञ्चनाऽऽभया ।
चपेटया निहत्याऽऽशु गृहीत्वा तं गलेऽसुरम् ॥ ४३ ॥
तर्जयामास वचनैः क्रोधयुक्तैर्भयङ्करैः ।
कस्त्वं सेनामिमां देव्या दण्डराज्ञीसुरक्षिताम् ॥ ४४ ॥
अविज्ञाप्य प्रविष्टोऽसि चाऽस्मत्प्रमुखवीक्षिताम् ।
आज्ञां विना दण्डराज्याः प्रविष्टो वाहिनीमिमाम् ॥ ४५ ॥
जीवन्नो यास्यासि पुनः साक्षान्मृत्युरपि स्वयम् ।
तदन्तरे तु सम्प्राप्ताः सैन्यरक्षा नियोजिताः ॥ ४६ ॥
दण्डिन्याज्ञाप्रतीक्षिण्यः शक्तयः शतशः क्षणात् ।
प्रबलाभिः समाक्रुष्टो निहतो मूर्छितोऽभवत् ॥ ४७ ॥
श्रुत्वा तदन्तरे दण्डनाथा दैत्यस्य सङ्गतिम् ।
समक्षं ह्यानयामास स्वपरीचारशक्तिभिः ॥ ४८ ॥
पृष्ट्वा तं ह्यागतं दूतं ज्ञात्वा भण्डाऽसुरस्य हि ।
विज्ञाप्य मन्त्रिणीं देव्याः समीपमानयत्ततः ॥ ४९ ॥
साऽपि विज्ञाप्य तं प्राप्तं ललितायाः समीपतः ।
नीत्वा पप्रच्छ दूतं तं कृत्यं तत्राऽऽगमस्य हि ॥ ५० ॥

प्राह प्रणम्याऽमित्रघ्नः प्राप्तो भण्डनिदेशतः ।
दूतोऽहं तस्य दैत्यस्य तदुक्तं संब्रवीम्यहम् ॥ ५१ ॥
आवयोर्न विरोधोऽस्ति कुतो योद्धुं समागता ।
युद्धाऽप्ययुद्धा वा देवि भूयास्त्वं मत्समाश्रया ॥ ५२ ॥
तत्त्वामात्मप्रियां हृद्यां योधयामि कथं वद ।
तद्देवान् सम्परित्यज्य भव त्वं मत्समाश्रया ॥ ५३ ॥
वक्तव्येति त्वया गत्वा ज्ञेयं सेनाबलाऽबलम् ।
इत्यहं प्रेषितस्तेन दूतवध्या[धः] विनिन्दिता[नः] ॥ ५४ ॥
शास्त्रेषु दूतस्य वधं न वदन्ति विचक्षणाः ।
इति मत्वा प्रविष्टोऽहं लक्षितः सर्वशक्तिभिः ॥ ५५ ॥
प्रविष्टमात्रोऽभिमतो गृहीतस्तव शक्तिभिः ।
आनीतस्ते समक्षञ्चेत्येतत् सर्वं निरूपितम् ॥ ५६ ॥
अग्रे देव्येव शरणमयोग्यो मे वधो भवेत् ।
निशम्य दूतवचनं ललिताया मतं ततः ॥ ५७ ॥
विदित्वा मन्त्रिणी प्राह स्मेरमञ्जुलभाषिणी ।
माभैर्दैत्य व्रज सुखं हन्यसे न कदाचन ॥ ५८ ॥
ब्रूयास्तं भण्डदैत्येशं मयोक्तमवधार्य च ।
यदि ते जीवने श्रद्धा द्रुतमागत्य निर्भयः ॥ ५९ ॥
शरणीकुरु देवेशीं त्रिलोकीं सम्परित्यज ।
त्रिलोकेशो भवेदिन्द्रः त्वं पाताले निवत्स्यसि ॥ ६० ॥
कुरु सख्यं गोत्रभिदा सपुत्रबलवाहनः ।
अन्यथा न विमोक्षस्ते जीवन् क्काऽपि भविष्यति ॥ ६१ ॥
नयैनं दण्डसाम्राज्ञि सेनां दर्शय सर्वतः ।
दर्शयित्वा ततः सेनाबहिरेणं विसर्जय ॥ ६२ ॥
इत्याज्ञप्ता कोलमुखी प्रदर्श्य स्वामनीकिनीम् ।
व्यसर्जयत्तं दैतेयं बहिः सेनानिवेशनात् ॥ ६३ ॥

अथ मुक्तः पुनर्जातमात्मानं सममंसत ।
जगाम राजसविधं भयविह्वलितान्तरः ॥ ६४ ॥
विद्युन्माली निशाम्यैनममित्रघ्नं विहिंसितम् ।
भीतो रात्रौ महामायः कौशिकीं तनुमाश्रितः ॥ ६५ ॥
विचरन्नाकाशमार्गे सेनां सर्वां निशामयत् ।
गणयित्वा सर्वसेनां व्रजन्तं गगनाऽध्वनः ॥ ६६ ॥
जग्राह काचिच्छक्तिस्तं खेचरी निशिरक्षिणी ।
गृहीतमात्रो मायावी प्रोड्डीय गगनोर्ध्वतः ॥ ६७ ॥
पञ्चाशद्योजनादूर्ध्वे युयोध स तया भृशम् ।
चिरं युद्ध्वा शूलहतस्तया मुक्तः कथञ्चन ॥ ६८ ॥
जगाम दैत्यनृपतिमीषत्प्राणाऽवशेषितः ।
पपात पुरतस्तस्य सूर्यस्योदयनं प्रति ॥ ६९ ॥
दृष्ट्वाऽग्रपतितं दैत्यं म्रियमाणं भृशं हतम् ।
भण्डासुरो जपन्मन्त्रं पस्पर्शाऽङ्गेषु पाणिना ॥ ७० ॥
मन्त्रस्पर्शनमात्रेण जीवितश्च गतव्यथः ।
उत्थाय प्रणनामाऽऽशु दैत्यराजं पुरस्थितम् ॥ ७१ ॥
अथ पृष्टः प्राह विद्युन्माली वृत्तं स्वकं क्रमात् ।
महाराज त्वत्समक्षं गतोऽमित्रघ्नसंयुतम् ॥ ७२ ॥
दृष्टवानस्मि तां सेनां प्रलयाम्बुधिसन्निभाम् ।
अथाऽमित्रघ्न एवाऽऽदौ प्रविवेश महाचमूम् ॥ ७३ ॥
पश्यतो मे क्षणेनैव गृहीतः शक्तिभिर्बलात् ।
मधुवन्मक्षिकाभिः स समाक्रान्तोऽथ शक्तिभिः ॥ ७४ ॥
क्षणेन विगतप्रज्ञः समभूद्बलवानपि ।
अशक्तः स्पन्दितुमपि क्व युद्धं क्व पलायनम् ॥ ७५ ॥
कथञ्चिदपि नो जीवेत् स इत्थं मम निश्चयः ।
तावद्भीतोऽप्यहं दूरात् पलायनपरोऽभवम् ॥ ७६ ॥

भवदाज्ञागौरवेण न निवृत्तोस्मि ते भयात्।
ततो दिनाऽवसानेऽहं मायाघूकत्वमास्थितः॥ ७७॥
उपर्युपरि सेनायाः सञ्चरंस्तां निशामयम्।
सा सेना महती दृष्टा भीमा भीषणनादिनी॥ ७८॥
संवर्तकालसंक्षुब्धमहोर्मिजलधिर्यथा।
दर्शनादेव सेनाया यास्यन्ति मृतिमासुराः॥ ७९॥
तत्र सर्वा महाभीमाः शक्तयो भीमविक्रमाः।
अहम्पूर्विकया युद्धं कर्तुमादौ समुत्सुकाः॥ ८०॥
तत्र वाला कुमारी या ललितायाः प्रियाऽऽत्मजा।
कुमारीभिः कोटिशतसंख्याभिः परिवारिता॥ ८१॥
शस्त्राऽस्त्रकौशलाऽभिज्ञा युद्धसन्नाहसम्भ्रमा।
भण्डपुत्रान् निहन्मीति सा व्रवीति पुनः पुनः॥ ८२॥
कुमार्योऽपि च ता ब्रूयुर्भण्डपुत्रसुवाहिनीम्।
नाशयामः क्षणेनाऽतिगर्जन्त्यः समरोत्सुकाः॥ ८३॥
अथ सम्पत्करी चाऽश्वाऽऽरूढाख्या शक्तिनायिका।
गजानश्वानसंख्यातान् महाशक्तिभिरास्थितान्॥ ८४॥
कर्षन्त्यौ ते वलोदग्रे वालापार्श्वद्वयाऽऽश्रिते।
अथ वाला पृष्ठतस्तु महारथनिवासिनी॥ ८५॥
ललिता श्रीमहादेवी नवाऽऽवरणशक्तिभिः।
अप्रमेयवलक्रौर्यशौर्ययुक्ताभिरावृता॥ ८६॥
तस्याः पार्श्वद्वये मन्त्रनाथा दण्डधराऽऽस्थिता।
प्रत्येकं रथमारूढा महाऽद्भुतपराक्रमा॥ ८७॥
अनेककोटिमातङ्गकन्याभिः स्वसमाऽऽत्मभिः।
चित्रवीर्याभिरमितः संवृता मन्त्रिणी स्थिता॥ ८८॥
वाराह्यपि महाभीमविकराऽऽकृतिनामभिः।
शक्तिभिर्वटुकाद्यैश्च संयुताऽतिरुषान्विता॥ ८९॥

सर्वत्र शक्तिसेनासु न मया क्वाऽपि लक्षितम् ।
यत्र ते वधवृत्तान्तसङ्गतिर्न हि संस्तुता ॥ ९० ॥
तत्रैकाऽप्यवरा शक्तिः सर्वमस्मद्बलं क्षणात् ।
नाशयेदिति मे बुद्धिर्व्यवसायं समास्थिता ॥ ९१ ॥
शतकोटिपरार्धानां कोट्यर्बुदशतात्मिका ।
सेनैवं शक्तिनिचिता दैत्यराज वदामि ते ॥ ९२ ॥
शक्तिरन्यतमा तेषु बले वीर्ये च विक्रमे ।
सर्वान् दैत्यगणानस्मानतितिष्ठति सर्वथा ॥ ९३ ॥
इत्युक्त्वा दैत्यराजं तं प्रणिपत्य कृताञ्जलिः ।
विद्युन्माली समभवत्तूष्णीं दैत्यसभागतः ॥ ९४ ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये चारवाक्यं
नामैकषष्टितमोऽध्यायः ॥ ५०९५ ॥

# अथ द्विषष्टितमोऽध्यायः ।

---

अथ क्षणादमित्रघ्नः प्राप्तो दैत्यसभान्तरम् ।
भण्डासुराऽन्ध्योरपतत् भयविह्वलितान्तरम् ॥ १ ॥
आश्वस्तः प्राह सचिवैः पृष्टो वृत्तं प्रवेपितः ।
महाराज त्वदाज्ञप्तो गतः शक्तिमहाचमूम् ॥ २ ॥
प्रविष्टः शक्तिभिस्ताभिर्गृहीतो बलवत्क्षणात् ।
न मे वीर्यं बलं वापि बभौ शत्त्यग्रतः क्वचित् ॥ ३ ॥
रविप्रभानिमग्नस्य खद्योतस्येव सुप्रभा ।
क्षणेन तासां ग्रहणाद्विसंज्ञोऽभवमञ्जसा ॥ ४ ॥
अथ नीतो दण्डनाथासविधं मृतवत् स्थितः ।
सा कुलाद्रिरिवोन्नम्रा क्रोडास्या काञ्चनप्रभा ॥ ५ ॥
क्रोधाग्निमुद्गिरन्तीव सुनेत्रैर्घर्घरारवा ।
तादृग्विधं शक्तिगणं तस्याः क्रोधप्रदीपितम् ॥ ६ ॥
दृष्ट्वाऽहमभवं भूयो श्वसितुञ्चाऽपि नो विभुः ।
तस्या नियोगान्नीतोऽहं शक्तिभिर्मन्त्रिणीपुरः ॥ ७ ॥
सा दृष्टा मन्त्रिणी देवी तापिच्छदलसान्निभा ।
सौन्दर्यकुलसाराऽङ्गी पूर्णतारुण्यगर्विता ॥ ८ ॥
मन्दस्मितमुखी पानमदमाद्यद्विलासिनी ।
गीतहास्यपरा नित्यं वीणावादननिष्ठिता ॥ ९ ॥
तस्याः प्रसन्ननेत्राब्जाऽमृतवर्षाऽभिजीवितः ।
अन्ववेक्षमहं सर्वसौभाग्यैकसमाश्रयाम् ॥ १० ॥
तयाऽनुयुक्तो निखिलमवदं तव भाषितम् ।
तया नीतो महाराज्ञ्याः समक्षमहमाश्वथ ॥ ११ ॥
सा दृष्टा ललिता राज्ञी महाविभवसंश्रया ।

सन्देशं वाचयन्मह्यं यत्तत्ते मन्त्रिणीमुखात् ॥ १२ ॥
वक्ष्यामि शृणु दैत्येश सावधानेन चेतसा ।
ब्रूयास्तं भण्डदैत्येशं जीवने यदि ते मतिः ॥ १३ ॥
त्रिलोकीं विसृजेन्द्राय शरणीकुरु मातरम् ।
निवस त्वं परीवारयुतः पातालसद्मनि ॥ १४ ॥
इन्द्रेण सङ्गतो भूयाः पुत्राऽमात्यादिसंयुतः ।
अकृत्वैवं न ते मोक्षो लोकाऽन्तरगतस्य च ॥ १५ ॥
इन्द्रशत्रुमहं त्वां तु (?) न नेष्याम्यात्मसंश्रयम् ।
इति त्वया तत्र गत्वा वक्तव्यो भण्डदानवः ॥ १६ ॥
तदन्तरे शक्तिरेका श्यामा तुरगसंश्रया ।
करालकरवालोद्यत्करा तत्र समाययौ ॥ ॥ १७ ॥
अवरुह्य स्ववाहनात् सा प्रणम्य ललिताऽम्बिकाम् ।
मन्त्रनाथाञ्च वृत्तान्तं बभाषे साऽनुयोजिता ॥ १८ ॥
प्रेषिता भण्डदैत्यस्य वाहिन्यां नगरेऽपि च ।
मद्भृत्याः शक्तयो गत्वा दृष्ट्वा सर्वं समागताः ॥ १९ ॥
ताभिर्विभावितं सर्वं सैन्यं नगरमेव च ।
इति वृत्तं तया प्रोक्तं सर्वमस्मत्समाश्रयम् ॥ २० ॥
दैत्यानां सैनिकानाञ्च मन्त्रिणामायुधस्य च ।
संख्यानं वाहनानाञ्च कोशानां दुर्गरक्षिणाम् ॥ २१ ॥
पुत्राणां ते तत्सुतानां तत्सुतानाञ्च सर्वशः ॥
न तयाऽविदितं किञ्चिन्नाऽस्ति बाह्याऽन्तरेषु च ॥ २२ ॥
स्त्रियः सर्वाः सुविदितास्तासाञ्चापि प्रभाषितम् ।
मन्त्रस्ते मन्त्रितोऽप्यत्र नाऽस्माभिर्विदितोऽपि यः ॥ २३ ॥
तया प्रोक्तोऽथ वचनं वृत्तञ्चापि पृथक् पृथक् ।
चित्रं मन्ये चिरादत्र वसन्नविदितश्च यत् ॥ ॥ २४ ॥
तत् सर्वञ्च तया प्रोक्तं यद्यथा समवस्थितम् ।
यत्त्वयाऽप्यत्र नो ज्ञातं तत्त्वया कथितं ननु ॥ २५ ॥
मन्येऽहं तद्बलं देव्या अजेयं दैत्यपुङ्गवैः ।

एकाऽपि शक्तिरवरा सर्वान्नो नाशयेत् क्षणात् ॥ २६ ॥
दैत्येश्वराऽहं ते सैन्ये बलिष्ठनवरो ननु ।
इन्द्रादयोऽपि विजिता मया भूयः समागमे ॥ २७ ॥
सोऽहं प्रविष्टमात्रोऽपि शक्त्या सामान्यया ननु ।
गृहीतो लीलयैवाऽऽशु हरिणा मृगशाववत् ॥ २८ ॥
यथा बालाः क्रीडनकमाच्छिद्याऽन्यकरस्थितम् ।
गृह्णन्त्यहं तथा ताभिर्गृहीतो बलवानपि ॥ २९ ॥
न मेऽभूत् स्पन्दितुमपि शक्तिः क्व नु विमोक्षणे ।
अशक्यं सर्वथा दैत्यैर्जेतुं नास्त्यत्र संशयः ॥ ३० ॥
इत्युक्त्वा विररामाऽथ दैत्यो दैत्येश्वराऽग्रतः ।
श्रुत्वेत्थं दैत्यवचनं भण्डः स्वाऽन्तरचिन्तयत् ॥ ३१ ॥
नूनं सा त्रिपुरेशानी कृपया मयि संश्रिते ।
प्रसादमकरोदद्य चिरकालाऽभिकाङ्क्षितम् ॥ ३२ ॥
यत्तया लोकमात्रोक्तं तदद्याऽवितथायितम् ।
धन्योऽहं त्रिपुरेशानीं दृष्ट्वा युद्धेऽनुभाव्य च ॥ ३३ ॥
तच्छस्त्राग्निमहाज्वालानिर्दग्धकलुषाऽङ्गकः ।
व्रजामि तल्लोकममुं महासुखसमाश्रयम् ॥ ३४ ॥
महापापसमुद्भूतो देहोऽयं पापसंश्रयः ।
दैत्यस्वभावविहिताश्चिरभारायितो ननु ॥ ३५ ॥
यथाऽऽविष्टिगृहीतो हि भारं क्षिप्त्वा पलायति ।
तथाऽहं दुःखदं देहममुं भारं विसृज्य तु ॥ ३६ ॥
पलायिष्ये सुखस्थानं न मे खेदोऽत्र विद्यते ।
नूनं वर्षसहस्राणां नियुतैर्देह एष मे ॥ ३७ ॥
सम्प्राप्तोऽत्यन्तसुखितामपि मे न हि रोचते ।
त एव भोगास्तद्राज्यं ताः स्त्रियस्तच्च सङ्गतम् ॥ ३८ ॥
अन्वहं सेवमानस्य सर्वं वैरस्यमागतम् ।
निर्विण्णोऽहं दृढतरमस्मात् पर्युषितात्मनः ॥ ३९ ॥
वाञ्छामि नाशं देहस्याऽऽमयं दीर्घाऽऽमयी यथा ।

परन्तु मे विरहिताः शोचिष्यन्ति प्रिया इमे ॥ ४० ॥
तथा तैरप्यहं हीनो न विन्दामि क्षणं सुखम् ।
आदौ वाऽनन्तरं वाऽपि दुःखदैव मृतिर्भवेत् ॥ ४१ ॥
तदेतद्विषमं भाति कथं नाऽर्तिर्भवेन्मम ।
एवं मे त्रिपुरा देवी कृपां कुर्यादभीप्सिताम् ॥ ४२ ॥
युगपद्यदि नो हन्यात् क्षेमं मे प्रतिभाति तत् ।
भक्तवाञ्छासमधिकफलदा सा निसर्गतः ॥ ४३ ॥
कुतो न पूरयेदिष्टं सा निजाङ्घ्र्याश्रयस्य मे ।
इत्थं विचिन्त्य मनसा नमस्कृत्य पराम्बिकाम् ॥ ४४ ॥
नाट्ये नट इव स्वैरं क्रोधमाहारयत् परम् ।
धिगस्त्वधम दैतेय कथं मम समक्षतः ॥ ४५ ॥
अप्रियां परसंश्लाघां कुर्वन्नपि न लज्जसे ।
परसंश्लाघनं यत्तल्लोके कापुरुषव्रतम् ॥ ४६ ॥
परन्तु बलिनं ज्ञात्वा न शूरः श्लाघते क्वचित् ।
बली वाप्यबलो वाऽपि शूरास्तत्र न बिभ्यति ॥ ४७ ॥
इत्युक्त्वा खड्गमुद्यम्य क्रुद्धः कालमहाऽहिवत् ।
वमन्निव नेत्रमुखात् क्रोधकाकोलपावकम् ॥ ४८ ॥
निर्ययौ नगरद्वारान्महाबिलमुखादिव ।
पश्यन्तु दैत्या ये भीताः तस्यामेति पराक्रमम् ॥ ४९ ॥
अद्य मां समरे प्राप्य पुनः सा न भविष्यति ।
वदन्तमेव दैत्येशं सूतः सरथमग्रतः ॥ ५० ॥
अभ्याजगामाऽथ सोऽपि रथमारुह्य संययौ ।
तं मेनिरे जनाः कालं जगत्संहरणोद्यतम् ॥ ५१ ॥
नाऽस्य क्रोधाग्निमासाद्य जगद्भूयो भविष्यति ।
इत्यूचुः सहसा सर्वे भीताश्चाऽसुरपुङ्गवाः ॥ ५२ ॥
निर्ययुः स्वस्वसेनाभिः सेनाऽध्यक्षाश्च मन्त्रिणः ।
पुत्राः पौत्राः प्रपौत्राश्च भ्रातरः सर्व एव ते ॥ ५३ ॥

भीता निःशेषतः सेनां समादाय विनिर्ययुः।
अथाऽऽज्ञप्तो विशुक्रेण कुटिलाक्षश्च भूपतिः॥ ५४॥
अक्षौहिणीपञ्चकेन चक्रे नगररक्षणम्।
तन्निवेद्य विशुक्राय विकर्षन्महतीं चमूम्॥ ५५॥
ययौ भण्डासुरस्याऽग्रे ग्रसन्निव ककुप्तटम्।
एवं प्रचलिते दैत्यराजे निखिलसेनया॥ ५६॥
अवादयंस्तु दैतेया रणभेरीः समन्ततः।
पटहाऽऽनकभेरीणां वाद्यैर्दैत्यविगर्जनैः॥ ५७॥
आस्फोटैर्नेमिघोषैश्च गजचीत्कारमिश्रितैः।
वन्दिमागधसन्नादैर्हयह्रेषितबृंहितैः॥ ५८॥
तुरङ्गखुरविक्षेपोन्मिषच्चटचटारवैः।
हुङ्कृताऽऽह्वानसंरावैः संहतो हि महास्वनः॥ ५९॥
बभौ जगत्पटीभेदप्रगल्भ इव पूरितः।
सेनास्वनं समाकर्ण्य भण्डदैत्यसमागमम्॥ ६०॥
विदित्वा चारमुखतो निश्चित्य महदुद्यमम्।
दण्डिनी त्वरिता मन्त्रनाथां प्राप्य व्यजिज्ञपत्॥ ६१॥
सचिवेश्येष सम्प्राप्तो भण्डः सेनासमन्वितः।
महासन्नाहसम्भारो युद्धं महदुपस्थितम्॥ ६२॥
विज्ञाप्य ललितादेवीं समेताशक्तिभिर्वृता।
संरक्षन्ती शक्तिगणैर्महाराज्ञा अनुव्रज॥ ६३॥
अहं यास्ये तन्निरोद्धुं पुरतः सेनयाऽऽवृता।
एष शब्दः श्रूयते वै गजवाजिसमाकुलः॥ ६४॥
मन्ये बाला सम्प्रवृत्ता युद्धे युद्धसमुत्सुका।
सम्पन्नाथाऽश्वनाथाभ्यां युता चित्रपराक्रमा॥ ६५॥
एवं वदन्त्यां तस्यान्तु प्राप्ता सन्देशहारिणी।
वर्धयित्वा दण्डनाथां मन्त्रिणीञ्चाऽभ्यभाषत॥ ६६॥
देवि प्रवृत्तं सुमहद्युद्धं बालाम्बया सह।

दैत्यराजस्य सन्नाहो महान् युद्धसमुद्यमः ॥ ६७ ॥
भ्रातृपुत्रादिसहितसर्वसेनासमावृतः ।
समागतः क्रूरतरो युध्यति क्रूरविक्रमः ॥ ६८ ॥
इति विज्ञापनायाऽहं सम्पत्कर्या निरूपिता ।
किं वदामि पुनर्गत्वा तां देवीं गजवाहिनीम् ॥ ६९ ॥
श्रुत्वा सन्देशहारिण्या वाक्यं श्रीदण्डनायिका ।
प्राह तत्कालसदृशं वाक्यं विक्रमबृंहितम् ॥ ७० ॥
गच्छेभसेनानेत्रीं तां ब्रूहि श्रुत्वा मदीरितम् ।
अप्रमत्ततया नूनं योद्धव्यं दैत्यपुङ्गवैः ॥ ७१ ॥
बाला कुमारिका नित्यं युद्धगोष्ठीसमुत्सुका ।
सर्वतः सा रक्षितव्या प्राप्ताऽस्म्यहमपि द्रुतम् ॥ ७२ ॥
यथा पलाय्य नो गच्छेन्मायया दैत्यपुङ्गवः ।
तथा संरुध्य योद्धव्यं यावन्मम समागमः ॥ ७३ ॥
ततोऽहं तस्य न चिरं युद्धश्रद्धां चिरन्तनीम् ।
नाशयामि क्षणेनैव तमः सूर्योदये यथा ॥ ७४ ॥
गच्छ शीघ्रं समादाय सन्देशं गजवाहिनीम् ।
आज्ञप्तैव निर्गता सा शक्तिः सन्देशहारिणी ॥ ७५ ॥
ततः किरिरथारूढा दण्डिनी निर्ययौ द्रुतम् ।
असङ्ख्यशक्तिसेनाभिर्युता क्रोधसमाकुला ॥ ७६ ॥
निसर्गक्रोधना भूयो युद्धोपक्रमरोषिता ।
दिधक्षन्तीव लोकांश्च सर्वान् रोषाग्निना क्षणात् ॥ ७७ ॥
रथनेमिमहास्वनयुतः सेनामहारवः ।
परेषां हृदयं भिन्दन् श्रोत्रमार्गेण संविशन् ॥ ७८ ॥
प्रतिस्वानमहाघोषः प्रोच्चलद्दीपणाऽऽकृतिः ।
एवं श्रीदण्डसाम्राज्ञी जैत्रयात्रामुपाऽक्रमत् ॥ ७९ ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये युद्धाऽऽरम्भे
द्विषष्टितमोऽध्यायः ॥ ५१७४ ॥

---

# अथ त्रिषष्टितमोऽध्यायः ।

भण्डासुरमहासेनाकोलाहलमहाध्वनिम् ।
निशम्य प्रैक्षदत्यन्तयुद्धोत्सुकतया दिशम् ॥ १ ॥
प्रागुदीचीं कुमारी सा ललिताया मनःप्रिया ।
ददर्श दैत्यसेनायाः सम्मर्दजनितं रजः ॥ २ ॥
प्रतिसञ्चरसम्भूतसांवर्तकसमूहवत् ।
ज्ञात्वा प्राप्तं दैत्यराजं सर्वसेनासमावृतम् ॥ ३ ॥
समरोत्सुकचित्ता सा बाला त्रिपुरसुन्दरी ।
लघुचक्ररथाऽऽरूढा रथनेत्रीमचोदयत् ॥ ४ ॥
श्रीमातुः प्रतिरोधं सा तर्कयन्त्यथ संयुगे ।
अदृष्ट्वैव महादेवीं मन्त्रिणीमभिसंययौ ॥ ५ ॥
सेनानेत्रीश्च सेनाश्चाऽप्याकाङ्क्षन्त्यतिसत्वरम् ।
दैत्यसेनाऽभिमुखतो वायुवेगेन संययौ ॥ ६ ॥
शरदीव महामेघ आकाशे वायुनेरितः ।
यथा पुरो निपतति तथा वेगाद्रथो ययौ ॥ ७ ॥
बालाया युद्धयात्रां तां विषमां वीक्ष्य सत्वरम् ।
अश्वारूढा द्रुततरं तामनु प्रतिसंययौ ॥ ८ ॥
तुरङ्गैस्तुङ्गभङ्गाभैः पयोधिरिव तच्चमूः ।
उपाऽद्रवज्जगज्ज्वालाप्लावनायेव सर्वतः ॥ ९ ॥
सम्पत्करी च तत्पश्चाद्रणकोलाहलस्थिता ।
अनेककोटिमातङ्गसेनासंवलिता द्रुतम् ॥ १० ॥
वेगादनुससारोच्चैर्बालारक्षणहेतवे ।
नोदिता शीघ्रसंयाने रथविद्याविशारदा ॥ ११ ॥
बालायाः सदृशाऽऽकारा वाहयत् स्यन्दनं जवात् ।
प्रावृण्णदीव जलधिं दैत्यसेनां व्यगाहत ॥ १२ ॥

सज्यं धनुर्विकर्षन्ती वर्षन्ती शरवर्षणम् ।
नदीवेगविभिन्नेऽब्धौ नौरिव स्यन्दनन्तु तत् ॥ १३ ॥
विवेश दैत्यराजस्य शरौघदलितां चमूम् ।
कुटिलाक्षो दैत्यसेनामुखे कुञ्जरसंस्थितः ॥ १४ ॥
महत्या सेनया बालां संरुरोध महाबली ।
दैत्यसेनापतिः सोऽपि दृष्ट्वा बालां कुमारिकाम् ॥ १५ ॥
सृजन्तीं शरवर्षाणि मेनेऽद्भुतपराक्रमम् ।
एकाकिनीं रथारूढां मृद्वङ्गीमष्टहायनाम् ॥ १६ ॥
अहो चित्रतमं ह्येतत् कथमेका कुमारिका ।
निर्भया योधयत्यस्मानिन्द्रादीनाञ्च त्रासनान् ॥ १७ ॥
मन्येऽहं ललितामेनां निमित्तैश्चारसंस्तुतैः ।
लक्षये सर्वचिह्नानि किन्त्वेषा तरुणी न च ॥ १८ ॥
अप्येषा तस्य तनया भवेत् पूर्वं हि या श्रुता ।
कथं तत्तनया बाला सेनाविरहिता पुनः ॥ १९ ॥
एकला युद्धसन्नद्धा समागच्छेन्मृधे क्वचित् ।
नूनमेषैव सर्वान्नो जेष्यतीव विभाति मे ॥ २० ॥
लक्षये न युधि स्थातुं सम्मुखेऽस्या भवेत् प्रभुः ।
विशुक्रो वा विषङ्गो वा राजा वाऽप्यहमेव वा ॥ २१ ॥
कुतो राजकुमाराद्याः प्रत्येकं मिलिताश्च वा ।
अस्मत्सेनां यत्र यत्र निरीक्षति ततस्ततः ॥ २२ ॥
शरजालेन शिथिलां करोति निमिषार्धतः ।
कोटिशो निहता दैत्यास्त्रासिताऽस्मन्महाचमूः ॥ २३ ॥
एते विभिन्नबाह्वङ्घ्रिहृदयक्रोडमस्तकाः ।
पतिताश्च मृताश्चाऽन्ये धावन्त्यन्ये महाभयात् ॥ २४ ॥
शोणितप्रवहां तर्तुमशक्ता भयकम्पिताः ।
पतितास्तत्र शतशो निमग्ना रक्तसिन्धुषु ॥ २५ ॥
प्रायशैषाऽस्मच्चमूं भित्त्वा प्रविशेत् क्षणमात्रतः ।
रोद्धव्येयं मया यत्नाद्धिज्ञामेवंविधं स्थितम् ॥ २६ ॥

योषिद्बाला मत्समक्षं भित्त्वा सेनां प्रवेक्ष्यति ।
नैतदिन्द्रेण मरुता वायुनाऽपि कृतं पुरा ॥ २७ ॥
विषमं भाति मे ह्येतदेषा जयेति सर्वथा ।
इति निश्चित्य तां रोद्धुं महागजसमास्थितः ॥ २८ ॥
ससार पुरतस्तस्याः शरजालान्यवाकिरत् ।
युयोधाऽतिबलो दैत्यः कुटिलाक्षस्तया सह ॥ २९ ॥
बालया युद्धकुशलो मायाशस्त्राऽस्त्रकोविदः ।
ववर्ष शरवर्षेण बालां युद्धेऽग्रतः स्थिताम् ॥ ३० ॥
उद्यन्तं भास्करमिव हिमसंहतिवर्षवत् ।
साऽपि बालाऽरुणाऽऽभाङ्गी शरतीक्ष्णतरांऽशुभिः ॥३१॥
अनयन्नाशमत्यन्तं तं वर्षं निमिषाऽर्धतः ।
अर्दयामास दैत्यस्य सेनां निशितसायकैः ॥ ३२ ॥
अतिलाघवतस्तस्याः शरसन्धानमोक्षणम् ।
न वेद कश्चित्कुशलोऽप्यतिसूक्ष्मदृशाऽपि च ॥ ३३ ॥
अपश्यन् शरसङ्घातधारां चापविनिर्गताम् ।
प्रावृड्गिरिमुखाच्चोयधारामिव निरन्तराम् ॥ ३४ ॥
विधूय तां महासेनां मुहूर्ताऽष्टमभागतः ।
कुटिलाक्षं समासाद्य जघान निशितैः शरैः ॥ ३५ ॥
युयोध सोऽपि बलवान् सर्वप्राणेन संयुगे ।
तस्य शस्त्राऽस्त्रजालानि प्रतिशस्त्राऽस्त्रवर्षतः ॥ ३६ ॥
मोघं कृत्वा शरैस्तीक्ष्णैः प्राहरद्दैत्यनायकम् ।
एकेन तीक्ष्णभल्लेन चापं तस्याऽच्छिनज्जवात् ॥ ३७ ॥
ततश्चैकेन वाहस्य गजस्य प्राहरन्मुखे ।
इषुणा ताडितो वक्त्रे गिरिराजसमो गजः ॥ ३८ ॥
चीत्कुर्वन् विभ्रमन् भूमौ गताऽसुरपतत् क्षणात् ।
मरिष्यन्तमिमं ज्ञात्वा कुटिलाक्षो गदाधरः ॥ ३९ ॥
क्रोधेनाऽभ्यद्रवद्धन्तुं बालां रथसमाश्रयाम् ।
ग्रसन्तमरुणं बालं राहुं द्रुतगतिं यथा ॥ ४० ॥

अपश्यन् विबुधाः सिद्धा नभोमण्डलसंश्रयाः ।
आयान्तमतिवेगेन गदाहस्तं निशाम्य सा ॥ ४१ ॥
शरेणाऽऽकर्णपूर्णेन विव्याध हृदयाऽन्तरे ।
स विद्धस्तीक्ष्णबाणेन बहुशोणितमुद्गिरन् ॥ ४२ ॥
पपात मूर्च्छितो भूमौ वज्राऽऽहतमहीध्रवत् ।
अथ बाला प्राह सखीं रथनेत्रीं स्मिताऽऽनना ॥ ४३ ॥
सखि शीघ्रं नय रथं भण्डदैत्यसमीपतः ।
आयात्येषा पृष्ठतो मे दण्डिनी शूकरध्वजा ॥ ४४ ॥
उत्कण्ठिताऽस्मि दैत्येन योद्धुं भण्डेन सङ्गरे ।
मामासाद्य दण्डनाथा प्रतिरोत्स्यति वै ध्रुवम् ॥ ४५ ॥
यथा नाऽऽसादयेन्मां सा तथा वाहय सत्वरम् ।
इत्युक्ता रथनेत्री सा बालां प्रोचे सखी तदा ॥ ४६ ॥
दैत्यसेनां मध्यतस्तु ध्वजो योऽयं महोन्नतः ।
दृश्यते काञ्चनमयो रथस्तस्यैष एव हि ॥ ४७ ॥
इतो दूरतरे स स्यान्महद्भिर्दैत्यपुङ्गवैः ।
महारथिभिरत्युग्रैः संवृतो ननु दृश्यते ॥ ४८ ॥
विवरन्तु न पश्यामि रथं येन नयामि तत् ।
शस्त्रेण सृज मार्गं त्वं वाहयामि ततो रथम् ॥ ४९ ॥
इत्युक्ता लघुहस्ता सा बाला मार्गमकल्पयत् ।
शरवृष्ट्या निमेषेण दैत्यसेनासु मध्यतः ॥ ५० ॥
सायकौघप्रवाहेन भग्नसेतुरिवाऽऽबभौ ।
सेनामुखं महाशूरैर्दैत्यैरुद्धमपि क्षणात् ॥ ५१ ॥
केचिद्भग्नरथाश्चाऽन्ये नष्टाऽश्वगजवाहनाः ।
असह्यां शरधारां तां प्राप्य दैत्याः प्रदुद्रुवुः ॥ ५२ ॥
अपरे छिन्नबाह्वक्षिचरणोदरमस्तकाः ।
तथाऽन्ये शस्त्रसङ्घातपातेन तिलशः कृताः ॥ ५३ ॥
ववुः शोणितवाहिन्यो भीरूणां सागरोपमाः ।
सुफेनिलास्तरङ्गाढ्या उष्णोदकवहा इव ॥ ५४ ॥

शरजालमहामेघच्छन्नसूर्यकरा दिशः ।
अन्धीभूता न विदिता दैत्यैर्विद्रावतत्परैः ॥ ५५ ॥
मेनिरे ते महामृत्युं प्राप्तं बालास्वरूपतः ।
पतन्ति सङ्घशस्तत्र दैत्यानां मस्तकान्यलम् ॥ ५६ ॥
तृणराजफलानीव पक्वानि प्रौढवायुना ।
हा तात पुत्र सुसखे भ्रातर्मित्र हतोऽस्म्यहम् ॥ ५७ ॥
इति घोषो महानासीद्दैत्यानां रणसङ्कटे ।
तदन्तरे मुखे भग्ने सेनायास्तस्य वेगतः ॥ ५८ ॥
प्रवेशयद्रथवरं रथनेत्री निमेषतः ।
विशुक्रदैत्योऽवरजो भण्डदैत्यस्य संयुगे ॥ ५९ ॥
दृष्ट्वा भित्त्वा स्वसेनाया मुखं बालां समागताम् ।
गच्छन्तीं दैत्यराजेन योद्धुमुत्सुकितां तदा ॥ ६० ॥
ज्ञात्वा विचारयन्नूनमेषा बालाऽष्टहायना ।
निःसीमबलवीर्याऽऽढ्या युध्यत्यतिविचित्रितम् ॥ ६१ ॥
नैषा जेयाऽसुरैः कैश्चिद्बलवद्भिरपि क्वचित् ।
तथाऽपि समरे शूरैर्योद्धव्यं सर्वथा ननु ॥ ६२ ॥
एषैव नाशयेत् सर्वान् दैत्यानस्मान्न संशयः ।
किं करिष्यति सा देवी ललिता समरे पुनः ॥ ६३ ॥
सर्वप्राणेन योद्धव्यं दैवमत्र परायणम् ॥
इति निश्चित्य नागेन्द्रमैरावतकुलोद्भवम् ॥ ६४ ॥
श्वेतं चतुर्दन्तयुतं रजताऽद्रिसमप्रभम् ।
विशुक्र आरुह्य जवात् शरान् धाराधरो यथा ॥ ६५ ॥
वर्षन् विरेजे कैलासाऽऽरूढनीलाऽम्बुदोपमः ।
रुरोध बालां रथगां प्रविश्य दैत्यवाहिनीम् ॥ ६६ ॥
समायान्तीं जवेनाऽऽजौ चिन्वतीं दैत्यजीवितम् ।
संरुध्य शरवर्षेण सिंहनादमथाऽकरोत् ॥ ६७ ॥
अह्वानेन दैत्यसेनां विद्रुतां स न्यवर्तत ।
दैत्या नैतत्समं युद्धे कुलजानां पलायनम् ॥ ६८ ॥

भीत्या युद्धे विद्रुतन्तु धर्मश्चाऽर्थः प्रहास्यति ।
आहार्य वीर्यं क्रोधञ्च निवर्तध्वं समन्ततः ॥ ६९ ॥
विनिर्जिताः स्त्रिया युद्धे पलाय्य सदनं गताः ।
किं वक्ष्यथ गृहे स्त्रीभिः पृष्टा युद्धान्निवर्तने ॥ ७० ॥
मृतिरेव ततः श्रेयः स्त्रीकृतादपमानतः ।
विशुक्रवचनं श्रुत्वा परावृत्तास्ततस्तु ते ॥ ७१ ॥
आगत्य बालां त्रिपुरां परिवव्रुः समन्ततः ।
दैत्यसेनाभिराक्रान्ता सा बाला रथसंस्थिता ॥ ७२ ॥
परिवेषितबालार्क इव तत्र व्यराजत ।
अथ तां रथनेत्रीं सा सखी प्राह प्रियंवदा ॥ ७३ ॥
कुमारि मन्ये दैत्यानां सेनाभारोऽतिदुःसहः ।
न ते पार्ष्णिग्रहा काचिच्चक्रगोप्त्र्यधिविद्यते ॥ ७४ ॥
अग्रे सेनाभरो भूयान् मन्यसे चेदहं द्रुतम् ।
रथं निवर्तयाम्येषा सेनायुक्ता पुनर्द्रुतम् ॥ ७५ ॥
आगत्य चैतान् दैत्येन्द्रान् यथेच्छं योधयिष्यसि ।
श्रुत्वा सखीवचः प्राह प्रहस्य मृदुभाषिणी ॥ ७६ ॥
भीताऽसि किं प्रिये युद्धे नैवं शतगुणा अपि ।
पर्याप्ता मे दैत्यसेना युध्यन्त्यायुधि मे क्वचित् ॥ ७७ ॥
लीलयाऽहं विलम्बेन युध्यामि रणकौतुकी ।
मन्यसे चेदिमं पश्य क्षणं निर्दैत्यलोककम् ॥ ७८ ॥
इत्युक्ता सा पुनः प्राह सखी रथवहा तदा ।
देवि नास्त्येव मे भीतिः सैन्येऽपीतः शतोत्तरे ॥ ७९ ॥
तथाऽपि रथनाथाया ज्ञेयं चित्तं रणोद्यमे ।
शङ्के श्रीललितादेव्या यदाज्ञामन्तरा त्वया ॥ ८० ॥
युद्धे विनिर्गता चाऽस्मि एतावत् साध्वसं मम ।
ब्रूहि शीघ्रं रथमहं क्व नयामि रणाऽवनौ ॥ ८१ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललिता-माहात्म्ये बालापराक्रमे त्रिषष्टितमोऽध्यायः ॥ ५२९५ ॥

---

# अथ चतुःषष्टितमोऽध्यायः ॥

सखीवचो निशम्याऽथ बाला संहृष्टमानसा ।
प्राह शीघ्रं नय रथं यत्राऽसौ गजसंश्रयः ॥ १ ॥
स्तूयमानो वन्दिगणैर्विशुक्राख्यो महासुरः ।
इत्याज्ञप्ता क्षणादेव निनाय स्यन्दनोत्तमम् ॥ २ ॥
बालाऽपि दैत्यसेनां तामपारां सागरप्रभाम् ।
शरसन्ततिधाराभिश्चक्रेऽतिशिथिलां तदा ॥ ३ ॥
पुनः क्षणाद्घनीभूतां दृष्ट्वा तां दैत्यवाहिनीम् ।
परिवार्य निजात्मानं जिघांसन्तीं विशङ्कटाम् ॥ ४ ॥
नाशयत् कुलिशाऽस्त्रेण भस्मशेषत्वमानयत् ।
हतास्तत्र महादैत्याः कुलिशाऽस्त्रेण सर्वतः ॥ ५ ॥
भस्मशेषीकृताः केचित् केचिद्धतवराऽङ्गकाः ।
एकबाह्वक्षिचरणपार्श्वीभूतास्तथा परे ॥ ६ ॥
महाक्रन्दभीमरवां नष्टप्रायां चमूं निजाम् ।
निशम्य प्राहिणोन्नागमैरावतकुलोद्भवम् ॥ ७ ॥
योद्धुं विशुक्रस्तां बालां दृष्ट्वाऽद्भुतपराक्रमाम् ।
ववर्ष शरधाराभिर्मणिशृङ्गमिवाऽम्बुदः ॥ ८ ॥
प्रतिवर्षं ववर्षाऽथ प्रतिदैत्यं शिलीमुखैः ।
शरवर्षं द्वयं तत्तु तमोभूतं रणाऽवनौ ॥ ९ ॥
तदन्तरे तु निशितशरेणाऽऽनतपर्वणा ।
जघानाऽऽकर्णपूर्णेन हस्ते तां रथवाहिनीम् ॥ १० ॥
सा गाढविद्धा बाणेन किञ्चित्कश्मलमागमत् ।
तद्दृष्ट्वा रोषताम्राक्षी गर्जन्तं दैत्यपुङ्गवम् ॥ ११ ॥

जघान तरसा भाले तीक्ष्णभल्लचतुष्टयैः ।
भल्लार्दितो गाढमूर्च्छां विशुक्रः प्राप तद्गतः ॥ १२ ॥
पुनः क्षणेन चोत्थाय ववर्ष निशितान् शरान् ।
अथ बाला क्षणेनैव लघुहस्तक्रियाऽन्विता ॥ १३ ॥
द्वाभ्यां चापञ्च छत्रञ्च चिच्छेद युगपन्मृधे ।
अथैकेनाऽऽकर्णपूर्णशरेण नतपर्वणा ॥ १४ ॥
विव्याध वाहनगजमैरावतकुलोद्भवम् ।
इन्द्रायुधं गिरिमिव ददार स शरो गजम् ॥ १५ ॥
कुम्भप्रदेशे निर्मग्नो जघनाभ्यां विनिर्गतः ।
संछिन्नः क्रकचेनेव महास्थाणुर्बभौ गजः ॥ १६ ॥
तादृग्विधं गजपतिं व्यसुं वीक्ष्य स दैत्यराट् ।
खड्गहस्तः खमुत्पत्य तां प्रहर्तुमुपद्रुतः ॥ १७ ॥
आयान्तमन्तकनिभं करवालकरोद्यतम् ।
लाघवेनैव सा बाला दूरादेकेन पत्रिणा ॥ १८ ॥
करवालं द्विधा चक्रे तं मूर्ध्नि त्रिभिराहनत् ।
विशुक्रमूर्ध्नि तन्मग्नं किञ्चिद्बाणत्रयं यदा ॥ १९ ॥
व्यराजत तदा दैत्यस्त्रिशृङ्गो नगराडिव ।
गाढविद्धोऽपि धैर्येण पक्षिराडिव वेगवान् ॥ २० ॥
आदाय बालां पाणिभ्यामुच्चचाल नभोऽङ्गणम् ।
निशाम्य ह्रियमाणां तां रथनेत्र्यब्रवीदिदम् ॥ २१ ॥
अलं बाले लीलया ते महाऽनर्थाऽवसानया ।
जहि वीर्येण दैतेयं यावद्दूरं न गच्छति ॥ २२ ॥
श्रुत्वा सखिवचो बाला मत्वा कालसमं वचः ।
निर्वर्त्य मुष्टिं सुदृढां पातयत्तस्य मूर्धनि ॥ २३ ॥
वज्रकल्पमुष्टिहतो भिन्नमूर्धा वमन्नसृक् ॥
गाढमूर्च्छासमाविष्टो निपपात महीतले ॥ २४ ॥

अथ बाला रथारूढा सखीं तामभिचोदयत् ।
प्रिये शीघ्रं नय रथमेषोऽग्रे दैत्यनायकः ॥ २५ ॥
श्वेताऽऽतपत्रराजीभिश्चामरैरभिसेवितः ।
यथा नीलगिरिर्हंसैर्जलनिर्झरसंवृतः ॥ २६ ॥
आस्ते तथा राजतेयं नय तत्र रथं द्रुतम् ।
एषा प्राप्ता पृष्ठतो मे दण्डनाथा चमूवृता ॥ २७ ॥
श्रूयते सिंहवाहस्य गर्जतो भैरवो रवः ।
अवश्यं मम युद्धस्य विहतिं सा करिष्यति ॥ २८ ॥
तावद्द्रुतं योधयामि भण्डदैत्यं महाबलम् ।
उत्कण्ठिताऽस्मि तद्युद्धे सर्वथा नय मां द्रुतम् ॥ २९ ॥
श्रुत्वा तद्वदितं साऽपि सखी रथमचोदयत् ।
यावद्भण्डस्य पुरतस्तावद्रथवराऽऽश्रयः ॥ ३० ॥
ज्ञात्वा सर्वं विषङ्गोऽपि मत्वाऽजेयां सुराऽसुरैः ।
अनया युद्धमानस्य दैत्यराजस्य सर्वथा ॥ ३१ ॥
जीवतो न विमोक्षोऽस्ति विजितस्त्वनया यदि ।
तदा चिरार्जिता कीर्तिर्व्यर्थं हीयेत सर्वथा ॥ ३२ ॥
यदि सा ललिता राज्ञी विजेष्यति समं हि तत् ।
तस्मादत्र यथाशक्त्या यतितव्यं भवेन्मया ॥ ३३ ॥
इति निश्चित्य बालाया निपपाताऽग्रतो बली ।
आयान्तं सम्मुखं दैत्यं दृष्ट्वा रथवरास्थितम् ॥ ३४ ॥
भण्डयुद्धमहाविघ्नं मत्वा प्राह सखीं प्रति ।
प्रिये भण्डेन योद्धव्ये महान् विघ्नो ह्युपस्थितः ॥ ३५ ॥
पश्य मे लाघवश्चैनं वारयामि सुदूरतः ।
इत्युक्त्वा निशितान् बाणांश्चतुरो विससर्ज ह ॥ ३६ ॥
तैस्तस्य वाहा निहताः प्रोन्नम्रा वातरंहसः ।
अथैकेन ध्वजं छित्वा सूतमेकेन पत्रिणा ॥ ३७ ॥

निजघानाऽथ दैतेयो विषङ्गोऽत्यन्तकोपितः ।
मोघं सोद्योगमालक्ष्य तुरङ्गाऽन्तरसंश्रयः ॥ ३८ ॥
आदाय परिघं घोरमभिदुद्राव वेगतः ।
तुरगेण समायान्तं वाततुन्नाऽभ्रखण्डवत् ॥ ३९ ॥
ववर्ष सायकौघेन प्रावृडब्द इवाऽचलम् ।
शरवर्षमगणयन्नायान्तमाभिमुख्यतः ॥ ४० ॥
दृष्ट्वा वाला द्रुततरं शरेणैकेन कर्णिना ।
अकरोद्व्यसुमश्वं तं हताश्वोऽथ विषङ्गकः ॥ ४१ ॥
उद्यम्य परिघं घोरमुपाऽऽयान्तं सुभीषणम् ।
समुद्रमिव गर्जन्तं कालान्तकयमोपमम् ॥ ४२ ॥
सुपुङ्खेन शरेणाऽऽशु जघान वलवद्धृदि ।
स गाढविद्धो वाणेन भ्रमन्नुष्णमसृग्वमन् ॥ ४३ ॥
मूर्छितः प्रापतद्भूमौ कृत्तपक्षमहीध्रवत् ।
तदद्भुतं कर्म दृष्ट्वा दैत्या देवाश्च विस्मिताः ॥ ४४ ॥
अहो दैत्याऽधिपो ह्येषः पुरा शक्रमुखान् सुरान् ।
बहुधा ह्यजयद्युद्धे विष्णुतुल्यपराक्रमः ॥ ४५ ॥
स एष वालया नूनं लीलयैव निपातितः ।
सर्वान् विजेष्यत्येषैव ललिता किं करिष्यति ॥ ४६ ॥
प्राहुरेवमथ पुनः रथनेत्री रथं नयत् ।
भण्डासुरसमक्षं स्वं दृष्ट्वा वाला महासुरम् ॥ ४७ ॥
साधु प्रियं कृतं ह्यद्य चिराऽभिलषितं मम ।
अनेन युद्ध्वा सन्तुष्ये चिराऽभिलषितन्त्वतः ॥ ४८ ॥
इत्युक्त्वा शरवर्षेण ववर्षाऽसुरभूपतिम् ।
अथ भण्डासुरो दृष्ट्वा वालां सम्मुखसङ्गताम् ॥ ४९ ॥
जहर्षे वाञ्छितं प्राप्य चिरायाऽभिमतं तदा ।
स काल एष सम्प्राप्तः श्रियोक्ताश्चिरवाञ्छितः ॥ ५० ॥

एषा दृष्टा महादेवी भक्तवाञ्छितपूरणी ।
नूनमेषः क्षणो मेऽद्य घोरदेहवियोजकः ॥ ५१ ॥
अनया निहतस्त्वत्र व्रजामि समलोकताम् ।
एषा श्रीललिताराज्ञ्याः कुमार्यद्भुतविक्रमा ॥ ५२ ॥
तस्या बिम्बसमुद्भूतप्रतिबिम्बवदास्थिता ।
मां निहन्तुं साऽपि देवी रमावचनगौरवात् ॥ ५३ ॥
आयास्यति न सन्देहो रमोक्तं नाऽन्यथा भवेत् ।
भवत्वेनां पूजयामि तद्बिम्बादुत्थिताऽऽत्मिकाम् ॥ ५४ ॥
कालोपपन्नविधिना शरभूतप्रसाधनैः ।
इत्थं विचिन्त्य सशरं जग्राह सुदृढं धनुः ॥ ५५ ॥
जलाऽस्त्रमन्त्रितशरौ प्राक्षिपत्तस्याः पादयोः ।
अथाऽपरं पौष्पमन्त्रमन्त्रितं मूर्धनि क्षिपत् ॥ ५६ ॥
शरौ सिषिचतुः पादौ निर्मलैः शीतलैर्जलैः ।
शरोऽपरो मूर्ध्नि तस्या मालावर्षमथाऽकिरत् ॥ ५७ ॥
तदद्भुतं निशाम्याऽथ पप्रच्छ रथनायिका ।
कुमार्येतन्महच्चित्रं प्रपश्याम्यसुरेश्वरे ॥ ५८ ॥
तेनैव विहितं किं वा जातं स्यात्तव तेजसा ।
त्वयि वर्षं किरन्त्यां वै शराणामाहवाऽवनौ ॥ ५९ ॥
एतस्य पूजनविधिः शरैः किमिव ते भवेत् ।
अहं संशययुक्ताऽस्मि तन्मे दूरीकुरु द्रुतम् ॥ ६० ॥
पृष्टैवं प्राह सा बाला शृणु प्रेयसि मद्वचः ।
पुरा श्रुतं यल्ललिताप्रोक्तमत्यन्तगूहितम् ॥ ६१ ॥
एष लक्ष्म्या महादूतो नाम्ना माणिक्यशेखरः ।
शापेन दैत्यतां प्राप्तस्त्रिपुराभक्तशेखरः ॥ ६२ ॥
एष युद्धे विनिहतः श्रीपुरं प्रतिपत्स्यति ।
मां मत्वा ललितापुत्रीं पूजयामास सायकैः ॥ ६३ ॥

तमीक्ष मत्प्रतिकृतिमित्युक्त्वा शरमुत्सृजत् ।
स शरः पञ्चशाखात्मा पस्पर्श तस्य मूर्धनि ॥ ६४ ॥
कराऽम्बुजं मस्तके स्वे न्यस्तं मेने महासुरः ।
प्रमादमकरोद्देवी चेति संहृषितोऽभवत् ॥ ६५ ॥
तद्दृष्ट्वा विस्मिताऽत्यन्तं बालाया रथनायिका ।
अथाऽभवन्महायुद्धं कुमारीभण्डदैत्ययोः ॥ ६६ ॥
कृतप्रतिकृतोपेतं घोरं भीरुभयावहम् ।
द्वन्द्वभूतमनुपमं द्वैरथ्यं शरवर्षणम् ॥ ६७ ॥
भण्डासुरोऽपि भक्त्यैवाऽद्भुतैः स्वीयपराक्रमैः ।
देवीं सन्तोषयामीति युयोध बलवत्तरम् ॥ ६८ ॥
विकिरन्तौ शस्त्रगणान्मर्मप्रहरणोद्यमौ ।
ज्ञात्वाऽन्योन्यं शस्त्रयोगलाघवं श्लाघनापरौ ॥ ६९ ॥
साधु शूर रणश्लाघ्य साधु देवि महाबले ।
इत्येवं युध्यतोस्तत्र कुमारीभण्डदैत्ययोः ॥ ७० ॥
प्रावर्तन्त महास्त्राणि लोकमोहकराणि वै ।
कुलिशाऽस्त्रं पार्वतस्य नागाऽस्त्रस्य च गारुडम् ॥ ७१ ॥
आग्नेयस्य च पार्जन्यं तस्य मारुतनामकम् ।
तस्य सार्पं तस्य पुनर्नाकुलं तस्य चैव हि ॥ ७२ ॥
वैडालं कुक्कुरं तद्वद्वृकं वैयाघ्रमेव च ।
महाव्याघ्रं मृगेन्द्रश्च तस्य शारभमस्त्रकम् ॥ ७३ ॥
गण्डमेरुण्डमित्येवं तथा याम्यञ्च वारुणम् ।
कौबेरं नैरृतश्चैन्द्रं रौद्रं मोहनमेव च ॥ ७४ ॥
पैनाकं वैष्णवं ब्राह्ममेवमस्त्रैस्तु सङ्कुलम् ।
युद्धमासीन्महाघोरं कुमारीभण्डदैत्ययोः ॥ ७५ ॥
तत्र दैत्याः शक्तयश्च सहायाऽर्थं समागताः ।
प्रेक्षाञ्चक्रुर्विचित्रेण युद्धेनाऽत्यन्तविस्मिताः ॥ ७६ ॥

एवं प्रवृत्ते समरे बालाया लाघवात्तु सः ।
हीयमानः समभवद्दण्डदैत्यो यदा तदा ॥ ७७ ॥
विषङ्गश्च विशुक्रश्च कुटिलाक्षश्च भूपतिः ।
संवृत्ता दैत्यसेनाभिः परिवार्य कुमारिकाम् ॥ ७८ ॥
युयुधुः शस्त्रसङ्घातैर्वमद्भिर्वह्निमुल्बणम् ।
बालाऽपि तान् लीलयैव योधयामास सर्वतः ॥ ७९ ॥
एवंविधे महायुद्धे प्रवृत्ते बालया सह ।
सम्प्राप्ता दण्डसम्राज्ञी जित्वा दैत्यमहाचमूम् ॥ ८० ॥
भित्त्वा सेनामहाद्रिं तं दैत्यानामतिविस्तृतम् ।
मुसलात्ममहावज्राऽऽयुधेन क्रूरविक्रमा ॥ ८१ ॥
आससाद महायुद्धे बालां युद्धरसोत्सुकाम् ।
युध्यन्तीमेकलां दैत्यैः पश्यन्ती विस्मिता तदा ॥ ८२ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे
बालापराक्रमे चतुःषष्टितमोऽध्यायः ॥ ५३३७ ॥

# अथ पञ्चषष्टितमोऽध्यायः ।

अथ भण्डस्य सा सेना कोलवक्त्रा पराक्रमात् ।
विशीर्णा पर्वत इव देवेन्द्राऽऽयुधगौरवात् ॥ १ ॥
सेनायां दैत्यराजस्य वाराहीमुसलाऽऽहतेः ।
विशीर्णायामपश्यत् सा बाला दैत्यैः सुसङ्गताम् ॥ २ ॥
एकला योधयन्तीं तान्महादैत्यान् समन्ततः ।
समरोत्सुकितां भूयो दृष्ट्वा विस्मयमागमत् ॥ ३ ॥
अथ तां प्राह कोलास्या समासाद्य विशृण्वताम् ।
अलं बाले साहसेन युद्धेन विषमेण ते ॥ ४ ॥
नैतदन्यत्र पश्यामि साहसं यत्त्वमेकला ।
दैत्यान्महाबलान् भीमान् संयुगे जितवत्यसि ॥ ५ ॥
त्वां निशम्यैकलां दैत्यैर्युध्यमानां महेश्वरीम् ।
श्रीदेवीवत्सला नूनं भवेद्व्याकुलितान्तरा ॥ ६ ॥
इमं क्षणं महाराज्ञीं द्रष्टुमर्हसि याहि तत् ।
इत्युक्त्वाऽऽज्ञापयच्छक्तिमश्वसेनाऽधिनायिकाम् ॥ ७ ॥
अश्वारूढे प्रयाह्येनां समादायाऽतिसत्वरा ।
महाराज्ञ्यै निवेद्यैनामागच्छ त्वरितं पुनः ॥ ८ ॥
अश्वारूढैवमाज्ञप्ता समरादनिवर्तिनीम् ।
बालाया रथमाविश्य न्यवर्तयत तं रथम् ॥ ९ ॥
अथाऽऽगत्य महाराज्ञ्यै बालां तां विनिवेदयत् ।
मातरेषा युद्धभुवो बलात्कारान्निवर्तिता ॥ १० ॥
अतिसाहसचारित्राऽद्भुतवीर्यपराक्रमा ।
त्वदाज्ञया वयं यावदेनां युद्धान्निवर्तितुम् ॥ ११ ॥
प्रयातास्तावदेषा तु दैत्यसेनामहार्णवम् ।
प्रविष्टा तत्र दैत्यानां कोटयो बलवत्तराः ॥ १२ ॥

निपातिता महायुद्धे भण्डदैत्या वरोद्धवौ।
निर्जितौ भीमचारित्रौ तौ विशुक्रविषङ्गकौ ॥ १३ ॥
ततो भण्डं समादाय जितलोकेश्वराऽसुरम्।
युद्ध्वा तेनाऽपि सुचिरं जितमायं चकार वै ॥ १४ ॥
कथञ्चिदेषा वाराह्या विक्रम्याऽऽसादिता भवेत्।
इत्युक्त्वा निर्ययौ साऽपि युद्धाय तुरगाऽऽश्रया ॥ १५ ॥
अथ बालां महाराज्ञी स्वाङ्कमानीय सत्वरम्।
परिष्वज्याऽतिवात्सल्यान्मूर्ध्न्युपाजिघ्रदाम्बिका ॥ १६ ॥
वत्से नैवं पुनः कार्यं क्वचित् साहसमात्रया।
अनुक्त्वैव गता युद्धे नैतदौपयिकं तव ॥ १७ ॥
अथ प्राह कुमारी सा ललितां मातरं प्रति।
एपाऽरुणितनेत्रान्ता निश्वसन्ती पुनः पुनः ॥ १८ ॥
मातश्चिरादहं युद्धक्रीडाकौतुकिताऽन्तरा।
शङ्कमाना त्वया तत्र विघ्नं नैतमवेदयम् ॥ १९ ॥
युद्धक्रीडारसभरादवितृप्तैव वारिता।
तावक्या दण्डराज्ञ्याऽहं वृथैव समराङ्गणात् ॥ २० ॥
त्वत्तोऽतिभीतयाऽऽसाद्य मानिता रणसम्भ्रमे।
अन्यथा साऽपि मद्युद्धं विमदा प्राप्य वै भवेत् ॥ २१ ॥
वदन्तीमिति तां बालां परिष्वज्य महेश्वरी।
मैवं वत्से पुनर्ब्रूया इत्युक्त्वा सान्त्वयत् परा ॥ २२ ॥
अथ दण्डमहाराज्ञी किरिचक्रसमाश्रया।
युयोध भण्डदैत्येन युतेन दैत्यसेनया ॥ २३ ॥
शक्तिसेना दैत्यसेना युध्यमाना परस्परम्।
क्रोधाऽऽवेशसमायुक्ता प्रविष्टाऽभूत् परस्परम् ॥ २४ ॥
दैत्या शक्तिगणान् घ्नन्ति मुसलप्रासतोमरैः।
नाराचैर्भिन्दिपालैश्च खड्गशूलपरश्वधैः ॥ २५ ॥
शक्तयोऽपि प्रहरणैर्विविधैर्दैत्यपुङ्गवान्।
जघ्नुर्युद्धे महाभीमे मर्षिता बलवत्तराः ॥ २६ ॥

तत्र शक्तिगणाहतच्छिन्नबाहूरुनासिकाः ।
केचिद्द्विधा कृताः शस्त्रैः केचित्तु तिलशः कृताः ॥ २७ ॥
केचिन्महाभारशस्त्रैर्निष्पिष्टाऽशेषदेहकाः ।
क्रन्दन्तः पुत्र मित्रेति हा भ्रातस्तात इत्यपि ॥ २८ ॥
एवं शक्तिगणाऽस्त्राग्निभस्मशेषत्वमागताः ।
दैत्याः शिष्टाः सुवित्रस्ताः पलायनपरास्तदा ॥ २९ ॥
अभवन् सा युद्धभूमिरगम्याऽभवदञ्जसा ।
शोणितोदा बभुर्नद्यः फेनिला भीषणस्वनाः ॥ ३० ॥
प्रेतगोमायुकङ्काऽऽदिशवाऽऽहारमहोत्सवाः ।
एवं विनिहतप्रायां दैत्यसेनामुपद्रुताम् ॥ ३१ ॥
विशुक्रः स विषङ्गोऽथ निवार्याऽभ्याययौ मृधे ।
पुनस्तत्राऽभवद्युद्धं क्रूरं शक्तिगणैः सह ॥ ३२ ॥
मायया शक्तिसेनां तां विशुक्रो मोहयत् क्षणात् ।
ससर्ज मायया ध्वान्तं तत्र वर्षं शिलामयम् ॥ ३३ ॥
वह्निवायुसमोपेतं तेन शक्तिमहाचमूः ।
वित्रासिता मूर्च्छिता चाऽप्यभवद्भीमसंरवा ॥ ३४ ॥
तं दृष्ट्वाऽभ्याययौ सम्पत्करी गजसमाश्रया ।
विशुक्रेण महायुद्धे सङ्गताऽतिद्रुतं बभौ ॥ ३५ ॥
अश्वारूढाऽपि युयुधे विषङ्गेण महाबला ।
वाराही भण्डदैत्येन युयोधाऽतिरुषाऽन्विता ॥ ३६ ॥
रणकोलाहलाऽऽख्यानं गजमारुह्य वेगिनम् ।
असङ्ख्यगजसैन्येन युता सम्पत्करी परा ॥ ३७ ॥
विशुक्रं योधयामास महागजसमाश्रयम् ।
ववर्ष शरवर्षेण विशुक्रं मायया युतम् ॥ ३८ ॥
विमायाऽस्त्रेण हत्वा तन्मायामत्यन्तभीतिदाम् ।
प्रतिवर्षेण दैत्योऽपि ववर्ष विशिखात्मना ॥ ३९ ॥
एवं युद्ध्वा चिरं तस्य धनुश्चिच्छेद मध्यतः ।
सोऽप्यन्यदाददे चापं तच्चाऽप्येषा समाच्छिनत् ॥ ४० ॥

एवं धनुः शतं छिन्नं गृहीतन्तु पुनः पुनः ।
अथाऽतिक्रोधसंयुक्तो विशुक्रोऽद्भुतविक्रमः ॥ ४१ ॥
भल्लेन प्राहरत्तस्याः सम्पत्कर्या महाभुजे ।
भल्लाऽऽहतभुजात्तस्या न्यपतत्तन्महद्धनुः ॥ ४२ ॥
जगर्ज पतितं दृष्ट्वा हस्ताच्चापं महत्तरम् ।
सम्पत्करी ततः क्रुद्धा प्राहिणोद्वाहनं गजम् ॥ ४३ ॥
प्रहितस्सोऽपि करिराट् दैत्येभमनुसंययौ ।
तयोरभून्महद्युद्धं करिणोरगयोरिव ॥ ४४ ॥
करसंवेष्टनैः कुम्भसङ्घट्टैः पार्श्वघर्षणैः ।
दन्ताऽऽक्रमैर्महाशब्दैर्मुहूर्तमतिभीषणम् ॥ ४५ ॥
रणं कोलाहलश्चाऽथ बलवान् दैत्यवारणम् ।
आक्रम्य भूमौ वेगेन निपात्य रदनद्वयम् ॥ ४६ ॥
उदरे विनिवेश्योर्ध्वमुत्थाप्य प्राक्षिपद्रुषा ।
एवं निक्षिप्तमात्रस्तु चीत्कुर्वन् कुञ्जराधिपः ॥ ४७ ॥
अपतन्निःपरिक्रम्य व्यसुः पर्वतशृङ्गवत् ।
पतन्तं वाहनेभन्तमालक्ष्य स महासुरः ॥ ४८ ॥
उत्पत्याऽङ्कुशमादाय रणकोलाहलं गजम् ।
प्राहरत् कुम्भयोर्मध्ये सर्वप्राणेन रोषितः ॥ ४९ ॥
हतोऽङ्कुशेन बलवत् स गजो भिन्नमस्तकः ।
अपाऽसरत् पञ्चधनुर्मात्रं चीत्कारभैरवः ॥ ५० ॥
विशुक्रः पुनरुत्पत्य सृणिहस्तो महागजम् ।
तमेव वाहनं तस्याः सम्पत्कर्या युयोध ह ॥ ५१ ॥
तस्याः करगतं चापमाच्छिद्य त्वरितं रुषा ।
बभञ्ज तत् द्विधा मध्ये समादायैकखण्डकम् ॥ ५२ ॥
प्राहरन्मूर्ध्नि बलवान् सम्पत्कर्याः सुवेगतः ।
एवं हता सा बलवदीषत्कश्मलमागता ॥ ५३ ॥
पुनर्मुष्टिं विनिर्वर्त्य वज्रसारां न्यपातयत् ।
मूर्ध्नि तस्य विशुक्रस्य रुषा सम्पत्करी बलात् ॥ ५४ ॥

मुष्टिपाताद्भिन्नमूर्धा वहद्रक्तोऽतिमूर्छितः ।
कृत्तपक्षः शैल इव पपात वसुधातले ॥ ५५ ॥
तावद्गजोऽपि सङ्क्रुद्धः पदाऽऽक्रान्तुं समुद्यतः ।
आलक्ष्य तद्भण्डसुतः युध्यमानः समीपतः ॥ ५६ ॥
मत्वा हतं पितृव्यं वै मायया तमपाऽवहत् ।
एवं पराजितः सम्पन्नाथया स महासुरः ॥ ५७ ॥
तथाऽश्वारूढया युध्यद्विषङ्गो वाजिवाहनः ।
विविधैरस्त्रशस्त्रैश्च युध्यन्तं तं महासुरम् ॥ ५८ ॥
अश्वाऽरूढाऽश्वस्वसंस्थाना प्राहरद्धृदयोरसि ।
ताडितो गदया चेषन्मूर्च्छां प्राप्य पुनर्जवात् ॥ ५९ ॥
पदासिकां खेटकञ्च शतचन्द्रमनुत्तमम् ।
समादायाऽश्वसेनासु विचचाराऽन्तकोपमः ॥ ६० ॥
पट्टासिप्रान्तसंछिन्नास्तुरगाः शक्तयोऽपि च ।
छिन्नमूर्धाऽङ्गचरणाः प्रपेतुः सङ्घसङ्घशः ॥ ६१ ॥
एवं शक्तीर्विनिघ्नन्तमश्वाऽऽरूढाऽतिकोपिता ।
बद्ध्वा पाशेन गदया साऽश्वं हन्तुं समुद्यता ॥ ६२ ॥
अथ सोऽपि महादैत्यो मत्वा स्वात्मपराभवम् ।
अन्तर्धानं ययौ साश्वो मायया मायिनां गुरुः ॥ ६३ ॥
एवं पलायितो युद्धे विषङ्गो वाजिनाथया ।
दण्डनाथा च भण्डेन युयोध बलसम्भृता ॥ ६४ ॥
विहत्याऽस्त्राणि चाऽस्त्रौघैः शस्त्रैः शस्त्राणि सर्वशः ।
पराक्रमेणाऽऽक्रमत भण्डं कोलमुखी युधि ॥ ६५ ॥
खड्गयुद्धे गदायुद्धे धनुःपरशुयुध्ययोः ।
मुष्टियुद्धे च दैत्येशमत्यारिच्यत दण्डिनी ॥ ६६ ॥
एवं पराजितः शस्त्रयुद्धेषु विमृशंस्ततः ।
मायां प्रादुश्चकारोच्चैर्मायिनां शेखरोऽसुरः ॥ ६७ ॥
अन्धकारं महावायुं विद्युद्वर्षं महारवम् ।
शिलावर्षं सर्पवर्षं शववर्षञ्च पावकम् ॥ ६८ ॥

सारमेयान् वृकान् व्याघ्रांस्तरक्षून् राक्षसानपि ।
सिंहांश्च शरभानाण्डभेरुण्डानसृजद्युधि ॥ ६९ ॥
एवं तेन महामायां सृज्यमानां पुनः पुनः ।
प्रतिक्रियाऽस्त्रसन्धानैर्नाशयामास सर्वतः ॥ ७० ॥
अथ दण्डमहाराज्ञीशस्त्रतेजोभिरर्दितः ।
नभस्यन्तर्हिता भूत्वा युयोध सरथोऽसुरः ॥ ७१ ॥
प्रादुश्चकाराऽश्मवर्षमतिभीमं महारवम् ।
शस्त्राऽशनिगणोपेतं शक्तिसेनाभयङ्करम् ॥ ७२ ॥
तेन वर्षेण महता पीडिता शक्तिवाहिनी ।
भिन्नसेतूदकमिव विलुप्ताऽभूत् समन्ततः ॥ ७३ ॥
दृष्ट्वा तदक्रमं दण्डराज्ञी चण्डप्रकोपना ।
उत्पपाताऽतिवेगेन सायुधा नभसोऽङ्गणम् ॥ ७४ ॥
वर्षं पतन्तं तदाविश्य शिलामयमतिद्रुतम् ।
मृगयामास दैत्येशं नभस्यन्धतमोवृते ॥ ७५ ॥
निजाऽङ्गकान्त्या कुर्वन्ती नभोदेशं सुभास्वरम् ।
अपहृत्य महामायामाससाद महासुरम् ॥ ७६ ॥
रथसंस्थं शैलनिभं सृजन्तं शैलवर्षणम् ।
गदयाऽभ्याहनन्मूर्ध्नि वज्राऽऽहत इवाऽद्रिराट् ॥ ७७ ॥
पपात मूर्च्छितो भूमौ स्रोतःक्षततटो यथा ।
पुनः सा गदयैवाऽऽशु रथमश्वांश्च सारथिम् ॥ ७८ ॥
विनाशयद्दण्डनाथा क्रोधेन महताऽऽवृता ।
तावन्मूर्च्छाविनिर्मुक्तो गदाहस्तो महासुरः ॥ ७९ ॥
उत्पपात नभो वेगाद्योद्धुं किरिनिभाऽऽननाम् ।
अथाऽभवन्महायुद्धं वाराहीदैत्यराजयोः ॥ ८० ॥
गदाप्रहारतुमुलं वज्रपातमहारवम् ।
मुहूर्तमात्रं युद्ध्वैवं बलोत्सिक्तं महासुरम् ॥ ८१ ॥

मत्वा चकर्ष सीरेण मुसलोद्यन्महाभुजा ।
तावन्मत्वा निजात्मानं हतं मुसलघाततः ॥ ८२ ॥
चिन्तयच्चण्डदैत्येशः पुरा लक्ष्मीप्रभाषितम् ।
नूनं प्रोक्तं रमादेव्या यत् पुरा न तदन्यथा ॥ ८३ ॥
भवेत् मुसलघातेनाऽमोघेन स्यां कथं हतः ।
त्रिपुरा सा महादेवी भक्तवाञ्छितपूरणी ॥ ८४ ॥
मां हन्यात् समरे साक्षादेतन्मेऽभिमतं चिरात् ।
दैत्ये विचिन्तयत्येवमभवन्नाभसं वचः ॥ ८५ ॥
दण्डनाथेनैष वध्यस्तव युद्धे कथञ्चन ।
अमोघो मुसलस्तेऽयं सन्निवर्तय वै द्रुतम् ॥ ८६ ॥
श्रुत्वेत्थं नाभसवचश्चण्डिका दण्डनायिका ।
मोचयत्तं सीरगर्भान्मत्वा वध्यं सुरेश्वरम् ॥ ८७ ॥
अथ सोऽन्तर्हितो दैत्यो निर्जितो दण्डनाथया ।
दैत्यसेनाशक्तिगणैर्गाढविद्धा पलायिता ॥ ८८ ॥
दृष्ट्वा भग्नां दैत्यसेनां जयभेरीमवादयत् ।
शक्तयो विविधांश्चापि वाद्यान् जयविधौ मतान् ॥ ८९ ॥
अथ द्रुतं प्रेषयित्वा जयाऽऽख्या नाथदण्डिनी ।
ललितायै शक्तिसेनां समन्तात्पाऽभितः स्थिताम् ॥ ९० ॥
क्षता हताः शक्तयो या अमृतेशी च ता द्रुतम् ।
अजीवयद्विरुजयत् ततो हृष्टाश्च तां चमूम् ॥ ९१ ॥
संनह्य स्वरथाऽऽरूढा सम्पदेव्याऽनुसङ्गता ।
पुरोऽव्रजदश्वनाथा सेनया दण्डनायिका ॥ ९२ ॥
द्रष्टुं तां ललितादेवीं ययौ द्रुततरं मुदा ।
गजवादित्रशब्दौघैः ख्यापयन्ती स्वकं जयम् ॥ ९३ ॥
इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये भण्डाऽसुरपराभवे
पञ्चषष्टितमोऽध्यायः ॥ ५४३० ॥

# अथ षट्षष्टितमोऽध्यायः ।

अथ गत्वा दण्डनाथा शक्तिभिर्विविधैर्युता ।
आसाद्य मन्त्रिणीं देवीं प्रणम्य जयमादिशत् ॥ १ ॥
साऽपि प्रीता परिष्वज्य तस्यै मानेन संददौ ।
अथ गत्वा तया सार्धं महाराज्ञीं प्रणम्य च ॥ २ ॥
जयवृत्तं समाचख्यौ शक्तिचक्रप्रहर्षदम् ।
भण्डासुरोऽपि दैत्यानां सेनया नष्टशेषया ॥ ३ ॥
ययौ बहिःखिन्नतया हृष्टश्चाऽन्तरभीप्सितात् ।
शून्यकं नगरं प्राप्य जगामाऽन्तःपुरं स्वकम् ॥ ४ ॥
ततः प्रियाः समभेत्य भण्डं सम्मोहिनीमुखाः ।
ब्रूयुर्नाथ किमद्य त्वां पश्यामः कृपणं यथा ॥ ५ ॥
नारदेन पुरोक्तं यत्तदन्यथयितं कथम् ।
प्राह पत्नीवचः श्रुत्वा ज्ञात्वा स्वाऽभिमतं शुभम् ॥ ६ ॥
नारदोक्त्याऽभिविदितमाभिः सर्वात्मनेत्यथ ।
अभवत् प्रकटस्तासु प्रियाः शृणुत मे वचः ॥ ७ ॥
कथमिष्टार्थलाभेषु खिन्नः स्यामतिमुग्धवत् ।
विदितं ते नारदोक्तेः सर्वं मे समभीप्सितम् ॥ ८ ॥
अचिरादेव तल्लोकं प्राप्स्यामि परया हतः ।
किन्तु दैत्येषु स्वरूपं निगूहितुमिति स्थितिः ॥ ९ ॥
अथ प्राहुः पुनर्दारा नाथ ब्रूमोऽभिवाञ्छितम् ।
यदि ते निश्चयो युद्धे हता यास्यामः तत्स्थितम् ॥ १० ॥
इति चेद्वै त्वदेकान्ता नयाऽस्मान् सहभावतः ।
तत्ते मार्गः प्रविदितो वदाऽस्माकं कथं गतिः ॥ ११ ॥

भक्त्या ह्यातुमयोग्यास्ते वयं छायेव सङ्गताः ।
श्रुत्वा प्रोक्तं प्रियाभिस्तत् प्राह हर्षाश्रुनिर्भरः ॥ १२ ॥
शृणुध्वं मद्वचस्तथ्यं मयैतच्चिन्तितं पुरः ।
न भवेदन्यथा ह्येतत् सर्वथा कारणं ब्रुवे ॥ १३ ॥
रमादेव्याः प्रसादेन स्मरामि प्राक् समुद्भवम् ।
नूनं सा मेऽब्रवीदेवं त्रिपुराऽस्मत्समाश्रया ॥ १४ ॥
संश्रितानां सुभक्तानां वाञ्छितं सा हि सर्वथा ।
दिशत्यसाध्यमपि च ततो नः स्यात् समीहितम् ॥ १५ ॥
मयाऽभिवाञ्छितं यामि भवतीभिः सहेति वै ।
तल्लोकं तद्भवेदेवं सर्वथाऽपि न संशयः ॥ १६ ॥
अथाऽपि मे समीहाऽन्या पुत्रादिभिः सह ।
गन्तव्यमिति तत्रापि भवेदेव तथाऽप्यहम् ॥ १७ ॥
चिन्तयाम्यक्रमेणैव भवेत्तस्याः कृपावशात् ।
नूनं लोके सुहृद्बन्धुवैधुर्यं जातु वैक्षणम् ॥ १८ ॥
सोढुं न योग्यं वै यत्र त्रुटिः कल्पगणायते ।
एतावत् प्रार्थ्यते नूनं न भवेत् स क्षणः क्वचित् ॥ १९ ॥
तस्माद्युष्माभिरप्येतत् प्रार्थनीयमहर्निशम् ।
सा साधयति भक्तानामसाध्यमपि वाञ्छितम् ॥ २० ॥
एतदन्यैर्न विज्ञेयमित्यहं शुच्यवस्थितः ।
शोकं जहथ राज्ञ्योऽत्र प्राप्तोऽभ्युदय उच्छ्रितः ॥ २१ ॥
इत्युक्त्वाऽस्तङ्गते सूर्ये विवेश महतीं सभाम् ।
अथाऽऽगता विशुक्राद्या भ्रातरो मन्त्रिणस्तथा ॥ २२ ॥
पुत्रा भृत्याः सभास्तारा सभामध्येऽतिभास्वरे ।
प्रणम्याऽसुरभूपालं विविशुः स्वस्वविष्टरे ॥ २३ ॥
विशुक्रः प्रेक्ष्य राजानं शोचन्तमिव संस्थितम् ।
कृताञ्जलिः प्रणम्याऽऽह वर्धयित्वाऽद्भुतं वचः ॥ २४ ॥

श्रीदेव्या भण्डदैत्येशवाञ्छितार्थसमीहया ।
नाशिताऽखिलदैत्यानां बुद्धिर्नीतिसमानुगा ॥ २५ ॥
योऽतिबुद्धिमतां श्रेष्ठो विचारे शुक्रसम्मितः ।
विशुक्रः सोऽपि विमतं प्राह स्वार्थविपर्ययम् ॥ २६ ॥
अगस्त्यैतावदेवेह कृत्यं कालस्य भावितम् ।
भाव्यर्थस्याऽनुरोधेन बुद्धिमुन्मेषयत्यलम् ॥ २७ ॥
महाराज लक्ष्यसे मे शोचन्निव सभास्थितः ।
जीवत्स्वस्मासु दैत्येषु पश्याम्येतदसाम्प्रतम् ॥ २८ ॥
इत्युक्तः पुनरूचे स दैत्येशो दैत्यमण्डले ।
विशुक्र किं वदाम्यद्य कालस्यैवं विपर्यये ॥ २९ ॥
योऽहं पञ्चोत्तरशतब्रह्माण्डानां प्रशासकः ।
यस्य युद्धे विष्णुमुखा भूयो जाताः पराङ्मुखाः ॥ ३० ॥
यस्य नाम्नाऽपि वृत्रघ्नो निद्रामप्येति नो क्वचित् ।
सोऽद्याऽहमबलासङ्घैर्व्यर्थयुद्धे कदर्थितः ॥ ३१ ॥
किं तादृशं पृच्छासि मां शोचसीति मृतप्रभम् ।
काले मृतिः श्लाघ्यतमा नेदृशस्य कदर्थना ॥ ३२ ॥
विशुक्र इति तद्वाक्यं श्रुत्वा प्राह ततो वचः ।
दैत्येशैवं नाऽर्हसि त्वं भाषितुं करुणं वचः ॥ ३३ ॥
अबला योषिदित्येवं कारुण्यं नाऽऽप्नुयात्तु कः ।
नैसर्गिकस्ते धर्मोऽयं स्त्रीषु शस्त्रपराङ्मतिः ॥ ३४ ॥
अलं त्वया मया वाऽपि राजपुत्रादिभिस्तथा ।
दैत्येष्वन्यतमोऽप्येकस्त्वयाऽऽज्ञप्तो मुहूर्ततः ॥ ३५ ॥
हन्याच्छक्तिगणं सर्वमत्र पादौ स्पृशामि ते ।
त्वं तिष्ठाऽन्तःपुरे क्रीडन् सुरवारगणैः सह ॥ ३६ ॥
गतोऽहं तां विजित्यैव पादौ पश्यामि ते पुनः ।
इत्युक्त्वा पार्श्वतः प्रैक्षत् कुटिलाक्षं चमूपतिम् ॥ ३७ ॥

तावत् सोऽपि प्रणम्यैनं कृताञ्जलिरभाषत ।
युवराज किमेवं त्वं ब्रवीषि मयि जीवति ॥ ३८ ॥
राज्ञा सह विषङ्गेण राजपुत्रैरुपाविश ।
सेनासेनाधिपैः साकं गत्वाऽहं साधयामि ताम् ॥ ३९ ॥
अन्यथा नाऽऽगमिष्यामि सत्यं प्रतिशृणोमि ते ।
इत्युक्त्वा प्रणिपत्यैतान्निर्ययौ नगराद्बहिः ॥ ४० ॥
अनेकाऽक्षौहिणीसेनायुक्तः सेनाऽधिपैः सह ।
अथाऽऽगत्य दुर्मदाऽऽख्यो वाहिनीपो महाबलः ॥ ४१ ॥
दशाऽक्षौहिणिकायुक्त उष्ट्राऽऽरोहो गदाधरः ।
प्राहाऽहङ्कारशैलस्थः प्रणम्याऽऽत्मचमूपतिम् ॥ ४२ ॥
सेनाधीश त्वमत्रैव तिष्ठ सेनासमावृतः ।
अबलाविजयेनैव प्रयाणं वः सुसम्मतम् ॥ ४३ ॥
आनेष्यामि मुहूर्तेन बद्ध्वा तामबलाधिपाम् ।
मुहूर्तमात्राद्यदि तां नाऽऽनेष्यामि ततस्त्वया ॥ ४४ ॥
यतितव्यश्च गन्तव्यमित्युक्त्वा निर्ययौ जवात् ।
वादयन् जैत्रयात्राऽङ्गवादित्राणि मुहुर्मुहुः ॥ ४५ ॥
ययौ शक्तिचमूवक्त्रं सूर्यस्योदयनं प्रति ।
दैत्यसेनासमारम्भकोलाहलमहारवम् ॥ ४६ ॥
श्रुत्वा सम्पत्करी देवी चाऽश्वारूढा महाबला ।
गत्वा श्रीमातरं नत्वा मन्त्रिणी दण्डिनीमपि ॥ ४७ ॥
विज्ञाप्य दैत्यसन्नाहमनुज्ञातेऽतिमोदिते ।
प्रयतुः शक्तिसेनाभिरसङ्ख्याभिः समायुते ॥ ४८ ॥
तत्र सम्पत्करी देवी समारुह्य महागजम् ।
रणकोलाहलाऽऽख्यानं प्रालेयाऽद्रिरिवोन्नतम् ॥ ४९ ॥
सुवर्णाभा जपाऽऽरक्तवासोरत्नविभूषणा ।
तारुण्याम्भोधिलहरी लावण्यौघसमुद्रिका ॥ ५० ॥

विकर्षन्ती मणिमयं चापमिन्द्रधनुष्प्रभम् ।
दैत्याम्बुधेः शोषणाय शरान् भानुकरोपमान् ॥ ५१ ॥
किरन्ती निर्ययौ सूर्य उदयाऽद्रिगतो यथा ।
असङ्ख्या वारणाऽऽरूढा शक्तयश्चाऽपि तादृशाः ॥५२॥
परिवार्य ययुर्बाणान् विकिरन्त्यः समन्ततः ।
प्रत्येकं तादृशी शक्तिर्गर्जने त्वङ्कुशग्रहा ॥ ५३ ॥
गजग्रीवासमारूढा नयती शत्रुवाहिनीम् ।
कस्मिंश्चिदेका संरूढाऽनेकाश्चाऽन्येषु संस्थिताः ॥ ५४ ॥
इत्यसङ्ख्येभसेनाभिः समेता सर्पदीश्वरी ।
ग्रसन्तीव दैत्यसेनां व्याप्य भूमिमुपाऽऽययौ ॥ ५५ ॥
निसर्गभिन्नगण्डास्ते गजाः पर्वतसन्निभाः ।
दैत्यसेनां समासेदुस्तं युद्धेष्वनिवर्तिनः ॥ ५६ ॥
अथ वादित्रनिस्वानः सेनयोरुभयोरभूत् ।
प्रवृत्तः शस्त्रपातोऽपि प्राणघोरमहारवः ॥ ५७ ॥
दैत्या रथेभतुरगखरोष्ट्रमृगरोहिणः ।
गृध्रकाककङ्कघूकभासकेक्याधिसंश्रयाः ॥ ५८ ॥
अन्ये मार्जारनकुलसरटप्रेतवाहनाः ।
चण्डशूलखड्गचक्रभिन्दिपालधराः परे ॥ ५९ ॥
तोमरप्रासपरिघभुशुण्डीलगुडाऽऽयुधाः ।
एवंविधैर्दैत्यगणैः समेता शक्तिवाहिनी ॥ ६० ॥
युयुधे प्रौढसंरम्भा क्रोधसंरक्तलोचना ।
परस्परं क्षिपन्तस्ते वाक्यैः कटुरसोदयैः ॥ ६१ ॥
हतोऽसि तिष्ठ शौर्येण पृष्ठं त्वं न प्रदर्शय ।
इत्यादिबहुवाक्यानि वदन्त्यः शक्तयो रणे ॥ ६२ ॥
जघ्नुर्दैत्यांस्तेऽपि तद्वन्निजघ्नुः शक्तिवाहिनीम् ।
एवं प्रवृत्ते समरे प्राणद्यूते भयङ्करे ॥ ६३ ॥

च्छिन्नबाह्वङ्घ्रिमूर्धानः पाटिताऽर्धाऽर्धदेहिनः ।
एवंविधाः शक्तयोऽपि दैत्यहेतिभिराहताः ॥ ६४ ॥
पाटिताङ्गा अपि दृढं क्रोधात् सन्दष्टदच्छदाः ।
जघ्नुः प्रत्यर्थिनां वृन्दं शस्त्रैर्दन्तैश्च मुष्टिभिः ॥ ६५ ॥
नष्टशस्त्राः परकराच्छस्त्रमाच्छिद्य वै बलात् ।
अन्ये भग्नैरथाऽङ्गैश्च हेतिभिर्युयुधुर्भृशम् ॥ ६६ ॥
एवं प्रवृत्ते समरे घोरे संहृतिसन्निभे ।
बवुर्नद्यो लोहितौघाः सफेनिलतरङ्गिकाः ॥ ६७ ॥
शक्तिभिर्गजरोहाभिर्दैत्यसैन्यं विनाशितम् ।
पलायितं गाढविद्धं दशाऽक्षौहिणिशेषितम् ॥ ६८ ॥
दृष्ट्वा दुर्मद एवं स्वां भग्नां सेनां समन्ततः ।
उष्ट्राऽऽरूढो गदाहस्तः कालाऽन्तकयमोपमः ॥ ६९ ॥
दशतालसमुन्नम्रं करभं पिङ्गलाऽऽकृतिम् ।
प्राहिणोच्छक्तिसेनासु महावेगं महाबलम् ॥ ७० ॥
अथ प्रविष्टः शक्तीनां सेनासूष्ट्रोऽतिवेगवान् ।
सृक्किणीप्रान्तविगलन्मांसपिण्डाऽऽभजिह्वकः ॥ ७१ ॥
समुद्रमथनोदञ्चन्महाशब्दप्रतिस्वनः ।
फेनपिण्डानुद्गिरंश्च मूत्रयन् पृष्ठतो बहु ॥ ७२ ॥
उरसा पादविक्षेपैस्तुण्डाऽऽघातैः करिव्रजम् ।
नाशयन् दशनैश्चैव व्यचरच्छक्तिसैन्यके ॥ ७३ ॥
दुर्मदोऽपि गदाऽऽघातैरिभांच्छक्तीश्च नाशयन् ।
शक्तिसेनाऽन्तक इव कदनं प्रकरोद्रुषा ॥ ७४ ॥
तद्दृष्ट्वा शक्तिसेनाया नाशनं सम्पदीश्वरी ।
रणकोलाहलं तस्य नाशाय समचोदयत् ॥ ७५ ॥
अथेभराज आसाद्य करभं दैत्यवाहनम् ।
अयुध्यत विषाणाऽग्रकुम्भाऽऽघातैर्मुहुर्मुहुः ॥ ७६ ॥

सोऽपि दन्तैर्मूर्धघातैः पदक्षेपैरयुध्यत ।
एवं युद्धं समभवत्तुमुलं करभेभयोः ॥ ७७ ॥
अथेभराजः करभं प्रसह्याऽपातयद्भुवि ।
निपात्य पादेनाऽऽक्रम्याऽकरोत्तं करभं व्यसुम् ॥ ७८ ॥
मरिष्यन्तं विदित्वोष्ट्रं गदाहस्तः खमाप्लुतः ।
संभ्राम्य पातयन्मूर्ध्नि गदां वारणकुम्भयोः ॥ ७९ ॥
गदयाऽभिहतो हस्ती भिन्नमूर्धा भ्रमन्तुरः ।
जानुभ्यां विकलो भूमिं प्राप्तः शोणितमुद्गिरन् ॥ ८० ॥
तावत् सम्पद्धीश्याऽपि शरेणोरासि ताडितः ।
जहौ प्राणान् दुर्मदोऽपि द्विधोरासि विपाटितः ॥ ८१ ॥
हतं सेनाऽधिपं दृष्ट्वा विद्रुता दैत्यसैनिकाः ।
अदृष्ट्वा पृष्ठतो यान्तीः शक्तीर्जीवितहेतवे ॥ ८२ ॥

इति श्रीललितामाहात्म्ये दुर्मदवधे षट्षष्टितमोऽध्यायः ॥५५१२॥

# अथ सप्तषष्टितमोऽध्यायः ॥

दुर्मदं निहतं श्रुत्वा कुरण्डो दुर्मदाऽग्रजः ।
क्रुद्ध आज्ञां समादाय कुटिलाक्षान् महाबलः ॥ १ ॥
विंशत्यक्षौहिणीयुक्तो योद्धुमभ्याययौ जवात् ।
विलोक्य पुनरायान्तीं दैत्यसेनां नभोनिभाम् ॥ २ ॥
अश्वारूढाऽश्वसेनाभिरपाराभिरभिव्रजत् ।
तुरङ्गा विविधास्तुङ्गाः तरङ्गा इव रेजिरे ॥ ३ ॥
पृथग्वर्णा सङ्कुशः सा सेनाऽत्यन्तं व्यराजत ।
फेनपिण्डनिभानश्वानारूढाः कनकप्रभाः ॥ ४ ॥
नीलांऽशुकाः खड्गखेटधरास्तारुण्यगर्विताः ।
अपराः कालजीमूतनिभवाजिसमाश्रयाः ॥ ५ ॥
चन्द्रकान्तिसमाऽऽभासः शोणाऽऽभरणवाससः ।
धनुर्बाणधरा नीलरत्नकोटीरशोभिताः ॥ ६ ॥
अन्या गारुत्मतनिभानश्वानारुह्य वेगिनः ।
कुरुविन्दसमानाङ्ग्यः पाटलांऽशुकभूषणाः ॥ ७ ॥
क्वचित् समानाऽङ्गभूषांऽशुकाऽश्वाः शक्तयो ययुः ।
एवं विचित्राऽभ्रयुतसन्ध्याऽऽकाशनिभा चमूः ॥ ८ ॥
अतिवेलाऽम्बुधिनिभा ग्रसदैत्यचमूं द्रुतम् ।
भेरीकाहलगोमृङ्गपटहाऽऽनकनिस्वनः ॥ १० ॥
तुरङ्गखुरकुद्दालतालनिस्वनमिश्रितः ।
हुङ्काराऽऽह्वानविक्षेपाऽऽस्फोटसंरावमांसलः ॥ ११ ॥
द्यावापृथिव्यन्तरालमापूर्याऽधिव्यरोचत ।
अथ प्रवृत्तः समरः करालोऽसुविकर्षणः ॥ १२ ॥

हेतिपातमहाशब्दबधिरीकृतदिङ्मुखः ।
तुरङ्गखुरविक्षेपविधूतरजसां गणः ॥ १३ ॥
सांवर्तकमहामेघसङ्घवत् खं समाक्रमत् ।
क्षणं कुहूनिशीथाऽऽभं जातं हीनाऽवलोकनम् ॥ १४ ॥
ततो हेतिप्रपतनोच्छलच्छोणितवृष्टिभिः ।
रजोऽन्धकारः संशान्तः पुनरासीन्महारणः ॥ १५ ॥
परस्परं प्राणहरः शक्तिसैन्यस्य चाऽसुरैः ।
बलीयसीभिर्दैत्यानां शक्तिभिस्तेज आहृतम् ॥ १६ ॥
भग्नाऽभवद्दैत्यसेना शक्तिभिर्गाढमर्दिता ।
छिन्नपादकरश्रोत्रकुक्षिपृष्ठा महासुराः ॥ १७ ॥
प्रास्यशस्त्राणि परितो विधुन्वन्तः करान्मुहुः ।
वदन्तो हा हतास्मेति त्यक्त्वा युद्धं विदुद्रुवुः ॥ १८ ॥
निशाम्य सेनां स्वां भग्नां कुरण्डः क्रोधमूर्च्छितः ।
अश्वारूढो महच्चापं विकर्षन् सायकान् क्षिपन् ॥ १९ ॥
शक्तिसेनां समाविश्य नाशयत्ताः सहस्रशः ।
शरवर्षैः कुरण्डाऽब्दानिर्मुक्तैः शक्तिवाहिनी ॥ २० ॥
भग्ना सेतुरिवोन्मग्ना महाजलसमागमात् ।
भग्नायां शक्तिसेनायामश्वारूढां समासदत् ॥ २१ ॥
अपराजितनामानं वाजिनं समाधिष्ठिताम् ।
तप्तहेमनिभामच्छदुकूलाऽऽभरणोज्ज्वलाम् ॥ २२ ॥
पाशाऽङ्कुशधनुर्बाणधरां दृष्ट्वाऽब्रवीद्वचः ।
दुष्टेव लिप्ताऽसि चिरं मोचयाम्यवलेपकम् ॥ २३ ॥
यन्मे त्वया हतो भ्राता तत्फलं प्राप्स्यसि द्रुतम् ।
त्वां निहत्य रणे पश्चान्मुक्तः स्यां भ्रातृदोषतः ॥ २४ ॥
मयि प्रदर्शयाऽऽदौ ते वीर्यं यच्चिरसम्भृतम् ।
एवं प्रोक्ता रोषिताऽश्वारूढां तीक्ष्णैः शरैस्त्रिभिः ॥ २५ ॥

विव्याध तत्र चैकेन वाहस्य शिर आच्छिनत् ।
द्वितीयेन च कोटरं पातयामास भूतले ॥ २६ ॥
तृतीयेन तस्य वक्षो दारयामास वेगतः ।
हताऽश्वो भ्रष्टमुकुटो विहतो बलवद्धृदि ॥ २७ ॥
मूर्च्छितः कृत्तमूलस्य पपातेव महासुरः ।
क्षणेन मूर्च्छानिर्मुक्तः प्राह तां रणमूर्धनि ॥ २८ ॥
रणश्लाघ्या हि साधुत्वं सम्मताऽसि रणे मम ।
श्रुत्वेत्याह पुनर्देवी धिक्त्वं जीवासि दैत्यक ॥ २९ ॥
यत्नान्मया भाषितुं त्वं जीवशेषीकृतो ह्यसि ।
पश्येमं त जीवहरं शरं शत्रुमदाऽपहम् ॥ ३० ॥
श्रुत्वा देवीवचो दैत्यः क्रोधाग्निज्वलिताऽऽकृतिः ।
देव्याश्चापं प्रचिच्छेद शरेणाऽऽनतपर्वणा ॥ ३१ ॥
चिच्छेद साऽपि खड्गेन धनुर्दैत्यकरास्थितम् ।
अथ दैत्योऽपि खड्गेन तस्याः खड्गं द्विधाऽकरोत् ॥३२॥
पुनर्जघान तुरगं खड्गेनैवाऽतिवेगतः ।
खड्गप्रहारनिर्भिन्नमस्तकोऽश्वो ह्यपाऽक्रमत् ॥ ३३ ॥
तावद्देव्यपि संक्रुद्धा बद्ध्वा पाशेन वै दृढम् ।
आकृष्य प्राहरन्मूर्ध्नि सृणिना दीप्ततेजसा ॥ ३४ ॥
तेनाऽङ्कुशेन निर्भिन्नमूर्धा दैत्यो ममार ह ।
एवं कुरण्डं निहतं श्रुत्वा सेनाऽधिपो रुषा ॥ ३५ ॥
पार्श्वस्थान् प्रेक्ष्य सेनेशान् करङ्कप्रमुखांस्तदा ।
कुटिलाक्षः प्राह सेनाधीशोऽरुणितलोचनः ॥ ३६ ॥
हे हे करङ्कप्रमुखाः पञ्च यूयं स्वसेनया ।
युता गत्वा द्रुतं हत्वा बद्ध्वा तां वारणे द्रुतम् ॥ ३७ ॥
समानयध्वं वः शक्तिरस्ति मायामयी ननु ।
सर्पिण्याख्या तया सर्वे नन्वजेयाः सुराऽसुरैः ॥ ३८ ॥

इत्याज्ञप्ताः करङ्काद्या नत्वा सेनाऽधिपेश्वरम् ।
विंशत्यक्षौहिणीयुताः प्रत्येकं योद्धुमाययुः ॥ ३९ ॥
करङ्को गर्दभरथे करभे वज्रदन्तकः ।
वज्रलोमा गृध्ररथे गजे काकमुखस्तथा ॥ ४० ॥
वज्रवक्त्रः खरवरे संरूढा भीमदर्शनाः ।
युद्धसंरम्भदैत्यानां निशम्याऽतिमहाध्वनिम् ॥ ४१ ॥
अश्वारूढा च सम्पत्तिदेवी सेनामयूयुजत् ।
अथ सम्मुखमासाद्य सेने ते शक्तिदैत्ययोः ॥ ४२ ॥
विचित्रवादित्ररवे हेतिसञ्ज्वलनोज्ज्वले ।
चक्राते शरवर्षाणि दूरान्मेघतती इव ॥ ४३ ॥
अथ सेनाद्वयं श्लिष्टं विनिघ्नदितरेतरम् ।
क्रोधदष्टदच्छदाढ्यं भ्रुकुटीकुटिलाननम् ॥ ४४ ॥
पाटितं सितखड्गेन प्रोतं भल्लेषु प्रांशुषु ।
छिद्रितं शरजालेन परिघोत्पातपेषितम् ॥ ४५ ॥
शस्त्रैरुच्चावचैरेव परस्परमनाशयत् ।
गजवाजिमहासेना शक्तीनामतिरोषिता ॥ ४६ ॥
मुहूर्तेनैव निःशेषाश्चक्रे दैत्येन्द्रवाहिनीम् ।
दृष्ट्वा सेनां हतप्रायां करङ्काद्या महासुराः ॥ ४७ ॥
प्रविश्य शक्तिसेनां तां नाशयामासुरोजसा ।
काल्यमानां दैत्यवरैः सेनां दृष्ट्वा पराहताम् ॥ ४८ ॥
अश्वारूढा तथा सम्पत्करी दैत्यानयुध्यत ।
ताभ्यां भग्ना युधि तदा करङ्काद्या महासुराः ॥ ४९ ॥
निर्ममुस्तां महामायां सर्पिणीं सर्पभूषणाम् ।
भीमरूपां चण्डरवां विविधं सर्पमण्डलम् ॥ ५० ॥
सृजमानां शक्तिसेनानाशाय समराऽवनौ ।
अथ सा मुखनेत्रादिसम्भूतैः सर्पमण्डलैः ॥ ५१ ॥

नाशयामास शक्तीनां सेनामर्धमुहूर्ततः ।
तद्वैशसमतीवोग्रं दृष्ट्वा काश्चन शक्तयः ॥ ५२ ॥
पलायिताः समाख्यातुं दण्डनाथायै द्रुतं ययुः ।
प्राप्य तां कोलवदनां श्रीमातृसविधे स्थिताम् ॥ ५३ ॥
प्रणम्य मन्त्रिणीञ्चाऽपि प्रोचुर्दैत्याश्च हा भयम् ।
दण्डनाथे वयं याताः सम्पद्देव्या सहाऽसुरैः ॥ ५४ ॥
तत्र युद्धं समभवद्घोरं प्राणहरं परम् ।
दुर्मदो निहतो युद्धे सम्पदीशया कुरण्डकः ॥ ५५ ॥
नीतोऽश्वारूढया कीर्तिशेषं सेनाऽपि भूयसी ।
नाशिताऽस्माभिरत्युग्रा एवं दैत्या विनिर्जिताः ॥ ५६ ॥
करङ्काद्यैः पञ्चसेनानायकैर्हतपत्तिभिः ।
प्रवर्तिता महामाया सर्पिण्याख्या हि साम्प्रतम् ॥ ५७ ॥
नेत्राद्यक्षैः सृजन्ती साऽसङ्ख्यान् सर्पगणान्मुहुः ।
तैः सर्पैर्निहता दष्टा बद्धा भस्मीकृता परा ॥ ५८ ॥
शक्तिसेना मृतप्राया सञ्जाता ननु सर्वशः ।
देव्यौ ते शरवर्षेण सर्पान् घ्नन्त्यौ मुहुर्मुहुः ॥ ५९ ॥
न सर्पवशतां याते चाऽन्याः सर्वा विहिंसिताः ।
इति तासां वचः श्रुत्वा क्रुद्धा कोलमुखी तदा ॥ ६० ॥
हन्तुं दैत्यान् सुभीमेन मुसलेन विनिर्ययौ ।
निवार्य तां मन्त्रनाथा ज्ञात्वाऽमोघाञ्च सर्पिणीम् ॥ ६१ ॥
तद्वृत्तं तरसा गत्वा स्वयं देव्यै व्यजिज्ञपम् ।
अथ ध्यात्वा क्षणेनाऽम्बा जृम्भमाणा मुखाऽम्बुजम् ॥ ६२ ॥
विकाशयत्तद्वक्त्राच्च निर्जगामाऽतिवेगतः ।
कनकाभा महाशक्तिर्देवीतालुसमुद्भवा ॥ ६३ ॥
सुपर्णसंस्था नकुली वाग्देवी रत्नभूषणा ।
तां प्रणम्य स्थितामग्रे प्राह श्रीललितेश्वरी ॥ ६४ ॥

गच्छ वत्से सर्पिणीं तां नाशयाऽऽशु स्वतेजसा ।
इत्युक्ता सा क्षणेनैव सम्प्राप्ताऽऽहवमण्डलम् ॥ ६५ ॥
सुपर्णपक्षवातेन सर्वे सर्पाः पलायिताः ।
सर्पबन्धविनिर्मुक्ताः शक्तयः प्रोत्थितास्ततः ॥ ६६ ॥
भूयः ससर्ज सर्पान् सा नाशितुं शक्तिमण्डलम् ।
तद्दृष्ट्वा सर्पनिवहव्याप्तं शक्तिगणं मुहुः ॥ ६७ ॥
ससर्ज नकुलान् स्वीयरोमभ्योऽतिबलान् क्षणात् ।
नकुलास्ते महावेगाश्चित्रवर्णाः सुरोपिताः ॥ ६८ ॥
स्तब्धरोमवालधयो वज्रदन्ता दृढाऽङ्गकाः ।
ते सृष्टा नकुलाः शीघ्रं तान् सर्पान् सर्वतः स्थितान् ॥६९॥
ददंशुर्वज्ररदनैः खण्डश्चक्रुर्द्विधा त्रिधा ।
नकुलैस्तादृशैः सर्पाः खण्डिता भक्षिता अपि ॥ ७० ॥
निःशेषिताः शक्तिसेना नाशकामा यथोत्थिताः ।
अथ ते नकुलाः सर्पान् विनाश्याऽपरिशेषतः ॥ ७१ ॥
ददंशुः सर्पभूषाढ्यां सर्पिणीमपि सर्वतः ।
सर्पिण्यान्तु प्रनष्टायां करङ्काद्या महासुराः ॥ ७२ ॥
युयुधुर्नकुला देव्या शस्त्राऽस्त्रैरनेकशः ।
ततस्तेषाञ्च शस्त्राणि वाहनान्यपि सर्वतः ॥ ७३ ॥
प्रणाश्य युगपत्तेषां खड्गेन शिर आच्छिनत् ।
खड्गच्छिन्नोत्तमाङ्गास्ते निपेतुर्विगताऽसवः ॥ ७४ ॥
तावत् सेनाऽपि संशिष्टा भीता दिक्षु प्रविद्रुता ।
जयशब्दैर्वर्ध्यमानान्नकुलीनकुलान हि तान् ॥ ७५ ॥
साऽङ्गे संहृत्य वाराहीं मन्त्रिणीं ललितेश्वरीम् ।
प्रणम्य जयवृत्तान्तमाचख्यौ विधृताऽञ्जलिः ॥ ७६ ॥
इति श्रीललितामामाहात्म्ये नकुलीपराक्रमे करङ्कादिवधे
सप्तषष्टितमोऽध्यायः ॥ ५५८८ ॥

# अथाऽष्टषष्टितमोऽध्यायः ।

अथ दैत्यैर्विदित्वा तान् करङ्कप्रमुखान् हतान् ।
कुटिलाक्षो विनिश्वस्य चिन्तामाप महत्तराम् ॥ १ ॥
नूनमेषा महाशक्तिरविजेयेव भाति मे ।
दुर्मदश्च कुरण्डश्च बलिनौ निहतौ रणे ॥ २ ॥
अस्तु तन्न विचिन्त्यं स्याज्जयस्याऽनियतस्थितेः ।
एते करङ्कप्रमुखाः सर्पिण्याऽमोघया युताः ॥ ३ ॥
अजेया देवदैत्यानां कथं युद्धे निपातिताः ।
या श्रूयते शक्तिगणनायिका ललिताऽभिधा ॥ ४ ॥
सा स्थितैव परीवारशक्तिभिर्निहतं बलम् ।
अहो किं न भवेल्लोके विपरीते विधौ ननु ॥ ५ ॥
आश्चर्यमेतन्निहता करङ्काद्याश्च योषिता ।
बलं क्षीणं चतुर्थोऽशं सैन्येशा बलिनो हताः ॥ ६ ॥
न हता शक्तिसेनायां मुख्यैकाऽपि कथं भवेत् ।
प्रतिज्ञाय शक्तिजयं राज्ञेऽहं कथमद्य वै ॥ ७ ॥
अशक्यमिति वक्ष्यामि पुनः कापुरुषो यथा ।
एवं चिन्तासमाक्रान्ते कुटिलाक्षे चमूपतौ ॥ ८ ॥
आजगाम विषङ्गोऽपि विशुक्रेण प्रयोजितः ।
दृष्ट्वा विषङ्गं सेनेशः कुटिलाक्षः समुत्थितः ॥ ९ ॥
आसनाद्यैः पूजयित्वा निषसादाऽऽसने स्वके ।
अथ दृष्ट्वा विषण्णाऽस्यं विषङ्गः सैन्यनायकम् ॥ १० ॥
अब्रवीत्तं भण्डदैत्यप्रार्थितं या समीहति ।
तया भक्तेष्टदायिन्या मोहितो दैत्यपुङ्गवः ॥ ११ ॥

कुटिलाक्ष विषीदन्तमिव पश्यामि ते मुखम् ।
तद्वदाऽऽशु किं निमित्तं समं सर्वं करोम्यहम् ॥ १२ ॥
श्रुत्वा प्रोचे सोऽपि सर्वं दैत्यनाशं महत्तरम् ।
अविनाशश्च शक्तीनां महाभयमुपस्थितम् ॥ १३ ॥
श्रुत्वा जहास दैतेयं आ मोह इति संवदन् ।
मोहितो मायया देव्या बभाषे बुद्धिमानिव ॥ १४ ॥
शृणु सेनापते सर्वं विदित्वैवाऽहमागतः ।
विना युक्त्या न जीयेत महाबलवता परः ॥ १५ ॥
जयो युक्तौ सर्वथैव स्थितः सा बुद्धिसंश्रया ।
मया शक्तिजयो प्रायो निश्चितः सूक्ष्मबुद्धिना ॥ १६ ॥
जहि शोकाऽन्धकारं त्वं मद्युक्तेरविसंश्रयः ।
अहं मन्ये हताः शक्तिगणा इत्येव युक्तितः ॥ १७ ॥
शृणु ते तत् प्रवक्ष्यामि यन्मया निश्चितं जये ।
कूटेनैव विजेया सा तत्क्रमं निश्चितं ब्रुवे ॥ १८ ॥
अद्यैव चरमे भागे दिनस्य दैत्यसेनया ।
महत्या दंशिताः सर्वे विशुक्रेणाऽपि संवृताः ॥ १९ ॥
युद्धाय पुरतो यान्तु राजपुत्रैश्च संयुताः ।
गन्तव्यमेव युद्धाय यथा शक्तिगणा अपि ॥ २० ॥
निःशेषेणैव युध्यन्ति ललितैकाकिका भवेत् ।
तावद्रात्रावन्धकारैर्दैत्यैर्बहुभिरावृतः ॥ २१ ॥
निर्गम्य पार्श्वभागेन पृष्ठदेशं समाश्रयन् ।
तस्या रथं समरुह्य तत्रत्या अपि काश्चन ॥ २२ ॥
शक्तीर्हत्वा ग्रहीष्यामि जीवग्राहं बलादहम् ।
ललितामबलां दुष्टां शक्तिसङ्घशिफात्मिकाम् ॥ २३ ॥
न जीवग्रहणं याति चेद्धन्मि गदया भृशम् ।
तस्यां हतायां बद्धायामपि वा शक्तिवाहिनीम् ॥ २४ ॥

नष्टमायामवेहि त्वं भवाद्भिर्नाश्यतेऽपि च ।
या तु सा ललिता राज्ञी सुकुमारकराङ्घ्रिका ॥ २५ ॥
न समर्था मया योद्धुं विदितं मे चिरादिदम् ।
एवं मया व्यवसितं बुध्वाऽत्यन्तप्रगल्भया ॥ २६ ॥
सखे कच्चित्तव मतं दोषभेदविवर्जितम् ।
श्रुत्वा विषङ्गवचनं कुटिलाक्षश्च भूपतिः ॥ २७ ॥
त्रिपुरामायया मूढो जितां तामभिमन्यत ।
प्रहृष्ट उत्थाय च तं द्रुतं स परिषस्वजे ॥ २८ ॥
साधु दैत्यकुलश्लाघ्य वेद्मि त्वां बुद्धिमत्तमम् ।
काले जयवहा बुद्धिर्दुर्लभा सर्वथा ननु ॥ २९ ॥
नैवंविधा ह्यौशनसी बुद्धिराङ्गिरसी तथा ।
चिरं जीव राजकार्यसाधकस्त्वं मतो मम ॥ ३० ॥
तत् मयाद्यचिरं राज्ञे निवेद्याऽऽदाय मन्त्रिणः ।
राजपुत्रान् विशुक्रश्चाऽऽयाहि युद्धाय सर्वथा ॥ ३१ ॥
लम्बत्येष दिवानाथो प्रयातुं सलिलाऽर्णवम् ।
वयं यदा शक्तिसेनां नियुध्यामस्तदा द्रुतम् ॥ ३२ ॥
साधयिष्यसि तत्कार्यं बुद्ध्या वीर्येण संवृतः ।
इत्युक्ते कुटिलाक्षेऽथ विषङ्गो नगरं ययौ ॥ ३३ ॥
तत्र राज्ञे विशुक्राय चाऽपि संवेद्य सर्वशः ।
मायाविमूढैर्दैत्येशैः सम्मतः संययौ द्रुतम् ॥ ३४ ॥
राजपुत्रैर्विशुक्रेण मन्त्रिभिश्चाऽभिसंवृतः ।
कुटिलाक्षेण सङ्गम्य सर्वसेनासमावृतः ॥ ३५ ॥
योद्धुमभ्याययौ तत्र यत्र शक्तिमहाचमूः ।
विदित्वा दैत्यराजस्य सन्नाहमतिसंवृतम् ॥ ३६ ॥
सर्वसैन्यदैत्यवरसङ्गमं चारवक्त्रतः ।
मन्त्रिणी ललितादेवीं नत्वा वृत्तं व्यजिज्ञपत् ॥ ३७ ॥

आज्ञप्ता ललितादेव्या मन्त्रिणी प्राह दण्डिनीम् ।
वत्से भण्डासुरस्याऽयं संरम्भो दृश्यते महान् ॥ ३८ ॥
एकं दैत्येश्वरं मुक्त्वा सर्वे युद्धाय सङ्गताः ।
अस्माभिरपि गन्तव्यं निःशेषेण द्रुतन्तु तत् ॥ ३९ ॥
कुरु सैन्यस्य सन्नाहं शक्तीनां प्रविशेषतः ।
इत्याज्ञप्ता कोलमुखी सर्वशक्तिचमूवृता ॥ ४० ॥
मन्त्रिण्या च समायुक्ता देवीं नत्वा ययौ मृधे ।
निर्गता शक्तिसेना सा गजवाजिरथाऽऽकुला ॥ ४१ ॥
समुद्र इव लोकानां प्लावकः प्रतिसञ्चरे ।
युद्धवादित्रनिनदैर्गजवाजिरथस्वनैः ॥ ४२ ॥
मिश्रितः सिंहनादो वै शक्तीनामभिवर्धत ।
तं भीमं लोकदलनं श्रुत्वा दैत्या महास्वनम् ॥ ४३ ॥
व्यमुञ्चन् प्रतिरावं ते ततोऽतिविपुलं तदा ।
स घोषः सेनयोर्मिश्रो व्यरुचद्रोदसीगतः ॥ ४४ ॥
भीरूणां प्राणहरणः पल्वलानां प्रशोषणः ।
अथाऽभवन्महायुद्धं सेनयोः शक्तिदैत्ययोः ॥ ४५ ॥
जघ्नुर्दैत्याः शक्तिगणं विचित्रैरायुधैः पृथक् ।
तथा दैत्यान् शक्तयोऽपि ममर्दुर्हेतिपातनैः ॥ ४६ ॥
शरप्रहारैस्तिलशः केचित्तत्र कृता रणे ।
केचित् कृपाणिना मध्ये पाटिताः शकलीकृताः ॥ ४७ ॥
केचिच्छक्तिषु भल्लेषु प्रोताः शूलेषु मध्यतः ।
केचिच्चक्रेण संच्छिन्नकन्धरोदरबाहवः ॥ ४८ ॥
पेषिताः परिघैः केचिच्छतघ्नीमुद्गरादिभिः ।
अमोघपाशैः परितः पाशिताः केचिदञ्जसा ॥ ४९ ॥
केचित् कुठारपरशुप्रमुखैर्मूर्ध्नि भेदिताः ।
विक्षताः केचिदुरसि तोमराऽङ्कुशसारणैः ॥ ५० ॥

एवं युद्धं बभौ तत्र मुहूर्तं समभावतः ।
अथ शक्तिगणैर्भग्ना दैत्यसेना प्रविद्रुता ॥ ५१ ॥
क्रन्दमाना हताः स्मो वै हा हेति च दृढं हताः ।
अनुद्रुताः शक्तिगणैः शरणं प्रेप्सवोऽभितः ५२ ॥
असृग्वहा वत्रुस्तत्र क्रव्यादशुभदर्शनाः ।
तरङ्गैः कङ्कालगणान् वाहयन्त्यः समेधिताः ॥ ५३ ॥
केचित्तासु प्रपतिता नीता दूरं निमेषतः ।
एवं दैत्यप्रविद्रावं दृष्ट्वा भण्डाऽनुजस्तदा ॥ ५४ ॥
विशुक्रः प्राह पार्श्वस्थान् बलाहकमुखाऽसुरान् ।
प्रोवाचाऽऽहूय विज्ञाय तानमेयपराक्रमान् ॥ ५५ ॥
हे बलाहक पश्येमान् दैत्यान् शक्तिगणैर्हतान् ।
अनाथानिव युद्धेषु काल्यमानान् समन्ततः ॥ ५६ ॥
गच्छ त्वं भ्रातृभिर्युक्तो नाशय प्रत्यरीनिमान् ।
तपसा भवतां नेत्रे सूर्यः स्वाऽशं ददौ किल ॥ ५७॥
गत्वाऽवलोकनेनेमा भवन्तो निर्दहन्तु वै ।
इत्याज्ञप्तो भ्रातृयुतो ययौ शक्तीर्विहिंसितुम् ॥ ५८ ॥
बलाहकः कालमुखो विकर्णो विकटाऽऽननः ।
सूचीमुखः करालाक्षः करटश्चेति सप्त ते ॥ ५९ ॥
भ्रातरोऽतिक्रूरबला यमीक्षन्त्यतिरोषतः ।
स सन्तप्तोऽतितर्षेण प्रयाति निधनं द्रुतम् ॥ ६० ॥
तैरुपास्य दिवानाथं प्राप्तमेवंविधं बलम् ।
एवंविधास्ते सेनायां प्रविश्य युगपत्तदा ॥ ६१ ॥
विनिघ्नन्तः शक्तिगणं ददृशुः क्रूरचक्षुषा ।
अथ ताः शक्तयः सर्वा दैत्यानामवलोकनात् ॥ ६२ ॥
महत्या तृषया व्याप्ताः सन्तापेनाऽखिलाऽङ्गकैः ।
एवमत्यन्तसन्तापतृषाभ्यां समभिप्लुतम् ॥ ६३ ॥

अवसन्नं शक्तिगणं सङ्कुशः समराऽवनौ ।
मन्त्रिणीं दण्डिनीं त्यक्त्वा सर्वं शक्तिगणं यदा ॥ ६४ ॥
गजाऽश्ववाहनोपेतं पतितं तापहेतुतः ।
तन्नेत्रवीर्यं न तयोः प्रवृत्तं तन्महित्वतः ॥ ६५ ॥
निशाम्य तद्दण्डनाथा मन्त्रिण्यै संन्यवेदयत् ।
विचार्य मन्त्रिणी चाऽपि विदित्वा रव्यनुग्रहम् ॥ ६६ ॥
श्रीदेवीचक्ररक्षार्थं या नाऽऽयाता महायुधि ।
सस्मार मनसा शक्तिं तिरस्करणिकाऽभिधाम् ॥ ६७ ॥
सा प्राप्ता स्मृतिमात्रेण कालाञ्जननिभे हये ।
समारूढा नीलवपुर्नीलांशुकविभूषणा ॥ ६८ ॥
नीलमाल्यधरा गाढध्वान्तसन्तमसा वृता ।
स्वसमाकारशक्तीनां कोटिभिः परिवारिता ॥ ६९ ॥
न तदिच्छां विना कोऽपि पश्येत्तां जगतीतले ।
आगत्य मन्त्रिणीं नत्वा प्राह किं संस्मृतेति वै ॥ ७० ॥
पृष्टैवमुक्तया दैत्यानां बलं तन्नाशनाय ताम् ।
विसर्जयामास पुनः शक्तीनां शान्तिहेतवे ॥ ७१ ॥
अमृतेशीं सुधासिन्धुमाज्ञापयदनुद्रुतम् ।
आज्ञप्तैवं समारुह्याऽदृश्यवाहनमुत्तमम् ॥ ७२ ॥
तिरस्कृतिरदृश्याङ्गी तादृक्शक्तिगणावृता ।
नाशयामास दैत्यानां सेनां शस्त्रनिपातनैः ॥ ७३ ॥
तिरस्कृतिः ससर्जाऽस्त्रमन्धाख्यं तेन तेऽसुराः ।
अन्धीभूताः किञ्चिदपि ददृशुर्नो कथञ्चन ॥ ७४ ॥
तथापि युध्यमानांस्तान् बलवीर्येण सम्भृतान् ।
चिरं युद्धैर्विनिर्जित्य तिरस्करणिका ततः ॥ ७५ ॥
खड्गेन युगपत्तेषामाहरन्मस्तकं रुषा ।
हते बलाहकमुखे तिरस्करणिकां सुराः ॥ ७६ ॥

अवर्षन् दिव्यकुसुमैर्वादयन्तश्च दुन्दुभीन् ।
जहृषुर्देवतामुख्या लोककण्टकनाशनात् ॥ ७७ ॥
अमृतेऽप्यमृताऽऽसारैर्मृताः शक्तीरजीवयत् ।
एवं तिरस्कृतिर्जित्वा दैत्यांस्तपनलोचनान् ॥ ७८ ॥
मन्त्रिणीं दण्डिनीं नत्वा प्रोवाच विजयं स्वकम् ।
आलिङ्ग्य ते कृतं कृत्यमसाध्यं सर्वथा त्वया ॥ ७९ ॥
इत्यूचतुस्तुष्टुवतुर्मन्त्रिणीदण्डनायिके ।
एवं वलाहकमुखे हते सूर्योऽस्तमाययौ ॥ ८० ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये तिरस्करणिकायुद्धे वलाहकादिवधेऽष्टषष्टितमोऽध्यायः ६६८ ॥

# अथ एकोनसप्ततितमोऽध्यायः ।

एवं तपननेत्रेषु तिरस्कृत्याऽऽहतेष्वपि ।
त्रिपुरामायया मूढाः सङ्कल्पजयहर्षिताः ॥ १ ॥
विशुक्रकुटिलाक्षाद्या विपक्षमसुरैर्वृतम् ।
पार्ष्णिग्रहविधानाय प्रेषयित्वा विधानतः ॥ २ ॥
युयुधुः शक्तिसेनाभिराहताऽत्यन्तविक्रमाः ।
विशुक्रो मन्त्रिणीं दण्डराज्ञीं सेनापतिः स्वयम् ॥ ३ ॥
बालां भण्डसुताश्चाऽपि मन्त्रिणश्च तिरस्कृतिम् ।
उलूकजित्प्रभृतयो गजवाजिवहे तथा ॥ ४ ॥
दैत्यसेनाः शक्तिसेनां योधयामास सङ्गताः ।
अस्तं याते सवितरि सर्वतस्तमसाऽऽवृते ॥ ५ ॥
प्रवृत्तः समरोऽत्यन्तदारुणः शक्तिदैत्ययोः ।
मुहूर्तमात्रं सन्ध्याप्रकाशैरभवद्रणः ॥ ६ ॥
ततो गाढेऽन्धतमसि प्रवृत्ते सर्वतो दिशम् ।
अभवद्दारुणं युद्धं शक्तिदानवसेनयोः ॥ ७ ॥
ताराज्योतिःसमूहेन शब्देन च परस्परम् ।
युयुधुः शस्त्रजालैस्ते शक्तिभिर्दैत्यपुङ्गवाः ॥ ८ ॥
अथाऽतिसम्मर्दवशात् सेनयोरज उत्थितम् ।
आच्छादयन्नभोभागं तारकागणसंवृतम् ॥ ९ ॥
अन्धकारसमाविष्टा भूयो रोषाऽन्धतां गताः ।
युयुधुः शक्तिदैत्यानां गणाश्चाऽक्रमयोगतः ॥ १० ॥
केचित्तत्राऽऽह्वयाञ्चक्रुरन्ये तानन्वसंययुः ।
शस्त्राण्यन्येषु युञ्जन्ति तान्यन्यान् घातयन्ति हि ॥ ११ ॥
शब्दवेधमहायुद्धमभवद्भृशदारुणम् ।
तत्र दैत्यैर्हता दैत्याः शक्तिभिः शक्तयस्तथा ॥ १२ ॥
एवमत्यन्तबीभत्सं युद्धमाक्रन्दभीषणम् ।
केचिच्छस्त्रैर्विनिहताः परे रथविमर्दिताः ॥ १३ ॥

अश्वैरास्फालिताश्चाऽन्ये गजाऽऽक्रामैः सुपेषिताः ।
एवं महत्तरे तत्र सम्मर्दे सति वैशसे ॥ १४ ॥
न केऽपि संविदुः स्वीयां तथा सेनां परामपि ।
अन्तं मध्यमथाऽऽदिं वा सेनायाः केऽपि नो विदुः ॥१५॥
निशाम्यैतन्मन्त्रनाथा मत्वा तं विषमं रणम् ।
ज्वालामुखीं महादेवीं सस्मार त्रिपुरांशजाम् ॥ १६ ॥
स्मृतमात्रैव सा देवी प्रादुरासीद्रणाऽजिरे ।
ज्वलत्पर्वतसङ्काशा ज्वालाव्याप्तदिगन्तरा ॥ १७ ॥
तस्या अङ्गप्रभापूरैर्नाशितं निखिलं तमः ।
तदा दैत्याः शक्तयोऽपि युयुधुः क्रमसङ्गताः ॥ १८ ॥
एवं पुनः क्रमाद्युद्धे प्रवृत्ते निशि कुम्भज ।
बाला भण्डसुतैर्युद्धं विचित्रमतनोद्भृशम् ॥ १९ ॥
चतुर्बाहुमुखा भण्डसूनवो विष्णुविक्रमाः ।
त्रिंशत्संख्या एककालं युयुधुर्बालया दृढम् ॥ २० ॥
रथाऽऽरूढा विचित्रेषून् किरन्तः सर्वतो दिशम् ।
बालां समाच्छदुः शस्त्रैर्दिनेशं स्तुहिनैरिव ॥ २१ ॥
अथ बालाऽपि शस्त्रौघान्निजशस्त्रस्य तेजसा ।
नाशयामास वेगेन तमः सूर्योदयो यथा ॥ २२ ॥
ततोऽतिद्रुतसन्धानाच्चतुर्भिर्निशितैः शरैः ।
प्रत्येकं भण्डतनुजरथाश्वानकरोन्मृतान् ॥ २३ ॥
रथनेतॄंस्तथैकेन धनूंष्येकेन चाऽच्छिनत् ।
तथैकेन पुनस्तेषां हृदि विव्याध लीलया ॥ २४ ॥
हताऽश्वा नष्टशस्त्रास्ते विद्धा बाणेन वक्षसि ।
मृतप्रायाः समभवन् व्यथया गाढमूर्च्छिताः ॥ २५ ॥
उलूकजित्प्रभृतयो भण्डस्य भगिनीसुताः ।
ते षष्टिसङ्ख्या युद्धेषु भीमवीर्याः सुयोधिनः ॥ २६ ॥
तैर्युयोध हयारूढा सम्पदेशी च सायकैः ।
विचित्रयुद्धं तन्वाते द्रष्टृविस्मापनं परम् ॥ २७ ॥

पृथग्युद्धं समभवत्त्रिंशत्सङ्ख्यैर्द्विधा स्थितैः ।
युद्ध्वा चिरं हयारूढा बद्ध्वा पाशेन तान् क्रमात् ॥ २८ ॥
चिच्छेद सितधारेण शिरः खड्गेन रोषिता ।
सम्पन्नाथाऽपि तैर्युद्ध्वा भूयो भल्लेन तान् क्रमात् ॥२९॥
हृदि विद्ध्वाऽन्तकपुरं प्रेषयामास सत्वरम् ।
उग्रकर्मप्रभृतयो युयुधुस्तत्र संयुगे ॥ ३० ॥
तिरस्करणिकादेव्या शस्त्रैरस्त्रैरनेकशः ।
युद्ध्वैवं मन्त्रिभिः साऽपि क्रुद्धा खड्गेन पातयत् ॥ ३१ ॥
शिरः कायादुग्रकर्मप्रमुखानामतिवेगतः ।
युयोध कुटिलाक्षेण दण्डनाथा रथस्थिता ॥ ३२ ॥
परस्परं वव्रषतुः शरैः स्वर्णविचित्रितैः ।
परस्परप्रयुक्तानि नानाशस्त्राणि चिच्छिदुः ॥ ३३ ॥
रथस्थो भण्डसेनेशः कुटिलाक्षः प्रकोपनः ।
प्रसह्य कोलवदनां युयोधाऽतिसुशिक्षितः ॥ ३४ ॥
युद्ध्वैवं कोलवदना वाजिनस्तस्य पत्रिभिः ।
निष्प्राणानकरोदष्टौ कर्णाऽऽकृष्टैर्धनुश्च्युतैः ॥ ३५ ॥
एकेन सारथिं हत्वा निचखानाऽपरं हृदि ।
शरेणोरसि संविद्ध ईषत् निष्प्रज्ञतां गतः ॥ ३६ ॥
पुनर्मूर्च्छाविनिर्मुक्तो गदां प्रादाय चोत्प्लुतः ।
किरिचक्ररथाऽऽबद्धसिंहमूर्ध्नि प्रपातयत् ॥ ३७ ॥
गदां सर्वाऽऽयसीं वज्रकल्पां सर्वबलेन सः ।
तथा जगर्ज करिणं हत्वेव हरिलोचनः ॥ ३८ ॥
सिंहोऽपि गदया विद्धो मूर्च्छां प्राप्य निमेषतः ।
पुनः प्रज्ञां प्राप्य रुषा दृष्ट्वा दैत्यं पुरःस्थितम् ॥ ३९ ॥
तलेन वक्षस्यहनद्धतो हरितलेन सः ।
पाटितोरःस्थलो रक्तधारां मुञ्चदनेकधा ॥ ४० ॥
पुनराप्लुत्य वाराहीरथं दितिकुलोद्भवः ।
परिवारशक्तिगणैः कदनं कल्पयन्क्रुधा ॥ ४१ ॥

एवं तं रथमारुह्य युध्यमानं महासुरम् ।
वाराह्या त्वत्तिमुख्याया जम्भिनी शक्तिरुत्तमा ॥ ४२ ॥
साऽयुध्यत् कुटिलाक्षेण चिरं पश्चादतीव तम् ।
युध्यमानं शरेणाऽऽस्ये निजघान महाबला ॥ ४३ ॥
हतो गाढं शरेणाऽऽस्ये क्षणं स्तब्धोऽतिपीडया ।
पुनरुत्प्लुत्य गदया तां मूर्ध्नि प्राहरद्रुषा ॥ ४४ ॥
अथ सा गाढसंविद्धा रथोपस्थे उपाऽविशत् ।
एवंविधां शक्तिगणा दृष्ट्वा हा हेति चुक्रुशुः ॥ ४५ ॥
तावत्तस्या धनुर्दैत्यो बभञ्जाऽऽच्छिद्य सत्वरम् ।
उत्थिता जम्भिनी भूयो दृष्ट्वा भग्नं निजं धनुः ॥ ४६ ॥
रुषा ज्वलन्ती महतीं गदां स्वीयां पराऽमृशत् ।
अथाऽभवद्गदायुद्धं भीमं त्वाष्ट्रेन्द्रसन्निभम् ॥ ४७ ॥
जम्भिनीदैत्ययोर्दृष्ट्वा विस्मिता देवदानवाः ।
मत्वा रथं सङ्कुचितं भूमौ ताभ्यामभूत् कृतम् ॥ ४८ ॥
गदायुद्धं सुविपुलं भीरुहृत्कम्पकारकम् ।
परस्परगदापातप्रादुर्भूतमहारवम् ॥ ४९ ॥
गदासङ्घट्टनोद्भूतपावकौघप्रवर्षणम् ।
विचित्राऽऽक्रमणोत्प्लावचित्रसंस्थानसुन्दरम् ॥ ५० ॥
तत उत्प्लुत्य वेगेन हन्तुं तामभिचक्रमत् ।
यावत्तावत्तया मूर्ध्नि बलवद्गदया हतः ॥ ५१ ॥
प्रस्फुटद्दृग्जुहावक्त्रादुच्छलद्रक्तधारया ।
वर्षंस्तां पतितो भूमौ शीर्णसर्वाऽङ्गबन्धनः ॥ ५२ ॥
गदामालिङ्ग्य तरसा मुमोचाऽसून् लुठन् भुवि ।
हतं वीक्ष्य चमूनाथं दैत्या भीताः पलायिताः ॥ ५३ ॥
देवताः शक्तयश्चाऽपि जहृषुः शत्रुनाशनात् ।
एवं दैत्यं निहत्याऽऽशु जम्भिनी दण्डनायिकाम् ॥ ५४ ॥
प्रणम्य संश्रिता पार्श्वे दण्डिनी च महर्षिता ।
ददौ तस्यै परीरम्भं प्रेम्णा तां प्रसमीक्षत ॥ ५५ ॥

विशुक्रेण युयोधोच्चैर्मन्त्रिणी वीर्यवत्तरा ।
विशुक्रोऽपि महाशूरो युवराजोऽतिवीर्यवान् ॥ ५६ ॥
विचित्रमकरोद्देव्या रणमाश्चर्यकारणम् ।
परस्परस्य शस्त्राणि प्रतिशस्त्रैर्विनाशयन् ॥ ५७ ॥
अस्त्रैरस्त्राण्यपि तथा नाशयन्तौ परस्परम् ।
एवं चिरं नियुध्यन्तमत्यद्भुतपराक्रमम् ॥ ५८ ॥
दृष्ट्वा मन्त्रमहाराज्ञी दर्शयन्ती स्वचातुरीम् ।
युगपच्छरसङ्घेन रथमश्वांश्च सारथिम् ॥ ५९ ॥
धनुर्मुकुटकं केतुं चिच्छेद निमिषाऽर्धतः ।
एवं युद्धे परीभूतो विशुक्रो मन्युना ज्वलन् ॥ ६० ॥
जगृहे खेटनिस्त्रिंशौ हन्तुं देवीं मनो दधे ।
अथाऽऽयान्तं खड्गकरं दूरादेकेन पत्रिणा ॥ ६१ ॥
करवालं द्विधा कृत्वा खेटमन्येन भेदयत् ।
छिन्नखेटकनिस्त्रिंशमायान्तं बद्धमुष्टिकम् ॥ ६२ ॥
जघानोरसि भल्लेन निशितेन गरीयसा ।
भल्लाहतो विशुक्रोऽपि सफेनं रुधिरं वमन् ॥ ६३ ॥
घूर्णितो विभ्रमन् क्रोशद्वये वेगेन पातितः ।
अवशः संवर्तकेन वायुनेव महागिरिः ॥ ६४ ॥
गाढमूर्च्छामुपगतो यथा लोकान्तरात् कृती ।
एवं विशुक्रेऽभिहते दैत्यसेना ह्यभिद्रुता ॥ ६५ ॥
निक्षिप्य हेतीन् सन्त्यज्य वाहनानि दिशो दश ।
विशुक्रं मूर्च्छितं दैत्याः समादाय पुरं ययुः ॥ ६६ ॥
विशुक्रादिषु युध्यत्सु निःशेषशक्तिसेनया ।
विदित्वा ललितां चक्ररथस्थामेकलां तदा ॥ ६७ ॥
कतिचित्परिवाराऽऽत्मशक्तिसङ्घैकसंश्रयाम् ।
जेतुं शक्येति संहृष्टो ययौ तत्राऽसुरो द्रुतम् ॥ ६८ ॥
दमनाद्यैः पञ्चदशाऽक्षौहिणीपैः सुसंवृतः ।
अल्पसेनापरीवारः शस्त्राऽस्त्रबहुसङ्कुलः ॥ ६९ ॥

प्रयाणे पादसङ्घातशब्दमालक्ष्य सोऽसुरः ।
गजारूढैर्युतो मत्तगजमारुह्य संययौ ॥ ७० ॥

सर्वे नीलांऽशुकधरा नीलाभरणभूषिताः ।
समेत्य संविदं कृत्वा पृथङ्नागैश्च सङ्घशः ॥ ७१ ॥

ययुर्दैत्यचमूपृष्ठे योजनद्वयतः परम् ।
ततः केचिच्छक्तिसेनां वामतोऽन्ये च दक्षतः ॥ ७२ ॥

परिक्रम्य ययुर्मध्ये हित्वा योजनयुग्मकम् ।
एवं पृथक् सङ्घशस्ते ययुर्दस्युर्यथा ततः ॥ ७३ ॥

चक्रराजशताऽङ्गस्य क्रोशदूरे हि पृष्ठतः ।
मिलितास्ते सर्व एव ततो निमिषमात्रतः ॥ ७४ ॥

समासेदुः पृष्ठभागं विषङ्गप्रमुखाऽसुराः ।
विद्यामयी श्रीललिता ज्ञात्वाऽप्यसुरसम्मतम् ॥ ७५ ॥

तत्राऽऽचख्यौ लीलयैव स्थिता ज्ञातेव तत्र सा ।
शक्तयो युद्धसन्देशं श्रुत्वा दूरे सुनिर्भयाः ॥ ७६ ॥

सुष्वपुः सर्व एवैताः स्वस्थानेषु रथोत्तमे ।
सुप्तशक्तिगणोपेतं प्रज्वलद्दीपसङ्घकम् ॥ ७७ ॥

दीपप्रभामूर्च्छनेन समेधितमणिप्रभम् ।
दीपसङ्घैर्मणिगणैर्द्योतमानं समन्ततम् ॥ ७८ ॥

दृष्ट्वा समेत्य दैतेया दूरादेकप्रपाततः ।
आरोढुं रथराजन्तं समीपमभिसंययुः ॥ ७९ ॥

उत्खातकरवालासु सहस्रमितशक्तिषु ।
रथस्य परितो गुप्त्यै प्राक्रमत्सु विशेषतः ॥ ८० ॥

काश्चिद्दृष्ट्वा दैत्यसङ्घं गजारूढं समन्ततः ।
कृत्वाऽऽह्वानमहाशब्दं प्रविशुर्दैत्यवाहिनीम् ॥ ८१ ॥

खड्गेन जघ्नुर्दैत्यांस्तानाक्षिपन्त्यो वचोगणैः ।
तदा दैत्यैः शक्तिभिश्च युद्धमासीत् सुभैरवम् ॥ ८२ ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये विषङ्गच्छलसङ्गरे एकोनसप्ततितमोऽध्यायः ॥ ५७५० ॥

# अथ सप्ततितमोऽध्यायः ।

अथ शक्तिसमाह्वानं श्रुत्वाऽऽवरणशक्तयः ।
विज्ञाय दैत्याऽऽगमनमणिमाप्रमुखास्तदा ॥ १ ॥
स्वस्ववाहसमारूढाः शस्त्रास्त्रैरभिसंवृताः ।
युयुधुर्दैत्यसेनाभिः समेत्य बलवत्तरम् ॥ २ ॥
शुश्रुवुः क्रमशः सर्वाः शक्तयो रथसंस्थिताः ।
व्यजिज्ञपुस्तच्चक्रीदेव्यै नित्याः कामेश्वरीमुखाः ॥ ३ ॥
तस्या ज्ञयाऽथ ता नित्या ययुर्युद्धाय दंशिताः ।
तत्राऽन्धकारे युद्धं तन्मत्वाऽत्यन्तसुदुःखदम् ॥ ४ ॥
कामेश्वर्याज्ञया ज्वालामालिनी या चतुर्दशी ।
नित्या सा पर्वताऽऽकारवपुपा ज्वालयाऽऽवृता ॥ ५ ॥
जज्वाल तज्ज्वालया हि परितो योजनाऽऽयतम् ।
प्रकाशितमभूत्तत्र युयुधुः शक्तयोऽसुरैः ॥ ६ ॥
जघ्नुर्विविधशस्त्रैस्तान् दैत्यान् युद्धसमागतान् ।
एवं तानसुरान् युद्ध्वा निन्युर्यमपुरं द्रुतम् ॥ ७ ॥
अथ शिष्टा दैत्यगणाः पलायनपराऽभवन् ।
ते शक्तिभिः परिवृता नाऽलभन्निर्गमं क्वचित् ॥ ८ ॥
हन्यमानाः शक्तिगणैर्हा हेत्युच्चैर्विचुक्रुशुः ।
तद्दृष्ट्वा दैत्यनिधनं दमनाद्या महासुराः ॥ ९ ॥
विकिरन्तः शरैः शक्तीर्न्यरुन्धन् सर्वतो भृशम् ।
उच्चावचैः शस्त्रगणैर्जघ्नुः शक्तीः समन्ततः ॥ १० ॥
एवं दैत्यैर्हता गाढं शक्तयोऽपि निजाऽऽयुधैः ।
ववृषुर्गिरिशृङ्गाणि घना घनगणा इव ॥ ११ ॥

मुहूर्तमभवद्युद्धं शक्तीनां दमनादिभिः ।
तावत्ते दैत्यसेनेशा दमनाद्या महाबलाः ॥ १२ ॥
चक्रुर्व्याकुलितं शक्तिगणं शस्त्राऽस्त्रवर्षणैः ।
नष्टवाहा नष्टशस्त्रा नष्टाऽङ्गा नष्टजीविताः ॥ १३ ॥
न सेहुर्दैत्यशस्त्राणां प्रपातं प्राणकर्षणम् ।
मूर्च्छिताः शक्तयः काश्चित् काश्चित् प्राणान् जहुः पराः ॥ १४ ॥
संछिन्नाः खण्डशश्चाऽन्या पाटिताऽङ्ग्यो गताऽऽयुषः ।
दृष्ट्वैवं निहतं शक्तिगणं कामेश्वरीमुखाः ॥ १५ ॥
तिथिदेव्यो रथारूढाश्चक्रुर्धुर्बलवत्तराः ।
दमनाद्यैस्तिथिमितैः सङ्गताः समसङ्ख्यकाः ॥ १६ ॥
युयुधुः शस्त्रनिचयैर्बलवीर्यसुसम्भृताः ।
शस्त्राणि प्रतिशस्त्रैस्ता अस्त्राण्यस्त्रैर्विनाश्य तान् ॥ १७ ॥
जघ्नुर्लाघवयोगेन दैत्यान् मर्मसु सायकैः ।
एवं ताभिर्हन्यमाना दैत्याः क्रोधं परं ययुः ॥ १८ ॥
चक्रुरत्यद्भुतं युद्धं वीर्यसाहससंयुतम् ।
वडवेव धनुर्वक्त्रादुद्गिरन्तः शराऽर्चिषः ॥ १९ ॥
लोकान् दिधक्षन्त इव व्यराजन्त रणाऽजिरे ।
अथ तांस्तिथिदेव्यस्ता युद्ध्वाऽद्भुतपराक्रमान् ॥ २० ॥
अश्वान् रथं सारथिञ्च ध्वजं छित्त्वा क्रमेण तान् ।
भङ्क्त्वा चापं तीक्ष्णभल्लैः शिरांश्चिच्छिदुरोजसा ॥ २१ ॥
अथ तेषु प्रणष्टेषु दैत्येषु दमनाऽऽदिषु ।
विद्रुता दैत्यसुभटाः शिष्टा भीत्या दिशो दश ॥ २२ ॥
विषङ्गो गजसंरूढो युयोध तिथिशक्तिभिः ।
बह्वीभिर्बलवानेको युयोधाऽतिरुषाऽन्वितः ॥ २३ ॥
युध्यन्तमतिधैर्येण परिवार्य समन्ततः ।
जघ्नुः कामेश्वरीमुखा नित्या सायकवर्षणैः ॥ २४ ॥

अथ कामेश्वरी प्राह विषङ्गं युद्धसङ्गतम् ।
दैत्याऽधमाऽलं युद्धेन प्राणान्तकरणेन ते ॥ २५ ॥
शस्त्रं त्यक्त्वा पादचारो गच्छ शीघ्रं यथासुखम् ।
विषमं बहुभिर्युद्धमेकस्य प्रतिभाति ते ॥ २६ ॥
श्रुत्वा कामेश्वरीवाक्यं जहासोच्चैर्महासुरः ।
किं कत्थसि वृथा दुष्टे हित्वा लज्जां सुदूरतः ॥ २७ ॥
अहमेकः क्षणेनैव सर्वां शक्तिं चमूमिमाम् ।
हत्वा वो ललितां देवीं बद्ध्वा जीवग्रहेण वै ॥ २८ ॥
नेष्याम्यत्र न सन्देहः शस्त्रं ते पुर आलभे ।
स्त्रीषु कारुणिकत्वं मे सर्वथा तेन वै चिरम् ॥ २९ ॥
इत्युक्त्वा निशितैर्भल्लैः प्रत्येकं ता जघान ह ।
तच्छ्रुत्वा प्राह नित्याऽऽद्या एवं चेदस्तु वै रणः ॥ ३० ॥
एकैकया मया साकं समभावेन सत्वरम् ।
इत्युक्त्वा दैत्यराजं तं प्राह भूयो महेश्वरी ॥ ३१ ॥
भगमालिनिमुख्या हे मद्वाक्यं शृणुताऽऽदरात् ।
अहमेनं योधयामि यूयमेनं हि रक्षथ ॥ ३२ ॥
यथा पलाय्य नो गच्छेत् सावधानेन सर्वतः ।
इत्युक्त्वा दृढबाणेन विद्ध्वा दैत्यमुवाच ह ॥ ३३ ॥
रे मूढ दैत्य मयि त्वं दयां त्यक्त्वा हि सर्वथा ।
युध्यस्व सर्ववीर्येण पश्यामि तव पौरुषम् ॥ ३४ ॥
यदि त्वं पुरुषस्तर्हि अपलाय्य व्रजिष्यसि ।
अहं त्वां नैव हिंस्यामि कुर्यां त्वां हि पलायितम् ॥३५॥
श्रुत्वा पुरुषभावेन युध्यस्व विगतत्रपः ।
इत्युक्त्वा निशितान् भल्लान् देहे तस्य समाक्षिपत् ॥ ३६ ॥
युयुधे सोऽपि कामेश्या बलमाहार्य रोषतः ।
अथ कर्णान्तपूर्णेन शरेण तस्य वाहनम् ॥ ३७ ॥

जघान कुम्भयोर्मध्ये तेन बाणेन स द्विपः ।
द्विधा विदलितो भूमौ पपात व्यसुरद्रिवत् ॥ ३८ ॥
हतवाहो विषण्णोऽपि गृहीत्वा सशरं धनुः ।
योद्धुमभ्याययौ क्रोधाद् भ्रुकुटीकुटिलाऽऽननः ॥ ३९ ॥
अथ त्रिभिः शरैर्देवी धनुस्तुणीरमेव च ।
मुकुटञ्चाऽपि चिच्छेद कामेशी क्षणमात्रतः ॥ ४० ॥
ततः करालं विपुलमादाय करवालकम् ।
उपधावद्धावदसौ तावत्तीक्ष्णेषुणा पुनः ॥ ४१ ॥
त्रिधा छित्त्वा महाखड्गं स्मितपूर्वमुवाच तम् ।
दैत्य शूरतमस्त्वं वै कथमेवं नियुध्यसि ॥ ४२ ॥
शस्त्रं न खलु कस्मान्मे पातितं किञ्चिदङ्गके ।
किं दया ते सुमहती जातः कस्मान्निरायुधः ॥ ४३ ॥
कथं तां ललितां वद्ध्वाऽस्मान् जित्वा नेष्यसीरय ।
उपलब्धं त्वया शस्त्रं व्यर्थं विजयहेतवे ॥ ४४ ॥
पलाय्य वा गच्छ मम पुरतो यदि पौरुषम् ।
श्रुत्वा कामेश्वरीवाक्यं कटुकं सोपहासकम् ॥ ४५ ॥
मुष्टिमुद्यम्य तां हन्तुं ययौ सम्मुखे तदा ।
तदा त्रिभिः शरैर्भूयो विव्याधाऽतिबलेन तम् ॥ ४६ ॥
पादहृन्मुष्टिषु तथाऽऽहतस्थानत्रयाऽऽतुरः ।
पदाच्च चलितुं द्रष्टुं मुष्टिञ्च विनिवर्तितुम् ॥ ४७ ॥
असमर्थो लज्जितोऽथ गतोऽन्तर्धानमाशु वै ।
तावत् कामेश्वरी देवी शरजालैश्च सर्वतः ॥ ४८ ॥
रुरोध मार्गं दैत्यस्य तदद्भुतमिवाऽभवत् ।
रुद्धोऽथ सर्वतो मार्गे मायां दैत्यो वितानयत् ॥ ४९ ॥
शस्त्राऽश्मरुधिराऽहीनां पांश्वङ्गारमहीभृताम् ।
वृष्टिश्चक्रे महाभूतान् राक्षसप्रेतसङ्कुलान् ॥ ५० ॥

प्रादुश्चकार विविधां मायामतिभयावहाम् ।
सृष्टां सृष्टाश्च तां मायां दैत्यस्याऽस्त्रैरपाऽकरोत् ॥ ५१ ॥
अथोन्मत्तो महामूर्तिः करालः कृष्णपिङ्गलः ।
सहस्रवक्त्रो नियुतहस्तपादोऽतिवेगवान् ॥ ५२ ॥
भूत्वा जगाम तां हन्तुं व्यात्ताऽऽस्यः पावकं वमन् ।
दृष्ट्वा भीतं शक्तिगणं तं योजनमितोन्नतम् ॥ ५३ ॥
दृष्ट्वाऽसुरस्य सा मायां निर्मायाऽस्त्रमथाऽसृजत् ।
तेनाऽस्त्रेण क्षणादेव मायाः सर्वा व्यनीनशत् ॥ ५४ ॥
अथाऽप्यन्तर्हितं दैत्यं कामेशी मन्त्रपाशतः ।
बद्ध्वा निपातयामास स्वपुरः क्षणमात्रतः ॥ ५५ ॥
स दैत्यः पाशसम्बद्धः पतितः पादसन्निधौ ।
लज्जितो नम्रवदनो मृतवन्मीलितेक्षणः ॥ ५६ ॥
बद्धमेवं विषङ्गं तं चक्रराजरथाऽन्तिकम् ।
अनयध्वं शक्तिगणा नित्या साऽप्यतदा हि सा(?) ॥५७॥
ययौ नित्या परिवृता श्रीदेवीपादसन्निधिम् ।
गत्वा रथं समारुह्य प्रणेमुर्ललिताऽम्बिकाम् ॥ ५८ ॥
आचख्युर्विजयञ्चाऽपि तावता मन्त्रिणीमुखाः ।
समाजग्मुर्विजित्याऽरीन्नत्वा प्रोचुर्जयं रणे ॥ ५९ ॥
श्रुत्वा सा मन्त्रिणी मुख्या दैत्यानां कैतवोद्यमम् ।
विस्मितास्तत्र सुराश्चाऽपि दैत्यानां शठतां प्रति ॥ ६० ॥
अथाऽऽनीतं शक्तिगणैर्बद्धं दैत्याऽनुजं तदा ।
निशाम्य शक्तयः प्रोचुरतिक्रोधतयाऽऽकुलाः ॥ ६१ ॥
वध्यतां हन्यताञ्चैव छिद्यतां भिद्यतामिति ।
श्रुत्वा दण्डाऽधिसम्राज्ञी वधं तस्य व्याचिन्तयत् ॥ ६२ ॥
अथ श्रीमातृसम्मत्या मन्त्रिणी प्रब्रवीद्वचः ।
वधो न युक्तो बद्धस्य मृततुल्यो हि स स्मृतः ॥ ६३ ॥

गच्छत्वेष समाख्यातुं दैत्यराजाय स्वां दशाम् ।
इत्युक्त्वा मोचयामास प्राह तं मन्त्रिणी तदा ॥ ६४ ॥
रे दैत्य भूयो मैवं त्वमकार्षीः शूरगर्हितम् ।
श्रुत्वैवं मन्त्रिणीवाक्यं लज्जितो दैत्यपुङ्गवः ॥ ६५ ॥
नताऽऽननो ययौ शीघ्रमपश्यन् पृष्ठतः पुनः ।
अथ तत्र शक्तिगणं समेतं ललिताऽम्बया ॥ ६६ ॥
परस्परं युद्धवृत्तं प्रोवाचाऽत्यद्भुतं तदा ।
तदा प्राह दण्डराज्ञी मन्त्रिणीं प्रातिमन्त्रणे ॥ ६७ ॥
देवि वृत्तं महायुद्धमद्य दैत्यैः सुभीषणम् ।
रात्रिरल्पावशेषाऽस्ति पुनः सूर्योदयं प्रति ॥ ६८ ॥
भवेद्युद्धमतीवोग्रं दैत्या कपटयोधिनः ।
तदस्माभिः पुनर्युद्धे गन्तव्यं सर्वसेनया ॥ ६९ ॥
पुनरत्र चक्रराजरथस्तिष्ठेत चैकलः ।
यद्यपि श्रीमहादेव्या महिम्नो नाऽस्ति दुर्घटम् ॥ ७० ॥
तथाप्यसाम्प्रतश्चैतद्भाति तत्र कथं भवेत् ।
विमृश्य मन्त्रं बुद्ध्यैतद्युक्तं ज्ञात्वा समीकुरु ॥ ७१ ॥
इति वाक्यं समाकर्ण्य दण्डिन्या मन्त्रिणी स्वयम् ।
अमंसताऽथ तद्युक्तं विचार्य शुद्धया धिया ॥ ७२ ॥
ललितां प्रणिपत्याऽऽह मातराचक्ष्व मे वचः ।
वदत्येषा वराहाऽऽस्या सूर्यस्योदयनं प्रति ॥ ७३ ॥
पुनर्युद्धाय गन्तव्यमस्माभिः शक्तिसेनया ।
अकोशे सेनया हीने रथ एष तवाऽऽश्रयः ॥ ७४ ॥
न शोभते ह्यनौचित्यादथ शक्तिगणोऽखिलः ।
नियुद्धश्रान्तिमभ्येत्य रात्रौ विश्रान्तिमेष्यति ॥ ७५ ॥
अद्य संवृत्तयुद्धेन कैतवेन विशङ्किताः ।
न स्वस्थहृदया भूयो विश्रामं नोपयन्ति वै ॥ ७६ ॥

मन्यसे यदि तत्राऽलमनुजानीहि मां पुनः ।
प्रवृत्तिं भावयिष्यामि शत्रूणामप्रधर्षिणीम् ॥ ७७ ॥
इति विज्ञापिता देवी प्रवृत्तौ तां समादिशत् ।
अथ सा तिथिर्नित्यासु या तत्राऽस्ति चतुर्दशी ॥ ७८ ॥
आज्ञापयत्तां हि सालनिर्माणे शत्रुरोधने ।
आज्ञामात्रेण सा देवी ज्वालामालिनिकाऽभिधा ॥ ७९ ॥
वह्निज्वालामहासालं निर्ममे सुररोधनम् ।
बलयीकृत्य शक्तीनां सेनां सालः समास्थितः ॥ ८० ॥
अनुल्लङ्घ्योन्नम्रमूर्तिर्वह्निज्वालोऽतिभीषणः ।
अन्तः शीतलयन् शक्तीर्बहिर्योजनदूरगम् ॥ ८१ ॥
दहन् योजनविस्तारमध्यद्वारो व्यराजत ।
अथैवं सालमालोक्य शक्तयो गतसाध्वसाः ॥ ८२ ॥
सुष्वपुः सौख्यतस्तत्र युद्धश्रान्ता हि शक्तयः ।
सहस्रसङ्ख्या रक्षार्थं मन्त्रनाथा समादिशत् ॥ ८३ ॥
एवं ज्वालासालमध्ये स्थिता श्रीललिताऽम्बिका ।

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे विषङ्ग-
पराजयः सप्ततितमोऽध्यायः ॥ ५८३२ ॥

# अथ एकसप्ततितमोऽध्यायः॥

बन्धमुक्तो विषङ्गोऽथ ययौ दैत्यचमूं प्रति ।
दुःखितोऽतितरां दीनो हतोत्साहोऽतिनिःश्वसन् ॥ १ ॥
एकलो विजने क्वाऽपि निविष्टो हीनवर्चसः ।
तत्र शुश्राव सेनेशं कुटिलाक्षश्च मन्त्रिणः ॥ २ ॥
हतांस्ततोऽपि दुःखाब्धौ निर्मग्नः समजायत ।
तावद्विशुक्रोऽभिययौ राजपुत्रसमावृतः ॥ ३ ॥
ददर्शाऽतिविषण्णाऽऽस्यं विषङ्गमनुजं स्थितम् ।
पप्रच्छ वत्स किं तेऽद्य पश्यामि मलिनं मुखम् ॥ ४ ॥
पार्ष्णियुद्धे किमासीत्ते वद मे तदशेषतः ।
श्रुत्वैवं भ्रातृवचनं निःश्वसन् प्राह सोऽनुजः ॥ ५ ॥
भ्रातः किं तेऽभिवक्ष्यामि नाऽऽसीदेवं कदापि मे ।
जानामि दैत्यनाशाय काल एषोऽप्रदक्षिणः ॥ ६ ॥
अहोऽतिचित्रं दैत्यानां विष्णुवीर्याऽतियोधिनाम् ।
पराभवोऽबलासङ्घैर्मृगेशस्यैव जम्बुकैः ॥ ७ ॥
एवं दशाऽभिपन्नस्य न युक्तं जीवितं मम ।
तत् किं करोमि नासीन्मे मृत्युर्युद्धेषु सर्वथा ॥ ८ ॥
अहो धन्या ये मृतास्ते कुटिलाक्षादयोऽसुराः ।
न तैः स्वात्मा परीभूतो दृष्टो दुःखाय कुत्राचित् ॥ ९ ॥
भर्तृपिण्डविनियोगं कृत्वोत्तमतमां गतिम् ।
ख्यातिश्च सञ्जातास्तेऽस्मिन् लोकेऽमुष्मिन्नपि ध्रुवाम् ॥१०॥
धिङ्मामेवंविधं दैत्यं न जीवन्तश्च नो मृतम् ।
भ्रातः किं बहुनोक्तेन सारं शृणु वदामि ते ॥ ११ ॥

दैत्यानामेष सम्प्राप्तः कालोऽत्यन्तमदक्षिणः ।
तस्मादहं न जीविष्ये स्त्रीभिर्युद्धे पराजितः ॥ १२ ॥
इतो दैत्यैः समेतोऽहं प्रयातः क्षणदामुखे ।
पार्ष्णियुद्धे तां विजेतुं समयस्याऽनुरोधतः ॥ १३ ॥
तद्रथस्य पार्ष्णिभागे वयं सर्वे हि सङ्गताः ।
यावद्रथं समारुह्य तां ग्रहीतुमभीप्सवः ॥ १४ ॥
तावत् प्राप्ताः शक्तिगणा रथरक्षाविधौ स्थिताः ।
तं रथं परिवर्तन्त्यो धृतोत्पातकपाणिकाः ॥ १५ ॥
अस्माभिस्तर्जयन्त्यस्ता युयुधुर्बलत्तराः ।
अनालोके प्रस्खलन्त्यस्तमिस्रायान्तु सर्वतः ॥ १६ ॥
तावत्तस्या रथश्रेष्ठान्निर्गतस्तिथिसङ्ख्यकाः ।
निर्ममुर्ज्वलितं शैलमन्धकारनिवारणम् ॥ १७ ॥
परिवव्रुः समेत्याऽस्मान् वर्षन्त्यः शरसन्ततीः ।
क्षणेन दमनाद्यांस्ता हत्वा मामभिसंययुः ॥ १८ ॥
तासु मुख्या शक्तिरेका कामेश्यद्भुतविक्रमा ।
द्वन्द्वे मामभिसङ्गम्य बबन्धाऽर्धनिमेषतः ॥ १९ ॥
न तस्यां मे विक्रमोऽभूद्वीर्यं मायाबलं तथा ।
बद्धो नीतः पातितोऽथ ललिताचरणान्तिके ॥ २० ॥
तस्या या सचिवेशानी तमालदलसच्छविः ।
सौन्दर्यसारसुतनुर्मधुराऽऽलापपेशला ॥ २१ ॥
तयाऽहं बन्धनान्मुक्तो दयमानस्वभावया ।
ततो मे जीवतो नाऽर्थो हतकीर्तेर्हतौजसः ॥ २२ ॥
श्रुत्वैवं लपितं तस्य विशुक्रः प्राह सस्मितम् ।
भण्डाऽभिमतसिद्ध्यर्थं हतधीर्ललिताऽम्बया ॥ २३ ॥
वत्स त्वं न विजानासि नीतिं युद्धजयाऽऽवहाम् ।
युद्धे महान्तः शूराश्च क्वचिदल्पैर्जिता ननु ॥ २४ ॥

भवन्त्येव न तच्चित्रं फलं वा शूरसम्मतम् ।
गच्छन् हि पादवान् भूमौ दिवाऽपि स्खलति क्वचित् ॥२५॥
न स्खलन्ति क्वचिदपि स्थावराः किं ततो भवेत् ।
जयाऽजयौ युद्धविधावनिर्देश्यौ कथञ्चन ॥ २६ ॥
परन्तु जय एवैष यः पर्यवसितो भवेत् ।
नाऽन्यो जयो जयः प्रोक्तस्त्वन्तरा संविभावितः ॥ २७ ॥
अहो मोहस्य माहात्म्यं किं वदाम्यहमद्य ते ।
विचारो धैर्यसहितो मन्त्रयुक्तो जयावहः ॥ २८ ॥
विरमैवं विपर्यासाऽभावात् सर्वार्थनाशनात् ।
शृणु मे मन्त्रितं सद्यस्तव दुःखविनाशनम् ॥ २९ ॥
येनोपायेन विबुधाः शक्रमुख्या विनिर्जिताः ।
पुरा भूयो विस्मृतं ते तदहं शृणु यद्ब्रुवे ॥ ३० ॥
प्रत्यरिप्रत्यूहकरमाभिचारात्मकन्तु तत् ।
यन्त्रं शत्रुप्रतीघातं विदितं भार्गवान्मया ॥ ३१ ॥
तदद्य रचयाम्याशु विधिदृष्टेन वर्त्मना ।
तत्प्रयोगाद्भवेदेवं निहतं शक्तिसैनिकम् ॥ ३२ ॥
लिखित्वाऽहं शिलापट्टे तुभ्यं दास्यामि सम्प्रति ।
त्वं युक्त्या शक्तिसेनासु प्रक्षिप्याऽऽगच्छ सत्वरम् ॥ ३३ ॥
ततस्ताः शक्तयो नष्टवीर्योद्योगास्ततो वयम् ।
गत्वा दैत्यचमूयुक्ता अनायासेन सत्वरम् ॥ ३४ ॥
नाशयावः शक्तिगणं नाऽत्र संशयमाप्नुहि ।
उत्तिष्ठ जहि सन्तापं शोकजं वीर्यनाशनम् ॥ ३५ ॥
श्रुत्वेत्थं भ्रातृकथितं महामायाविमोहितः ।
जितमित्येव निश्चित्य हर्षमाहारयत् परम् ॥ ३६ ॥
तुष्टाव भ्रातरं भ्राता संश्लाघन् बुद्धिकौशलम् ।
अथैतद्दैत्यराजाय मन्त्रमावेद्य सम्मतः ॥ ३७ ॥

निर्ममे तद्विघ्नकरं यन्त्रं दार्षद्पट्टके ।
स्नात्वा शुचिविधानेन यन्त्रमालिख्य तद्द्रुतम् ॥ ३८ ॥
सम्पूज्य तत्र देवीं तामासुरीं विघ्नकारिणीम् ।
सुरामांसोपहाराद्यैर्निवेद्य विविधैस्तदा ॥ ३९ ॥
स्वयं दिग्वसनो भूत्वा श्मशानभसिताऽऽश्रयः ।
पपौ सुरां करोटीस्थां वाममार्गसमाश्रयः ॥ ४० ॥
जजाप जप्यं कैकस्या मालया दक्षदिङ्मुखः ।
समन्तान्नग्नयुवतीगणेन परिवारितः ॥ ४१ ॥
एवं संसाध्य तद्यन्त्रं विषङ्गाय ददौ तदा ।
वत्सैतच्छक्तिसेनाया मध्येऽभिमुखभावतः ॥ ४२ ॥
ललितारथराजस्य निक्षिप्याऽऽयाहि सत्वरम् ।
अमोघं विघ्नयन्त्रं तदादाय तत्र संययौ ॥ ४३ ॥
रात्रिशेषे विषङ्गोऽथ ज्वालासालं ददर्श ह ।
अधृष्यं तं समालक्ष्य द्वारे शक्तिगणं तथा ॥ ४४ ॥
न तत्समीपं गतवान् भीत्या दूरे समास्थितः ।
विचार्य खमवप्लुत्य सालं तमतिवर्तितुम् ॥ ४५ ॥
असमर्थो बलेनाऽन्तः प्राक्षिप्य प्रययौ पुनः ।
मत्वा कृतार्थमात्मानमाचख्यावग्रजाय तत् ॥ ४६ ॥
विघ्नयन्त्रेण विहताः शक्तयः स्युरतो द्रुतम् ।
यस्मादमोघं तद्यन्त्रमापूर्यं समधिष्ठितम् ॥ ४७ ॥
इति मत्वा युद्धविधावुद्योगं विदधेऽसुरः ।
विशुक्रः सर्वदैत्यानां सेनया भ्रातृसंयुतः ॥ ४८ ॥
राजपुत्रैश्च राज्ञा च निर्ययौ नगराद्बहिः ।
योषित्स्थविरबालांश्च वर्जयित्वाऽखिलाऽसुराः ॥ ४९ ॥
रक्षणार्थं शून्यकस्य निक्षिप्याऽक्षौहिणीमिताम् ।
निर्ययुः सर्व एवैते दैत्या युद्धाय दंशिताः ॥ ५० ॥

आजग्मुरग्निसालस्य समीपमतिवेगतः ।
दृष्ट्वा प्रधृष्यन्तं सालं भेत्तुं ते मन आदधुः ॥ ५१ ॥
विशुक्रप्रमुखा दैत्या अस्त्राणि ससृजुस्ततः ।
वायव्यं पार्वतं चान्द्रं शैशिरं पार्थिवं तथा ॥ ५२ ॥
सामुद्रं वारुणं वार्षं पार्जन्यप्रमुखानि च ।
विसृष्टं सालमभितो मन्त्रसन्धानसन्धितम् ॥ ५३ ॥
संवर्तोऽग्निस्तृणमिव सालो निःशेषतां नयत् ।
मत्वाऽभेद्यन्तु तं सालं विशुक्रप्रमुखाऽसुराः ॥ ५४ ॥
उत्प्लुत्य यातुमन्तस्ते मन उच्चैः समादधुः ।
उत्प्लुत्य यावद्यो दैत्यो गन्तुमन्तः समीप्सति ॥ ५५ ॥
ततोऽधिकतरं तत्र प्राकारः समवर्धत ।
तदप्यशक्यं मत्वा ते प्रवेष्टुं द्वारमाययुः ॥ ५६ ॥
प्रविशन्तं ततोऽप्यग्निः क्षणाद्भस्मीकरोत्यलम् ।
मत्वाऽन्तर्गमनं तस्य दुर्घटं द्वारदेशगाः ॥ ५७ ॥
शस्त्राणि द्वारमार्गेण चाऽस्त्राण्यलमत्राऽसृजुः ।
विदित्वा दैत्यसेनायाः सन्नाहं द्वाररोधनम् ॥ ५८ ॥
दण्डराज्ञी शक्तिसेनासज्जनार्थं समादिशत् ।
विघ्नयन्त्रेण विहताः शक्तयः सर्वतः स्थिताः ॥ ५९ ॥
आलस्योपहताश्चाऽन्या निद्रामोहसमाकुलाः ।
दण्डराज्ञीसमादेशं न किञ्चिन्मानयन्ति ताः ॥ ६० ॥
किन्नः कृत्यं युद्धविधौ दैत्यानां घातनं कुतः ।
न नोपराद्धं दैतेयैः कथं तैर्विग्रहो मतः ॥ ६१ ॥
कुतो वध्या दैत्यगणा देवानामिष्टसिद्धये ।
दैत्येष्टसिद्धये कस्मान्न वध्या देवतागणाः ॥ ६२ ॥
प्रकृत्या कोपना दण्डराज्ञी सा मन्त्रिणी तथा ।
पानप्रकर्षतो मत्ता विचारः स्यात्तयोः कुतः ॥ ६३ ॥

महाराज्ञ्यपि कामेशविलासपरमा सदा ।
युक्ताऽयुक्तविचारेण स्वतो हीना तु सर्वदा ॥ ६४ ॥
मन्त्रिण्या मत्तया प्रोक्तं मनुते सर्वथा हितम् ।
बालायाः को विचारः स्यात् क्रीडासक्ता हि सा सदा ॥६५॥
अहो मोहस्य माहात्म्यं किमर्थमसुरा हताः ।
व्यर्थहिंसाऽपराधेन प्राप्स्यामो नाशमञ्जसा ॥ ६६ ॥
इतो निर्गत्य तीर्थेषु गत्वा विहितमार्गतः ।
दैत्यहिंसनदोषस्य कुर्मो निष्कृतिमादरात् ॥ ६७ ॥
काश्चिदाहुर्वृथा युद्धादलं नो दुःखवर्धनात् ।
गत्वा स्थानेषु तपसा साधयामः समीहितम् ॥ ६८ ॥
अन्या ऊचुरलं युद्धैर्दुःखदैर्देहनाशनैः ।
अनुरूपं पतिं प्राप्य क्रीडामोऽविरतं सुखम् ॥ ६९ ॥
वदन्त्य इत्यादि बहुपृथङ्मतसमाश्रयाः ।
न युध्यामो वयं व्यर्थं तवाऽऽज्ञायां न च स्थिताः ॥ ७० ॥
क्रोधं करिष्यसि यदि युध्यामस्तर्हि वै त्वया ।
वृथाऽभिमानं माकार्षीर्मन्त्रिण्या मत्तया सह ॥ ७१ ॥
अस्मान् युद्धे समासाद्य विमदा शीघ्रमेष्यसि ।
तत्रोचुरन्याः सङ्क्रुद्धा शूकरास्ये सदा हि नः ॥ ७२ ॥
कुतः क्रुध्यसि नेत्राणि करालान्यवमुञ्चसि ।
व्रज शीघ्रमितो नो चेदक्षीणि विनिपातये ॥ ७३ ॥
न निर्लज्जा शूकरास्या त्वत्समा भवति क्वचित् ।
अन्याऽब्रवीत् खड्गकरा निपत्याऽभिमुखे ततः ॥ ७४ ॥
किं वलास्यति मे वाक्यं शृणु कोलाऽऽनने यदि ।
दर्पोऽस्ति चेन्मया युद्धे वीर्याद्बुद्धिं समीकुरु ॥ ७५ ॥
जीवितं हास्यसि मुधा युद्ध्वा शस्त्रहता मया ।
इति दृष्ट्वा शक्तिगणं दण्डिन्यत्यन्तविस्मिता ॥ ७६ ॥

कुत एतदकाण्डे वै शक्तीनां बुद्धिनाशनम् ।
इति मत्वा द्रुतं गत्वा मन्त्रिण्यै तन्निवेदयत् ॥ ७७ ॥
मन्त्रिण्यपि च शक्तीनां बुद्धिनाशं निशाम्य तु ।
विस्मिता श्रीमहाराज्ञीमासाद्य प्रणताऽब्रवीत् ॥ ७८ ॥
मातरत्यद्भुतो विघ्नो नन्वस्माकमुपस्थितः ।
नूनं भवेत्तु दुष्टानां दैत्यानामेव चेष्टितम् ॥ ७९ ॥
शक्तीनां बुद्धिनाशोऽत्र दृश्यतेऽतिभयङ्करः ।
दैत्याः सालमुखप्रान्ते सन्नद्धाः समुपस्थिताः ॥ ८० ॥
दण्डिनीं मां च चक्रस्थशक्तीर्हित्वा ह्यशेषतः ।
भिन्नस्वभावाः सम्भूताः शक्तयो रोषभाषणाः ॥ ८१ ॥
द्रुतं विधेहि यत्कृत्यं नाऽर्हः कालो विलम्बने ।
यद्यप्यखिलदैत्याश्च तव भ्रूभङ्गमात्रतः ॥ ८२ ॥
न भवेयुस्तथाप्येतन्नाऽस्माकं सम्मतं भवेत् ।
अस्मासु दयया मातर्द्रुतं प्रतिविधत्स्व तत् ॥ ८३ ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्यखण्डे विघ्नयन्त्रप्रयोगो नामैकसप्ततितमोऽध्यायः ॥ ५९१६ ॥



# अथ द्विसप्ततितमोऽध्यायः ।

प्रार्थितैवं श्यामलया श्रीमाता परमेश्वरी ।
लीलां वितन्वती शीघ्रं संस्मितप्रेमभावतः ॥ १ ॥
कोटीन्दुकिरणाऽऽभासान् शृङ्गाराऽमृतवर्षणान् ।
कटाक्षान् कामेशमुखसौन्दर्याब्धावमूर्च्छयत् ॥ २ ॥
अथो देवी स्मिताऽऽलोककामेशमुखसङ्गतेः ।
गणनाथः समुदभूदिभास्योऽरुणसम्प्रभः ॥ ३ ॥
गदां शूलं शङ्खमब्जं विषाणं दक्षबाहुभिः ।
मातुलुङ्गं धनुश्चक्रं पाशं धान्यस्य मञ्जरीम् ॥ ४ ॥
वहन् वामकरैः शुण्डासमात्तमणिभाजनः ।
रक्तकौशेयवसनो दिव्यमाल्यविभूषणः ॥ ५ ॥
त्रिनेत्रश्चन्द्रचूडालो मणिकोटीरमण्डितः ।
शक्त्या समाश्लिष्टदेहो गलन्मदजलाऽऽविलः ॥ ६ ॥
प्रणम्य ललितां देवीं बद्धाञ्जलिपुटोऽब्रवीत् ।
देवि ब्रूहि मया यत्तत्कृत्यमत्र रणोद्यमे ॥ ७ ॥
तत्ते कृपावशादेव साधयाम्यतिदुःशकम् ।
श्रुत्वैवं प्राह गणपं ललिताम्बा महेश्वरी ॥ ८ ॥
गच्छ वत्स दैत्यकृतमभिचारं विनाशय ।
एवं तया समाज्ञप्तो गणेशो धूनयन् करम् ॥ ९ ॥
विचिन्वन्नभितस्तत्र क्षणाद्यन्त्रं समासदत् ।
आसाद्य विघ्नयन्त्रं तच्छक्तिसङ्घस्य पश्यतः ॥ १० ॥
वज्रसारमपि क्रोधाद्बिभेद रदघाततः ।
निमिषात्तच्चूर्णयित्वा तिलशस्तदनन्तरम् ॥ ११ ॥
ज्वलत्सालद्वारभागान्निर्ययौ योद्धुमुत्सुकः ।
निविश्य दैत्यसेनां तां युयुधे दैत्यपुङ्गवैः ॥ १२ ॥

पिपेष गदया कांश्चित् कांश्चिच्चिच्छेद चक्रतः ।
शूलेन दारयच्चान्यान् शरैरन्यान् विभेद च ॥ १३ ॥
अमारयद्विषाणेन दैत्यानन्यान् सहस्रशः ।
एवं दैत्यपतीन् भूयो गणेशः क्षयमानयत् ॥ १४ ॥
कर्णतालमहावायुविधूता दैत्यवाहिनी ।
नासावायुमहावेगविकृष्टाः सङ्घशोऽसुराः ॥ १५ ॥
अवशा विविशुः शीघ्रं शुण्डासुषिरमार्गतः ।
शुण्डाऽन्तर्भागसङ्घट्टान्मृताश्छिन्नाङ्गबन्धनाः ॥ १६ ॥
केचिन्मूर्च्छामनुप्राप्ता निश्वासाद्भुवि पोथिताः ।
प्राणान जहुस्तथाऽन्ये चाऽक्षताः श्रोत्रविलायनात् ॥१७॥
विनिर्गताः कर्णतालाऽऽस्फालिता जीवितं जहुः ।
एवं विनाशयन् दैत्यांस्तत्सेनायां गणेश्वरः ॥ १८ ॥
भण्डपुत्रान् समादाय गदापातैरपातयत् ।
विषङ्गं हृदि दन्तेन चकाराऽऽसन्तविक्षतम् ॥ १९ ॥
विषङ्गो राजपुत्राश्च यदा मूर्च्छामुपाऽऽययुः ।
तदा दृष्ट्वा दैत्यगणाः मत्वा प्रत्यक्षमन्तकम् ॥ २० ॥
हा हेति भीताः समरं त्यक्त्वा दूरं पलायिताः ।
दृष्ट्वैवं विद्रुतं सैन्यं विशुक्रोऽतिरुषाऽन्वितः ॥ २१ ॥
आययौ रथसंस्थानो युध्यन्तं विघ्ननायकम् ।
अथाऽभवन्माहायुद्धं विशुक्रगजवक्त्रयोः ॥ २२ ॥
शस्त्राऽस्त्रवर्षणं घोरं परस्परजयैषणम् ।
अथेभवक्त्रः सङ्क्रुद्धो गदापातेन तद्रथम् ॥ २३ ॥
साऽश्वं ससारथिं शीघ्रं चूर्णयामास संयुगे ।
अथ क्रुद्धो विशुक्रोऽपि गदामुद्यम्य वेगतः ॥ २४ ॥
प्राहरत् कुम्भयोस्तस्य सर्वप्राणेन मन्युना ।
गदाप्रहारसम्भिन्नकुम्भदेशाद्गणेशितुः ॥ २५ ॥
बहु सुस्राव रुधिरमथ क्रुद्धो गणाधिपः ।
जघान शूलेन हृदि विशुक्रस्याऽतिवेगतः ॥ २६ ॥

शूलनिर्भिन्नहृदयो विशुक्रो मूर्च्छितोऽपतत् ।
एवं विशुक्रं निर्जित्य ययौ भण्डरथं प्रति ॥ २७ ॥
दृष्ट्वाऽऽयान्तं नियुद्धाय गणेशं स्वात्मना सह ।
विचारयत् स्वान्तरङ्गे तमजेयं विभावयन् ॥ २८ ॥
एष योद्धुं समायाति सिन्धुरास्यो मया सह ।
अजेयोऽयं महावीर्यः सर्वैर्देवासुरैरपि ॥ २९ ॥
मम सङ्कल्प एषोऽस्ति तदा श्रीललिताऽम्बया ।
शस्त्रहत इमं देहं त्यक्त्वा तल्लोकमाप्नुयाम् ॥ ३० ॥
तत्र विघ्नमिमं मन्ये कथं मे स्यात् समीहितम् ।
नूनमेष पुरा युद्धं चक्रे येन महौजसा ॥ ३१ ॥
द्विपाऽसुरेण तं स्रक्ष्ये तेनैष समियाद्रणे ।
ततोऽहं तां समायास्ये योद्धुं श्रीललिताम्बिकाम् ॥ ३२ ॥
इति निश्चित्य ससृजे गजदैत्यं महाद्भुतम् ।
पर्वताऽऽभं महाभीमं परिघोद्यत्सुपुष्करम् ॥ ३३ ॥
अभिद्रवद्गणपतिं स दैत्यो भण्डदेशितः ।
आसाद्य गजदैत्यं तं युयोध गणनायकः ॥ ३४ ॥
एवं युध्यति नागास्ये विघ्नयन्त्रस्य नाशनात् ।
शक्तयः प्रकृतिं प्राप्य निर्ययुर्युद्धहेतवे ॥ ३५ ॥
आलक्ष्य युद्धसन्नाहं भण्डदैत्यस्य सर्वथा ।
अशेषदैत्यसेनानां मन्त्रिणी दण्डिनीयुता ॥ ३६ ॥
मन्त्रयित्वा महाराज्ञी स्वयं युद्धाय निर्ययौ ।
अशेषशक्तिसेनाभिर्दर्शिताभिः परिवृता ॥ ३७ ॥
आदौ सम्पत्करी देवी रणकोलाहलाऽभिधे ।
समारुह्येभसेनाभिर्निर्जगामाऽतिसम्भ्रमात् ॥ ३८ ॥
अथाऽपराजिताऽश्वस्था निर्ययौ परमेश्वरी ।
अश्वारूढाऽश्वसेनाभिरावृता युद्धसम्भ्रमात् ॥ ३९ ॥
तन्मध्ये श्रीमहाराज्ञ्या प्रतिरुद्धा रणोत्सुका ।
बाला प्रणम्य ललितां प्राह मञ्जुलया गिरा ॥ ४० ॥

मातर्मामनुजानीहि युद्धाय कृतनिश्चयाम् ।
सदा युद्धविधानाय समुत्सुकितमानसाम् ॥ ४१ ॥
त्वयाऽहं प्रतिरुद्धाऽस्मि प्रसक्तेऽपि महारणे ।
पादौ मूर्ध्ना स्पृशाम्येषा देह्याज्ञां समराय मे ॥ ४२ ॥
चिरादुत्कण्ठिता युद्धे निर्गमं नो लभाम्यहम् ।
आद्ये दिनेऽपि मे युद्धं नाऽऽसीन्मानसपूरणम् ॥ ४३ ॥
मध्ये तया कोलमुख्या विहता युधि वै मुधा ।
अद्य मे पूरय स्वाऽऽशां चिराद्युद्धाय सम्भृताम् ॥ ४४ ॥
इति बालावचः श्रुत्वा ललिता श्रीपराम्बिका ।
प्रहसन्ती मन्त्रनाथामुखं समवलोकयत् ॥ ४५ ॥
देव्याशयं विदित्वा सा कुमारीं प्राह मन्त्रिणी ।
कुमारि शृणु मे वाक्यं यदि त्वं योद्धुमिच्छसि ॥ ४६ ॥
तत्त्वया समन्येनैव योद्धव्यं यदि मन्यसे ।
एकेन सह युध्यस्व दण्डिन्या च मया सह ॥ ४७ ॥
युद्धे नौ न परित्यज्य दैत्यसेनासु चैकला ।
प्रवेष्टव्यं क्वचिद्वापि तवाऽऽवां पक्षसंश्रये ॥ ४८ ॥
भवावस्तद्वदत्रैव केन योद्धुं हि वाञ्छसि ।
श्रुत्वैवं मन्त्रिणीवाक्यं प्राह बालाऽम्बिका पुनः ॥ ४९ ॥
युध्याम्यहं भण्डपुत्रैर्न तेष्वन्या कथञ्चन ।
सर्वथा बाणमेकं वा विसृजेदहमेकला ॥ ५० ॥
युद्ध्वा तैस्तान्निहन्म्येव न तद्वाहा रथा अपि ।
आयुधादीनि नाश्यानि अन्याभिर्जातु कुत्रचित् ॥ ५१ ॥
श्रुत्वा बालावचो भूयो मन्त्रिणी तामुवाच ह ।
एकेन युद्धस्व रणे देव्यादिष्टे कथं त्वया ॥ ५२ ॥
त्रिंशद्भिर्त्रियते युद्धं नेदमौपयिकं तव ।
भण्डपुत्रा महाशूरा भण्डतुल्यपराक्रमाः ॥ ५३ ॥
भीमसंहननाः सर्वे कूटयुद्धविशारदाः ।
एकेन तेषु युध्यस्व येन योद्धुं समीप्सितम् ॥ ५४ ॥

इति वाक्यं श्यामलायाः श्रुत्वा बालाऽम्बिका ततः।
प्रणम्य भूयस्तैर्युद्धमयाचत कृताऽञ्जलिः॥ ५५॥
याचतीं तां समालोक्य प्रीता सा ललिताम्बिका।
ददावनुज्ञां समरे आश्लिष्य प्रीतिपूर्वकम्॥ ५६॥
अथ प्राह पुनर्देवीं बाला श्रीत्रिपुरां तदा।
मातरन्यच्छृणु वचो दण्डिन्येषा मया सह॥ ५७॥
न तिष्ठतु युद्धभुवि भूय एषा पुरा मम।
व्यनाशयद्युद्धरसं यद्यागच्छेन्मया सह॥ ५८॥
पृष्ठतस्तिष्ठतु न तु विघ्नं भूयः करिष्यति।
यदि युद्धे पुनर्विघ्नं करिष्यति तदा शृणु॥ ५९॥
मया पराहतां युद्धे द्रुतमेनां प्रपश्यसि।
एवं वदन्तीं बालां तां मत्वा रुष्टाञ्च पोत्रिणी॥ ६०॥
नत्वा तां सान्त्वयामास मृदुवाक्यैः सुपेशलैः।
देवि शङ्कां त्यज मयि आगच्छामि त्वया सह॥ ६१॥
निशामयामि ते युद्धं करोमि तव यत्प्रियम्।
तवाऽऽज्ञामनुरुध्यैव पुरतः पृष्ठतोऽपि वा॥ ६२॥
स्थास्यामि न हि विघ्नं मे भविष्यति च ते युधि।
इति श्रुत्वा दण्डिनीं सा मोदादाश्लिष्य सत्वरम्॥६३॥
रथमारुह्य तरसा निर्ययौ समरोत्सुका।
मन्त्रिणी दण्डनाथा च स्वस्वस्यन्दनसंस्थिते॥ ६४॥
ययतुः पार्श्वयोस्तस्याः शक्तिसेनासमावृते।
अथ श्रीचक्रराजाख्यरथमारुह्य सत्वरम्॥ ६५॥
युद्धाय निर्ययौ देवी वीरसन्नाहसन्नता।
तत्पृष्ठतः समारुह्य तिमिरस्तोमसम्भमम्॥ ६६॥
तुरगं मारुतजवं निर्ययौ सा तिरस्कृतिः।
विकर्षन्ती शक्तिसेनाममेयां सागरोपमाम्॥ ६७॥
अथ सेनाद्वयमुखमभूद्भीमं सुसङ्कतम्।
युद्धवाद्यचित्ररवो नेमिघोषाऽतिमांसलः॥ ६८॥

वीरास्फोटैर्हुङ्कृतैश्च गजमण्डलचीत्कृतैः ।
हयहेषितसंरावैर्ववृधेऽतितरां तदा ॥ ६९ ॥
अथ शस्त्रप्रपातोऽभूच्चटच्चटरवोद्धतैः ।
लोहितानां महाऽऽसारवर्षणोऽतिभयङ्करः ॥ ७० ॥
हतोऽसि हंस्यसे शीघ्रं तिष्ठ मा त्विद्रुतिं त्यज ।
द्रुतं वीर्यं दर्शय ते पश्य मेऽद्य पराक्रमम् ॥ ७१ ॥
एवं वचांसि बहुधा श्रूयन्ते तत्र सङ्गरे ।
शिथिलाङ्गाः शरैः केचित् केचित् परशुदारिताः ॥ ७२ ॥
शूलेष्वन्येऽभिसम्प्रोताः परे खड्गैर्विपाटिताः ।
निष्पिष्टाः परिघैरन्ये चक्रैश्छिन्नगलाः परे ॥ ७३ ॥
तोमरैर्भेदिताः केचिद्विक्षताः प्रासपट्टिशैः ।
भिन्दिपालैः शकलिता गदाभिर्भिन्नमस्तकाः ॥ ७४ ॥
दैत्या अभूवन् समरे शक्तिभिर्गाढसंहताः ।
सरितः शोणितवहा ववुस्तत्र सहस्रशः ॥ ७५ ॥
एवं शक्तिभिरत्यन्तमर्दिता दैत्यवाहिनी ।
पलायिता क्रन्दमाना शक्तिशस्त्राऽतिबाधिता ॥ ७६ ॥
असहन्ती शक्तिसेना सम्मर्दबलवत्तरम् ।
जलाशयाच्छिन्नबन्धात्तोयानीव क्षयं गता ॥ ७७ ॥
तद्दृष्ट्वा विहतां सेनां दैत्यानां भण्डसूनवः ।
चतुर्बाहुमुखास्त्रिंशत्सङ्ख्याश्चित्रपराक्रमाः ॥ ७८ ॥
भण्डतुल्यबलाः शस्त्रास्त्राऽभिज्ञा युद्धदुःसहाः ।
रथाऽऽरूढाः शक्तिसेनां जघ्नुः सायकवृष्टिभिः ॥ ७९ ॥
तैः कलितमभूच्छक्तिसैन्यं समरतापनैः ।
शस्त्राऽस्त्रतेजो दैत्यानामसह्यं प्राप्य सर्वतः ॥ ८० ॥

इति श्रीत्रिपुरारहस्ये ललितामाहात्म्ये सर्वसेनासमागमो नाम द्विसप्ततितमोऽध्यायः ॥ ५९९६ ॥

# अथ त्रिसप्ततितमोऽध्यायः ।

एवं युद्धकथां श्रुत्वा प्राह कुम्भभवो मुनिः ।
हयाऽऽनन महाश्चर्यमाख्यानं सम्यगीरितम् ॥ १ ॥
गणनाथस्य कथितो गजाऽसुरसमागमः ।
युद्धं तयोः कथमभूत्तन्ममाऽऽचक्ष्व पृच्छतः ॥ २ ॥
इति पृष्टः कुम्भभवमुनिना तुरगाऽऽननः ।
गणनाथमहायुद्धं प्रवक्तुमुपचक्रमे ॥ ३ ॥
अगस्त्य शृणु वक्ष्यामि कथामत्यद्भुतां तव ।
गणनाथमहावीर्यसम्भृतां संयुतां रसैः ॥ ४ ॥
भण्डसृष्टेन दैत्येन युयोध स गणेश्वरः ।
मुहूर्तमात्रमभवत्तयोर्युद्धं सुदुःसहम् ॥ ५ ॥
अथ दैत्यः ससर्जाऽन्यान् दैत्यानात्मपराक्रमान् ।
तुल्यरूपांस्तुल्यजवांस्तुल्यसाहसविक्रमान् ॥ ६ ॥
ताननेकान् युध्यमानान् दृष्ट्वा क्रुद्धो गणेश्वरः ।
ससर्ज स्वात्मनस्तुल्यान् गणेशानपि कोटिशः ॥ ७ ॥
तत्रैकैकेन दैत्येन प्रत्येकं गणनायकाः ।
युयुधुश्चित्रशस्त्रास्त्रैस्तदद्भुतमिवाऽभवत् ॥ ८ ॥
दैत्याः शक्तिगणाश्चापि तयोर्युद्धं महाद्भुतम् ।
ददृशुः प्रेक्षका भूत्वा युद्धसंरम्भविस्मृतेः ॥ ९ ॥
अथ ते गणनाथास्तु जघ्नुर्विक्रम्य हेतिभिः ।
कश्चिच्छूलाहतः कश्चिच्चक्रेण शकलीकृतः ॥ १० ॥
कश्चिद्गदाभग्नतुण्डः कश्चिद्दन्तविदारितः ।
कश्चिन्निघृष्ट उरसा कश्चित्पादप्रपेषितः ॥ ११ ॥
कश्चित् कुम्भाऽऽहतेर्भिन्नकुम्भः प्राणान् जहौ युधि ।
एवं ते नाशिता दैत्या दैत्यसृष्टा गजाननैः ॥ १२ ॥

अथैकलः समभवत् पुनर्गजमहासुरः ।
युयोध बलवांस्तत्र गणेशेनाऽतिसाहसी ॥ १३ ॥
महागणेशोऽपि दृष्ट्वा दैत्यं पूर्ववदेकलम् ।
सञ्जहार गणपतीन् स्वाङ्गे निमिषमात्रतः ॥ १४ ॥
अथाऽभवन्महायुद्धं तयोर्विक्रमतो युधि ।
अनेकशस्त्राऽस्त्रगणैः सङ्कुलं सुभयङ्करम् ॥ १५ ॥
अथ सोऽपि महादैत्यो माययाऽभून्महोन्नतः ।
सहस्राऽऽस्यस्तद्द्विगुणभुजश्चित्राऽऽयुधैर्वृतः ॥ १६ ॥
क्षणे क्षणे च शस्त्राणां सहस्रं स ससर्ज ह ।
सृष्टं सृष्टं शस्त्रगणं नाशयद्गणनायकः ॥ १७ ॥
दृष्ट्वा दैत्यस्य मायां तां गणेशोऽतिरुषाऽन्वितः ।
चिच्छेद युगपत्तस्य धृतं शस्त्रसहस्रकम् ॥ १८ ॥
अथाऽभवद्गदायुद्धं गणेशगजदैत्ययोः ।
महत्या गदया नूनं निघ्नतोरितरेतम् ॥ १९ ॥
तदा गणेशगदया ताडिता तस्य सा गदा ।
शकलीभूय पतिता ततो दैत्यो निरायुधः ॥ २० ॥
मुष्टिमुद्यम्य गणपं हन्तुमायान्महासुरः ।
दृष्ट्वाऽऽयान्तं दैत्यवरं गणेशः प्राक्षिपद्गदाम् ॥ २१ ॥
सा गदा प्राप्य तद्देहं नैपद्भुजमुदावहत् ।
गदाप्रतिहताऽङ्गेन पपात भुवि सा वृथा ॥ २२ ॥
अथ चक्रं त्रिशूलञ्च परिघं शक्तिमेव च ।
क्षिप्तं क्षिप्तं वृथा भूमावपतद्देहसङ्गतः ॥ २३ ॥
उपलानां वृष्टिरिव गण्डशैल इवाऽभवत् ।
दृष्ट्वा दैत्यं सर्वशस्त्रैरजेयं स गणाधिपः ॥ २४ ॥
चिन्ताकुलः समभवत्तावन्मुष्ट्या जघान सः ।
अथाऽभवत्तयोर्मुष्टियुद्धमत्यन्तदारुणम् ॥ २५ ॥

मुष्टिसंहननोदञ्चदग्निवर्षणसंयुतम् ।
तं ततो बाहुबन्धेन बद्ध्वा दैत्यं निपातयत् ॥ २६ ॥
निपात्य पादेनाऽऽक्रम्य हृदि दन्तेन दारयत् ।
एवं विदारितो दैत्यो जहौ प्राणांस्तदा रणे ॥ २७ ॥
हत्वैवमिभदैत्यं तं पुनर्भण्डासुरं प्रति ।
युद्धायाऽभ्याजगामाऽऽशु गणेशोऽद्भुतविक्रमः ॥ २८ ॥
तदाऽऽयान्तं गणपतिं दृष्ट्वा भण्डमहासुरः ।
चिन्तयल्ललितां देवीं भीतस्तस्य पराक्रमात् ॥ २९ ॥
मातस्त्वयाऽयं समरे हतो देहो विनश्यतु ।
इति पूरय मद्वाञ्छां प्रपन्नस्त्वत्पदाऽम्बुजम् ॥ ३० ॥
तद्विदित्वा भक्तवाञ्छापूरणाय महेश्वरी ।
सस्मार सिन्धुरमुखं चक्रराजरथस्थिता ॥ ३१ ॥
विदित्वा संस्मृतिं देव्या आजगाम गजाननः ।
प्रणम्य प्राह मातः किं स्मृतो युद्धविधौ स्थितः ॥ ३२ ॥
प्राह श्रुत्वा वचस्तस्य ललिता परमेश्वरी ।
वत्साऽलं युद्धविधिना तिष्ठ मत्पार्श्वतोऽधुना ॥ ३३ ॥
एता युद्धोत्सुका देव्यो युध्यन्त्वसुरसेनया ।
इत्याज्ञप्तो गणेशानो विरराम नियुद्धतः ॥ ३४ ॥
अथ भण्डसुतैः शक्तिसेनां दृष्ट्वाऽतिविक्षताम् ।
तान् सायकैः किरन्ती सा बाला युद्धे समासदत् ॥ ३५ ॥
असङ्ख्यदैत्यसेनाभियुता दैत्येशसूनवः ।
अत्यद्भुतक्रियां युद्धे बालां वव्रूरणाऽजिरे ॥ ३६ ॥
कोटिशो दैत्यसुभटा विचित्राऽऽयुधवर्षणैः ।
बालां रथस्थां वव्रुर्गर्जन्तो युद्धदुर्मदाः ॥ ३७ ॥
अथ शक्तिगणं प्राह दण्डिनी परमं वचः ।
शृणुध्वं शक्तयः सर्वा बालाम्बाज्ञां ब्रवीमि वः ॥ ३८ ॥

एषा यैर्युध्यति युधि न तेषु सहसा क्वचित् ।
प्रयोक्तव्यं शस्त्रगणं दण्ड्या सा मेऽन्यथा भवेत् ॥३९॥
प्रेक्षध्वमस्याः समरं न योद्धव्यं कथञ्चन ।
इति सङ्घोष्य सेनासु मन्त्रिण्या सहिता स्वयम् ॥४०॥
पार्श्वे समाश्रितवती तस्याः समरवैभवे ।
अथ श्रुत्वा दण्डराज्ञ्याः शासनं मुदिता हि सा ॥ ४१ ॥
असङ्ख्यैर्दैत्यसुभटैरेकला युयुधेऽद्भुतम् ।
सिद्धर्षिदेवतामुख्याः पश्यन्त्याऽऽकाशमाश्रिताः ॥४२॥
युध्यन्तीं बहुभिश्चैकां कुमारीं विस्मिताऽभवन् ।
अथ दैत्योत्सृष्टशस्त्रवृन्दैराच्छादिताऽभवत् ॥ ४३ ॥
बालसूर्योऽभ्रपटलैरिव सा सर्वतो दिशम् ।
दृष्ट्वा छन्नां शस्त्रगणैर्विमताः शक्तयोऽभवन् ॥ ४४ ॥
ततः क्षणेनैव बाला प्रतिशस्त्राऽभिवर्षणैः ।
विनाश्य तां शस्त्रवृष्टिं भूयः सर्वान् जघान ह ॥ ४५ ॥
अथ तेषामसङ्ख्यानां युगपल्लघुविक्रमा ।
आयुधानि वाहनानि नाशयच्चित्रविक्रमा ॥ ४६ ॥
भूयो गृहीतमात्राणि शस्त्राण्यपि समाच्छिनत् ।
अथ तीक्ष्णैः शरैर्दैत्यान्नाशयत् साऽतिवेगतः ॥ ४७ ॥
शराऽऽदानञ्च सन्धानं पूरणञ्च विसर्जनम् ।
न लक्ष्यतेऽतिनिपुणदृशा केनाऽपि सर्वथा ॥ ४८ ॥
किन्तु तस्या धनुर्मध्याद्भूविलाच्छलभा इव ।
प्रसरन्ति शरास्तीक्ष्णा दिक्ष्वन्तराविहीनतः ॥ ४९ ॥
सङ्घशो दैत्यमूर्धानः पतन्ति तृणराजतः ।
फलानीव सुपक्वानि चटच्चटमहारवाः ॥ ५० ॥
केचिच्छिन्नकराऽङ्घ्र्यूरुवक्षःकुक्षिगलाः परे ।
निरन्तरतया विद्धाः सहस्राक्ष इवाऽभवन् ॥ ५१ ॥

अन्ये च खण्डिता दैत्यास्तिलशः कीर्णदेहकाः ।
केचिद्वक्षसि संविद्धा हृतप्राणाः स्थिरं स्थिताः ॥ ५२ ॥
धृतशस्त्राः प्रदृश्यन्ते लिखिताः सुभटा इव ।
केचिच्छराऽऽहतेर्वेगान्नीयन्ते गतजीवनाः ॥ ५३ ॥
युद्धकातरभावेन पलायनपरा इव ।
एवं तया मुहूर्तेन कोटिशो दैत्यपुङ्गवाः ॥ ५४ ॥
गताऽसवोऽभवन् पेतुर्विक्षतास्ते शतोत्तराः ।
न तत्र दैत्यः शूरोऽपि कश्चित् स्वात्माऽवने विभुः ॥५५॥
क्व युद्धं क्व च वा शस्त्रपातनं कर्तुमर्हति ।
न दैत्या युद्धमत्यन्तमेकाकिन्या विदुः क्वचित् ॥ ५६ ॥
कोटिशः शक्तिसेनानां युद्धं जानीयुरञ्जसा ।
शक्तिसेना नभःसंस्था देवाद्याश्च समन्ततः ॥ ५७ ॥
दृष्ट्वा वालाविक्रमं तमाश्चर्यं परमङ्गताः ।
अथैवं निघ्नतीं वालां दृष्ट्वा दैत्याश्चमूङ्गताः ॥ ५८ ॥
भीताः शस्त्राणि निक्षिप्य पलायनपराऽभवन् ।
हा हतास्मो न चेयं वै योषिद्बाला कुमारिका ॥ ५९ ॥
प्रत्यक्षमन्तकः प्राप्त एवमस्मान् विहिंसितुम् ।
अद्य निःशेषितं सैन्यं दैत्यानां भवति क्षणात् ॥ ६० ॥
वदन्त एवं क्रोशन्तो दुद्रुवुः सर्वतो दिशम् ।
शस्त्रधारासुनिचिते मार्गमप्राप्य निर्गमे ॥ ६१ ॥
शरधाराशकलिताः पेतुर्दैत्यास्तु मङ्क्षुशः ।
केचिच्छरैः सुसंविद्धाः पतिताः शवराशिषु ॥ ६२ ॥
भीता निविश्य स्वात्मानमरक्षन्मृत्युभीतितः ।
एवं तदा दैत्यसैन्यं प्रायो नष्टं पलायितम् ॥ ६३ ॥
शिष्टश्चाऽपि निशाम्याऽथ भण्डपुत्राः समाययुः ।
रथारूढाः सिंहवाहा महाचापधरा भृशम् ॥ ६४ ॥

क्रुद्धा एकप्रपातेन बालां वव्रुः समन्ततः ।
महामेघा इव श्यामा गर्जन्ती मृगराजवत् ॥ ६५ ॥
वर्षन्तः शरधाराभिर्बालां सूर्यमिवाऽम्बरे ।
तैरनेकैः कुमारी सा विष्णुतुल्यपराक्रमैः ॥ ६६ ॥
सङ्गता युधि दृष्टाऽभूल्लीलया तान् युयोध च ।
मन्त्रिणीदण्डिनीमुख्या दृष्ट्वा बालापराक्रमम् ॥ ६७ ॥
विस्मिताः श्रीपरादेव्यै समाचख्युर्महारणम् ।
देवि नूनं सा कुमारी न शेषयितुमर्हति ॥ ६८ ॥
भण्डं तद्भ्रातरौ वाऽपि पुत्रान् सेनागतानपि ।
लीलयैवाऽद्य निःशेषं करिष्यति न संशयः ॥ ६९ ॥
एवं युद्ध्वा क्षणं मन्दं भण्डपुत्रैः प्रतापनैः ।
तेषां वाहान् ध्वजं छत्रं युगपन्नाशयच्छरैः ॥ ७० ॥
तेषां सायकवृष्टिं तां विधूय प्रतिवृष्टिभिः ।
शरासनं क्रमात्तेषां चिच्छेद सुपतत्रिभिः ॥ ७१ ॥
अथ ते रोषिताः खड्गगदाप्रमुखमायुधम् ।
परामृशुर्निहन्तुं तां यावत्तावदियं द्रुतम् ॥ ७२ ॥
आत्तमात्तं प्रचिच्छेद तदद्भुतमिवाऽभवत् ।
एवं निरायुधा दैत्या जातास्तस्याः पराक्रमम् ॥ ७३ ॥
अत्यद्भुतं मेनिरे ते चिन्ताश्चाऽऽपुर्महत्तराम् ।
एवं बाला महाकालग्रस्तान् युधि निशाम्य वै ॥ ७४ ॥
विपङ्गश्च विशुक्रश्च महासैन्यपरीवृतौ ।
रक्षितुं तान् राजपुत्रानभ्यधावतामाशु वै ॥ ७५ ॥
मा बिभ्यताऽऽगतावावां वदन्ताविति सा शिवा ।
ददृशे शस्त्रवर्षाणि कुर्वन्तौ कालमेघवत् ॥ ७६ ॥
दृष्ट्वा बालाऽतिहर्षेण तां वृष्टिं शस्त्रसङ्कुलाम् ।
निवारयल्लीलयैव ततस्तां दैत्यवाहिनीम् ॥ ७७ ॥

क्षणेन वायव्याऽस्त्रेण महावायुर्घनानिव ।
नामशेषां कृतवती ततस्तावतिरोषितौ ॥ ७८ ॥
आयान्तावतिवेगेन गदाखड्गकरावुभौ ।
दृष्ट्वा शरैर्वाहनेभान् युद्धेऽनाशयदञ्जसा ॥ ७९ ॥
अथैकेन पृथग्वक्षोदेशे बलवदाहतौ ।
मूर्च्छितौ पेततुर्भूमौ वज्राऽऽहतनगाविव ॥ ८० ॥
तदन्तरे भण्डपुत्राः शस्त्रहेतोः परावृताः ।
तान्निवृत्तान् समालोक्य विरथानकरोत् क्षणात् ॥ ८१ ॥
पादचारान्निहत्याऽऽशु जङ्घयोर्निशितैः शरैः ।
प्राह रे भण्डदायादाः शूराणां वः कथं त्विदम् ॥ ८२ ॥
दर्शनं युधि पृष्ठस्य योग्यं ब्रूत पलायताम् ।
श्रुत्वा कटुरसोदर्कं भाषितं तेऽतिमानिनः ॥ ८३ ॥
ऊचुर्मन्युज्वलन्नेत्रा निवृत्ताः सम्मुखे रणे ।
धिङ् मुग्धे बालिकां दृष्ट्वा दयमानस्वभावतः ॥ ८४ ॥
जीवस्यस्मान् समासाद्य मृत्युकल्पान् कथञ्चन ।
तत् पश्य सद्यस्त्वां कुर्मो विमर्दां तत् स्थिरीभव ॥ ८५ ॥
इत्युक्त्वा मुष्टिमुद्यम्य धावमानान् स्वसम्मुखे ।
प्रत्येकं निशितैर्भल्लैस्तच्छिरांसि चकर्त ह ॥ ८६ ॥
पक्वतालफलानीव पेतुस्तन्मस्तकान्यथ ।
हा हाकारः समुद्भूत् दैत्यानां वाहिनीमुखे ॥ ८७ ॥
ववर्ष बालां कुसुमैः सुगन्धिभिः सुरेश्वरः ।
जयशब्दो महानासीच्छक्तिसेनासु सर्वतः ॥ ८८ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललितामाहात्म्ये भण्डपुत्रवधस्त्रिसप्ततितमोऽध्यायः ॥६०८४॥

---

# अथ चतुःसप्ततितमोऽध्यायः ।

एवं हतेषु भण्डस्य पुत्रेषु समरोत्सुकाम् ।
बालां भूयः समालक्ष्य मन्त्रिणीदण्डनायिके ॥ १ ॥
ऊचतुर्देवि श्रीराज्ञीं दृष्ट्वा नत्वा निवेद्य च ।
अनुज्ञाता पुनर्युद्धं यास्यामः कर्तुमञ्जसा ॥ २ ॥
तावद्दैत्याः समायान्तु समराय सुदंशिताः ।
त्वमसाध्यं कृतवती नैतदस्मच्छकं क्वचित् ॥ ३ ॥
इत्युक्त्वा तां समादाय गत्वा श्रीमातृसन्निधिम् ।
आरुह्य चक्रराजाख्यरथं नत्वा पराम्बिकाम् ॥ ४ ॥
ऊचतुर्विक्रमं युद्धे बालाया अद्भुतं महत् ।
विजयञ्च ततः श्रुत्वा तुष्टा श्रीललिताम्बिका ॥ ५ ॥
आश्लिष्य बालां सुप्रीत्या पार्श्वे च सुनिवेशयत् ।
भण्डपुत्रान् हतान् दृष्ट्वा हा हेत्युच्चैर्विक्रुशुः ॥ ६ ॥
पलायिताश्च परितः शुष्यद्वक्त्रा हतप्रभाः ।
पुत्रनाशं निशम्याऽथ भण्डदैत्योऽतिदुःखितः ॥ ७ ॥
पुनर्विमृश्य सद्बुध्या धैर्यमालम्ब्य सत्वरम् ।
अहो मे विपुलो मोहः स्मृतिभ्रंशः समुद्गतः ॥ ८ ॥
किं शोचामि वृथैवाऽहं देव्या मेऽभिमतं कृतम् ।
यथा यथा प्रार्थितं मे तत्तथैव कृतं तथा ॥ ९ ॥
नूनं मदर्थं शोचेयुरेते तस्मान्ममाऽग्रतः ।
यान्तु पञ्चत्वमथ वै तया देव्या रणे हताः ॥ १० ॥
प्राप्नोमि तल्लोकगतिं परीवारेण संयुतः ।
इति मे प्राग्व्यवसितं प्रार्थिता च पराम्बिका ॥ ११ ॥

अथ सा भक्तकामानां दोग्ध्री कामप्रपूरणम्।
चक्रे तत्र महामोहो वृथा किं मामुपागतः॥ १२॥
तदलं मे विमोहेन देवि त्वां शरणागतः।
तन्मेऽवशेषितं कामं पूरयाऽऽशु महेश्वरि॥ १३॥
संहृत्य शिष्टां सेनां मे भ्रातृभ्यां सहितां ततः।
मां सयोषिद्गणं शीघ्रं युद्धे शस्त्राग्निपावितम्॥ १४॥
विधाय स्वपदाम्भोजसन्निधिं नेतुमर्हसि।
कदाऽहं चन्द्रचूडालं नेत्रत्रयसुशोभनम्॥ १५॥
क्रोधारुणितनेत्रान्तसभ्रूकुटिलदर्शनम्।
पश्यन् श्रीमातृवदनं दग्धस्तत्सायकाऽग्निना॥ १६॥
व्रजाम्यशोकममृतं स्थानं योगिसुदुर्लभम्।
प्रार्थयन्निति तद्रूपं कोटिकन्दर्पसुन्दरम्॥ १७॥
ध्यायन् श्रीललितादेव्या निर्विकल्पोऽभवत् क्षणम्।
तावत्तत्राऽऽजग्मतुस्तौ दैत्यराजस्य भ्रातरौ॥ १८॥
तं ददर्शतुरत्यन्तनिश्चेष्टं स्थाणुवत्स्थितम्।
अमंसतुः पुत्रशोकभराक्रान्तं सुमूर्च्छितम्॥ १९॥
समाधानवचस्तत्र प्रोचतुः कालसम्मितम्।
तयोः शमपरैः शब्दैर्ध्येयान्निर्गतमानसः॥ २०॥
उन्मील्य नेत्रे पुरतो ददर्श भ्रातुरौ स्थितौ।
स्वरूपगोपनार्थं स भ्रात्रोः सम्मुखतः स्थितः॥ २१॥
पुत्रान् शुशोच नितरां मनसा तौ हसंस्तदा।
हा पुत्रा मां परित्यज्य पितरं दुःखसागरे॥ २२॥
मज्जन्तं दीनमत्यन्तं क्व यातास्त्यक्तसौहृदाः।
मातरो वोऽतिवात्सल्यकातरा ईदृशीं दशाम्॥ २३॥
श्रुत्वा कथं भवेयुस्ता विदीर्णहृदया इव।
इत्यादि विलपन्तं तं दृष्ट्वा तौ भ्रातरौ तदा॥ २४॥

श्रीदेवीमायया मुग्धौ दैत्येशं प्रोचतुर्वचः ।
अलं दैत्येश शोकेन धैर्यवीर्याऽपहारिणा ॥ २५ ॥
शोचन्तं त्वां समालोक्याऽसङ्ख्यातभुवनेश्वरम् ।
ज्वरो दहति नौ देहं करीषमिव पावकः ॥ २६ ॥
मुहूर्तं धैर्यमालम्ब्य राजंस्त्वं सुस्थिरो भव ।
गत्वाऽऽवामेकपातेन तां हत्वा निशितैः शरैः ॥ २७ ॥
पुत्रघ्नीं ललिताऽऽख्यातां मारीं दैत्येष्विवाऽऽगताम् ।
जीवन्तीं वा मृतां वाऽपि बद्ध्वा नेष्याव आशु वै ॥ २८ ॥
इत्युक्त्वा सशरं चापमादाय स्यन्दनाऽऽश्रयौ ।
युद्धार्थमभ्याययतुरतिवीर्यपराक्रमौ ॥ २९ ॥
द्विशताऽक्षौहिणीसेनापरीवारौ सुदंशितौ ।
पृथक् शक्तिमहासेनापार्श्वभागे प्रपेततुः ॥ ३० ॥
चक्रराजरथवरदक्षपार्श्वेऽतिवेगतः ।
शताऽक्षौहिणीसेनाभिर्विषङ्गः प्रापदद्बली ॥ ३१ ॥
विशुक्रश्चापि वामेन तथा न्यपतदञ्जसा ।
तृतीये युद्धदिवसे प्रातः सूर्योदयं प्रति ॥ ३२ ॥
अकस्माच्छक्तिसेनायाः पक्षयोः पातितौ यदा ।
तदाभवन्महाशब्दः शक्तिसेनासु पार्श्वयोः ॥ ३३ ॥
तदा श्रुत्वा युद्धशब्दं मन्त्रिणीदण्डनायिके ।
अभूतां शङ्कितेऽत्यन्तमूचतुः श्रीपराम्बिकाम् ॥ ३४ ॥
देवि दैत्यशक्तिसेनासमागममहाध्वनिः ।
श्रूयते भैरवतरो दैत्याः कपटयोधिनः ॥ ३५ ॥
युध्यन्त्यकाण्डे सन्नद्धा अकृत्वा संविदं पुरा ।
तद्याव आवामनुजानीहि शीघ्रं महेश्वरि ॥ ३६ ॥
अनुज्ञाते ततो नत्वा मन्त्रिणीदण्डनायिके ।
चेलतुः समारायाऽऽशु पृथक् शक्तिगणावृते ॥ ३७ ॥

देव्या दक्षिणपार्श्वस्था दण्डिनी चण्डविक्रमा ।
निर्ययौ श्रीचक्रराजरथदक्षिणद्वारतः ॥ ३८ ॥
किरिचक्ररथं पञ्चपर्वशोऽभिसमुन्नतम् ।
महासिंहयुगं पार्श्वे सैरिभाग्र्यं तथा पुरः ॥ ३९ ॥
योजितं भैरवो यत्र रथनेता स्वयं स्थितः ।
तत्पार्श्वे सिंहसंवाहरथारूढे विचेलतुः ॥ ४० ॥
स्वप्नेश्वरी तथा कालसङ्कर्षा युद्धसम्भ्रमा ।
वटुकैः कालिकावृन्दैर्वराहमुखशक्तिभिः ॥ ४१ ॥
असङ्ख्याभिः परिक्रान्ता निर्ययौ कदनाय सा ।
एवं चक्ररथद्वारादुत्तरस्माच्च मन्त्रिणी ॥ ४२ ॥
विनिर्गत्य गेयचक्ररथराजे महोन्नते ।
सप्तपर्वयुते वेदहरिदश्वप्रचालिते ॥ ४३ ॥
हसन्ती श्यामला तत्र रथनेऽभवत् परा ।
शुकाद्या सारिकाद्या च श्यामला दक्षपार्श्वगा ॥ ४४ ॥
सङ्गीतसाहित्यपूर्वे श्यामले वामपार्श्वगे ।
लघुश्यामलिका पृष्ठे चैवमेता रथाऽऽश्रयाः ॥ ४५ ॥
परितो गेयचक्रात्मरथस्याऽऽशु विनिर्ययुः ।
मन्त्रिण्यङ्गसमुद्भूताः श्यामलाः कोटिकोटिशः ॥ ४६ ॥
रथाश्रयाः प्रचेलुर्वै युद्धसम्भारसम्भृताः ।
सर्वाः षोडशवार्षिक्यस्तारुण्यश्रीनिषेविताः ॥ ४७ ॥
रक्तकौशेयवसना नवरत्नविभूषणा ।
कटाक्षमन्दहासाभ्यां मोहयन्त्योऽखिलं जगत् ॥ ४८ ॥
कापिशायनपानोद्यन्मदघूर्णितलोचनाः ।
काव्याऽऽलापरसाऽभिज्ञा गीतवाद्यविनोदिताः ॥ ४९ ॥
नर्मक्रीडापराश्चाऽतिहास्यलीलापरायणाः ।
मन्त्रनाथा वाहिनी सा शुशुभेऽतितरां तदा ॥ ५० ॥

तापिच्छवनमालेव विक्रमच्चारुमञ्जरी ।
अथाऽभवच्छक्तिसेनादैत्यसेनासमागमः ॥ ५१ ॥
उद्वेलयोः सागरयोरिव सङ्गमनं भुवि ।
अथ ध्वनद्युद्धवाद्यहुङ्कराऽऽस्फोटनिस्वनः ॥ ५२ ॥
रथघोषतुरङ्गोच्चह्रेषागम्भीरमांसलः ।
सेनयोरुभयोस्तत्र बधिरीकृतदिङ्मुखः ॥ ५३ ॥
शक्तिमङ्गमहामेघनिर्मुक्तेषुप्रवर्षणैः ।
दैत्यसेनामुखतटं विदीर्णं शतधाऽभवत् ॥ ५४ ॥
दैत्यसेनाभिन्नमुखद्वारेण विविशुर्द्रुतम् ।
दैत्यसेनाह्रदं शक्तिसेनास्रोतः समन्ततः ॥ ५५ ॥
निविश्य दैत्यसेनां ताः शक्तयो बलवत्तराः ।
शस्त्राऽग्निभिर्दैत्यसेनावनं चक्रुर्हि भस्मसात् ॥ ५६ ॥
केचिच्छरैः सुनिचिताः केचित्परिघपोथिताः ।
अन्ये कृपाणिना च्छिन्ननिखिलाङ्गा गताऽसवः ॥ ५७ ॥
परे चक्रविकृत्ताङ्गाः परशुच्छिन्नकन्धराः ।
इतरे शूलसूत्रेषु प्रोता मणिगणा इव ॥ ५८ ॥
अपरे शक्तिप्रमुखैर्भिन्नमूर्धोदराऽभवन् ।
एवं विनाश्यमानायां सेनायां शक्तिसेनया ॥ ५९ ॥
दृष्ट्वा विशुक्रोऽह्यत्यन्तं रोषाग्निज्वालितेक्षणः ।
रथेनाऽभ्यद्रवच्छक्तिवाहिनीं शस्त्रवर्षणैः ॥ ६० ॥
जीमूत इव वर्षासु धाराः शरमयास्ततः ।
शक्तिसेनाऽपि युयुधे विशुक्रे च बलीयसी ॥ ६१ ॥
अथ पुत्रा विशुक्रस्य पितृतुल्यपराक्रमाः ।
जीमूतकायो देवारिः करम्भः शिखिभाषणाः ॥ ६२ ॥
निविश्य शक्तिसेनाऽन्तर्जघ्नुस्ता बलवत्तराः ।
विशुक्रात्मजसङ्क्षिप्तां निशाम्य शक्तिवाहिनीम् ॥ ६३ ॥

चतुर्दिक्षु काल्यमाना शुकादिश्यामलामुखाः।
विशुक्रपुत्रानासेदुर्वर्षन्त्य इषुसन्ततिम् ॥ ६४ ॥
तत्र जीमूतकायेन युयोध शुकश्यामला।
चिरं युद्ध्वा शरैस्तत्र रथं सूतं शरासनम् ॥ ६५ ॥
चिच्छेद निमिषार्धेन ततः प्रकुपितोऽसुरः।
जघान तीक्ष्णधारेण खड्गेन रथवाहनम् ॥ ६६ ॥
तस्या रथाश्वो निहतः प्रस्खलच्छिन्नमस्तकः।
तावच्छुकश्यामलिका अर्धचन्द्रेषुणा जवात् ॥ ६७ ॥
अपातयच्छिरो देहात् पक्वतालफलं यथा।
देवारिणा शारिकाख्या सङ्गता युद्धकर्मणि ॥ ६८ ॥
छिन्नध्वजरथाऽश्वं तं युध्यन्तं गदया दृढम्।
स्वकीयगदयाऽऽप्लुत्य जघानाऽसुरमस्तके ॥ ६९ ॥
भिन्नमूर्धा निपतितो देवारिर्गतजीवनः।
सङ्गीतश्यामला युद्धं करम्भेण चकार ह ॥ ७० ॥
युद्ध्वा चिरं तेन सह खड्गेन शिर आच्छिनत्।
साहित्यश्यामला युद्ध्वा बलिनं शिखिभाषणम् ॥ ७१ ॥
शस्त्राऽस्त्रैस्तं विनिर्जित्य प्राक्षिपद्वक्षसि द्रुतम्।
त्रिशूलं तेन दलितहृदयः प्राप तद्व्यसुः ॥ ७२ ॥
यावत्पुत्रा नियुध्यन्ति विशुक्रस्तावदाशु वै।
छन्नरूपः श्यामलाया रथपार्ष्णिं समासदत् ॥ ७३ ॥
तत्र चोरवदायान्तं गदाहस्तं महाबलम्।
दृष्ट्वा लघुश्यामलाख्या सन्निधानं समागतम् ॥ ७४ ॥
मन्त्रेश्या रथवर्यन्तमारुरुक्षन्तमञ्जसा।
जघान मूर्ध्नि तरसा खड्गेनाऽतिबलीयसा ॥ ७५ ॥
खड्गप्रपाततस्तस्य मुकुटं शकलीकृतम्।
विशुक्रो भ्रष्टमुकुटः क्रोधारुणितलोचनः ॥ ७६ ॥

गदामादाय वेगेन हन्तुं तामभिसंययौ ।
तावच्छरेण दैत्यस्य गदां चिच्छेद सप्तधा ॥ ७७ ॥
निरायुधो विशुक्रोऽपि मुष्टिना रथवाजिनाम् ।
तस्या जघान तावत् सा प्राहरन्मूर्ध्नि सायकैः ॥ ७८ ॥
सायकैर्विदलन्मूर्धा पपात भुवि मूर्च्छितः ।
ईषत्प्रज्ञस्तावदेनं ग्रहीतुं लघुश्यामला ॥ ७९ ॥
रथादवप्लुत्य शीघ्रं बाहुभ्यां तं परामृशत् ।
प्रतिबुद्धस्तावदसौ मत्वा स्वस्य हि बन्धनम् ॥ ८० ॥
मुष्टिनाऽभ्यहनद्देवीं साऽपीपत्कश्मलं ययौ ।
तावत् ज्ञात्वा रथस्थानाः शक्तयो रिपुमन्तिके ॥ ८१ ॥
कोटिशस्तं समुत्पेतुर्वाहिनी शक्तयोऽपि च ।
तावन्मत्वा शक्तिगणं दुःसहं दैत्यशेखरः ॥ ८२ ॥
उत्प्लुत्य स्वरथं प्राप्तो दैत्यसेनामुखस्थितम् ।
तत्र दृष्ट्वा मृतान् पुत्रान् शोकसंविग्नमानसः ॥ ८३ ॥
विलप्य किञ्चिदत्यन्तरोषारुणितलोचनः ।
प्रज्वलन् शक्तिसेनां तां विधमच्छरवर्षणैः ॥ ८४ ॥
दृष्ट्वा विशुक्रं शक्तीनां सेनाप्राणाऽपहारिणम् ।
मन्त्रिणी सायकाऽऽसारैर्धनुर्जीमूतनिःसृतैः ॥ ८५ ॥
ववर्ष नीलशैलोच्चशृङ्गं पर्जन्यवद्भृशम् ।
तीक्ष्णसायकधाराभिर्विशुक्रोऽत्यन्तविक्षतः ॥ ८६ ॥
देहक्षतेभ्योऽतितरामसृग्धारां मुमोच वै ।
नीलाद्रिर्वृष्टिधाराभिर्गैरिकारसवत्क्षणम् ॥ ८७ ॥
मन्त्रिण्या गाढसंविद्धो रोषात् प्रज्वलिताऽऽकृतिः ।
विचित्रशस्त्रशलभैराच्छादयत मन्त्रिणीम् ॥ ८८ ॥
विरेजे मन्त्रिणीच्छन्ना दैत्यशस्त्रमधुव्रतैः ।
तमालमञ्जरीवाऽतिमकरन्दसुबृंहिता ॥ ८९ ॥

क्षणेन दैत्यशस्त्राणि निवार्य शरवर्षणैः ।
आकर्णपूर्णभल्लेन धनुर्ज्यामाच्छिनद्द्रुतम् ॥ ९० ॥
यावज्ज्यामपरां चापे निवेशयितुमीहते ।
तावत्तीक्ष्णपृषत्केन मुष्टिदेशे जघान तम् ॥ ९१ ॥
गाढविद्धदैत्यमुष्टेर्दैत्यस्य धनुरापतत् ।
पतितं धनुरादातुं यावन्नम्रो महासुरः ॥ ९२ ॥
तावदन्येनाऽभिहनत् पत्रिणा मूर्ध्नि मन्त्रिणी ।
स तावदिषुणा भिन्नमूर्धा गाढसुमूर्च्छया ॥ ९३ ॥
अपतत् स्वरथोपस्थे वज्राहत इवाऽद्रिराट् ।
अथ क्षणेन मन्त्रिण्या नाशितं दैत्यवाहनम् ॥ ९४ ॥
सारथिश्छत्रमुकुटे शस्त्रसङ्घं शरैः पृथक् ।
तावन्मूर्च्छाविनिर्मुक्तो ददर्शाऽऽहवसाधनम् ॥ ९५ ॥
साकल्येन विनष्टं तत् क्रुद्ध उत्प्लुत्य तां रुषा ।
शीर्णं रथाङ्गमादाय निहन्तुमुपसंययौ ॥ ९६ ॥
तावद्दक्षभुजेऽत्यन्तवेगाच्छरमपातयत् ।
शरेणाऽभिहताद्धस्ताद्रथाङ्गं प्रापतत् क्षितौ ॥ ९७ ॥
ततो मुष्टिं समुद्यम्य रथ आप्लुत्य सत्वरम् ।
मन्त्रिणीहस्तगं चापं भङ्क्तुं यावत् समाच्छिनत् ॥ ९८ ॥
तावत्तीक्ष्णाऽसिना कायाच्छिरस्तस्य निपातयत् ।
दृष्ट्वा विशुक्रं निहतं विद्रुता दैत्यवाहिनी ॥ ९९ ॥
परिशिष्टाऽतिवित्रस्ताः शस्त्राण्युत्सृज्य सर्वतः ।
जयशब्दं शक्तिगणाश्चक्रुर्देवमुखा अपि ॥ १०० ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललिता-
माहात्म्ये विशुक्रवधश्चतुःसप्ततितमोऽध्यायः ॥ ६१८४ ॥

# अथ पञ्चसप्ततितमोऽध्यायः।

विषङ्गेनाऽपि वाराही सङ्गता समरे यदा।
तदा दैत्यशक्तिचम्वोरभवद्भैरवो रणः॥ १॥
शक्तीनां खड्गचक्राऽसिपरिघप्रासतोमरैः।
वटुकानां त्रिशूलाद्यैर्दैत्या भूयोऽभिविक्षताः॥ २॥
तिलशः छिन्नवर्ष्माणि जहुः प्राणान् रणाऽजिरे।
दृष्ट्वा दैत्यचमूं शक्तिगणैः प्रायो विनाशिताम्॥ ३॥
क्रुद्धाऽभिदुद्रुवुः शक्तिचमूं पर्वतसन्निभाः।
विषङ्गपुत्राः प्रोद्दण्डविक्रमा वीर्यवत्तराः॥ ४॥
करालवक्त्रो विशिखो विभाण्डो विकटेक्षणः।
इन्द्रशत्रुः सुराऽरातिर्महाकुक्षिर्मदोद्धतः॥ ५॥
एतेऽष्टौ भीमबलिनो शक्तीर्जघ्नुः समन्ततः।
तैर्हन्यमानां तां शक्तिवाहिनीमभिवीक्ष्य तु॥ ६॥
अभ्याययुस्तान्नियोद्धुं जम्भिनी स्तम्भिनी तथा।
अन्धिनी मोहिनी चैव भैरवः कालकार्षिणी॥ ७॥
स्वप्नेस्वरी च वटुक इत्यष्टौ सुविभीषणाः।
करालवक्त्रेण युधि जम्भिनी सङ्गताऽभवत्॥ ८॥
युद्ध्वा चिरं तया सार्कं शस्त्रास्त्रैर्दैत्यपुङ्गवः।
गदयाऽभिजघानाऽऽशु वराहं शक्तिवाहनम्॥ ९॥
ताडितो जम्भिनीवाहो शूकरो भिन्नमस्तकः।
ईषत् पपात पुरतो जानुभ्यामवनिङ्गतः॥ १०॥
तावत्क्रुद्धा जम्भिनी च खड्गेन शिर आहरत्।
विशिखः स्तम्भिनीं प्राप्य युयोधाऽतिबली दृढम्॥ ११॥

स्तम्भिनी हरिणाऽऽरूढा विशिखैर्विशिखं त्रिभिः ।
जघान तैर्मूर्ध्नि लग्नैर्विशिखोऽतिव्यराजत ॥ १२ ॥
त्रिशृङ्ग इव दैत्येन्द्रः सुस्राव बहुशोणितम् ।
सोऽपि क्रुद्धोऽतिवेगेन तीक्ष्णधारेण कर्णिना ॥ १३ ॥
धनुर्ज्यामाच्छिनद्भूयो विकीर्य निशितैः शरैः ।
तावत्क्रुद्धा स्तम्भिनी च गार्ध्रपत्रेण तेजिना ॥ १४ ॥
तद्वाहनोष्ट्रमनयाच्छित्त्वाऽन्तकपुरं प्रति ।
अथ तस्य क्षणेनैव निशितैर्विशिखैस्त्रिभिः ॥ १५ ॥
निषङ्गं मुकुटं चापं चिच्छेद युगपद्युधि ।
स छिन्नधन्वाऽतिरुषा त्रिशूलमतिभास्वरम् ॥ १६ ॥
स्तम्भिनीं प्रतिचिक्षेप तावत् सा लघुविक्रमा ।
छित्त्वा त्रिशूलं भल्लेन शिरो दैत्यस्य पातयत् ॥ १७ ॥
अन्धिन्या युयुधे तत्र विभण्डो बलगर्वितः ।
शस्त्रैरस्त्रैरनेकैश्च कृतप्रतिकृतैररम् ॥ १८ ॥
अन्धिनी महिषाऽऽरूढा विभण्डः खरवाहनः ।
चिरं युद्ध्वा तेन तत्र कर्णान्ताऽऽकृष्टपत्रिणा ॥ १९ ॥
जघान दैत्यमुरसि तथा विद्धो विभण्डकः ।
पपात मूर्च्छितो गाढं छिन्नपक्ष इवाऽद्रिराट् ॥ २० ॥
अथ तद्वाहनः खरो पर्वताभोऽतिधूसरः ।
क्वाशब्दं भीषणं कृत्वा समुन्नम्य च वालधिम् ॥ २१ ॥
निविष्टः शक्तिसेनासु संस्तब्धाङ्गरुहो बली ।
काश्चित्प्रत्यक्पादघातैर्दशनैश्चाऽवधूननैः ॥ २२ ॥
अन्याः स्वगतिवेगेन खरः शक्तीर्निपातयत् ।
एवं शक्तीर्विनिघ्नन्तं खरं दृष्ट्वाऽन्धिनी तदा ॥ २३ ॥
शरेणाऽऽकर्णपूर्णेन जघानाऽतिरुषाऽन्विता ।
स विद्धस्तीक्ष्णबाणेन मूर्च्छितः प्रापतद्भुवि ॥ २४ ॥

तावन्मूर्च्छाविनिर्मुक्तो विभण्डोऽत्यन्तरोषितः ।
वेगेन गदया तस्या वाहनं ताडयद्बली ॥ २५ ॥
अग्निघनीवाहमहिषस्ताडितो गदया भृशम् ।
विद्रुत्य मन्युज्वलितस्तं शृङ्गाभ्यां समाक्षिपत् ॥ २६ ॥
विभाण्डो महिषाऽऽक्षिप्त आकाशं प्राप्य वेगतः ।
परतो योजनाद्भूमौ पपात सुविमूर्च्छितः ॥ २७ ॥
तावदभ्याययौ तस्य वराहो गसभशेखरः ।
मुञ्चन् सुशीघ्रं क्वाशब्दं सघर्घरमहारवम् ॥ २८ ॥
आगत्य महिषं भूयः परावृत्य सुवेगतः ।
पाश्चात्यपादघातेन सन्ताड्य बलवत्तरम् ॥ २९ ॥
ददंश तं पुनः कण्ठे तावत् क्रुद्धः स सैरिभः ।
शृङ्गाभ्यां दारयत् कुक्षिं भूमावास्फाल्य वेगतः ॥ ३० ॥
निर्गताऽन्त्रः खरो मृत्युं प्राप निर्यातितेक्षणः ।
विमूर्च्छस्तावदभ्येत्य विभाण्डोऽभिहनत् पदा ॥ ३१ ॥
महिषं तावदिषुणाऽग्निघनी दैत्यस्य मस्तकम् ।
अपाहरदतिक्रोधात् कृत्तमूर्द्धा ममार सः ॥ ३२ ॥
युयोध मोहिनी दैत्यं शस्त्रास्त्रैर्विकटेक्षणम् ।
मोहिनी गरुडारूढा गृध्रस्थो विकटेक्षणः ॥ ३३ ॥
सुपर्णगृध्रयोर्भीममासीद्युद्धं नभोऽङ्गणे ।
सपक्षयोः पर्वतयोरिवाऽत्यन्तविचित्रितम् ॥ ३४ ॥
तदा सुपर्णपक्षाभ्यां प्रोथितो गृध्रशेखरः ।
नखैस्तुण्डैर्दारिताङ्गो ममार पतितोऽवनौ ॥ ३५ ॥
विकटाक्षो हते वाहे क्रुद्धो युद्ध्वा चिरं तया ।
मोहिनीचक्रसंच्छिन्नगलो मृत्युमुपागतः ॥ ३६ ॥
इन्द्रशत्रुः सर्पसंस्थो भैरवेणाऽभिसङ्गतः ।
स्ववाहनाऽतिभीमेन युयोधाऽत्यन्तसाहसी ॥ ३७ ॥

भैरवः कालमेघाभः स्वसमाकारभैरवैः ।
कोटिसङ्ख्यागणयुतैरष्टभिः सेवितोऽनिशम् ॥ ३८ ॥
सर्वे त्रिशूलदण्डाढ्यास्त्रिनेत्राश्चन्द्रशेखराः ।
कालमेघनिभाः सर्पभूषणाः कृत्तिवाससः ॥ ३९ ॥
इन्द्रशत्रोश्चमूं भीमां दशाक्षौहिणीसम्मिताम् ।
निविश्य ते निमेषेण निःशेषाश्चक्रुरोजसा ॥ ४० ॥
केचिच्छूलेषु सम्प्रोताः केचिद्दण्डैर्विदारिताः ।
केचिन्नखैः पाटिताङ्गाः केचिन्मुष्टिभिराहताः ॥ ४१ ॥
दधुर्दैत्याऽन्त्रमालां ते भैरवाणां गणास्तदा ।
एवं दृष्ट्वा प्रनष्टां स्वामिन्द्रशत्रुश्चमूं रुषा ॥ ४२ ॥
गदया भैरवगणं मर्दयामास सर्वतः ।
एवं गणानर्द्यमानान् वीक्ष्य दैत्येन संयुगे ॥ ४३ ॥
मन्थानाद्यपराह्वाना असिताङ्गादिभैरवाः ।
इन्द्रशत्रुं पर्वताभं युयुधुः सर्पवाहनम् ॥ ४४ ॥
तान् योधयामास दैत्यः सर्वानेको रणाऽजिरे ।
वज्रसंहननं तस्य शूलैर्दण्डप्रपातनैः ॥ ४५ ॥
अक्षतं सर्वथा यद्वद्गण्डशैलः फलैर्हतः ।
तं दृष्ट्वा विरुजं दैत्यं भैरवाणां भयङ्करम् ॥ ४६ ॥
युयुधे तेन समरे भैरवाणामधीश्वरः ।
युद्ध्वा चिरमुत्पतन्तं गदया हन्तुमम्बरम् ॥ ४७ ॥
आविध्य हृदि शूलेन भुवि तं न्यस्तुमाक्षिपत् ।
युद्ध्वा सुराऽरातिरपि कालकर्षिणिकाऽऽह्वयाम् ॥ ४८ ॥
काकसंस्थो लुलावाऽधिरूढया सुचिरं बली ।
तच्छक्तिगणनिःशेषीकृतदैत्यमहागणः ॥ ४९ ॥
तदङ्कुशप्रहारेण भिन्नमूर्धा ममार ह ।
स्वप्रेरया युयुधे दैत्यो महाकुक्षिर्द्विकाश्रयः ॥ ५० ॥

रथाधिरूढया सेना नाशिता शक्तिसङ्कुकैः ।
चिरं योधयतस्तस्य महाकुक्षेर्बलीयसः ॥ ५१ ॥
विदार्य कुक्षिं खड्गेन नाशयद्दैत्यपुङ्गवम् ।
मदोद्धतोऽपि वटुकभैरवेण सुसङ्गतः ॥ ५२ ॥
वटुकैः स्वसमाकारैर्दशकोटिमितैस्तथा ।
महाकपालदण्डाढ्यैः सर्पभूषणसंयुतैः ॥ ५३ ॥
पञ्चहायनकैर्मत्तैर्दिग्वस्त्रैररुणेक्षणैः ।
तमस्तोमनिभैश्चन्द्रचूडैर्युक्तेन सर्वतः ॥ ५४ ॥
दशाक्षौहिणिकायुक्तो युयोधाऽतितरां बली ।
वटुकानां गणाः क्रुद्धा निविश्याऽसुरवाहिनीम् ॥ ५५ ॥
दण्डैर्निहित्य तरसा नाशं निन्युर्यथाऽऽशु नः ।
अथ क्रुद्धं दैत्यपतिं निपतन्तं गदाधरम् ॥ ५६ ॥
वटुकेशो जघानोच्चैर्मूर्ध्नि दण्डने लीलया ।
दण्डाऽऽहत्या दलन्मूर्धा वमन् रक्तं सफेनिलम् ॥ ५७ ॥
पतित्वाऽऽशु विनिश्चेष्टो ममाराऽसुरशेखरः ।
एवं विषङ्गः पुत्रेषु नष्टेष्वत्यन्तदुःखितः ॥ ५८ ॥
क्रोधमाहारयत्तीव्रं विंशत्यक्षौहिणीयुतः ।
निपपातैकपातेन प्रलयाऽनिलवज्जवात् ॥ ५९ ॥
किरिचक्रोपरि तदा ध्वनद्वादित्रनिस्वनः ।
शस्त्रधारां विमुञ्चन् वै कुर्वन् सतिमिरा दिशः ॥ ६० ॥
जलद्वहिमहाकूटे शलभानां गणा इव ।
अथ जम्भिनीमुख्याभिर्नाशिता क्षणमात्रतः ॥ ६१ ॥
विषङ्गसैन्यं शस्त्राग्निज्वालाभिः शलभानिव ।
केचित्त्रिशूलस्फुटितहृदया जीवितं जहुः ॥ ६२ ॥
परे दण्डाविकीर्णाङ्गा अन्ये परिघपोथिताः ।
अपरे सायकैश्छन्ना ततोऽन्ये मुष्टिदारिताः ॥ ६३ ॥

खङ्गच्छिन्नाङ्घ्रिबाहूरुकन्धराद्या अपीतरे ।
केचिच्छस्त्रौघसम्पातशकलीकृतदेहकाः ॥ ६४ ॥
एवं विनष्टे सैन्ये स्वे विषङ्गः क्रोधमूर्च्छितः ।
निहत्य गदया शक्तिसेनां भित्त्वा ह्यशेषतः ॥ ६५ ॥
दण्डराज्ञीरथवहं महिषश्च मृगाधिपौ ।
गदयैव हि सन्ताड्य रथराजं समारुहत् ॥ ६६ ॥
आरोहन्तं रथं वेगाद्विषङ्गं वीक्ष्य सर्वतः ।
शक्तिसेनासु समभूद्धा हाऽऽकारमहाध्वनिः ॥ ६७ ॥
रथपर्वस्थिताः शक्तीरपि सम्मर्द्य वेगतः ।
चतुर्थपर्वाऽन्तरालं प्राविशत् सत्वरं बली ॥ ६८ ॥
दण्डराड्यपि तं दृष्ट्वा दैत्यमायान्तमन्तिकम् ।
अवरुह्य युयोधोच्चैर्मुसलेन स्वपर्वतः ॥ ६९ ॥
तत्राऽभवन्महायुद्धं दण्डिनीदैत्यराजयोः ।
शस्त्रैर्विचित्रैरस्त्रैश्च सर्वलोकभयङ्करम् ॥ ७० ॥
ज्ञात्वाऽजेयामस्त्रशस्त्रैर्दण्डिनीं दैत्यपुङ्गवः ।
मायां प्रादुश्चकारोच्चैः सर्वलोकभयावहम् ॥ ७१ ॥
अन्धकारं पांशुवर्षमश्मवर्षं महारवम् ।
अग्निवर्षं वज्रवर्षं रक्ताऽमेध्यादिवर्षणम् ॥ ७२ ॥
मुण्डवृष्टिं महाभीमामथ दैत्यमहाचमूम् ।
सहस्रपादबाह्वास्यमात्मानं शतधाऽपि च ॥ ७३ ॥
तादृश्या मायया तस्य भीतास्ताः सर्वशक्तयः ।
भीताः शक्तीः समालोक्य दण्डिनी शरवृष्टिभिः ॥ ७४ ॥
व्यनाशयन्मायिकांस्तानथ भूयोऽपि दैत्यराट् ।
मायां ससर्ज महतीं ददृशुः सर्वशक्तयः ॥ ७५ ॥
चक्रराजरथं तत्र समायान्तं द्रुतं तथा ।
स्वयं वाहान्निहत्याऽऽशु रथं छित्वाऽप्यनेकधा ॥ ७६ ॥

जवेन देवीं ललितां केशपाशे परामृशत् ।
चुक्रुशुर्मायया तस्य हा हेत्युच्चैस्तु शक्तयः ॥ ७७ ॥
तावत् श्रीभैरवो देवीं बभाषे रथनायकः ।
अलं दैत्येषु ते देवि लीलया भीतिदानया ॥ ७८ ॥
पश्य शक्तीर्भयाऽऽक्रान्ताः शोचन्तीः सर्वतः शिवे ।
निर्मायाऽस्त्रेण दैतेयं विमायं नाशय द्रुतम् ॥ ७९ ॥
सन्ध्या समभ्येति पुरस्तस्यां माया दुरत्यया ।
रथनेतुर्वचः श्रुत्वा मत्वा युक्तश्च दण्डिनी ॥ ८० ॥
निर्मायाऽस्त्रं समुत्सृज्य मायां तस्य व्यनाशयत् ।
वायुनेव च नीहारो नष्टा माया च सर्वतः ॥ ८१ ॥
तदा गदाधरो भूयो ददृशे सम्मुखागतम् ।
दृष्ट्वैव तं दण्डिनी सा क्रुद्धा खड्गेन तच्छिरः ॥ ८२ ॥
चकर्त निमिषार्धेन वज्रेण त्वाष्ट्रकं यथा ।
एवं तस्मिन् विनिहते विषङ्गे भीमविक्रमे ॥ ८३ ॥
देवदुन्दुभयो नेदुरपतत्पुष्पवर्षणम् ।
दिशो वितिमिरा जाताः सुप्रभश्च दिवाकरः ॥ ८४ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे ललिता-
माहात्म्ये विषङ्गवधः पञ्चसप्ततितमोऽध्यायः ॥ ६२६८ ॥

# अथ षट्सप्ततितमोऽध्यायः ।

एवं विषङ्गे निहते जयशब्दो महानभूत् ।
मुदिताः शक्तयः सर्वास्तुष्टुवुर्दण्डनायिकाम् ॥ १ ॥
भ्रातरौ सपरीवारौ श्रुत्वा युधि निपातितौ ।
शोककातरतां प्राप मोहेनेषन्महासुरः ॥ २ ॥
विमृश्याऽथ शुचं हित्वा स्वमात्मानं हसन्निव ।
अहो मां किं वदामीह शोचन्तं मुक्तभावतः ॥ ३ ॥
यदर्थितं जगन्मात्रा चिरं तन्मे प्रपूरितम् ।
एवं सा पूरयेच्छेषमाशु नास्त्यत्र संशयः ॥ ४ ॥
तद्व्रजामि शेषगणैः श्रीमातुर्दृष्टिगोचरम् ।
विलम्बेन ममाऽत्राऽलं श्रेयो विघ्नैर्हि सङ्कुलम् ॥ ५ ॥
अहो लोके सर्वथैव एकान्तेनाऽभियाचितम् ।
दिशत्येव पराम्बा सा भावरूपा हि कामधुक् ॥ ६ ॥
एवं स्वान्तःसमासीनां वाञ्छाऽधिकफलप्रदाम् ।
परमानन्दजननीं हित्वा दैवहतो जनः ॥ ७ ॥
दुःखसाराऽल्पविषयप्रेप्सया भीमरूपया ।
नीयते व्यर्थमनिशं मृत्योर्भक्ष्योपसेकताम् ॥ ८ ॥
धन्योऽहं कृतकृत्योऽहं यच्छ्रीदेवीपदाम्बुजम् ।
समीक्षन् कश्मलममुं विमुच्य हतदेहकम् ॥ ९ ॥
विशोकं परमं स्थानं समुपैम्यविशङ्कितम् ।
इति सञ्चिन्त्य दैत्येन्द्रः स्वान्तरस्याऽभिगुप्तये ॥ १० ॥
भूत्वाऽत्यन्तं क्रुद्ध इव संयोज्याऽसुरवाहिनीम् ।
निःशेषां तरसा युक्तस्तया युद्धाय दंशितः ॥ ११ ॥
रथमारुह्य साहस्रसिंहवाहं महोन्नतम् ।
श्वेतमुक्ताऽऽतपत्रेण वीज्यमानश्च चामरैः ॥ १२ ॥

युक्तः सेनेश्वरैः पञ्चाशत्सङ्ख्याकैर्बलोद्धतैः ।
नदद्वादित्रविपुलैरास्फोटाऽऽरवबृंहितैः ॥ १३ ॥
रथनेमिनदीघोषैर्ह्रेषितप्रायमांसलैः ।
रथवाहनसिंहानां गर्जितैः पूरयन् जगत् ॥ १४ ॥
निर्ययौ जैत्रयात्रार्थं चालयन्निव मेदिनीम् ।
अथाऽपश्यच्छक्तिसेना भण्डसेनामहार्णवम् ॥ १५ ॥
अपारमप्रधृष्यञ्च भीमं गम्भीरनिस्वनम् ।
तत्र मन्त्रमहाराज्ञी भण्डं युद्धाय सङ्गतम् ॥ १६ ॥
आलक्ष्य श्रीमहाराज्ञीं नत्वा वृत्तं व्यजिज्ञपत् ।
देवि भण्डः स्वयं प्राप्तो योद्धुमत्यन्तसंयुतः ॥ १७ ॥
सर्वसेनासमायुक्तः सर्वसेनाधिपैरपि
जैत्रयात्रा भवत्याश्च युक्ताऽत्र यदि मन्यसे ॥ १८ ॥
विज्ञापितैवं मन्त्रिण्या युक्तं तच्चाप्यमंसत ।
अथाऽभवच्छक्तिसेना सन्नद्धा निमिषार्द्धतः ॥ १९ ॥
अश्वारूढाऽश्वसेनाभिः सेनामुखमधिष्ठिताः ।
गजाऽनीकस्वामिनी सा तत्पश्चात् सम्पदीश्वरी ॥ २० ॥
ततो बाला रथाऽऽरूढा कुमारीगणसंवृता ।
तदनु प्रचचालाऽऽजौ चक्रराजमहारथः ॥ २१ ॥
नवपर्वसमायुक्तो ह्यणिमाद्याभिरावृतः ।
मुक्ताच्छत्रमहोन्नम्रः पद्मकेतुध्वजोच्छ्रयः ॥ २२ ॥
नवरत्नसमाकीर्ण इन्द्रियात्माऽश्वयोजितः ।
वाहयन्ती तं रथेन्द्रं महात्रिपुरसुन्दरी ॥ २३ ॥
चक्रेश्वरी विवेकात्मतोदहस्ता व्यराजत ।
चक्रराजशताऽङ्गस्य वामदक्षिणभागयोः ॥ २४ ॥
किरिगेयचक्ररथौ व्यराजेतां महोन्नतौ ।
दण्डिनीमन्त्रिणीभ्यां तौ दंशिताभ्यामधिष्ठितौ ॥ २५ ॥
स्वस्वसेनासमायुक्तौ युद्धसम्भारसम्भृतौ ।
तिरस्कृतिश्चक्रराजरथपृष्ठं समाश्रिता ॥ २६ ॥

तिमिरौघनिभाऽत्युच्चतुरङ्गमसमाधिष्ठिता ।
उत्खातवेल्लदत्यन्तकरालकरवालिनी ॥ २७ ॥
स्वसमाकारशक्त्यौघमण्डलीकृतमण्डला ।
एवं श्रीललितादेवी सेनया सह निर्ययौ ॥ २८ ॥
युद्धाय कृतसन्नाहा संस्तुता विबुधेश्वरैः ।
मिलितं सेनयोर्वक्त्रं व्यराजत विशेषतः ॥ २९ ॥
समुद्रयोरिवोद्वेलं गतयोः प्रतिसञ्चरे ।
सेनयोरुभयोरश्वरथेभपदचारिणाम् ॥ ३० ॥
पादवेगाभिसङ्घातप्रांशुपांशुसुसंहतिः ।
जनयद्गाढतिमिरं दार्शनैशमिव क्षणात् ॥ ३१ ॥
सेनाभराऽऽक्रान्तमहीनिवेशात्तलसंस्थितम् ।
तमः स्यादुद्गतमिदं मही वा सैन्यमर्दिता ॥ ३२ ॥
क्लेशात् प्राप्ताऽतिकृशतां भीत्या नाथमुपेयुषी ।
तथा रजोमहासंघवेगोदूर्ध्वगतिहेतुतः ॥ ३३ ॥
भूम्यभावादधो वेगात् सेना यान्तीव लक्ष्यते ।
इत्यादि तर्कमापन्ना वैमानिकगणास्तदा ॥ ३४ ॥
अथाऽभवन्महद्युद्धं सेनयोः शक्तिदैत्ययोः ।
नदत्सु युद्धवाद्येषु युक्तेष्वास्फोटगर्जनैः ॥ ३५ ॥
शरशक्त्यृष्टिशूलाऽसिपट्टासिप्रासतोमरैः ।
गदाचक्राभिन्दिपालपरिघाङ्कुशयष्टिभिः ॥ ३६ ॥
निरन्तरमभूद्व्याप्त्या प्रयुक्तैः सैन्ययुग्मकम् ।
हताः स्मः सर्वथाऽस्माकं शोकः पुत्रादिनाशतः ॥ ३७ ॥
प्राप्तः किं जीवितेन स्याच्छत्रुभिर्निर्जिताऽऽत्मनाम् ।
विक्रम्य युधि जित्वेमाः शक्तीः प्राप्स्याम आशिषम् ॥३८॥
अन्यथा निहता युद्धे वसामो नन्दने वने ।
इति निश्चित्य ते दैत्या युयुधुर्बलवत्तरम् ॥ ३९ ॥
शक्तयोऽप्येष दैत्यानामवधिः सर्वथा त्विमान् ।
हत्वा जयं परमकं प्राप्स्यामोऽद्यैव सर्वथा ॥ ४० ॥

इति मत्वाऽतिवेगेन युयुधुर्वीर्यवत्तराः ।
एवं नियुध्यमानेषु शक्तिभिर्दितिजेष्वथ ॥ ४१ ॥

परस्परं शस्त्रहताः पेतुर्विगतजीवनाः ।
केचिज्जालीकृताऽङ्गास्तु शरजालैर्गताऽसवः ॥ ४२ ॥

युद्धव्रतस्येव सिद्ध्या सहस्राक्षत्मतां ययुः ।
केषाञ्चित् खड्गघातेन शिरश्चटिति चोत्पतत् ॥ ४३ ॥

राहोः शिर इवाऽऽकाशे व्यात्ताऽऽस्यं ग्रसितुं रवेः ।
पेषिता मुद्गराघातैश्चक्रैर्मध्ये विदारिताः ॥ ४४ ॥

प्रोता दीर्घेषु भल्लेषु सङ्घशस्तत्र केचन ।
शरैः शिरांसि कृत्तानि गगने यान्ति वेगतः ॥ ४५ ॥

प्रवृद्धकाकपक्षाणि चलत्पक्षिगणा इव ।
विकीर्णाङ्गैश्चिता युद्धे भूमिर्विरुरुचे तदा ॥ ४६ ॥

पटे विलिखितानीव प्रतिमाङ्गान्युपक्रमे ।
असृग्वहा ववौ तत्र चित्रकारप्रमादतः ॥ ४७ ॥

स्खलितो ह्यालक्तक इव क्वचिच्छोषं समागता ।
चित्रकारेण झटिति प्रमृष्ट इव भासते ॥ ४८ ॥

शरविद्धा गतप्राणास्तस्थुः केचित् क्वचित् क्वचित् ।
समग्रलिखितानीव चित्राणि ददृशुर्ननुः ॥ ४९ ॥

एवं मुहूर्तमात्रेण भण्डदैत्यमहाचमूः ।
ननाशाऽऽसाद्य शक्तीनां सेनाग्निं शलभो यथा ॥ ५० ॥

अथ सेनाऽधिपास्तस्य क्रोधारुणितलोचनाः ।
शक्तिसेनां शस्त्रवर्षैरर्दयामासुरुच्चकैः ॥ ५१ ॥

दृष्ट्वा सेनाधिपैः सेनामर्दितामातिविह्वलाम् ।
मन्त्रिणी दण्डिनी चाऽश्वारूढा सम्पदधीश्वरी ॥ ५२ ॥

परिवारशक्तियुक्ता युयुधुर्मन्युदीपिताः ।
ता युद्ध्वा सुचिरं दैत्यैः सेनाधीशैर्महाबलैः ॥ ५३ ॥

प्रसह्य नाशयामासुः सर्वान् सेनापतीन् हि ताः ।
वक्राक्षं वामनं तालं दीर्घनसं सुबाहुकम् ॥ ५४ ॥

विद्युज्जिह्वश्च समरे नाशयत्तुरगाश्रया ।
सम्पत्करी तालजङ्घं कुटिलाक्षं रणोद्धतम् ॥ ५५ ॥
निशठं शम्बरं क्रूरं चकार व्यसुमाहवे ।
जम्भिनी क्रूरवदनं स्तम्भिनी सूचिकामुखम् ॥ ५६ ॥
अन्धिनी कण्ठककरं मृगवक्त्रञ्च मोहिनी ।
कालकेयं भैरवोऽपि व्याघ्रास्यं कालकर्षिणी ॥ ५७ ॥
स्वप्नेशी मुण्डमूर्धानं वटुको भण्डभाषणम् ।
उम्लुकं करभाऽऽस्यञ्च महाकुक्षिं शिवारवम् ॥ ५८ ॥
शोणिताऽक्षं तालकेतुं तालग्रीवं महाहनुम् ।
गृध्रवाहं काकमुखं दण्डिनी नाशयद्युधि ॥ ५९ ॥
शुकश्यामा शारिकाऽऽख्या सङ्गीता लघुपूर्विका ।
साहित्यश्यामला चेति निकुम्भं कुम्भमस्तकम् ॥ ६० ॥
चक्राक्षं दीर्घदंष्ट्रञ्च नाशयामासुरुल्वणम् ।
कटङ्कटं करञ्जाऽक्षं मुण्डं चण्डं कुकाऽऽननम् ॥ ६१ ॥
सालसीरं द्विशृङ्गञ्च शुनकं सूर्पकर्णकम् ।
वक्रकुक्षिं वाममुखं कालकं कोटरं विटम् ॥ ६२ ॥
मन्त्रिणी नाशयामास बलादाक्रम्य दानवान् ।
एवं निःशेषतः सेनासेनपेषु हतेष्वथ ॥ ६३ ॥
भण्डो हृष्टमनाः प्राह सारथिं रथ आस्थितः ।
रथं प्रापय मे शीघ्रं सारथे शक्तिवाहिनीम् ॥ ६४ ॥
पश्याऽद्य मम वीर्यं त्वं विचित्रं रोमहर्षणम् ।
श्रुत्वा वाक्यं दैत्यपतेर्वाहयन् रथमाशु सः ॥ ६५ ॥
सन्दिहानो दैत्यपतिं पप्रच्छ प्रणतस्तदा ।
दैत्येश्वर त्वयाऽऽज्ञप्तः किञ्चित् प्रष्टुं समीहितम् ॥ ६६ ॥
तद्देहि प्रणताय तं सन्दिहानोऽस्मि सर्वथा ।
इति पृष्टेन चाज्ञप्तो प्राह दैत्येन सारथिः ॥ ६७ ॥
दैत्येश्वरैतां शक्तीनां सेनां मन्येऽपराजयाम् ।
विशुक्राद्या यया युद्धे हता लीलाविलासतः ॥ ६८ ॥

अथ त्वामभिपश्यामि हतभ्रातृसुतादिकम् ।
हृष्टाऽन्तरं शोकलेशाऽस्पृष्टं प्रव्रजितं यथा ॥ ६९ ॥

बालया सह ते युद्धे पूर्वं समभिलक्षिता ।
भक्तिर्देव्यामतितरां तन्मे ब्रूहि यथातथम् ॥ ७० ॥

एवं पराभवं दुःखहेतावतिभयङ्करे ।
न शोकं नाऽपि भीतिं वा लक्षये तव लेशतः ॥ ७१ ॥

इति भूयः सुपृच्छन्तं दैत्यं तं चिरसेविनम् ।
प्राह भण्डः स्मयन् किञ्चित् शृणु दैत्येत्युपाक्रमन् ॥ ७२ ॥

एषा या ललिता देवी सा परात्परमा शिवा ।
एतया निहतो युद्धे प्राप्स्याम्यत्युत्तमं फलम् ॥ ७३ ॥

तल्लोकं शोकरहितमभयं सर्वतः सुखम् ।
इमं लोकं सशोकं वै सभयं दुःखमात्रकम् ॥ ७४ ॥

मायया मोहितो जन्तुर्मन्यतेऽत्युत्तमं मुधा ।
तत्राऽप्यासुरलोको वै राजसोऽतिभयङ्करः ॥ ७५ ॥

इमं वरं यो मनुते समुग्धपशुकः स्मृतः ।
अहं श्रीपद्मसंस्थानादूतो माणिक्यशेखरः ॥ ७६ ॥

स्वकर्मपाकवशत एतां प्राप्तोऽवरां दशाम् ।
तथाऽपि कृपया देव्या मां स्मृतिर्नो जहाति वै ॥ ७७ ॥

एषा सर्वेश्वरी देवी ब्रह्मादिजननी परा ।
एतया निहता युद्धे भ्रातरो मे सुता अपि ॥ ७८ ॥

शस्त्राग्निपाविताास्तस्या लोकं प्राप्ताः परात्परम् ।
मया सह त्वमप्याशु तल्लोकं प्राप्य भ्रातृभिः ॥ ७९ ॥

पुत्रैः समेष्यसि पुनस्ततो यास्यमृताङ्गतिम् ।
इति श्रुत्वा भण्डवचो विस्मितोऽभूत् स सारथिः ॥ ८० ॥

संश्लाघ्य दैत्यराजं तं जहौ शोकं स्वहृद्गतम् ।
दृष्ट्वा श्रीललितामग्रे नमश्चक्रे सुभक्तितः ॥ ८१ ॥

इति श्रीत्रिपुरारहस्ये माहात्म्यखण्डे ललितामाहात्म्ये भण्डललितासमागमे षट्सप्ततितमोऽध्यायः ॥ ६३४९ ॥

# अथ सप्तसप्ततितमोऽध्यायः ।

अथ युद्धे सम्पदीशीमश्वारूढाञ्च दण्डिनीम् ।
मन्त्रिणीञ्च समासाद्य युद्धकौशलमुल्वणम् ॥ १ ॥
प्रदर्श्य ताः सुसन्तोष्य क्रमात् प्रोवाच सङ्गरे ।
देव्यो वो युद्धचातुर्यविक्रमैस्तोषितोऽस्म्यहम् ॥ २ ॥
योद्धुमुत्कण्ठितं चित्तं स्वामिन्या च इमं क्षणम् ।
यूयं समीक्षकाः सर्वास्तया मे युद्धकर्मणि ॥ ३ ॥
ममैष लज्जितो बाहुर्युद्धे चेटीगणैः सह ।
तस्याः पदं विनिर्जित्य युद्धे वोऽभिजयाम्यनु ॥ ४ ॥
तन्मे प्रयाचतोऽस्त्वेवं इति तस्य वचस्तदा ।
निशम्य देव्यो मत्वा चाऽजेयं स्वीयपराक्रमैः ॥ ५ ॥
उचितञ्च महादेव्या दैत्येशस्य पराजयम् ।
ददुर्मार्गं नियुद्धाय महाराज्ञ्याऽसुरस्य वै ॥ ६ ॥
अथ श्रीचक्रराजाख्यं रथमासाद्य सङ्गरे ।
समारभद्भण्डदैत्यो युद्धमत्यद्भुतं तदा ॥ ७ ॥
तत्र शक्तिमहासैन्यमभूद्युद्धसमीक्षकम् ।
वैमानिकैर्देवगणैः सिद्धैर्ऋषिगणैस्तथा ॥ ८ ॥
प्रेक्षणायाऽऽगतैः सर्वं व्याप्तमासीन्नभस्तदा ।
भण्ड आसाद्य ललितां पुरो दृष्ट्वाऽतिहर्षितः ॥ ९ ॥
मनसाऽभिनमश्चक्रे भक्त्या तदनुसत्वरम् ।
विव्याध पञ्चभिर्बाणैस्तदद्भुतमिवाऽभवत् ॥ १० ॥
तत्र द्वयं सुकुसुमनिचयं पादयोः पतत् ।
तृतीयं कण्ठदेशेऽभून्मालिका फुल्लपाङ्कजी ॥ ११ ॥

ततः परं मूर्ध्न्यपतत पुष्पवर्षणरूपतः ।
अन्त्यं रत्नमयं मूर्ध्नि भूषणं मुकुटे स्थितम् ॥ १२ ॥
एवं तद्विहितां पूजां दृष्ट्वा देव्यतिहर्षिता ।
देवादयोऽपि तद्दृष्ट्वा शङ्किितास्तत्र सर्वथा ॥ १३ ॥
नारदाद्भण्डदैत्यस्य श्रुत्वा भक्ताऽग्रगण्यताम् ।
देवेशोऽतितरां तत्र विस्मयं समपद्यत ॥ १४ ॥
अथाऽभवन्महद्युद्धं ललिताभण्डदैत्ययोः ।
चित्रशस्त्राऽस्त्रनिचयव्याप्ताऽऽकाशमहोदरम् ॥ १५ ॥
भण्डदैत्योऽपि वीर्येण निजेन परमेश्वरीम् ।
सन्तोषयितुमुद्युक्तो युयोध परमाऽस्त्रवित् ॥ १६ ॥
प्रणम्य मनसा देवीं सम्मुखं समुपागताम् ।
गूढाऽपदानवचनैरधिक्षेप्तुं प्रचक्रमे ॥ १७ ॥
ललिते शृणु मे वाक्यं त्वं नटीव विभासि मे ।
मृषाऽऽचाररता नित्यं स्त्रैणं पुरुषमाश्रिता ॥ १८ ॥
स्त्रीरूपधारिणीव त्वं स्त्रीस्वभावविवर्जिता ।
न स्त्रियं त्वामहं मन्ये न पुमांसमपि क्वचित् ॥ १९ ॥
लोकविद्विष्टचारित्रा लज्जाशङ्कादिवर्जिता ।
न त्वं सत्कुलसम्भूता कुलहीनेव भासि मे ॥ २० ॥
लोकनिन्दितमार्गस्थैः पुरुषैरविवेकिभिः ।
अपि त्वमभिमृष्टाऽसि सर्वथेति विभासि मे ॥ २१ ॥
अहो मे प्राक्कृतं ह्येवं यत्त्वामेवंविधामपि ।
अनर्हां दर्शने नूनं पश्यामि पुरतः स्थिताम् ॥ २२ ॥
शृणु सत्येन वक्ष्यामि यद्यथाऽस्ति तथाऽस्तु तत् ।
मद्दृष्टिगोचरीभूता सम्प्रति त्वं कथञ्चन ॥ २३ ॥
मृषाऽऽचारञ्च मायाञ्च त्यक्त्वा मयि स्थिरीभव ।
आसादिता मया सद्यः पृष्ठं मे न प्रदर्शय ॥ २४ ॥

नाऽपि मां हि समक्षस्थं वञ्चयित्वा कथञ्चन ।
शक्यं ह्यदृश्यतां यातुं तस्मात्त्वं सुस्थिरीभव ॥ २५ ॥
विदित्वा मदभिप्रायमेकान्तं सुव्यवस्थितम् ।
दृष्ट्वा मदीयवीर्यञ्च संसाधय निजं व्रतम् ॥ २६ ॥
श्रुत्वा निगूढवाक्यं तत् प्रसन्ना ललिताऽम्बिका ।
शृणु दैत्येश्वर वचो यदुक्तं ते तथैव तत् ॥ २७ ॥
साधयामि तवाऽभीष्टं त्याजयामि मदादिकम् ।
न हि मे दृष्टिविषयीभूय भूयो भवेत् क्वचित् ॥ २८ ॥
युद्धश्रद्धादिसंशेषः तत् स्थिरीभव सर्वथा ।
इत्युक्त्वा शरवर्षेण ववर्ष दैत्यभूपतिम् ॥ २९ ॥
प्रतिवर्षं ववर्षाऽथ सोऽपि दैत्योऽतिवेगतः ।
शस्त्रप्रयोगविज्ञानसंश्लाघनपुरःसरम् ॥ ३० ॥
अभूत्तयोर्महायुद्धं तुमुलं लोमहर्षणम् ।
एवं नियुध्य सुचिरं दैत्योऽस्त्राणि ससर्ज ह ॥ ३१ ॥
आग्नेयं वारुणं सौम्यं कौबेरं पार्वतं तथा ।
पार्जन्यमैन्द्रं वायव्यं ब्राह्मं कौमारमेव च ॥ ३२ ॥
अस्त्राण्येवंविधान्याशु ललिता परमेश्वरी ।
प्रत्यस्त्रैर्नाशयामास तुहिनं दिनकृद्यथा ॥ ३३ ॥
तथा नूतनसृष्टानि प्रत्यस्त्रैर्नाशयत् क्षणात् ।
ससर्जाऽथ भण्डदैत्यो मधुं कैटभमेव च ॥ ३४ ॥
सोमकञ्च हिरण्याक्षं हिरण्यकशिपुं तथा ।
बलिमर्जुननामानं हैहयं रावणं तथा ॥ ३५ ॥
कुम्भकर्णं मुरं ग्राहं कंसं द्विविदमेव च ।
एवमादीन् विष्णुशत्रून् सर्वान् लोकप्रणाशनान् ॥ ३६ ॥
ते सृष्टा भण्डदैत्येन तत्स्वभावपराक्रमाः ।
उद्युक्ता लोकनाशार्थं तमोवृत्तिपरायणाः ॥ ३७ ॥

ललितेशाऽपि नाशाय तेषां करनखात् पृथक् ।
नारायणाऽवताराणां ससर्ज दशकं तदा ॥ ३८ ॥
नाशितास्ते क्षणेनैव सृष्टैस्तैर्विष्णुमूर्तिभिः ।
अथ भूयोऽन्धकं मृत्युं कामं त्रिपुरमेव च ॥ ३९ ॥
महादेवरिपूनेवं निर्ममेऽसुरशेखरः ।
तान् दृष्ट्वा श्रीपरा देवी फालनेत्राद्विसर्जयत् ॥ ४० ॥
महादेवं देवदेवं तेन ते नाशमाययुः ।
अथ दैत्यमहासेनामसङ्ख्यातां भयावहाम् ॥ ४१ ॥
उद्भावयन्निमेषेण शक्तिभिर्या पुरा हता ।
विषङ्गश्च विशुक्रश्च चतुर्बाहुमुखाः सुताः ॥ ४२ ॥
करङ्ककुटिलाक्षाद्या नष्टां सृष्टिमजो यथा ।
अथ ते युयुधुः शक्तिसेनाभिरतिमर्षिताः ॥ ४३ ॥
तद्दृष्ट्वा विस्मिताः सर्वे भण्डसामर्थ्यमद्भुतम् ।
भीताश्चाऽथ किं भवेद्वै इति देवाश्च शक्तयः ॥ ४४ ॥
तदाऽभवन्महद्युद्धं भूयश्चोपक्रमं यथा ।
हतं हतं तत्र दैत्यो भूयो भूयः ससर्ज ह ॥ ४५ ॥
तद्दृष्ट्वाऽत्यन्तवित्रस्ताः शक्तयो देवता अपि ।
तदा श्रीललितादेवीं तुष्टुवुर्विधिमुख्यकाः ॥ ४६ ॥
मन्त्रिणी च महादेवीमुपव्रज्य प्रणम्य च ।
कृताञ्जलिर्मधुरया प्रार्थयामास वै गिरा ॥ ४७ ॥
देवि दैत्यस्य विभवं मन्येऽहं सुभयावहम् ।
पश्य शक्तिगणं सर्वं शुष्यद्वक्त्रं समाकुलम् ॥ ४८ ॥
युध्यन्तीनामविश्रान्त्या चाऽत्यगात् महद्भयम् ।
हतं हतं शक्तिगणैर्भूयः सृजति चेक्षणात् ॥ ४९ ॥
चतुर्बाहुमुखास्तस्य सुता युधि निपातिताः ।
कुमार्या सप्तकृत्वस्ते भूयो युध्यन्ति सम्प्रति ॥ ५० ॥

विषङ्गो दशधा तद्वद्विशुक्रो नवधाऽपि च ।
हतः पुनः सृष्ट एव भण्डदैत्येन युध्यति ॥ ५१ ॥
करङ्ककुटिलाक्षाद्या अप्येवं बहुधा हताः ।
युध्यन्त्येव पुनः सृष्टा नेतः साध्यमिदं हि नः ॥ ५२ ॥
भीताः श्रान्ताः सर्वतश्च पश्य शक्तीर्हतप्रभाः ।
रक्ष सर्वं लोकमिमं नोपेक्षां कर्तुमर्हसि ॥ ५३ ॥
इति सम्प्रार्थिता देवी स्मयित्वेषदुवाच ताम् ।
माभैः पश्य क्षणेनैव नाशयाम्यसुरेश्वरम् ॥ ५४ ॥
इत्युक्त्वा कार्मुके शीघ्रं शरमेकं सुयोजयत् ।
तत्राऽऽवाह्य पाशुपतमस्त्रं लोकभयङ्करम् ॥ ५५ ॥
मुमोचाऽसुरसेनायामस्त्रं तन्निमिषार्धतः ।
भस्मीचकार दैत्यानां सेनां सागरसम्मिताम् ॥ ५६ ॥
भूयः शरं कार्मुके स्वे निवेशयदातिप्रभम् ।
तदा दिशोऽभितो ज्वालामालालीढाभवन् क्षणात् ॥५७॥
चकम्पे भूः प्रक्षुभिताः सागरा भीः समाविशत् ।
चराचरं जगज्जालं पेतुरुल्काः सहस्रशः ॥ ५८ ॥
भण्डासुरं मृगाद्याश्चाऽपसव्यमभिसंययुः ।
तावद्दृष्ट्वा विनष्टां स्वां सेनां सागरसन्निभाम् ॥ ५९ ॥
दध्यौ श्रीललितापादपङ्कजं निश्चलाऽन्तरः ।
ध्येयमात्रात्मतां यावत् प्राप्तो भण्डमहासुरः ॥ ६० ॥
तावच्छ्रीललितादेवी कामेशाऽस्त्रेण योजितम् ।
शरं मुमोच भण्डाय स शरोऽतिभयङ्करः ॥ ६१ ॥
प्रलयानलवज्ज्वालां मुञ्चन् विष्वङ्महाप्रभः ।
चराचरं जगज्जालं दहन्निव निमेषतः ॥ ६२ ॥
मुष्णंश्चक्षूंषि सर्वेषां तृणं दावानलो यथा ।
भण्डासुरञ्च सरथं नगरं तस्य शून्यकम् ॥ ६३ ॥

सस्त्रीस्थविरबालञ्च सस्थानप्राणिमण्डलम् ।
भस्मशेषीकरोत्तत्र तदद्भुतमिवाऽभवत् ॥ ६४ ॥
ब्रह्मविष्णुमुखास्तत्र भण्डं वा तस्य वाहिनीम् ।
नगरं वा प्रहतस्य दैत्यार्भकमपि क्वचित् ॥ ६५ ॥
अदृष्ट्वा विस्मयं प्राप्ता जयशब्दमवाऽसृजुः ।
अभिजघ्नुः शक्तिगणा वादित्राणि सहस्रशः ॥ ६६ ॥
विनेदुर्देववाद्यानि जगुर्गन्धर्वनायकाः ।
लास्यं चक्रुर्देववारा उर्वश्याद्याः सुहर्षिताः॥ ६७ ॥
स्तोत्राणि पेठुर्ऋषयो सिद्धा जेपुः परां शिवाम् ।
दध्युर्मुनिगणा रूपं प्रणेमुरितरे जनाः ॥ ६८ ॥
ववृषुः पुष्पनिकरान् प्रफुल्लानतिसौरभान् ।
बलाहकाः सौम्यरूपा गर्जन्तोऽत्यंन्तमन्थरम् ॥ ६९ ॥
सुगन्धतोयबिंदूंश्च यक्षकर्दममिश्रितान् ।
मारुताः सौगन्ध्ययुतो ववुरानन्दनस्पृशः ॥ ७० ॥
दिवानाथः सुप्रभोऽभून्नियतः सागरोऽपि च ।
सन्मनांसीव तोयानि समासन् सरिदादिषु ॥ ७१ ॥
अभूज्जगत् पुनः सृष्टं प्रलयान्त इवोल्लसत् ।
निराकुलमसङ्कीर्णं तदा भण्डाऽसुरे हते ॥ ७२ ॥
एवं दैत्यं हतं दृष्ट्वा भण्डाख्यं लोककण्टकम् ।
देवा महर्षयः सिद्धाः सर्वे देवीमुपाययुः ॥ ७३ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे भण्डासुरवधो नाम सप्तसप्ततितमोऽध्यायः ॥ ६४२२ ॥

---

# अथाऽष्टसप्ततितमोऽध्यायः ।

उपेत्य देवप्रमुखाः सर्वे तां ललितां पराम् ।
हर्षनिर्भरितस्वान्तास्तुष्टुवुर्विविधैः स्तवैः ॥ १ ॥

जय जय ललिताऽम्ब त्वत्पदाऽम्भोजसेवा
फलमिह भजतां किं किन्न दद्यादभीष्टम् ।
विबुधविटपिमुख्यान् कामदान् स्वस्वभावा-
नपि वितरति भूयः संश्रितेभ्योऽतिशीघ्रम् ॥ २ ॥

वयमिह विपदार्त्ता भण्डदैत्यप्रतापा-
ऽनलजटिलकरालज्वालया दग्धपक्षाः ।
अपरिमितभयाब्धौ यन्निमग्नाः समेता
झटिति ननु तयैव प्रोद्धृता व्योममार्गाः ॥ ३ ॥

प्रणतजननितान्तस्वाऽन्तसन्तापहन्त्री
श्रितजनदुरिताऽलिप्रौढमायानियन्त्री ।
स्थिरचरनिखिलोद्यत्प्राणिनां जीवतन्त्री
तव पदनलिनीयं प्रैधते लोकयन्त्री ॥ ४ ॥

तव जननि विलासः सर्वलोकाऽवभासः
कुत इह तव भूयाद्दैत्ययुद्धे प्रयासः ।
भवतु सततमस्मन्मानसे नीरजस्के
विशदविकचवृत्तौ वासिते वासनाभिः ॥ ५ ॥

चिरजडमिलितानां यो विवेकैकहेतु-
र्भवति चरणहंसस्तावको ब्रह्मवाहः ॥ ६ ॥

इति स्तुत्वा दण्डवत्ते प्रणता विधिमुख्यकाः ।
भूयो भूयोऽपि विविधैः स्तवैस्तुष्टुवुराम्बिकाम् ॥ ७ ॥

तावद्ब्रह्माण्डकोटिभ्यो ब्रह्माद्याः कारणेश्वराः ।
आजग्मुर्भारतीमुख्यशक्तियुक्ता घटोद्भव ॥ ८ ॥
ते पाणिसम्पुटोत्तंसाः प्रणता भक्तिनिर्भराः ।
समीक्ष्य ललितामीड्यां प्राहुर्बद्धकराऽम्बुजाः ॥ ९ ॥
देवेशि भण्डदैत्यस्य वधादद्य सुरक्षितम् ।
ब्रह्माण्डानां शतं पञ्च एषां स ह्यधिपोऽभवत् ॥ १० ॥
प्रोक्तखण्डेषु शक्राद्या बद्धाः केचित् पलायिताः ।
लोकाऽधिपत्यं सर्वत्र दैत्यैरेव चकार सः ॥ ११ ॥
प्रवर्तिता दैत्यवेदा दैत्ययज्ञाश्च सर्वतः ।
न क्वचिद्देवयज्ञो वा ब्रह्मयज्ञोऽपि शङ्करि ॥ १२ ॥
प्रवृत्तोऽभूद्ब्राह्मणादौ भण्डे राज्यं प्रशासति ।
तदद्य निहते दैत्ये त्वया युधि महेश्वरि ॥ १३ ॥
पलायिता दैत्यगणा लोकपालाश्च संस्थिताः ।
स्वस्वाऽधिकारकृत्येषु जातं सर्वं निराकुलम् ॥ १४ ॥
एवं वदत्सु देवेषु तत्राऽऽगत्य च विश्वकृत् ।
देवीं विधिमुखांश्चाऽपि प्रणम्य रचिताऽञ्जलिः ॥ १५ ॥
पितामहाऽहमाज्ञप्तस्त्वया यन्मेरुमूर्धनि ।
देव्याः श्रीपुरनिर्माणे तत्तथा रचितं मया ॥ १६ ॥
द्रष्टुमर्हसि तच्छीघ्रं देव्या देवैश्च संयुतः ।
एवं त्वष्ट्रा प्रार्थितोऽजो देव्यै वृत्तं व्यजिज्ञपत् ॥ १७ ॥
प्रार्थिता देवदेवैर्ललिता परमेश्वरी ।
शक्तिसेना देवगणैर्युता तत्र ययौ द्रुतम् ॥ १८ ॥
ददृशुस्तत्पुरं चारुतरं त्वष्ट्रविनिर्मितम् ।
महाश्रीपुरराजस्य प्रतिबिम्बमिवाऽर्पितम् ॥ १९ ॥
विस्मिताः सर्व एवैते देवाः शक्तिगणास्तथा ।
अथ तत्र निवसने देवाः श्रीललिताम्बिकाम् ॥ २० ॥

प्रार्थयामासुरत्यन्तं प्रणताः सर्वथात्रतः ।
तत्सम्मतिं समादाय बुद्धीशप्रमुखास्तदा ॥ २१ ॥
राज्याऽभिषेकसामग्रीं कल्पयामासुरुत्तमाम् ।
प्रकल्प्य सर्वसम्भारान् शुभलग्नमुहूर्तकं ॥ २२ ॥
ब्रह्मा मुनिगणोपेत आभिषेचनिकं विधिम् ।
चकाराऽऽगमदृष्टेन मार्गेणोत्तमकल्पतः ॥ २३ ॥
वृन्दारका देवगणा मारुतो वसवोऽग्नयः ।
गन्धर्वा देवदूताश्च दिक्पाला यक्षगुह्यकाः ॥ २४ ॥
यातुधानाः किंपुरुषाः किन्नरा उरगा अपि ।
विद्याधराः सिद्धमुनय ऋषयः पितरोऽसुराः ॥ २५ ॥
ब्रह्मरुद्रहरीणाञ्च कोटयोऽण्डान्तरस्थिताः ।
सदाशिवेश्वरौ चाऽपि श्रीकण्ठोऽनन्त एव च ॥ २६ ॥
सङ्गतास्तत्र ललितामहाराज्याऽभिषेचने ।
परिचेरुस्तत्र देवीं ललिताऽम्बां समन्ततः ॥ २७ ॥
ब्रह्माणीकमलागौरीकोटयो भक्तिभावनाः ।
उपचारैः पृथग्भूतैः पूजयामासुरादरात् ॥ २८ ॥
एवं कृतस्वस्त्ययनां मङ्गलाचारसंश्रयाम् ।
नदत्सु शुभवाद्येषु मूर्च्छयत्सु सुमूर्च्छनाम् ॥ २९ ॥
अवरोहाऽऽरोहगतिलयश्रुतिसमीरणैः ।
गन्धर्वेषु प्रनृत्यत्सु देववेश्यासु सर्वतः ॥ ३० ॥
जपत्सु मुनिवृन्देषु ऋषिषु प्रपठत्सु च ।
स्तुवत्सु विविधेषूच्चैः प्रेक्षत्सु प्राणिषूत्तमैः ॥ ३१ ॥
विधिरारोहयद्देवीं महासिंहासने शुभे ।
अथ मन्त्रप्रपूताऽद्भिर्नवरत्नविचित्रितैः ॥ ३२ ॥
कलशैः सम्भृतैश्चाऽपि नदीसागरसम्भवैः ।
अभ्यषिञ्चल्लोकधाता वशिष्ठप्रमुखैर्वृतः ॥ ३३ ॥
अभिषिच्य महादेवीमनर्घ्याऽऽभरणोज्ज्वलाम् ।
विचित्रदिव्यवसनां श्रीचक्राऽधिविराजिताम् ॥ ३४ ॥

पञ्चब्रह्मकारमञ्चशोभिनीं ललिताम्बिकाम् ।
पूजयामासुरमरा विविधैः सुसमर्हणैः ॥ ३५ ॥
विधिविष्णुमहेशाद्याः पृथग्भक्तिसमाहिताः ।
स्तुत्वा विचित्रस्तवनैः प्रणेमुर्भुवि दण्डवत् ॥ ३६ ॥
एवं श्रीललिता देवी तत्र श्रीपुरशेखरे ।
सिंहासनेऽभिषिक्ता सा महाश्रीपुरवत्तदा ॥ ३७ ॥
मन्त्रिणीप्रमुखानां स्वस्थानानि प्रदिशत् पृथक् ।
एवं घटोद्भव मुने मेरुशृङ्गे महोन्नते ॥ ३८ ॥
समास्ते श्रीपुरे ब्रह्ममुखशासनतत्परा ।
देवशिल्पिस्वचातुर्यसर्वसारविनिर्मितम् ॥ ३९ ॥
नगरं श्रीमहादेव्या भूषणं छत्रपादुके ।
प्रार्थिता विधिमुख्यैः सा स्वीकृत्य करुणावशात् ॥ ४० ॥
चिदानन्दघनाऽपीत्थमास्ते लीलावपुर्धरा ।
इति श्रुत्वा हयग्रीवात् कथां परमपावनीम् ॥ ४१ ॥
अगस्त्यः सन्तुष्टमनाः पप्रच्छाऽतिविशङ्कितः ।
हयग्रीव दयासिन्धो मेरावस्मिन् त्वयोदितम् ॥ ४२ ॥
नगरं श्रीमहादेव्यास्तन्मे चित्रं विभाति वै ।
न मे ह्यविदितं स्थानं ब्रह्माण्डान्तर्भवेत् क्वचित् ॥ ४३ ॥
तत्राऽपि मेरावज्ञातं मया न स्यात् क्वचित् स्थलम् ।
मेरुर्भुवनचित्रस्य भित्तिवत्परिकल्पितः ॥ ४४ ॥
सन्त्यूदूर्ध्वं सप्तभुवनान्यधः सप्ततलानि वै ।
मेरुमूर्ध्नि ब्रह्मविष्णुशिवधामानि सन्ति वै ॥ ४५ ॥
तत्र मे नाऽस्त्यविदितो देशोऽपि द्व्यङ्गुलात्मकः ।
तत् कथं वर्णितं तत्र श्रीपुरं मे समीरय ॥ ४६ ॥
इति पृष्टः कुम्भजेन हयास्यः प्राह हर्षितः ।
शृणु कुम्भज वक्ष्यामि रहस्यं ह्येतदुत्तमम् ॥ ४७ ॥
न हि तद्भवनं सर्वैर्द्रष्टुं शक्यं कथञ्चन ।
ये तु श्रीत्रिपुरां शक्तिं विधिना समुपासते ॥ ४८ ॥

तेषां प्राप्यं द्वयमपि नाऽन्येषां तु कदाचन ।
तत्ते माहात्म्य संश्रुत्या भक्तिर्हृदि समुद्गता ॥ ४९ ॥
प्राप्तायां तु पराभक्तौ नाऽप्राप्यं तस्य विद्यते ।
प्राप्ते रत्नाकरे यद्वद्भवेन्नो रत्नवाञ्छिता ॥ ५० ॥
तदियं ते सती भार्या लोपामुद्रा परा प्रिया ।
तस्या दीक्षां समादाय चोपास्य विधिवत्पराम् ॥ ५१ ॥
सिद्धस्तद् द्रक्ष्यसि पुरं नान्यथा तु कदाचन ।
एतत्ते कुम्भज प्रोक्तं ललिताया महाद्भुतम् ॥ ५२ ॥
विभवं शृण्वतां पुंसां सर्वपापप्रणाशनम् ।
कलौ मलीमसहृदां जनानां दुर्धियामिदम् ॥ ५३ ॥
माहात्म्यं त्रिपुरेशान्यास्त्यक्त्वा नाऽन्यत्परायणम् ।
वैदिकैः कर्मभिर्भूयो निराशीभिः कृतैर्भवेत् ॥ ५४ ॥
उपासनेषु श्रद्धाऽन्यदेवताविषया ततः ।
विष्णौ शिवे शक्तिषु च सर्वान्ते परिपाकतः ॥ ५५ ॥
त्रिपुरामूर्तिसेवार्थां श्रद्धा भवति शाश्वती ।
एतदाराधनेनैव विदित्वा स्वाऽऽत्मरूपिणीम् ॥ ५६ ॥
चिदानन्दाऽद्वयमयीं सर्वलोकमहेश्वरीम् ।
अभिव्यक्तपरैश्वर्यो न पुनर्भवमृच्छति ॥ ५७ ॥
एवं स्वात्मपदप्राप्तौ सोपानं प्रथमन्त्विदम् ।
श्रवणं श्रीपराशक्तिमाहात्म्यविभवोन्नतेः ॥ ५८ ॥
तस्मादादौ सर्वथैव श्रोतव्यं श्रेय इच्छता ।
एतत् पापप्रशमनं सर्वाभीष्टफलावहम् ॥ ५९ ॥
भक्तिमुत्पाद्य तरसा मोचयेत् परमाद्भयात् ।
इत्युक्त्वा कुम्भजमुनिपूजितोऽश्वाननो भृशम् ॥ ६० ॥
आपृच्छ्य निरगात् स्वीयामभीष्टां दिशमीश्वरः ।
इति ते कथिता राम ललितायाः कथा शुभा ॥ ६१ ॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे दत्तात्रेयपरशुरामसंवादे ललितामाहात्म्येऽष्टसप्ततितमोऽध्यायः ॥६४८३॥

# अथ एकोनाशीतितमोऽध्यायः।

एवं श्रीललितादेव्या माहात्म्यं सर्वतोऽधिकम् ।
जमदग्निसुतः श्रुत्वा हर्षाऽमृतनिषेचितः ॥ १ ॥
भक्तिवारिधिनिर्मग्नो रोमाञ्चोदयपीवरः ।
निरन्तरस्रवद्धर्षनेत्रवारिपरिप्लुतः ॥ २ ॥
विसंज्ञ इव सम्भूतः क्षणमासवमत्तवत् ।
बभाषे गद्गदश्रुत्या भूयो विरचिताऽञ्जलिः ॥ ३ ॥
भगवन्नहमत्यन्तं पावितो भवताऽधुना ।
पराकथातीर्थवारिधारानिवहसेचनैः ॥ ४ ॥
उद्धृतो दययाऽपारसंसारजलधेर्ननु ।
नमस्ते श्रीगुरो नाथ दुःखध्वान्तदिनाधिप ॥ ५ ॥
नमस्ये तं मुनिं शान्तं संवर्तमकुतोभयम् ।
यो मे मार्गं निरदिशदन्धस्य भ्रमतो यथा ॥ ६ ॥
अद्य यावदहं लोके व्यर्थं कालमुपावहम् ।
शून्यकूपे भेक इव न स्वार्थमविदं क्वचित् ॥ ७ ॥
धन्योऽहं कृतकृत्योऽहं भवच्चरणसंश्रयात् ।
मोक्षलक्ष्मीमभिप्रेप्सुरभवं सर्वथा ननु ॥ ८ ॥
भगवन्मे संशयोऽत्र महान् हृदि समाहितः ।
तत्र पृच्छामि भवन्तं यद्वक्तुं तन्मे समर्हसि ॥ ९ ॥
जानाम्यनुग्रहोऽत्यन्तं मयि ते करुणानिधेः ।
नाऽवक्तव्यं मयि भवेच्छिष्ये कारुणिकस्य ते ॥ १० ॥
कथं कुम्भोद्भवमुनिः सर्वशास्त्रविशारदः ।
नोपासीत्तां पराशक्तिं सर्वलोकमहेश्वरीम् ॥ ११ ॥
येनाऽहद्वयमभून्मेरौ श्रीदेव्या नगरोत्तमम् ।
कुतो वा वेदनिरते न हि स्यात्तस्य दर्शनम् ॥ १२ ॥

भूयः कथं तेन दृष्टं तत्पुरं तद्ब्रवीहि मे ।
इत्यापृष्टो जामदग्न्यं प्राह दत्तगुरुर्मुनिः ॥ १३ ॥
शृणु राम प्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् ।
न ह्यत्र केवलं शास्त्रं प्रयोजकमुपेयते ॥ १४ ॥
जनानां प्राक्समभ्यस्तवासनावासितात्मनाम् ।
वासनानां शतं चित्ते सञ्चितं प्राणिनां पृथक् ॥ १५ ॥
प्राप्योद्बोधं प्रसरति सत्सङ्गस्तस्य बोधकः ।
यावद्यत्सङ्गमाप्नोति तावत् तत् स्यान्न चाऽन्यथा ॥ १६ ॥
हयग्रीवं समागम्य त्रिपुरावैभवश्रुतेः ।
सञ्जातत्रिपुराभक्तिः पत्न्या दीक्षां समाददे ॥ १७ ॥
यावद्दीक्षां न विन्देत त्रिपुरोपासकोऽपि सन् ।
न तावन्मोक्षसौधस्य सोपानाऽऽरोहणक्षमः ॥ १८ ॥
विनोपनयनं यद्वद्द्विजानां सर्वकर्मसु ।
न योग्यता तथाऽत्रापि विना दीक्षां भृगूद्वह ॥ १९ ॥
अप्राप्य सद्गुरोर्दीक्षामज्ञात्वा गुरुपद्धतिम् ।
स्वबुद्ध्या तु कृतं कर्म विधिना च समन्वितम् ॥ २० ॥
तथाऽपि साधकं शीघ्रं नाशयत्येव सर्वथा ।
सेवितारं यथा हन्ति चाऽपक्वन्तु रसायनम् ॥ २१ ॥
मन्त्रं मन्त्रविधानञ्च स्वबुद्ध्यैव गुरुं विना ।
यः समासादयेत् स हि देवताद्रोहमाप्नुयात् ॥ २२ ॥
नेह लोकः परो वाऽपि विद्यते देवताद्रुहाम् ।
अज्ञो द्रोहकृतं दोषं नाशयेन्मानवः कथम् ॥ २३ ॥
लोकदृष्टन्याय एष आज्ञाभङ्गकरं नरम् ।
योजयन्त्येव भूपाला महादण्डैः पृथग्विधैः ॥ २४ ॥
नोपेक्षन्ते सर्वथैव नरमाज्ञाऽपकारिणम् ।
वेदवादैरेव न हि भवेदत्राऽधिकारिता ॥ २५ ॥
उपासनाऽधिकारार्थं द्विजानां वैदिकक्रमः ।
पुरुषार्थो वेदविधौ सर्वथा न हि विद्यते ॥ २६ ॥

यदि वेदविदां पुंसां मृषाफलाऽनुसन्धिनाम् ।
अणुमात्राऽऽत्मभूतानां पुरुषार्थोऽभिमानिनाम् ॥ २७ ॥
पुरुषार्थः परः स्याच्चेत् स्थाणूनां न कुतो भवेत् ।
वैदिका ह्यचलम्मन्याः फलं धूमसमुद्भवम् ॥ २८ ॥
क्व दृष्टं चलभूतेन ह्यचलं फलसम्मतम् ।
मितेषु दुःखभूतेषु फलेषु सुखबुद्धयः ॥ २९ ॥
फलस्वरूपाऽनभिज्ञा ह्यफले फलशंसिनः ।
प्रवर्तितो गुणमयो वेदो धात्रा जगत्कृतिः ॥ ३० ॥
जगद्यात्राप्रवृद्ध्यर्थं सुराणामभितृप्तये ।
मर्तुकामस्य विषवत् कामिनां कामनामयः ॥ ३१ ॥
परश्च भागः सङ्गूढो वेदे यस्तं विदुर्न ते ।
धात्रैव गोपनात्तस्य गुप्तभावेषु मोहिताः ॥ ३२ ॥
नयन्ति तमन्यथैव व्यासो नारायणः स्वयम् ।
जीवेषु दयया सम्यक् चित्ताऽऽरोहोपयोग्यया ॥ ३३ ॥
तमुपबृंहयद् भूयो परमार्थैकसाधनम् ।
अतोऽत्र त्यक्तकामानामधिकारो विधीयते ॥ ३४ ॥
सन्न्यासिनोऽपि चिच्छक्तेरुपासनमभीप्सितम् ।
अज्ञानान्मोहतो वाऽपि विद्योपास्तिं त्यजेत्तु यः ॥ ३५ ॥
स विशेदन्धतामिस्रं न तस्याऽस्ति पुनर्गतिः ।
सन्न्यासिना तु त्यक्तव्यं सर्वं बन्धात्मना स्थितम् ॥ ३६ ॥
इदं मोक्षात्मकं राम श्रीविद्योपासनन्तु यत् ।
न त्यक्तुं समुचितं ब्राह्मण्यमिव वै यतेः ॥ ३७ ॥
महापराधस्त्यागो वै स्यादुपास्तेर्भयावहः ।
तामिस्रमन्धतामिस्रं कुम्भीपाकमवीचिकम् ॥ ३८ ॥
मपद्यन्ते हि ते भूयो ह्यपराधपरा जनाः ।
दण्डराज्या समाज्ञप्ताः शक्तयोऽतिविभीषणाः ॥ ३९ ॥
सङ्कर्षिणी कर्षिणीच कालसङ्कर्षिणी तथा ।
उपास्तिमार्गसरुजानपराधपरान् जनान् ॥ ४० ॥

योजयन्त्युक्तदुःखेषु स्थानेषु परमातृकाः ।
उपासनपरो मर्त्यः कैवल्यं पदमश्नुते ॥ ४१ ॥
कर्मिणस्तान्त्रिकस्याऽपि या भवेद्गतिरुत्तमा ।
वैदिकोपासकस्यैषा सर्वथा न हि विद्यते ॥ ४२ ॥
यतो हि वैदिकं कर्म सर्वथा हि बहिर्मुखम् ।
अनीश्वरं पौरुषं स्यादतः पशुफलोचितम् ॥ ४३ ॥
तान्त्रिकन्त्वैश्वरं कर्म ज्ञानोपासनमिश्रितम् ।
मोचयत्याशु संसिद्ध्या श्रद्धाभक्तिसुबृंहितम् ॥ ४४ ॥
यथोक्तकर्मणा चित्तशुद्धिमासाद्य विद्यया ।
प्राप्यतेऽत्रैव शिवता प्रबुद्धैः पौरुषेण हि ॥ ४५ ॥
अबुधा अपि मुच्यन्ते कर्म कृत्वा यथाक्रमात् ।
नाऽधिकारो विना दीक्षां कर्मणि ज्ञानसाधने ॥ ४६ ॥
दीक्षावन्तस्तु देहान्ते प्राप्य लोकं परात्परम् ।
सदाशिवेन ते सम्यक् प्रबुद्धाः शिवरूपिणः ॥ ४७ ॥
कर्मिणोऽप्यप्रबुद्धा ये ते भवन्ति भृगूद्वह ।
तस्मान्न वेदशास्त्राद्यैः शुष्कैः सद्गतिराप्यते ॥ ४८ ॥
विना श्रीत्रिपुरासेवां प्रवृत्तिर्वा कथं सती ।
न साधनं फलं वाऽपि प्रवृत्तिर्वाऽपि भार्गव ॥ ४९ ॥
विना श्रीत्रिपुरेशान्याः कृपया सम्भविष्यति ।
आराध्य शिवविष्णूवादीनपि यत् प्राप्यते फलम् ॥ ५० ॥
तच्चाऽपि तस्याः कृपया भवतीति विनिश्चयः ।
पूजनं सर्वदेवानां पराशक्तेः प्रपूजनम् ॥ ५१ ॥
शक्तिं विना न पूजाया ग्रहणं सम्भवेत् क्वचित् ।
तस्मात् पूजा तु शक्तेः स्यात् सर्वत्र विहिता जनैः ॥ ५२ ॥
फलप्रदानशक्तिन्तु विचार्याऽऽदौ विचक्षणाः ।
पूजयन्ति पृथक् देवं फलं विन्दन्ति तत्तथा ॥ ५३ ॥
लोकेऽप्यशक्तः कुत्राऽपि न पूज्यः स्यात्तु भार्गव ।
आश्रयत्वाच्छिवमृते शक्तिर्नैव तु विद्यते ॥ ५४ ॥

इति चेन्निजसत्त्वात्मशक्तिहीनः शिवस्तथा ।
प्रकाशशक्तिहीनो वै रविः कुत्र कदा भवेत् ॥ ५५ ॥
यथा तथा चितिं शक्तिमृते स्याद्धि शिवः कथम् ।
चितिशक्त्या परित्यक्तं तृणं वाऽपि कथं भवेत् ॥ ५६ ॥
सत्यां चिति ह्यस्मि सर्वमन्यथा न हि किञ्चन ।
यदस्ति तांचातिरिति जानीहि भृगुनन्दन ॥ ५७ ॥
एतच्छाक्तं हि विज्ञानं यत्तोऽन्यन्न हि विद्यते ।
एवं बुद्ध्या तु यत् किञ्चित् तृणञ्च त्रिपुरात्मकम् ॥ ५८ ॥
संज्ञायामेव लोकेऽस्मिन् विवदन्ति मनीषिणः ।
तस्मात्त्यजाऽत्र सन्देहमेतत्सर्वत्र वै समम् ॥ ५९ ॥
वाङ्निरुक्त्यै प्रवृत्ता वै विशेषाऽऽलम्बनं गता ।
निर्विशेषन्तु तद्रूपमखण्डैकचिदात्मकम् ॥ ६० ॥
विशेषज्ञो भवेद्यावत्तावन्न स्याद्धि तत्परः ।
वेदा विशेषबहुला गूहयन्त्यविशेषकम् ॥ ६१ ॥
अतोऽगस्त्यस्तत्पुरं तु नाऽपश्यद्वैदिकोऽपि सन् ।
वेदार्थः परमो यस्तु त्रिपुरैव हि सा भवेत् ॥ ६२ ॥
अतस्त्रैपुरसंसिद्धौ साधनं वेद उच्यते ।
वेदार्थस्यैव व्यसनं पुराणं व्यास ऊचिवान् ॥ ६३ ॥
वेदो ह्यागमभागः स्यात् शब्दराशिस्तथाऽऽगमः ।
तस्या मूर्त्तिरतः सर्वं प्रवृत्तं तस्य संश्रयात् ॥ ६४ ॥
त्रैवर्णिकाऽधिकारेण वेदरूपः प्रवर्तते ।
दयया परमेशानः सर्वानुद्धर्तुमिच्छया ॥ ६५ ॥
वेद आगमसंज्ञानं विभावयदनुत्तमम् ।
आगमः परमेशस्य विमर्श इति निश्चयः ॥ ६६ ॥
क्रमेण ब्रह्ममुख्यानां मुखादुद्भावयत्तु तम् ।
अपारो ह्यागमाऽम्भोधिः सर्वलोकेषु सङ्गतः ॥ ६७ ॥
कालेन मन्दधिषणान् कृपणानभिलक्ष्य तु ।
ऋषिभिस्तमागमाब्धिं मथित्वा प्राज्ञया धिया ॥ ६८ ॥

सारसंग्रहरूपात्मतन्त्राऽमृतमनुत्तमम् ।
देशभेदाविभेदेन पृथगेत्र विभावितम् ॥ ६९ ॥
तत्र द्विजानां वेदोक्तकर्मभिः संस्कृतात्मनाम् ।
श्रौतकर्ममुखेनैव तान्त्रिके ह्यधिकारिता ॥ ७० ॥
शूद्रादीनान्तु कैवल्याद्ध्रुवेत्तन्त्राधिकारिता ।
वेद एव हि तन्त्रं स्यात्तन्त्रं वेदः प्रकीर्तितम् ॥ ७१ ॥
नाऽनयोर्विद्यते भेदो लेशांशेनाऽपि कुत्रचित् ।
तथा हि वेदभागेषु तन्त्रभागः प्रदृश्यते ॥ ७२ ॥
यत्र मन्त्रयन्त्रपूजाविधानं सुस्फुटं स्थितम् ।
एवंविधो वेदभागो यतस्तन्मूर्ध्नि संस्थितः ॥ ७३ ॥
तन्त्रसङ्केतसंयुक्तस्ततस्तन्त्रं समुत्तमम् ।
तन्त्रेष्वपि वेदभागा मन्त्रब्राह्मणभेदिताः ॥ ७४ ॥
दृश्यन्ते कर्मविधिषु तस्मात्तन्त्रं समुत्तमम् ।
एवं पुराणादिषु च तन्त्रभागः प्रदृश्यते ॥ ७५ ॥
तथा तन्त्रेषु सर्गादिलक्षणोंऽशः प्रदृश्यते ।
स पुराणप्रभागः स्यादेवं जानीहि भार्गव ॥ ७६ ॥
तस्माच्छ्रीत्रिपुराख्यायाः सहजाऽऽमर्शसम्भवः ।
आगमाब्धिस्ततो वेदांस्तन्त्राणि च विभावय ॥ ७७ ॥
नियतिर्या हि तच्छक्तिस्तया सर्वं व्यवस्थितम् ।
अतोऽगस्त्यस्तन्त्रदीक्षारहितो वैदिकोऽपि सन् ॥ ७८ ॥
नाऽपश्यत्तत्पुरं तत्र मेरौ नियतियन्त्रितः ।
अथ श्रुत्वा महादेव्या माहात्म्यं सर्वतोऽधिकम् ॥ ७९ ॥
भक्तियुक्तः प्राप्य दीक्षां तान्त्रिकीं क्रमसंयुताम् ।
पत्न्या उपास्य त्रिपुरां तत्र श्रीनाथमण्डले ॥ ८० ॥
स्थानं प्राप्य प्रियायुक्तः परमानन्दनिर्भरः ।
एवं तेन समाक्रान्तं दृष्टञ्च स्थानमुत्तमम् ॥ ८१ ॥
इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे आगमस्वरूपनिर्णयो नामैकोनाऽशीतितमोऽध्यायः ॥ ६५६४ ॥

---

# अथाऽशीतितमोऽध्यायः ।

एवं श्रुत्वा कथां रामो दत्तात्रेयनिरूपिताम् ।
भूयः प्राह प्रसन्नात्मा प्रणम्य रचिताऽञ्जलिः ॥ १ ॥
भगवन्नाथ यत्प्रोक्तं श्रुतं तदमृतोपमम् ।
अभवं मुक्तसन्देहः किञ्चित् पृच्छामि वै पुनः ॥ २ ॥
एवं दीक्षां समासाद्य त्रिपुराऽऽराधनोद्यतः ।
कुर्वन्नित्यक्रियां केन विशेषेण हि कर्मणा ॥ ३ ॥
शीघ्रं महाफलं प्रेयाद्राजा चाऽकिञ्चनोऽपि च ।
तन्मे समाचक्ष्व गुरो कृपया मयि सेवके ॥ ४ ॥
इति दत्तगुरुः पृष्टः प्राह तद्भक्तिहर्षितः ।
शृणु राम महागुह्यं त्रिपुराप्रीतिकारकम् ॥ ५ ॥
शिवो यथाऽभिषेकेन प्रणामैर्दिनकृद्यथा ।
नैवेद्यैस्तु गणेशानोऽलङ्काराद्धरिरेव च ॥ ६ ॥
पूजनेन विशेषैस्तु विधिना प्रीयते तथा ।
पराशक्तिर्महेशानी तत्र सर्वोत्तमं शृणु ॥ ७ ॥
प्रासादमुन्नतं चित्रं निर्माय निजशक्तितः ।
तत्र श्रीचक्रराजं वा मूर्तिं वाऽपि सुलक्षणाम् ॥ ८ ॥
संस्थाप्य विधिना तत्र स्वयं वाऽन्येन वाऽन्वहम् ।
पूजयेत् पञ्चकालं वा चतुस्त्रिद्व्येककालकम् ॥ ९ ॥
उषः प्रातर्मध्यदिने प्रदोषे चाऽर्धयामके ।
नित्यं वा द्वित्र्येककालं पञ्चकालञ्च पर्वसु ॥ १० ॥
उत्सवोऽपि प्रकर्तव्यो महापर्वसु सर्वथा ।
रथेन वाहनैर्यानैरुत्सवप्रतिमां बहिः ॥ ११ ॥

परिक्राम्याऽऽगमोक्तेन नृत्यमङ्गलगायनैः ।
एवं यः कुरुते लोके स वसेच्छ्रीपुराऽन्तरे ॥ १२ ॥
नीलवप्राऽन्तरालेषु सर्वभोगोपसम्भृतः ।
असमर्थोऽन्यविहिते स्थापयेच्चक्रनायकम् ॥ १३ ॥
चक्रस्थापनतुल्यं नो विद्यते त्रिपुराप्रियम् ।
न तस्य पुनरावृत्तिः सायुज्यं विन्दते क्रमात् ॥ १४ ॥
श्रीचक्रस्थापनादेव फलानन्त्यं समीरितम् ।
यत्र स्यात् स्थावरं यन्त्रं निवसंस्तत्समीपतः ॥ १५ ॥
उपासको हेममये वप्रे निवसति ध्रुवम् ।
उपासकस्तु जानीयात्तत्क्षेत्रं सर्वतोऽधिकम् ॥ १६ ॥
तत्राप्यशक्तो विभवानुरोधाच्छुभपर्वसु ।
पूजयेत् स्थावरं चक्रं मूर्तिं वा भक्तिपूर्वकम् ॥ १७ ॥
चरयन्त्रादिपूजायाः स्थिरयन्त्रादिपूजनम् ।
फलं समावहेल्लक्षगुणं राम न संशयः ॥ १८ ॥
यन्त्रे सावृतिमम्बान्तु विधानेन प्रपूजयेत् ।
तत्तत्स्थाने भावयन् वै महाफलसमाप्तये ॥ १९ ॥
यथा सूर्यस्य किरणाः सर्वतः समवस्थिताः ।
सूर्याऽऽत्मभूतास्तस्यांऽशाः सर्वलोकप्रसादकाः ॥ २० ॥
शीताऽन्धकाररोगादिनाशकाः प्राणिनस्तथा ।
त्रिपुरायाः पराशक्तेः परिवाराख्यदेवताः ॥ २१ ॥
लोकवाञ्छार्थदानाय नियुक्तास्तु तयैव ताः ।
तस्यांऽशभूताः सर्वा वै तस्मात् पूज्या यथाविधि ॥ २२ ॥
किरणानां पिण्डमयो यथा सूर्यो नभःस्थितः ।
तथैवाऽऽवृतिशक्तीनामैक्यात्मा त्रिपुरा मता ॥ २३ ॥
बिन्दुचक्रे समासीना देवदेवमहेश्वरी ।
अशक्तः पूजयेद्भक्त्या यथामति यथाक्रमम् ॥ २४ ॥

परिवारपिण्डमयीं सामान्यैर्द्रव्यवैभवैः ।
यथाकथञ्चिद्वा पूज्या स्थावरे परमेश्वरी ॥ २५ ॥
यस्तु प्राप्य स्थावरन्तु चक्राद्यं न प्रपूजयेत् ।
तमात्मघ्नं विजानीयात् सर्वलोकविनिन्दितम् ॥ २६ ॥
अशक्तो गन्धकुसुमफलाऽक्षतजलैस्तथा ।
दक्षिणाताम्बूलदीपप्रणामपरिवर्तनैः ॥ २७ ॥
सर्वैरेकद्व्यादिभिर्वा शक्त्या तां तत्र पूजयेत् ।
सहस्राद्यैर्नामभिस्तु यश्चक्रादौ प्रपूजयेत् ॥ २८ ॥
सकृत् सम्पूज्य च नरो नारी वा सर्वपातकैः ।
मुच्यते नाऽस्ति सन्देह इत्याह भगवान् शिवः ॥ २९ ॥
अथ लक्षप्रपूजादिविधानं शृणु वच्मि ते ।
विशेषपर्वसु तथा शुक्रवारेऽपि वाऽऽरभेत् ॥ ३० ॥
सङ्कल्प्य पूज्य गणपं स्वस्तिं विप्रैर्हि वाचयेत् ।
ततः सम्पूज्य विधिना चाऽऽहूत्यन्तं महेश्वरीम् ॥ ३१ ॥
पूजयेत् सावृतिं देवीमुपचारैस्तु पञ्चभिः ।
तत्र पुष्पोपचारस्य स्थाने पूजां समाचरेत् ॥ ३२ ॥
सहस्राद्यैर्नामभिस्तु ततोधूपादिपूजनम् ।
समापयेद्यथावत्तु प्रत्यहञ्चैवमर्चयेत् ॥ ३३ ॥
समसंख्याविधानेन प्रत्यहं पूजयेत् क्रमात् ।
एकजातीयकैः पुष्पैः यत्नैव पूजयेत् पराम् ॥ ३४ ॥
स्वयं वा पुत्रपत्न्याद्यैर्ब्राह्मणद्वारतोऽपि वा ।
अन्ते तु सर्वतो भद्रे नवयोनिसमायुते ॥ ३५ ॥
कलशं सुप्रतिष्ठाप्य सौवर्णादिसमुद्भवम् ।
अलङ्कृतं सूत्रवस्त्रैर्मध्ये तण्डुलपुञ्जके ॥ ३६ ॥
अलङ्कृतं धूपितञ्च निधाय मनुमुच्चरन् ।
तमष्टगन्धतोयेन पूरयेत् पञ्चरत्नकम् ॥ ३७ ॥

निक्षिप्य तस्मिन् तद्वत् क्रमादाच्छाद्य पञ्चपल्लवैः ।
सतण्डुलं फलं पूर्णं पात्रञ्चाऽपि मुखे न्यसेत् ॥ ३८ ॥
तत्र प्रतिकृतिं देव्याः सर्वाऽवयवशोभिताम् ।
विन्यस्य तस्यामावाह्य पूजनन्तु समाचरेत् ॥ ३९ ॥
तत्राऽऽदौ सर्वतोभद्रदेवताः क्रमतो यजेत् ।
दशदिक्षु च दिक्पालान् शृङ्खलासु चतुर्षु च ॥ ४० ॥
धर्मादीन्मध्यभवने श्वेतेऽधर्मादिकान् यजेत् ।
रक्ताऽर्धभवने पूर्वात् प्रादक्षिण्येन पूजयेत् ॥ ४१ ॥
असिताङ्गादिमिथुनं मेखलासु गुणत्रयम् ।
एवं सम्पूज्य कलशे पीठपूजनपूर्वकम् ॥ ४२ ॥
विधिनाऽऽवाह्य त्रिपुरां पूजयेदुपचारकैः ।
तत्तत्पुष्पादिकं स्वर्णभवं वा रजतोद्भवम् ॥ ४३ ॥
माषाद्वा कर्षतो वाऽपि कुर्यादन्यूनमुत्तमम् ।
तदर्धं पादमपि वा कृत्वा तन्नवसङ्ख्यकम् ॥ ४४ ॥
पूजयेदुपचारेषु नामभिर्वशिनीमुखैः ।
मध्ये च त्रिपुरां रात्रौ पूजयेच्चक्रनायकम् ॥ ४५ ॥
कलशस्य पश्चिमतः सर्वतोभद्रमण्डले ।
स्वयं वा पूजयेदाचार्येण वा क्रमवेदिना ॥ ४६ ॥
पूजयित्वा यथाशास्त्रं कुमारीं वटुकं तथा ।
गुरुं सुवासिनीञ्चाऽपि ब्राह्मणादीनपि क्रमात् ॥ ४७ ॥
उद्वासरहितां पूजां समाप्याऽखिलसंवृतः ।
कथाभिर्गायनैर्नृत्यैः कुर्याज्जागरणं निशि ॥ ४८ ॥
परेद्युः कृतकृत्योऽथ पूजयेच्चक्रनायकम् ।
पूजाङ्गहोमतः पश्चादग्निं संसाध्य शास्त्रतः ॥ ४९ ॥
यथावत्तत्र जुहुयात्तत्तत्पुष्पैः सहस्रकम् ।
पूजां समाप्य चोद्वास्य कलशं वस्त्रसंयुतम् ॥ ५० ॥

दक्षिणाप्रतिमायुक्तं सुवासिन्यै निवेदयेत् ।
ब्राह्मणानां षोडशकं सुवासिन्यष्टकं तथा ॥ ५१ ॥
वटुकांश्च कुमारींश्च वित्तशाठ्यादिवर्जितः ।
भोजयेद्भक्ष्यभोज्याद्यैर्दक्षिणाद्यैश्च तोषयेत् ॥ ५२ ॥
एवं पूजनमात्रेण सर्वपापैर्विमुच्यते ।
प्रसन्ना त्रिपुरेशानी वाञ्छितार्थप्रदा भवेत् ॥ ५३ ॥
सर्वसौभाग्यसंयुक्तो वंशपुत्रैर्युतस्तथा ।
पितॄन् प्रोद्धरते सर्वानन्ते मोक्षं समश्नुते ॥ ५४ ॥
राज्यप्राप्तिस्तु कमलैः करवीरैर्महच्छ्रियम् ।
जपापुष्पैः सन्ततिं वै जातीपुष्पैर्गृहादिकम् ॥ ५५ ॥
योनिपुष्पैर्वंशवृद्धिं वकुलैः सौमनस्यताम् ।
किंशुकैरोगनिहर्तिं कटुजैः शत्रुनाशनम् ॥ ५६ ॥
एवमन्यैः सुगन्धाढ्यैः पुष्पैः पत्रैश्च भार्गव ।
पूजयित्वा विधानेन महाफलमवाप्नुयात् ॥ ५७ ॥
फलैर्धान्यैरर्चयेच्च प्रोक्तमार्गानुसारतः ।
लक्षवर्तिप्रदीपैर्वा पूजयेत्त्रिपुराऽम्बिकाम् ॥ ५८ ॥
समर्थस्तत्र वर्त्तिभ्यां दीपानेव प्रकल्पयेत् ।
दशकेन शतेनाऽपि सहस्रेणाऽपि वा तथा ॥ ५९ ॥
पञ्चाशद्दशसाहस्रैः सहस्रशतमेव वा ।
एकैकश्च घृताऽऽपूर्णमर्पयेदेकनामभिः ॥ ६० ॥
सहस्रनामभिर्देव्याः शतनामभिरेव वा ।
दशाऽऽवर्तनकैर्वापि चैकावर्तनकेन वा ॥ ६१ ॥
तथा पञ्चशताऽऽवृत्त्या दीपं देव्यै समर्पयेत् ।
अन्ते स्वर्णेन रौप्येन नवकं वर्त्तियुग्मकम् ॥ ६२ ॥
कृत्वा ताम्रमये दीपे घृतवर्तिसमुज्ज्वले ।
निवेदयेत्तु कलशे पायसेन हुनेत्तथा ॥ ६३ ॥

श्रीसूक्तेनाऽभिषेकं वै कुर्याच्छ्रीचक्रनायके ।
आवृत्तीनां लक्षकेन सहस्रेण शतेन वा ॥ ६४ ॥
स्वयं वा ब्राह्मणैर्वापि क्षीरैरिक्षुरसैर्घृतैः ।
मधुभिर्वा फलरसैर्दधिभिर्वा सुगन्धिभिः ॥ ६५ ॥
तोयैस्तीर्थोद्भवैर्वापि राम पूर्वोक्तवर्त्मना ।
अन्ते दशांऽशतो वन्हौ पायसेन हुनेत् क्रमात् ॥ ६६ ॥
प्रत्यृचं श्रीसूक्तकस्य पूर्ववत्तु समापयेत् ।
रुद्राभिषेकतो वाऽपि महाफलमुदीरितम् ॥ ६७ ॥
एवं भार्गव सम्प्रोक्तं धनिनां शुभसाधनम् ।
अधनैस्तु शरीरेण कर्तव्यं शुभसाधनम् ॥ ६८ ॥
समर्थस्तीर्थयात्रान्तु कृत्वा श्रेयः समावहेत् ।
अथ वा देवतास्थाने परिचर्यां समाचरेत् ॥ ६९ ॥
उपास्तितत्परान् वापि सेवेत विगतस्पृहः ।
अतिमूढस्य चैतावदेव कृत्यमुदीरितम् ॥ ७० ॥
मेधावी प्रजपात्पाठात् कथादीनां प्रवाचनात् ।
देवताशास्त्रपठनात् पाठनाच्छ्रेय आप्नुयात् ॥ ७१ ॥
योग्येषु देवतोपास्तिशास्त्रं यः सम्यगीरयेत् ।
स देहान्ते वैद्रुमे तु प्राकारे निवसेच्चिरम् ॥ ७२ ॥
चित्राणि यो लिखेद्देव्याः प्रासादेषु सुभक्तितः ।
निवसेद्वासन्तवप्रे चिरमानन्दिताऽन्तरः ॥ ७३ ॥
सम्मार्ज्य शीततोयैश्च सेचयेत् यश्च मन्दिरम् ।
अभिषिञ्चेत्तथा शीततोयैरपि सुवासितैः ॥ ७४ ॥
निवसेच्चान्द्रवप्रान्तः स सन्तापविवर्जितः ।
यस्तु रात्रौ दीपिकाभिः प्रकाशयति मन्दिरम् ॥ ७५ ॥
निवसेत् सूर्यवप्रान्तः प्राप्य भोगान् यथेप्सितान् ।
एवमत्र यथा यो यः सेवां कुर्यात्तु मन्दिरे ॥ ७६ ॥

स देहान्ते श्रीपुरे तु स्थानं प्राप्नोति तादृशम् ।
उपासकेभ्यो दानानि कृत्वाऽपि स्थानमाप्नुयात् ॥ ७७ ॥
यः पुस्तकं देवताया दद्याद्योग्याय भक्तितः ।
स सिद्धवप्रवसतिं प्राप्नुयात्सु सुखावहाम् ॥ ७८ ॥
यस्तु पूजोपकरणं प्रदद्यात् साधकोत्तमे ।
स वसेद्दिक्पतीनां हि वप्रे सौख्यमवाप्नुयात् ॥ ७९ ॥
एवं यद्यत् प्रदद्याद्वै भक्त्योपासनसत्तमे ।
तत्तत्तुल्यनिवसतिं प्राप्नुयान्नाऽत्र संशयः ॥ ८० ॥
अथ ते संप्रवक्ष्यामि दानानामुत्तमं परम् ।
श्रीचक्रराजदानन्तु महाफलविधायकम् ॥ ८१ ॥
सुपर्वणि समभ्यर्च्य चक्रराजं यथाविधि ।
पूजान्ते त्रिपुरापूजापरं विप्रं सुलक्षणम् ॥ ८२ ॥
सपत्नीकं समभ्यर्च्य विशेषद्रव्यसाधनैः ।
वस्त्रैराभरणैः शक्त्या गन्धपुष्पादिभिः क्रमात् ॥ ८३ ॥
सपीठं सोपकरणं साधनद्रव्यसंयुतम् ।
सामान्याऽर्घोदकं हस्ते विप्रस्य समवासृजेत् ॥ ८४ ॥
ततो विप्रस्तु तां पूजामुद्वासप्रमुखाञ्चरेत् ।
भोजयेदावृतिमितान् ब्राह्मणान् सुविधानतः ॥ ८५ ॥
सुवासिनीर्भोजयेत्तु नित्याषोडशनामभिः ।
यथाशक्त्या वाऽपि विप्रान् भोजयेत्तु प्रयत्नतः ॥ ८६ ॥
अथ वा भोजयेन्नित्या नामभिस्तु सुवासिनीः ।
षोडश ब्राह्मणांश्चापि द्वादशाऽऽराध्य भोजयेत् ॥ ८७ ॥
एवं दद्याद्यस्तु दानं चक्रराजस्य भक्तितः ।
तस्य प्रीता महादेवी स्वसायुज्यं प्रयच्छति ॥ ८८ ॥
सर्वतीर्थेषु स स्नातः तेन सर्वं व्रतं कृतम् ।
सर्वं दानं तेन दत्तं तेन यज्ञास्तथा कृताः ॥ ८९ ॥

तपस्तेन सुतप्तं वै पठिता निखिलागमाः ।
त्रिपुराऽपि च तत्कर्मसदृशं नाऽस्ति वै फलम् ॥ ९० ॥
इति मत्वा स्वसायुज्यं तस्मै शीघ्रं प्रयच्छति ।
यतः सर्वजगद्रूपप्रतिमं राम चक्रकम् ॥ ९१ ॥
अतस्तेन जगद्दत्तं न दत्तं किं कथं भवेत् ।
यदि कामनया कुर्याद्यं यं काममभीप्सति ॥ ९२ ॥
तं तं प्राप्नोति सहसा मोक्षञ्चाऽन्ते समाप्नुयात् ।
एवन्तु स्थावरं यन्त्रमग्रे द्वारसमन्वितम् ॥ ९३ ॥
महादानयुतञ्चाऽपि दद्याद्विप्राय यः पुमान् ।
तस्य पुण्यमनन्तोऽपि न शक्तः कथने क्वचित् ॥ ९४ ॥
मूर्तिं वापि नार्मदं वा शिवनाममथाऽपि वा ।
शालिग्रामं कुण्डलिनीमेव दद्यात्तु भक्तितः ॥ ९५ ॥
श्रीपुरे तु चिरं स्थित्वा मुच्येद्देहाऽवसानके ।
मन्दिरं चक्रराजादेर्जीर्णं कुर्यान्नवन्तु यः ॥ ९६ ॥
तत्पुण्यं स्याच्छतगुणं नवमन्दिरनिर्मितेः ।
पूजां वाऽपि चिरोच्छिन्नां प्रवर्तयति यः पुनः ॥ ९७ ॥
धनभूमिप्रदानेन तस्याऽपि शतधा फलम् ।
सर्वगुह्यतमं भूयः शृणु वक्ष्यामि भार्गव ॥ ९८ ॥
यस्तु भक्तेषु योग्येषु सम्प्रदायं समादिशेत् ।
धनमानाद्यपेक्षः सन् क्रमदीक्षादिरीतितः ॥ ९९ ॥
तस्याऽनन्तफलं राम कस्तद्वर्णयितुं क्षमः ।
यथेच्छं निवसेन्नाथमण्डलेऽन्ते विमुच्यते ॥ १०० ॥
यस्तु योग्यं सम्प्रदायं प्रार्थयन्तमुपासने ।
कामान्मोहात् प्रमादाद्वा वैराग्याद्वा निषेधति ॥ १०१ ॥
यश्च द्रव्यादिलोभेनाऽनर्हे शास्त्रं प्रयोजयेत् ।
तयोर्न विद्यते लोकः प्राप्स्यतो ह्यधमाङ्गतिम् ॥ १०२ ॥

तस्माद्यः सम्प्रदायं वै भक्तानां न निरूपयेत् ।
विद्यालोभयुतो मौर्ख्यात् सोऽपि यात्यधमां गतिम् ॥१०३॥
तस्मात् स्वशिष्यमन्यं वा युक्तं भक्तिसमन्वितम् ।
सम्प्रदायं विजिज्ञासुं न निषिध्येत् कथञ्चन ॥ १०४ ॥
एतन्महाफलं राम नैतत्तुल्यन्तु किञ्चन ।
अन्यद्दानमनात्मारूपमपि बन्धकरं भवेत् ॥ १०५ ॥
एतदात्मप्रदानं वै यद्विद्याया निरूपणम् ।
यत्फलस्य न चान्तोऽस्ति तत्फलं स्यादनन्तकम् ॥१०६॥
यस्त्वशक्तो बुद्धिमान्द्याद्विद्यादाने विशेषतः ।
विद्यालिखितदानेन चाऽपि तत्फलमाप्नुयात् ॥ १०७ ॥
इदमत्यन्तसंगुप्तं प्रीत्या तव निरूपितम् ।
एवं महाफलप्राप्तिस्त्रिपुरोपासनाविधौ ॥ १०८ ॥
एष भार्गव ते प्रोक्तस्त्रिपुराया रहस्यके ।
माहात्म्यवैभवो यस्य श्रवणाद्भक्तिमान् भवेत् ॥ १०९ ॥
देवर्षे संश्रुतं कच्चित् सावधानेन चेतसा ।
एष माहात्म्यखण्डो वै त्रिपुराया रहस्यके ॥ ११० ॥
यः शृणोति स सर्वेभ्यः पापेभ्यः प्रविमुच्यते ।
परमं साधनं ह्येतदात्मबन्धविमुक्तये ॥ १११ ॥
यतो भक्तिर्हि मोक्षस्य जनयित्री निगद्यते ।
सा माहात्म्यश्रुतिमृते यतो न भवति क्वचित् ॥ ११२ ॥
तस्मात् पराख्यसौधस्य सोपानं प्रथमं ननु ।
माहात्म्यश्रवणं लोके मोक्षद्वारमिदं स्मृतम् ॥ ११३ ॥
महिमानमसंश्रुत्य कथं भक्तिर्भवेदिह ।
भक्त्या विना परं श्रेयः कथं स्याद्देवता परा ॥ ११४ ॥
मोक्षस्य साधनं सर्वं विना भक्त्या न किञ्चन ।
यथा तरुण्याः सौन्दर्यं विनसं सर्वथा तथा ॥ ११५ ॥

भुवं विना यथा बीजं नाऽङ्कुरं प्ररोहयेत् ।
तथा भक्तिं विना ज्ञानं फलं न जनयेत् क्वचित् ॥ ११६ ॥
अभक्तस्य न कर्मास्ति नोपास्तिर्नो विवेकिता ।
तस्माद्भक्तिविहीनस्य न काचित् स्याद् धृतिः क्वचित्॥११७॥
माहात्म्यसंश्रुतिस्तस्या मूलं यस्माच्च नारद ।
तस्मादेतं संशृणुयात् खण्डं महात्म्यसंज्ञितम् ॥ ११८ ॥
शृण्वतां पठताञ्चाऽपि महापापप्रणाशनम् ।
पठितव्यं नित्यमेतदध्यायं श्लोकमेव वा ॥ ११९ ॥
प्रसादं त्रिपुराशक्तेर्वाञ्छता सर्वथा शुभम् ।
एतदायुष्यजननं सौमङ्गल्यविवर्धनम् ॥ १२० ॥
अधनो धनवान् भूयादपुत्रा पुत्रिणी भवेत् ।
यद्यत्समीहितं तत्तत्प्राप्यतेऽस्य हि संश्रुतेः ॥ १२१ ॥
विद्याप्रदं विलिखितं पूजितं प्रेप्सितप्रदम् ।
विचारितं ज्ञानभक्तिवैराग्यादिप्रदं नृणाम् ॥ १२२ ॥
सर्वाऽऽगमाब्धिमथनाद्यद्भक्त्यमृतमाप्य तु ।
अमृताः शिवमुख्याः स्युः सा माता त्रिपुरैव ह्रीम् ॥१२३॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये माहात्म्यखण्डे उपासकमुख्यधर्मनिरूपणमशीतितमोऽध्यायः । ६६८७ ।

त्रिपुराम्बार्पितमस्तु । ॐ तत् सत् ॥

समाप्तमिदं त्रिपुरारहस्ये माहात्म्यखण्डम् ।



